कथं चैवं सामान्य-विशेषापेक्षां विना 'घट-पटयो रूपम्', घट-पटयोर्न रूपम्' इत्यादयो विचित्रनयापेक्षाः प्रत्ययाः समर्थनीयाः ? संग्रहनयाश्रयणेनैव हि घट-पटोभयरूपसामान्योद्भूततत्त्वविवक्षया 'घट-पटयोः रूपम्' इति प्रत्ययस्योपपत्तेः, द्वयोर्भेदविवक्षायां प्रत्येकान्वयस्य धर्मद्वयावच्छिन्नवाचकपदयोः संधानस्थल एव व्युत्पन्नत्वात्, व्यवहाराश्रयणात् तु प्रकृतप्रयोगोऽनुपपन्न एव, मिलितवृत्तित्वान्वये एव तस्य साकाङ्क्षत्वात्, 'घट-पटयोर्न रूपम्' इति बोधस्यैव तस्मादुत्पत्तेः ।

यत् तु–'घट-पटयोर्न रूपम्' इति वाक्यं तात्पर्यभेदेन योग्यायोग्यम्, घट-पटयो रूपत्वावच्छिन्नाभावान्वयतात्पर्येऽयोग्यमेव, रूपत्वावच्छेदेन घट-पटोभयवृत्तित्वाभावान्वयतात्पर्ये च योग्यमेव; 'घट-

---

संयोगाभावः स्कन्धरूपदेशे कपिसंयोगाभावयुक्त एव, अन्यथा शाखावच्छिन्ने वृक्षे कपिसंयोगोऽस्त्येव, स्कन्धावच्छिन्नेऽपि तस्मिन् यदि कपिसंयोगः स्यात्, कोऽय शाखा-स्कन्धाभ्यामन्यः सम्पूर्णो वृक्षः ? यत्र कपिसंयोगाभावो भवेदिति, ततश्च स्कन्धे कपिसंयोगो नास्तीत्येतावतैव सम्पूर्णः 'कपिसंयोगाभाववान्' इति व्यवह्रियते, अतः स्कन्धदेशापेक्षामाश्रित्यैव तथा-व्यवहारः, अन्यथा तदनुपपत्तेरित्यर्थः । प्रत्ययान्तराणामपि केषाञ्चिन्नापेक्षामन्तरेणोपपत्तिरित्याह– **कथं चेति**– अस्य 'समर्थनीयाः' इत्येनेनान्वय । **एवं** यथा 'शाखावच्छिन्नो वृक्षः कपिसंयोगी' इत्यादिव्यवहारस्यापेक्षा विना न समर्थनं तथा । **विचित्रनयापेक्षा** इति– 'घट-पटयो रूपम्' इति प्रत्ययः सङ्ग्रहनयापेक्ष, 'घट-पटयोर्न रूपम्' इति प्रत्ययो व्यवहारनयापेक्ष इत्येव विचित्रनयापेक्षत्व बोध्यम् । विचित्रनयापेक्षत्वमेव भावयति– **सङ्ग्रहनयाश्रयणेनैवेति**– घटे यद् रूपम्, यच्च पटे रूपम्, तदुभयानुगत यद् रूपसामान्यलक्षणमुद्भूततत्त्वं सङ्ग्रहनयाभिमतम्, तद्विवक्षया 'घट-पटयो रूपम्' इति प्रत्ययस्य सङ्ग्रहनयाश्रयणेनैवोपपत्तेः, यदि सङ्ग्रहनयो नाश्रीयते तर्हि घटे रूपमन्यत्, तदन्यच्च पटे रूपमित्येकस्य रूपस्य घट-पटोभयनिरूपितवृत्तित्वस्याभावाद् 'घट-पटयो रूपम्' इति प्रत्ययो न स्यात्, सङ्ग्रहनयसमाश्रयणे तु रूपसामान्यस्यैकस्य घट-पटोभयसमाश्रितस्य सम्भवेन तत्र घट-पटोभयनिरूपितवृत्तित्वस्य सम्भवादुपपद्यते 'घट-पटयो रूपम्' इति प्रत्यय इत्यर्थः । यदा तु घटरूप-पटरूपयोर्भेदो विवक्ष्यते, एकस्मिन् रूपे घटवृत्तित्वस्यापरस्मिन् रूपे पटवृत्तित्वस्यान्वयोऽभिमतस्तदा 'घटे रूपम्, पटे रूपम्' इत्येव प्रत्ययः, घटत्वावच्छिन्नवाचकशब्दस्य षष्ठीविभक्त्या पटत्वावच्छिन्नवाचकस्य षष्ठीविभक्त्या पृथगेवाऽऽनुपूर्वीलक्षणसमभिव्याहारः, षष्ठ्यन्तयोश्च तयोः 'रूपम्' इत्यनेन पृथगेव पूर्वापरीभावलक्षणः समभिव्याहारस्तादृशप्रत्ययनिबन्धोऽपेक्षितः, तथासन्धानस्थल एव घटवृत्तिरूप-पटवृत्तिरूपयोः प्रतीतिरित्याह– **द्वयोर्भेदविवक्षायामिति** । 'घट-पटयोर्न रूपम्' इति प्रत्ययो व्यवहारनयाश्रयणेनोपपद्यत इत्यावेदयितुमाह– **व्यवहाराश्रयणात् त्विति** । **प्रकृतप्रयोगः** 'घट-पटयो रूपम्' इति प्रयोगः, एतच्च तादृशप्रत्ययस्याप्युपलक्षणम्, तादृशप्रयोगाभावे तदभिलाप्यप्रत्ययाभावस्यापि न्यायप्राप्तत्वात् । अनुपपन्नत्वे हेतुमाह– **मिलितेति**– घट-पटोभयनिरूपितवृत्तित्वान्वये इत्यर्थः । **तस्य** 'घट-पटयो रूपम्' इत्यस्य, यदि घटनिरूपितवृत्तित्वान्वये पटनिरूपितवृत्तित्वान्वये साकाङ्क्ष तद् भवेत् तदा प्रत्येकं घटनिरूपितवृत्तित्वस्य च पटनिरूपितवृत्तित्वस्य च रूपे घटमानत्वात् स्यादप्युक्तप्रयोगस्योपपन्नता, यदा च मिलितवृत्तित्वान्वय एवोक्तप्रयोगस्य साकाङ्क्षत्वं तदैकस्मिन् रूपे घट-पटोभयनिरूपितवृत्तित्वान्वयस्य बाधितत्वान्नोक्तप्रयोगस्योपपन्नत्वमित्यर्थः । **तस्मात्** व्यवहारनयाश्रयणात्, तथा च व्यवहारनयाश्रयणे 'घट-पटयोर्न रूपम्' इति प्रयोग उपपन्न इत्याशय ।

अन्येषां मतं प्रतिक्षेप्तुमुपन्यस्यति—**यत् त्विति** । **अयोग्यमेवेति**– रूपत्वावच्छिन्नस्य रूपसामान्यस्य घट-पटयोः सत्त्वेन रूपत्वावच्छिन्नप्रतियोगिताकस्य रूपसामान्यस्याभावस्य घट-पटयोरभावेन 'घट-पटयोर्न रूपम्' इत्यनेन घट-पटयो रूपसामान्याभावस्य बोधितस्य बोधयितुमशक्यत्वेन तादृशबोधेच्छयोच्चरितमुक्तवाक्यमयोग्यमेवेत्यर्थः । **रूपत्वावच्छेदेनेति**– यद् यद् रूपं तत् किमपि घट-पटोभयनिरूपितवृत्तितावन्न भवत्येवेति रूपमात्र एव घट-पटोभयनिरूपितवृत्तित्वाभावस्य सत्त्वेन रूपत्वावच्छेदेनाबाधितस्य घट-पटोभयनिरूपितवृत्तित्वाभावस्यान्वयबोधसम्भवात् तादृशबोधतात्पर्येण प्रयुज्यमान 'घट-पटयोर्न रूपम्' इति वाक्यं योग्यमेवेत्यर्थं । यदि च, यत्किञ्चिद्रूपे घटवृत्तित्व यत्किञ्चिद्रूपे पटवृत्तित्वमिति, तद्रूपद्वय च रूप-

पटयो रूपम्' इत्यादौ च घट-पटोभयवृत्तित्वस्यापि रूपत्वादिसामानाधिकरण्येनान्वयबोध एव साकाङ्क्षत्वाद् 'न तयोर्घटरूपम्' इत्यपि स्यादिति कैश्चित् कल्प्यते, तदसत्– प्रतिवस्तुन्याकाङ्क्षावैचित्र्यस्यापेक्षाबोधात्मकफलवैचित्र्यार्थमेवाश्रयणात्, उभयरूपसामान्यस्य प्रत्येकरूपविशेषात् कथञ्चिद्भेदानभ्युपगमे त्वदुक्तान्यव्युत्पत्तिग्रहात् 'घट-पटयोर्घटरूपम्' इति जायमानस्य बोधस्य प्रामाण्यापत्तेश्च, अस्माकं तु स्यादर्थानुप्रवेशस्यैवातिप्रसङ्गभञ्जकत्वान्न दोषः।

सामान्यात्मनैकमिति तत्र घट-पटोभयनिरूपितवृत्तित्व सम्भवत्येवेति कृत्वा रूपत्वसामानाधिकरण्येनान्वयबोध उक्तवाक्यात् सम्भवति, रूपत्वावच्छेदेनान्वयबोधस्तु तावताऽपि न सम्भवति, यतो घटावृत्ति-पटावृत्तिरूपव्यक्त्योरपि रूपसामान्यान्तर्गततया तत्र घटवृत्तित्व पटवृत्तित्वयोरभावे घट-पटोभयवृत्तित्वस्याप्यभावेन बाधितत्वाद् रूपत्वावच्छेदेन घट-पटोभयवृत्तित्वान्वये उक्तवाक्यस्य निराकाङ्क्षत्वात्, किन्तु रूपत्वसामानाधिकरण्येनान्वय एवोक्तवाक्य साकाङ्क्षमिति विभाव्यते, तदा घटरूपस्य घटवृत्तित्वेऽपि न पटवृत्तित्वमिति कृत्वा घट-पटवृत्तित्वाभावस्य तत्र सत्त्वेन घटरूपेऽबाधितस्य घट-पटोभयनिरूपितवृत्तित्वाभावस्यान्वये 'घट-पटयोर्न घटरूपम्' इति वाक्य साकाङ्क्ष स्यादेवेत्याह– **घट-पटयोरि**ति– इत्थं च 'घट-पटयोर्न रूपम्' इति वाक्याद् 'घट-पटयो रूपम्' इति वाक्याद् 'घट-पटयोर्न घटरूपम्' इति वाक्याच्चापेक्षामन्तरेणैवान्वयबोधस्योपपत्तेर्नापेक्षात्मकान्वयबोधस्वरूपनयसिद्धिरित्यभिप्राय.। प्रतिक्षिपति- **तदसदि**ति। **प्रतिवस्तुनी**ति– 'घट-पटयोर्न रूपम्' इति वाक्यं रूपत्वावच्छेदेन घट-पटोभयनिरूपितवृतित्वाभावान्वयबोधने साकाङ्क्षम्, घट-पटयो रूपत्वावच्छिन्नप्रतियोगिताकाभावान्वये न साकाङ्क्षम्, 'घट-पटयो रूपम्' इति वाक्यं च रूपत्वसामानाधिकरण्येन घट-पटोभयनिरूपितवृत्तित्वान्वयबोधने साकाङ्क्षम्, न तु रूपत्वावच्छेदेन घट-पटोभयनिरूपितवृत्तित्वान्वयबोधने इत्येव यद् आकाङ्क्षावैचित्र्यमभ्युपेत्यान्वयबोधवैलक्षण्यमभ्युपेयते तदेतद् अपेक्षाबोधात्मकफलवैलक्षण्यमेव शब्दान्तरेणाभ्युपगतं परैः, अन्यथैकान्तवादिनो यदन्वयबोधसमर्थं यद् वाक्यं तत् तदन्वयबोध जनयिष्यत्येव, यच्च यत्रासमर्थं तत् तन्न जनयिष्यतीत्येवाभ्युपगमनीयं स्याद्, न त्वाकाङ्क्षावैचित्र्यं फलवैचित्र्यार्थमाश्रितं भवेदित्यर्थः। रूपत्वसामानाधिकरण्येन घट-पटोभयनिरूपितवृत्तित्वान्वयस्य बोधे साकाङ्क्षाद् 'घट-पटयो रूपम्' इति वाक्यात् तथाविधान्वयबोधस्तदा भवेद् यदि घट पटरूपविशेषयोः रूपसामान्येन सहाऽभेदो भेदश्चाभ्युपगतो भवेत्, तथा सति सङ्ग्रहनयाभ्युपगतरूपसामान्याभेदापेक्षामाश्रित्य रूपसामान्याभिन्नत्वेनैकीभूतयो रूपविशेषयोर्घट-पटोभयवृत्तित्वस्य सम्भवेन तादृशान्वयबोधस्योपपत्तिः, तयो रूपसामान्याद् भेदस्य व्यवहारनयाभ्युपगतस्यापेक्षामाश्रित्य तु 'घट पटयोर्न रूपम्' इति वाक्याद् 'घट-पटोभयनिरूपितवृत्तित्वाभाववद् रूपम्' इति बोधस्य सम्भवः, भवद्भिर्यदि रूपसामान्यस्य प्रत्येकरू विशेषात् सर्वथाऽभेद एवोपेयते, न तु कथञ्चिद्भेदस्तदा द्व्यात्मके वस्तुनि 'एकस्यापेक्षाऽन्यस्य नापेक्षा' इत्युक्ति. सम्भवति, न त्वेकात्मके वस्तुनीत्यपेक्षाश्रयणस्यानावश्यकत्वेऽपि घटरूपस्यापि रूपसामान्यात्यन्ताभिन्नस्य घट-पटोभयवृत्तित्वेन 'घट-पटयोर्घटरूपम्' इति वाक्यतो जायमानस्य 'घट पटोभयनिरूपितवृत्तित्ववद् घटरूपम्' इति बोधस्य प्रामाण्य स्यात्, सामान्य-विशेषयोर्भेदाभेदपक्षे तु रूपसामान्यस्य रूपत्वेनैव रूपविशेषादभेदो घटरूपत्वादिना तु भेद एवेति घटरूपत्वेनोपस्थितस्य रूपविशेषस्य रूपसामान्याद् भेदो न त्वभेद इति घटरूपत्वेन तस्य न घट पटोभयवृत्तित्वमिति 'न घट पटयोर्घटरूपम्' इति वाक्यतो जायमानस्य प्रामाण्यातिप्रसङ्गोऽपेक्षाश्रयणे इत्याह– **उभयरूपसामान्यस्ये**ति। **कथञ्चिद्भेदानभ्युपगम** इति– कथञ्चिद्भेदानभ्युपगम. सर्वथा भेदाभ्युपगमे सर्वथाऽभेदाभ्युपगमे वा स्यात्, तत्र सर्वथा भेदाभ्युपगमः 'घट-पटयो रूपम्' इति वाक्यजन्यबोधस्य न समर्थक इति सर्वथाऽभेदाभ्युपगम इति तदर्थ। **त्वदुक्तान्यव्युत्पत्तिग्रहात्** 'घट-पटयो रूपम्' इति वाक्यं रूपत्वसमानाधिकरण्येन घट पटोभयवृत्तित्वस्यान्वयबोधे साकाङ्क्षमिति त्वदुक्तद्वितीयव्युत्पत्तिग्रहात्, अस्य 'जायमानस्य' इत्यनेन सम्बन्धः। 'घट-पटयोर्घटरूपमिति' इत्यत्र इतिशब्दो वाक्यस्वरूपवचन पञ्चम्यन्तश्च। **बोधस्य** 'घट पटोभयनिरूपितवृत्तित्ववद् घटरूपम्' इत्याकारकबोधस्य। **अस्माकं तु** रूपसामान्य-रूपविशेषयोर्भेदाभेदाभ्युपगन्तॄणां स्याद्वादिना पुनः। **स्यादर्थानुप्रवेशस्यैव** 'सामान्य-विशेषयोः कथञ्चिद् भेद. कथञ्चिदभेद.' इत्येवं स्याच्छब्दार्थस्य कथञ्चिल्लक्षणस्य भेदाभेदस्वरूपसन्निवेशस्यैव। **अतिप्रसङ्गभञ्जकत्वात्** 'घट-पटयोर्घटरूपम्' इतिवाक्यजन्यबोधप्रामाण्यप्रसङ्गवारकत्वात्।

किञ्च, एवं 'द्वयोर्गुरुत्वम्, न गन्धः' इत्यादौ का गतिः? गुरुत्वसामानाधिकरण्येनेव गन्धत्वसामानाधिकरण्येनापि पृथिवी-जलोभयत्वाश्रयवृत्तित्वसाम्यात् विधि-निषेधविषयार्थानिरुक्तेः। अत्र सप्तम्याः स्वार्थान्वयितावच्छेदकस्वरूपात् समव्याप्यातिरिक्तैवाऽऽधेयताऽर्थः, तत्र च प्रकृत्यर्थस्य तन्निष्ठनिरूपितत्वविशेषेणान्वयात्, पृथिवी-जलोभयविशिष्टाधेयतात्वेन गुरुत्वं विधेयतया गन्धश्च निषेध्यतया प्रतीयत इत्युक्तौ च नामान्तरेण गुरुत्वसामान्यस्यैव विधेयत्वं गन्धसामान्यस्यैव च निषेध्यत्वमुक्तमायुष्मता, अतिरिक्ताधारताया अनिरूपणात्, अन्यथा 'घट-पटयोर्न घटरूपम्' इत्यादौ 'जाति-घटयोर्न सत्ता'

---

अपेक्षात्मकान्वयबोधानभ्युपगन्तॄणां परेषां दोषान्तरमप्युपदर्शयति- **किञ्चेति**। **द्वयोः** पृथिवी-जलयोः, पृथिव्या गुरुत्वमन्यत्, तदन्यच्च जले गुरुत्वमिति नैकस्य गुरुत्वस्य पृथिवी-जलोभयनिरूपितवृत्तित्वमिति यथा गन्धे पृथिवी-जलोभयनिरूपितवृत्तित्वस्याभावात् 'पृथिवी-जलयोर्न गन्ध' इत्येवं निषेधस्तथा गुरुत्वस्यापि पृथिवी-जलोभयनिरूपितवृत्तित्वाभावाद् 'द्वयोर्न गुरुत्वम्' इति निषेध एव स्यात्, न तु 'द्वयोर्गुरुत्वम्' इति विधि. स्यात्, यदि च पृथिवी जलोभयत्वाश्रयवृत्तित्वरूपमर्थमुपादाय 'पृथिवीजलयोर्गुरुत्वम्' इति गुरुत्वत्वसामानाधिकरण्येन 'पृथिवी-जलोभयत्वाश्रयनिरूपितवृत्तित्ववद् गुरुत्वम्' इति बोधसम्भवत 'पृथिवी-जलयोर्गुरुत्वम्' इति विधिरुपपाद्यते तदा तादृशवृत्तित्वस्य गन्धत्वसामानाधिकरण्येन गन्धेऽपि सम्भवेन तदन्वयबोधस्यापि सम्भवात् 'पृथिवी-जलयोर्गन्ध.' इति विधिरेव स्यात्, न तु 'पृथिवी-जलयोर्न गन्ध' इति निषेधस्योपपत्तिरित्यर्थ। **गुरुत्वसामानाधिकरण्येनेव**' इति स्थाने 'गुरुत्वत्वसामानाधिकरण्येनेव' इति पाठो युक्तः। अत्र विधि-निषेधोपपादनपरविधि-निषेधार्थनिरुक्तेर्नामान्तरेणापेक्षात्मकबोधसमर्थकत्वमुपदर्शयति- **अत्रेति**- 'द्वयोर्गुरुत्वम्' इति वाक्यघटकेत्यर्थः। **सप्तम्याः** द्विपदोत्तरसप्तमीविभक्ते, अस्य 'अर्थः' इत्यनेनान्वयः। **स्वार्थेति**- स्वं सप्तमीविभक्ति, तस्यार्थ आधेयत्वम्, तदन्वयिता गुरुत्वनिष्ठा, तदवच्छेदकं गुरुत्वत्वम्, तत्स्वरूपाद् अतिरिक्तैव- भिन्नैव, समव्याप्या- समनियता, आधेयता सप्तमीविभक्तेरर्थः। **तत्र च** आधेयताया पुन.। **प्रकृत्यर्थस्य** द्विपदार्थस्य पृथिवी-जलोभयस्य। **तन्निष्ठनिरूपितत्वविशेषेण** सप्तमीविभक्त्यर्थाधेयत्वनिष्ठनिरूपितत्वविशेषरूपसम्बन्धेन। **अन्वयात्** सम्बन्धात्। तथा च '**पृथिवी-जलोभयविशिष्टाधेयतात्वेन**' इति स्थाने 'पृथिवी-जलोभयविशिष्टाधेयतावत्वेन' इति पाठो युक्त.- निरूपितत्वविशेषलक्षणसम्बन्धेन पृथिवी-जलोभयविशिष्टा याऽऽधेयता तद्वत्त्वेनेति तदर्थः, तस्य 'विधेयतया' इत्यत्र 'निषेध्यतया' इत्यत्र चान्वय, गुरुत्वविशेषस्यैकव्यक्तिमात्रवर्तिनः पृथिवी-जलोभयविशिष्टाधेयतावत्त्वं न सम्भवतीति तादृशाधेयतावत्त्वेन गुरुत्वसामान्यवर्तिना गुरुत्वसामान्यस्यैव विधेयत्वम्, यद्यपि पृथिवी जलोभयविशिष्टाधेयतावत्त्वं गन्धसामान्ये यथा नास्ति तथा गन्धविशिषेऽपि नास्तीति पृथिवी-जलोभयविशिष्टाधेयतावत्त्वेन निषेध्यत्व गन्धविशेषस्यापि सम्भवति, तथाऽपि तादृशनिषेध्यत्व गुरुत्वविशेषस्यापि सम्भवतीति विशेषापेक्षया निरुक्तनिषेध्यत्वस्याभिमतत्वे 'द्वयोर्न गुरुत्वम्' इत्यपि स्यात्, अत. सामान्यापेक्षयैव निषेध्यत्वमप्यभिमतमिति गन्धसामान्यस्यैव पृथिवी-जलोभयविशिष्टाधेयतावत्त्वेन निषेध्यत्वं 'द्वयोर्गुरुत्वं न गन्धः' इति वाक्येनोक्त परेणापीति सामान्यपेक्षाया आवश्यकत्वादपेक्षात्मकान्वयबोधरूपनयसिद्धिरित्यर्थः। 'पृथिवी-जलोभयविशिष्टाधेयतात्वेन' इति पाठप्रामाण्ये तु 'स्वार्थो०' इत्यादिस्थाने 'स्वार्थान्वयितावच्छेदकस्वरूपात् समव्याप्यानतिरिक्तैवाऽऽधेयतार्थः' इति पाठो युक्तः। '**अतिरिक्ताधारताया अनिरूपणाद्**' इति स्थाने 'अतिरिक्ताधेयताया अनिरूपणाद्' इति पाठः सम्यक्, तच्च 'अनतिरिक्तैवाऽऽधेयताऽर्थ.' इत्यत्र हेतुकथनरूपतया सङ्गतिमङ्गति, यतश्चाधेयताऽऽधेयस्वरूपा तत आधेयस्याऽऽधेयतात्वेन विधान निषेधश्च सम्भवतीति बोध्यम्। **अन्यथा** सामान्यापेक्षया विधेयत्व-निषेध्यत्वयोरनभ्युपगमे। **घट-पटयोरिति**- घट-पटोभयत्वाश्रयघटनिरूपितवृत्तित्वस्य घटरूपे सत्त्वात् तन्निषेधस्तत्र न स्यात्, घट-पटोभयनिरूपितवृत्तित्वं च न क्वचिदपि रूपे इति तदभावबोधने 'घट-पटयोर्न रूपम्' इत्यपि स्याद्, अतः 'जाति-घटयोर्न सत्ता' इत्यादौ घटवृत्तित्वस्य समवायसम्बन्धावच्छिन्नस्य सत्ताया सत्त्वेऽपि जातौ न सत्ता वर्तते, नापि कोऽपि पदार्थः समवायेन तत्र वर्तत इत्यतो जाति-घटोभयनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वप्रसिद्धया तदभावोऽपि न बोधयितुं शक्य., किन्तु जाति घटोभयनिरूपितत्वाभाववत्समवायसम्बन्धा-

इत्यादाविव 'घट-पटोभयनिरूपितत्वाभाववदाधेयतावद् घटरूपम्' इत्यन्वयोपपादनेऽपि 'घट-पटरूपे' इत्यस्योपपादयितुमशक्यत्वात्, घटरूपत्वादिस्वरूपाया आधेयताया उभयानिरूपितत्वात्। तत्र द्वित्वादिस्वरूपैवाऽऽधेयतेति चेत्? द्वयोः प्रत्येकरूपावच्छेदेन द्वित्वाभावान्निषेधस्यापि प्रवृत्तिः स्यात् । अनुयोगितावच्छेदकावच्छेदेनैव सप्तम्यर्थाधेयत्वान्वयव्युत्पत्तेर्नायं दोष इति चेत्? तथाऽपि 'घटरूपाऽऽकाशे' इत्यादिकं कथम्? एतद्द्वित्वादिस्वरूपाया आधेयताया उभयानिरूपितत्वात्, तत्र तात्पर्यवशात् द्वेधाऽन्वयेऽप्युभयस्यानाधेयत्वाभावात् । तस्मान्नयापेक्षाभेदेनात्र विचित्र एव बोधः स्वीकार्यः ॥ २ ॥

---

वच्छिन्नाधेयतावती सत्तेति यथा बोध्यते तथा प्रकृतेऽपि घट-पटोभयनिरूपितत्वाभाववत्समवायसम्बन्धावच्छिन्नाधेयतावद् घटरूपम्' इत्येवमन्वयबोधोपपादनसम्भवेऽपि 'घट-पटयोर्घट-पटरूपे' इत्यत्र निरुक्तदिशा 'घट-पटोभयनिरूपितत्ववदाधेयतावती घट-पटरूपे' इत्येवमन्वयस्य वाच्यतया सामान्यपेक्षाभावे तादृशान्वयस्य बाधितत्वेन वक्तुमशक्यत्वाद् घटरूपत्वस्वरूपाया आधेयताया घटनिरूपितत्वम्, पटरूपत्वस्वरूपाया आधेयतायाः पटनिरूपितत्वम्, घट-पटोभयनिरूपितत्वस्य तु घटरूपत्वादिस्वरूपाधेयतायामभावादित्यर्थः। **'घट-पटरूपे इत्यस्य'** इत्यत्र 'घट-पटयोः' इत्यस्यानुकर्षाद् 'घट-पटयोर्घट-पटरूपे इत्यस्य' इति लभ्यते । 'घट-पटयोर्घट-पटरूपे' इत्यत्र सप्तम्यर्थाधेयतान्वयितावच्छेदकं घट-पटरूपद्वयगतद्वित्वम्, तत्स्वरूपैवाऽऽधेयता, तस्या घट-पटोभयनिरूपितत्वस्य सम्भवाद् 'घट पटयोर्घट-पटरूपे' इत्युपपद्यत इति शङ्कते- **तत्रेति**-'घट-पटयोर्घट-पटरूपे' इत्यत्रेत्यर्थः । घट-पटरूपयोर्घटरूपत्व-पटरूपत्वलक्षणप्रत्येकधर्मावच्छेदेन न द्वित्वम्, तस्य व्यासज्यवृत्तितया द्वित्वावच्छेदेन सत्त्वादिति तद्रूपाऽऽधेयतापि घटरूपत्वादिप्रत्येकधर्मावच्छेदेन न तत्र वर्तत इति तादृशाऽऽधेयत्वाभावस्य प्रत्येकरूपावच्छेदेन घट-पटरूपयोः सत्त्वाद् 'घट-पटयोर्न घट-पटरूपे' इति निषेधस्यापि प्रवृत्त्यापत्तेरिति समाधत्ते **द्वयोरिति**-घट-पटरूपयोरित्यर्थ । **प्रत्येकरूपावच्छेदेन** घटरूपत्वाद्यवच्छेदेन । नन्वन्वयितावच्छेदकस्वरूपा यथाऽऽधेयता स्वीक्रियेत तथा तस्या अनुयोगितावच्छेदकावच्छेदेनैवान्वय इत्यपि स्वीक्रियते, एवं च घट-पटरूपद्वयगतद्वित्वस्वरूपाऽऽधेयतायास्तादृशद्वित्वावच्छेदेनैवान्वयो न प्रत्येकरूपावच्छेदेनेति तादृशद्वित्वावच्छेदेन तादृशद्वित्वरूपाऽऽधेयतायाः सत्त्वाद् विधिरुपपद्यते, तदभावस्य तादृशद्वित्वावच्छेदेनाभावान्न निषेधस्य प्रवृत्त्यापत्तिरिति शङ्कते- **अनुयोगितावच्छेदकावच्छेदेनैव** । **अयं दोषः** निषेधप्रवृत्त्यापत्तिलक्षणो दोषः । घटे समवायेन घटरूपं पटे च संयोगेनाऽऽकाश इति विवक्षया 'घट-पटयोर्घटरूपा-ऽऽकाशे' इति प्रयुज्यते, तत्र घटरूपाऽऽकाशगतद्वित्वरूपाऽऽधेयता न भवति घट-पटोभयनिरूपितेति तत्रान्वयानुपपत्तिरिति समाधत्ते- **तथापीति**- अनुयोगिताच्छेदकावच्छेदेन सप्तम्यर्थाधेयत्वान्वयव्युत्पत्तेः स्वीकारेऽपीत्यर्थः। यद्यपि आकाशस्य नित्यद्रव्यतया तत्सम्बन्धो वृत्त्यनियामक एवेति आकाशस्य न किञ्चिन्निरूपिताऽऽधेयत्वमिति घटरूपा-ऽऽकाशगतद्वित्वस्वरूपाऽऽधेयतैव न सम्भवतीति कुतस्तस्याः शशशृङ्गकल्पाया उभयनिरूपितत्वम् ? इत्येवमपि 'उभयानिरूपितत्वाद्' इति घटते तथापि काले सर्वं वस्तु कालिकेन वर्तत इति कालनिरूपितैव घटरूपा-ऽऽकाशगताधेयता घटरूपा-ऽऽकाशगतद्वित्वस्वरूपा सम्भवति, तस्यां कालनिरूपिताया घट-पटोभयनिरूपितत्वाभावादिति सम्मुखीनोऽर्थ एवाश्रयितव्य इति । वस्तुतः 'तत्र तात्पर्यवशाद्' इत्याद्युत्तरग्रन्थस्वारस्यात् 'तथापि' इत्यस्यानन्तर 'घट-रूपाकाशे' इत्यारभ्य 'उभयानिरूपितत्वाद्' इति पर्यन्तस्य स्थाने 'घट-पटयोर्न घटरूपाऽऽकाशे इत्यादिकं कथम् ? एतद्द्वित्वादिस्वरूपाया आधेयताया असम्भवेनोभयनिरूपितत्वाभाववदाधेयत्वान्वयासम्भवाद्' इति पाठो युक्तः, तस्य चायमर्थः—'घट-पटयोर्न घटरूपम्' इत्यत्र यथा 'घट-पटोभयनिरूपितत्वाभाववदाधेयतावद् घटरूपम्' इत्येवमन्वयबोध उररीक्रियते तथा 'घट-पटयोर्न घटरूपाऽऽकाशे' इत्यत्र 'घट-पटोभयनिरूपितत्वाभाववदाधेयतावती घटरूपाऽऽकाशे इत्येवमन्वयबोधः स्वीकरणीयः, स च न सम्भवति, घटरूपाकाशगतद्वित्वस्वरूपाया आधेयताया असम्भवेन घट-पटोभयनिरूपितत्वाभाववदाधेयतात्वेन तस्या ग्रहणासम्भवेनान्याऽऽधेयताया ग्रहणेऽपि तद्वत्त्वस्य घटरूपाऽऽकाशयोरभावाद् घटरूपस्य किञ्चिन्निरूपिताधेयतावत्त्वेऽपि नित्यद्रव्यस्याकाशस्याश्रितत्वाभावेन किञ्चिन्निरूपिताधेयत्वाभावात् तथाविधाधेयतायत्त्वान्वयासम्भवादिति ।

नन्वनन्तधर्मैर्मिश्रितं वस्तु कथं विवेचयितुमशक्यम् ? अनन्तानामपि धर्माणां धर्म्यभिन्नत्वेन धर्मिग्राहकप्रत्यक्षादेरेव तद्विवेकरूपत्वात्, सति च तद्विवेके किमपेक्षाश्रयणेनेत्याशङ्कयाऽऽह—

**यद्यप्यनन्तधर्मात्मा वस्तु प्रत्यक्षगोचरः ।**
**तथापि स्पष्टबोधः स्यात् सापेक्षो दीर्घतादिवत् ॥ ३ ॥**

**नया०**— यद्यपि वस्तु घटपटादिकम्, अनन्तधर्मात्मकं सत् **प्रत्यक्षगोचरः** प्रत्यक्षादिप्रमाणविषयः, एकस्मिन् घटादौ गृह्यमाणे गृह्यमाणधर्मोपरागेण द्रव्यार्थादेशेनातीता-ऽनागत-वर्तमानानां तद्वृत्तिधर्माणां यावतामेव ग्रहात्, परेषां सामान्यलक्षणप्रत्यासत्तिस्थानेऽभिषिक्तस्य घटविषयकतिर्यक्सामान्योपयोगस्य घटत्वव्यापकविषयताकप्रत्यक्षत्वं तादृशज्ञानत्वं वा यथा कार्यतावच्छेदकं तथा तद्विषयकोर्ध्वतासामान्योपयोगस्यापि तादात्म्यसंबन्धेनाधेयत्वसंबन्धेन वा घटत्वव्यापकविषयताक-

---

ननु 'घट-पटयोर्न घटरूपाऽऽकाशे' इत्यत्र नञो द्वेधाऽन्वय उपेयते, तथा च 'घट-पटोभयनिरूपितत्वाभाववदाधेयत्वाभाववती घटरूपा-ऽऽकाशे' इत्येवमन्वयबोध उपपद्यत इत्यत आह—**तत्रेति**– 'घट-पटयोर्न घटरूपा ऽऽकाशे' इत्यत्रेत्यर्थः। **तात्पर्यवशात्** 'इद वाक्य घट पटोभयनिरूपितत्वाभाववदाधेयत्वाभाववद्घटरूपाकाशरूपार्थं बोधयतु' इति तात्पर्यबलात्। **द्वेधाऽन्वये** नञोऽर्थस्याभावस्य द्वेधान्वये । **उभयस्य** घटरूपाऽऽकाशोभयस्य । **अनाधेयत्वाभावात्** आकाशस्य नित्यद्रव्यतयाऽऽधेयत्वाभाववत्त्वेऽपि घटरूपस्य घट-पटोभयनिरूपितत्वाभाववदाधेयत्ववत्तया तदभावस्य तत्राभावेन घटरूपाऽऽकाशोभयस्य निरुक्ताधेयत्वाभाववत्त्वासम्भवात् । उपसहरति— **तस्मादिति**–अपेक्षां विना तत्तत्स्थलेऽऽन्वयबोधस्योपपादयितुमशक्यत्वादित्यर्थः ॥ २ ॥

तृतीयपद्यमवतारयति– **नन्विति** । **तद्विवेकेति**— अनन्तधर्मविवेकेत्यर्थः, एवमग्रेऽपि, अनन्तधर्मविवेके सति तद्द्वाराऽनन्तधर्मात्मकवस्तुविवेकोऽपि सुशक एव, प्रत्यक्ष प्रमाणं सर्वतो बलवत्, तच्चेत् सर्वधर्माभिन्नवस्तुविषयकत्वात् सर्वधर्मविषयकमिति किमवशिष्टं विवेके ? यदर्थमपेक्षाश्रयणमित्यभिसन्धिः । 'यद्यपि' इत्यादि पद्य विवृणोति— **यद्यपीति** । ननु प्रत्यक्ष प्रतिनियतधर्मविशिष्टघटादिधर्मिग्राहकं चक्षुरादिप्रभवं भवतु नाम, कथ पुनस्तस्य घटादिगतानामतीतानागतधर्माणां ग्राहकत्वम् ? येनानन्तधर्मात्मकवस्तु प्रत्यक्षगोचर इति गदितुमनुगुणम्, नह्यनन्तधर्माणा प्रत्यक्षेणाऽनवगाहनेऽनन्तधर्मात्मकवस्तु प्रत्यक्षगोचरो भवितुमर्हतीत्यत आह— **एकस्मिन्निति** । **द्रव्यार्थादेशेनेति**– गृह्यमाणधर्मविशिष्टधर्मिरूपद्रव्याभेदाश्रयणेनेत्यर्थः । **तद्वृत्तिधर्माणां** घटादिवृत्तिधर्माणाम् । ननु सन्निकृष्ट प्रत्यक्षे भासते, अतीतानागतधर्माणां पुनः द्रव्याभेदेऽपि सन्निकृष्टत्वं नास्तीति कथ तेषा प्रत्यक्षे भानमित्यत आह— **परेषामिति**– नैयायिकादीनामित्यर्थः, 'मते' इति शेष । **घटविषयकतिर्यक्सामान्योपयोगस्य** पुरोवर्तियत्किञ्चिद्घटविशेष्यकघटत्वप्रकारकप्रत्यक्षस्य, तस्य प्रत्यासत्तितानियामकसम्बन्धश्च स्वविषयघटत्ववत्त्वरूपः, तेन सम्बन्धेन निरुक्तोपयोगो । यावत्स्वतीतानागतविप्रकृष्टेषु घटेषु वर्तत इति । **घटत्वव्यापकेति**– घटत्वव्यापकविषयताकप्रत्यक्षत्वावच्छिन्नं प्रति घटत्वव्यापकविषयताकज्ञानत्वावच्छिन्न प्रति वा घटविशेष्यकघटत्वप्रकारकप्रत्यक्षस्य कारणत्वाद् यावत्किञ्चिद्घटप्रत्यक्षानन्तर यथाऽतीतानागतसकलघटविषयकप्रत्यक्षमित्यर्थः । **तथेति**– 'तादात्म्यसम्बन्धेन' 'आधेयतासम्बन्धेन' इति च व्याप्यताया नियमनम्, घटविषयकोर्ध्वतासामान्योपयोगस्यापि प्रत्यासत्तितानियामक. स्वविषयतादात्म्य स्वविषयाधेयत्वं वा सम्बन्धः तादृशसम्बन्धश्च विषयनिष्ठप्रत्यासत्त्या कार्य-कारणभावे बोध्यः, आत्मनिष्ठप्रत्यासत्त्या कार्य-कारणभावे तु कथञ्चित्तादात्म्यमेव कार्यतावच्छेदकः कारणतावच्छेदकश्च जैनमते, परमते तु समवायस्तथा बोध्यः । '**घटत्वव्यापक**' इति स्थाने 'घटव्यापक' इति पाठो युक्तः तथा च तादात्म्यसम्बन्धेनाऽऽधेयतासम्बन्धेन वा घटव्यापकविषयताकप्रत्यक्षत्वावच्छिन्नं प्रति घटव्यापकविषयताकज्ञानत्वावच्छिन्नं प्रति वा घटविषयकोर्ध्वतासामान्योपयोगः कारणमिति, तादात्म्यसम्बन्धेनाऽऽधेयतासम्बन्धेन वा घटो यावत्सु

प्रत्यक्षत्वस्य तादृशज्ञानत्वस्य वा कार्यतावच्छेदकताया न्यायसिद्धत्वात्, अत एव– " जे एगं जाणइ से सव्वं जाणइ " [ आचाराङ्ग-श्रु० १, अ० ३, उ० ४, सू० १२२ ] इति पारमर्षवचनानुरोधोऽपि, एकवस्तुग्रहे तद्गतस्व-परपर्यायकुक्षिप्रवेशेन सर्वेषामेव ग्रहात्, अनुवृत्ति-व्यावृत्तिसंबन्धपर्यालोचने तावत्-प्रमाणस्यैव वस्तुनोऽनुभवात् । तदाह महावादी सम्मतौ—

एगदविअम्मि जे अत्थपज्जवा वयणपज्जवा वा वि । तीयाऽणागयभूआ, तावइयं तं हवइ दव्वं "॥

—[ सम्मतितर्के-का० १, गाथा–३३ ] इति ।

नन्वेवं सर्वस्य सार्वज्ञ्यापत्तिरिति चेत्? न– द्रव्यार्थिकतयेष्टत्वात्, उक्तभगवद्वचनरुच्यनुवेधेन सम्यक् संपत्त्या चानतिप्रसङ्गात् ।

यद्यप्येवं तथापि **स्पष्टबोधः** सत्त्वाऽसत्त्वादिप्रतिनियतधर्मप्रकारको बोधः सदसदाद्याकारको वा बोधः, **सापेक्षः** शाब्दस्थले नयापेक्षया जनितः, प्रत्यक्षस्थले चावध्यवच्छेदकादिज्ञानापेक्षः स्यात् । किंवद्? **दीर्घतादिवत्** आदीयतेऽनेनेत्यादि ज्ञानम्, दीर्घताप्रत्यक्षवदित्यर्थः, यथा हि दण्डादिज्ञानकाले तत्परिमाणग्रहेऽपि 'अयमस्माद् दीर्घः' इति दीर्घत्वप्रकारकं ज्ञानं नियतावध्यपेक्षयैव, तथा सदसदात्मक-वस्तुग्रहेऽपि सत्त्वादिप्रकारकं ज्ञानं स्वद्रव्यापेक्षयैवेत्यर्थः, 'अयमेतदपेक्षया दीर्घः' इतिवद् 'अयं स्वद्रव्याद्यपेक्षया सन्, परद्रव्याद्यपेक्षया चासन्' इत्येव व्यवहारात् । नन्वेवं व्यवहार एव सापेक्षो

---

स्ववृत्तिधर्मेषु वर्तेत इति तेन सम्बन्धेन तस्य व्यापिका विषयता यावद्घटधर्मावगाहिप्रत्यक्षस्यैवेति निरुक्तकार्यकारणभावाद् घटवृत्तियावद्धर्मावगाहि प्रत्यक्षं सिध्यतीति । **अत एव** तद्विषयकोर्ध्वतासामान्योपयोगलक्षणसामान्यलक्षणप्रत्यासत्तिबलात् तद्गतसकलधर्मज्ञानमम्भवादेव । **जे०** इति–" य एकं जानाति स सर्वं जानाति " इति संस्कृतम् । **तावत्प्रमाणस्यैव** अनुवृत्त-व्यावृत्तसकलधर्मात्मकस्यैव ।

उक्तार्थे श्रीसिद्धसेनदिवाकरसूरिवचनसंवादमाह—**तदाहेति** । **एग०** इति–"एकद्रव्ये ये अर्थपर्याया वचनपर्याया वाऽपि । अतीतानागतभूतास्तावत्क तद् भवति द्रव्यम् "॥ इति सस्कृतम् । नन्वेकपदार्थज्ञस्योक्तदिशा सर्वपदार्थज्ञत्वाभ्युपगमे सर्वस्य सर्वज्ञत्वं स्यादिति शङ्कते—**नन्वेवमिति** । द्रव्यार्थाऽऽदेशात् सर्वस्य सर्वज्ञत्वमिष्टमेवेति समाधत्ते—**नेति** । **उक्त-भगवद्वचनेति**– " जे एगं जाणइ से सव्वं जाणइ " इति भगवद्वचनश्रद्धासम्बन्धेनेत्यर्थः, यस्य चोक्तवचनश्रद्धा नास्ति स मिथ्यादृष्टिर्वस्तु एकमपि न जानात्येव, तस्य ज्ञानमज्ञानमेवेति न तस्य सर्वज्ञत्वप्रसक्तिरपीति । एतावता पूर्वार्द्धं व्याख्यातम् ।

अथोत्तरार्द्धं विवृणोति—**यद्यप्येवमिति** । '**सापेक्षः**' इति किं सर्वत्रैकापक्ष एव ? उतास्ति तत्र विशेषः ? इत्यपेक्षायामाह—**शाब्दस्थल** इति । '**दीर्घतादिवद्**' इत्यस्य विवरणम्– 'दीर्घताप्रत्यक्षवद्' इति, तद् यथा सम्पद्यते तथोपदर्शयितुम् 'आदि' इत्यस्य ज्ञानरूपमर्थं निरुक्तिलभ्यमावेदयति—**आदीयत** इति । दृष्टान्त-दार्ष्टान्तिकयोः सापेक्षत्वमुपपादयति—**यथा हीति** । **तत्परिमाणग्रहेऽपि** दण्डादि परिमाणग्रहेऽपि । '**स्वद्रव्यापेक्षयैव**' इत्यत्र 'स्वद्रव्याद्यपेक्षयैव' इति पाठो युक्तः, आदिपदात् स्वक्षेत्रादीना परद्रव्यादीनां चोपग्रहः, अत्रादिपदात् परद्रव्यादीना ग्रहणादेव 'सत्त्वादि'इत्यादिपदग्राह्यासत्त्वस्य यज्ज्ञानं तस्य सापेक्षत्वस्याप्युपपादनसम्भवेन न्यूनोक्तेर्व्युदासः । यथा यस्य ज्ञानं तथैव तस्य व्यवहार इति स्वद्रव्याद्यपेक्षया सत्त्वादिप्रकारकज्ञानाभावे स्वद्रव्याद्यपेक्षया सत्त्वादिव्यवहारो न स्यादिति तादृशव्यवहारान्यथानुपपत्त्यया तथा ज्ञानमावश्यकमिति दृष्टान्तावष्टम्भेन द्रढयति–**अयमेतदपेक्षयेति** । ननु सापेक्षतया दीर्घ-त्वादिर्व्यवह्रियत इत्येतावता दीर्घत्वादिव्यवहारस्य सापेक्षत्वमस्तु दीर्घत्वादिज्ञानस्य कुतः सापेक्षत्वमिति शङ्कते–**नन्वेवमिति** । व्यवहारो व्यवहर्तव्यज्ञानं व्यवहारेच्छां चापेक्षते, न तु तदतिरिक्तस्य कस्यचिद् व्यवहारेऽपेक्षेति व्यवहारकारणीभूतस्य

न तु बोध इति चेत् ? न– व्यवहर्तव्यज्ञाने सति सत्यां चेच्छायां व्यवहारे आधिक्यताऽनपेक्षणात्, अन्यथाऽभावज्ञानेऽपि प्रतियोग्यपेक्षा न स्यात्, तद्व्यवहार एव सप्रतियोगिकत्वस्थितेः । अथ 'दीर्घो दण्डः' इति ज्ञानं चक्षुःसन्निकर्षमात्राज्जायत एव, 'अमुकापेक्षया दीर्घः' इति दीर्घत्वत्वावान्तरजात्यवगाहिज्ञान एव चावधिज्ञानापेक्षेति चेत् ? न– ह्रस्वत्वेन ज्ञाने दीर्घत्वेन ज्ञानस्यैवापेक्षां विनाऽनुपपत्तिः, तद्वदिहापि परद्रव्यादिनाऽसत्त्वेन ज्ञाने स्वद्रव्याद्यपेक्षयैव सत्त्वज्ञानमिति प्रतिपत्तव्यम् । अवच्छेदकानवगाहिनस्तु अनवधारणरूपत्वादेवानुपयोगः । द्विहस्तादिमात्रेऽनावृतैकहस्तावच्छेदेन महत्त्वग्रहस्तु देशापेक्षयैवेति न तस्य निरपेक्षत्वम्, अत एवाऽऽवरणापगमे स्कन्धापेक्षया परिमाणे द्विहस्तत्वग्रहेऽपि तावदवच्छेदेन हस्तत्वग्रहस्य नाप्रामाण्यम्, देश-स्कन्धभेदेनोभयोपपत्तेः ।

एतेन, भूयोऽवयवावच्छेदेन चक्षुःसंयोगाभावान्नार्द्धनिखातवंशादेर्द्विहस्तादिपरिमाणग्रह इति प्राच्यनैयायिकानां प्रलापो निरस्तः, यावति भागे नाऽऽवरणं तावति भागे परिमाणस्य ग्रहादेव, स्कन्ध-

व्यवहर्तव्यज्ञानस्य सापेक्षत्वत एव व्यवहारस्य सापेक्षत्व नान्यथेति समाधत्ते– नेति । 'आधिक्यतानपेक्षणाद्' इति स्थाने 'अधिकानपेक्षणाद्' इति पाठो युक्तः तस्य व्यवहर्तव्यज्ञानव्यवहारेच्छाव्यतिरिक्तानपेक्षणादित्यर्थः । **अन्यथा** व्यवहर्तव्यज्ञानस्यानपेक्षत्वेऽपि व्यवहारस्य सापेक्षत्वाभ्युपगमे । **तद्व्यवहार एव** अभावव्यवहार एव, अभावज्ञान प्रतियोगिज्ञानमन्तरेणैव भवतीत्यभावो न सप्रतियोगिकः, किन्त्वभावव्यवहार एव प्रतियोगिज्ञानमभावज्ञानं चापेक्षत इति तस्यैव सप्रतियोगिकत्वं स्यादित्यर्थः । दीर्घत्वप्रकारकं ज्ञान न नियतावध्यपेक्षम्, अवधिज्ञानमन्तरेणापि 'दीर्घो दण्डः' इति ज्ञानस्य चक्षुस्सन्निकर्षमात्रादुत्पत्तेः, किन्त्वमुकापेक्षया यद् दीर्घत्वत्वं दीर्घत्वत्वव्याप्यसामान्यम्, तत्प्रकारकदीर्घत्वविशेषविशेष्यकज्ञान एवावधिज्ञान कारणमिति तत्रैवावधिज्ञानापेक्षेति शङ्कते– अथेति । ह्रस्वत्वस्य दीर्घत्वविरुद्धतया तद्रूपेण दण्डज्ञाने सति नापेक्षामन्तरेण 'दीर्घो दण्डः' इति ज्ञान सम्भवतीति दीर्घत्वप्रकारकज्ञानेपि नियतावधिज्ञानापेक्षत्वमेवेति समाधत्ते– नेति । **तद्वत्** नियतावधिज्ञानापेक्षदीर्घत्वप्रकारकज्ञानवत् । **इहाऽपि** सदसदात्मकवस्तुज्ञानेपि । नन्ववच्छेदकानवगाह्यपि वस्तुज्ञानं भवत्येवेति न तत्रावधिज्ञानापेक्षेत्यत आह— **अवच्छेदकानवगाहिनस्त्विति**– तादृशज्ञानं भवतु नाम, न ततः सत्त्वादेरवधारणमिति न स्पष्टबोध स इति स्पष्टबोधोऽपेक्षां विना न सम्भवतीति प्रतिज्ञाया न तेन किञ्चित् क्षुण्णमित्यभिसन्धिः । **अनुपयोगः** वस्तु सद्भावुपयोगो न भवति, तत्तत्प्रकारेण वस्तुसिद्ध्यर्थं च यज्ज्ञानं मृग्यते तद् अवच्छेदकावगाह्येव भवतीति । **द्विहस्तादिमात्रे** द्विहस्तादिप्रमाणे वस्तुनि, आदिपदात् त्रिहस्तादेर्ग्रहणम् । **देशापेक्षयैवेति**ति– द्विहस्तप्रमाणे यादृशं महत्त्वं ततो विलक्षणमेवैकहस्तप्रमाणगत महत्त्वम्, तच्च देश-देशिनोः कथञ्चिद् भेदाद् देशे वर्तमानं देशिन्यपि वर्तत एव, परन्तु देशिन एकदेशावच्छेदेनाऽऽवरणमन्यदेशावच्छेदेनानावरणमित्यनावृतो य एकहस्तप्रमाणो देशस्तदवच्छेदेन तादृशमहत्त्वग्रहणं देशापेक्षयैवेतीति । **तस्य** महत्त्वग्रहस्य त निरपेक्षत्वमित्यर्थः । **अत एव** द्विहस्तप्रमाणे वस्तुनि अनावृतैकहस्तावच्छेदेन महत्त्वग्रहस्य सापेक्षत्वादेव । **तावदवच्छेदेन** एकहस्तमितदेशावच्छेदेन । देशेति– देशापेक्षयैकहस्तमितत्व स्कन्धापेक्षया द्विहस्तमितत्वमित्येवं देश-स्कन्धभेदेनैकस्मिन् वस्तुन्येकहस्तत्व-द्विहस्तत्वोभयोरपि सम्भवेन तत्र द्विहस्तत्वग्रहस्यैकहस्तत्वग्रहस्यापि प्रामाण्यसम्भवादित्यर्थ ।

**'एतेन'** इत्यस्य 'निरस्त' इत्यनेनान्वयः, प्राच्यनैयायिकानां मते द्विहस्तमिते वस्तुनि द्विहस्तपरिमाणमेव, नैकहस्तपरिमाणम्, तद्गतद्विहस्तपरिमाणग्रहे च भूयोऽवयवावच्छेदेन चक्षुस्संयोगो हेतुरित्यर्द्धनिखातवंशादेरुक्तकारणाभावान्न द्विहस्तपरिमाणग्रहः एकहस्तपरिमाण तु तत्र नास्त्येवेति न तद्गतपरिमाणग्रह इत्याशयः । 'एतेन'इत्यतिदिष्टमेव निरामहेतुमाह– **यावति भाग** इति । **परिमाणस्य** तद्वस्तुगतस्य निरावृतदेशावच्छिन्नस्यैक हस्तपरिमाणस्य । ननु भूयोऽवयवावच्छेदेन चक्षुःसंयोगाभावेऽपि तत्परिमाणग्रहण यद्युपेयेत तर्हि अर्द्धनिखातवंशादेरेकहस्तग्रहणवद् द्विहस्तपरिमाणग्रहणमपि स्यादित्यत आह— **स्कन्धपर्याप्ते**ति । **'तत्पर्याप्तावच्छेदक'** इति स्थाने 'तत्पर्याप्त्यवच्छेदक' इति पाठो युक्तः, स्कन्धे परिमाणस्य

पर्याप्तपरिमाणग्रहे तत्पर्याप्त्यवच्छेदकयावदवयवावच्छेदेनावरणाभावलक्षणयोग्यताया एव हेतुत्वे दोषाभावात् । किञ्च, 'भूयोऽवयवावच्छेदेन' इत्यस्य कोऽर्थः ? यावदवयवसंनिकर्षस्य कुत्राप्यसम्भवात्, अनेकतत्संयोगस्य चातिप्रसञ्जकत्वात्, भूयोऽवयवावच्छिन्नत्वोपलक्षिताधारताविशेषस्य च देश-स्कन्धापेक्षावैचित्र्यमुखनिरीक्षकत्वादिति न किञ्चिदेतत् ।

यत् तु—" विषयतासंबन्धेन परिमाणसाक्षात्कारत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन तत्तदावारकसंयोगत्वेन प्रतिबन्धकत्वान्नार्द्धनिखातवंशादिपरिमाणग्रहः, यद्वा, अर्द्धनिखातवंशादेर्महत्त्वादिकं गृह्यत एव, 'महानयं वंशः' इति प्रतीतेः, तदवान्तरवैजात्यं तु नानुभूयत इति तत्तद्वैजात्यग्रहं प्रत्यावारकसंयोगस्य विरोधिता । न च निखाताऽनिखातसदृशवंशयोः सन्निकर्षदशायां तन्महत्वादिवृत्तिवैलक्षण्यानुभवाद् वैजात्यप्रत्यक्षं प्रत्यावारकसंयोगानां प्रतिबन्धकत्वासंभव इति वाच्यम्, तादृशवैलक्षण्यप्रकारकप्रत्यक्षं प्रत्येव तेषां विरोधित्वात्, विशेष्यत्वं प्रतिबध्यतावच्छेदकः संबन्धः, स्वाश्रयमेव तत्त्वं

---

या पर्याप्तिस्तदवच्छेदका यावन्तोऽवयवास्तदवच्छेदेनेत्यर्थः । भूयोऽवयवावच्छेदेन चक्षुःसंयोगस्यावयविगतपरिमाणग्रह प्रति कारणत्वं यत् परेणोच्यते तत्र 'भूयोऽवयवावच्छेदेन' इत्यस्य निर्वचनमेव प्रकृतानुगुण न कर्तुं शक्यमित्याह— **किञ्चे**ति । यदि 'यावदवयवावच्छेदेन' इति तदर्थ उपवर्ण्यते तदसम्भवग्रस्तमेव, सर्वथानावृतेऽप्यवयविनि अन्तर्लीनमध्याद्यवयवावच्छेदेन चक्षुस्संयोगस्याभावादित्याह— **यावदवय**वेति । अनेकावयवचक्षुस्संयोग एव यदि भूयोऽवयवावच्छेदेन चक्षुस्संयोगः स तर्हि अर्द्धनिखातवशादावपि समस्तीति । तत्परिमाणग्रहणापत्तिरित्याह— **अनेकतत्संयोगस्य** चेति— अनेकावयवचक्षुस्संयोगस्य चेत्यर्थः । यदि च भूयोऽवयवावच्छिन्नत्वोपलक्षितचक्षुस्संयोगाधारताविशेष उक्तशब्दार्थोऽभिमतः, स कार्यानुरोधेन कल्पनीयः स्यादिति देशविशेषापेक्षतादृशाधारताविशेषोऽन्यो यो हस्तावच्छेदेन तद्गतपरिमाणग्रहणे कारणम्, तदन्यश्च स्कन्धापेक्ष तादृशाधारताविशेषो यो द्विहस्तादिपरिमाणग्रहणे कारणमित्यर्द्धनिखातस्थले स्कन्धापेक्षतादृशाधारताविशेषाभावाद् द्विहस्तादिपरिमाणाग्रहणेऽपि देशविशेषापेक्षतादृशाधारताविशेषसद्भावाद् हस्तपरिमाणग्रहण स्यादेवेत्यपेक्षासिद्धिरप्यायातैवेत्याशयेनाह— **भूयोऽवयवावच्छिन्नत्वोपलक्षिते**ति ।

अत्र नैयायिकधुरन्धरमथुरानाथमत प्रतिक्षेप्तुमुपन्यस्यति— **यत् त्वि**ति । **विषयते**ति— परिमाणविषयकसाक्षात्कारो विषयतासम्बन्धेन परिमाणे उत्पद्येत, तत्र तदाश्रयेण सहाऽऽवारकसयोगोऽपि स्वाश्रयसमवेतत्वसम्बन्धेन वर्तत इति तादृशसंयोगस्य प्रतिबन्धकस्य समवधानदशाया तादृशसयोगाश्रयसमवेतस्य परिमाणस्य न भवति प्रत्यक्षमित्यर्द्धनिखातवंशादिपरिमाणग्रहो नेत्यर्थः । अर्द्धनिखातवशादेः परिमाणस्य साक्षात्कारो भवत्येवेति न त प्रत्यावारकसंयोगस्य निरुक्तसम्बन्धेन प्रतिबन्धकत्वम्, किन्तु तत्परिमाणगतं यद् महत्त्वत्वावान्तरवैजात्यं तद् नानुभूयत इति तत्प्रत्यक्षं प्रत्येवाऽऽवारकसयोगस्य प्रतिबन्धकत्वमिति कल्पान्तरमाह— **यद्वे**ति । **तदवान्तरे**ति— महत्त्वत्वव्याप्येत्यर्थः । **'न च'** इत्यस्य 'वाच्यम्' इत्यनेन सम्बन्धः, तस्य वैजात्यस्यैकस्य निखाताऽनिखातसदृशवंशद्वयपरिमाणद्वयवर्तिनः प्रतिबन्धकीभूतावारकसंयोगस्य स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन सम्बन्धिनो यथा निखातवशगतपरिमाणगततया न प्रत्यक्षं तथानिखातवंशगतपरिमाणगततयापि प्रत्यक्ष न भवेत्, भवति चानिखातवशगतपरिमाणगततया प्रत्यक्षम्, अतो न तादृशवैजात्यग्रहं प्रत्यावारकसंयोगस्य प्रतिबन्धकतेति शङ्कार्थः । तादृशवैजात्यस्य ग्रहं प्रति प्रतिबन्धकत्वाऽसम्भवेऽपि विशेष्यतासम्बन्धेन तादृशवैजात्यप्रकारकप्रत्यक्ष प्रति स्वाश्रयसमवेतत्वसम्बन्धेनाऽऽवारकसंयोगस्य प्रतिबन्धकत्वं सम्भवत्येव, आवारकसंयोगो हि स्वाश्रयसमवेतत्वसम्बन्धेन निखातवशवर्तिपरिमाण एव समस्ति, तत्र विशेष्यतासम्बन्धेन तादृशवैजात्यप्रकारकप्रकारक नोत्पद्यते, अनिखातवंशवर्तिपरिमाणे तु स्वाश्रयसमवेतत्वसम्बन्धेनावारकसंयोगो नास्ति, ततस्तत्र विशेष्यता सम्बन्धेन निरुक्तवैजात्यप्रकारकप्रत्यक्षं स्यादेवेति निषेधे हेतुमुपदर्शयति— **तादृशवैलक्षण्यप्रकारकप्रत्यक्षं प्रत्येवे**ति । **तेषाम्** आवरकसंयोगानाम् । **'स्वाश्रयमेव तत्त्वं च'** इति स्थाने 'स्वाश्रयसमवेतत्वं च' इति पाठो युक्तः । ननु तादृशवैलक्षण्यप्रकारकप्रत्यक्षं

च प्रतिबन्धकतावच्छेदकमित्यनतिप्रसङ्गात् । न चैवं निखातसन्निकर्षात् तादृशवैलक्षण्यनिर्विकल्पकापत्तिः, इष्टत्वाद् " इति मथुरानाथाभिहितम्, तत् तुच्छम्– एवमपि निखातसन्निकर्षान्महत्त्वप्रकारकतादृशवैलक्षण्यविशेष्यकसाक्षात्कारापत्तेर्दुर्वारत्वात् । किञ्च, एवमावृतैकपार्श्वावच्छेदेन यस्य चक्षुःसंयोगान्नोक्तवैजात्यस्य ग्रहस्तस्यैवान्यदा, पुरुषान्तरस्य वा तदानीं पार्श्वान्तरावच्छेदेन चक्षुःसंयोगेऽप्यग्रहः स्यात्, आवारकसंयोगस्य विरोधिनः सत्त्वात् । तत्तत्कालीनतत्तत्पुरुषीयमहत्त्वादिप्रत्यक्षं प्रत्येवोक्तप्रतिबन्धकत्वे त्वनावरणकालीनस्य विलक्षणमहत्त्वादिप्रत्यक्षस्यावरणदशायामुत्पत्तिप्रसङ्गः, नहि तत्रापि सन्निकर्षं विना अन्यद् विशिष्य कारणं क्लृप्तं येन तद्विलम्बात् तद्विलम्बः स्यात् । अपि च, एवमावृता-ऽदृष्टनष्टस्थले प्रतिबध्याप्रसिद्धिः ।

---

प्रत्येवावारकसंयोगानां प्रतिबन्धकत्वे तादृशवैलक्षण्यविषयकनिर्विकल्पकप्रत्यक्षं न निरुक्तप्रतिबध्यतावच्छेदकाक्रान्तमिति निखातवंशचक्षुस्सन्निकर्षात् तत्रावारकसंयोगे सत्यपि स्यादित्याशङ्कामिष्टापत्त्या परिहरति–**न चैवमिति** । उक्तमथुरानाथमतस्य तुच्छत्वे हेतुमाह–**एवमपीति**–उक्तदिशा प्रतिबध्य-प्रतिबन्धकभावाभ्युपगमेऽपीत्यर्थः । निखातवंशवर्तिमहत्त्वविशेष्यकतादृशवैजात्यप्रकारकप्रत्यक्षमेवाऽऽत्मनि समवायेनोत्पद्यमानं सद् विशेष्यतया निरुक्तमहत्त्वे उत्पत्तुमर्हतीति तस्यैव निरुक्तप्रतिबध्यतावच्छेदकाक्रान्तत्वादुत्पत्तिर्मा भवतु नाम, समवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन महत्त्वप्रकारकतादृशवैजात्यविशेष्यकप्रत्यक्षं तु प्रकारतासम्बन्धेन महत्त्वे उत्पद्यते, तथा तद् वैजात्यविशेष्यकमेव, न तु वैजात्यप्रकारकमिति प्रतिबध्यतावच्छेदकधर्माऽनाक्रान्तत्वात् तदुत्पत्तिर्निखातसन्निकर्षादापद्यत इत्याह**निखातसन्निकर्षा**दिति । अपि च विषयनिष्ठप्रत्यासत्त्योक्तप्रतिबध्य-प्रतिबन्धकभावे यस्य प्रमातुरावृतैकपार्श्वावच्छेदेन चक्षुस्संयोगादुक्तवैजात्यस्य प्रत्यक्षमेकदा न भवति तस्यैव कालान्तरे एकपार्श्वावच्छेदेनावारणसंयोगे विद्यमानेऽपि पार्श्वान्तरावच्छेदेन चक्षुस्संयोगात् तादृशवैजात्यस्य प्रत्यक्षमुपजायते, एवं यदैकस्य पुंस आवृतैकपार्श्वावच्छेदेन चक्षुःसंयोगात् तादृशवैजात्यस्य प्रत्यक्षं न भवति, तदानीमेवान्यस्य पुंसः पार्श्वान्तरावच्छेदेन चक्षुःसंयोगात् तादृशवैजात्यस्य प्रत्यक्षं भवति, तदेतन्न स्यात्, तादृशप्रत्यक्षस्याऽपि प्रतिबध्यतावच्छेदकाक्रान्तत्वादावारकसंयोगस्य च प्रतिबन्धकस्य सत्त्वादित्याह– **किञ्चेति** । **अन्यदा** वैजात्याऽग्रहकालभिन्नकाले । **तदानीम्** एकपुरुषस्य यदा वैजात्याग्रहस्तत्काले । यत्काले यत्पुरुषस्यावारणसंयोगे सति महत्त्वप्रत्यक्षं न भवति तत्कालीनतत्पुरुषीयमहत्त्वप्रत्यक्षं प्रति आवरणसंयोगः प्रतिबन्धक इति तत्कालीनान्यपुरुषीयमहत्त्वप्रत्यक्षस्याऽन्यकालीनतत्पुरुषीयमहत्त्वप्रत्यक्षस्य च प्रतिबध्यतावच्छेदकानाक्रान्तत्वादुत्पत्तिर्यद्यपि सम्भवति तथापि इन्द्रियसन्निकर्षस्य कार्यतावच्छेदकं महत्त्वप्रत्यक्षत्वं यथाऽऽवारणकालीनान्यपुरुषीयमहत्त्वप्रत्यक्षे समस्तीति तदिन्द्रियसन्निकर्षबलात् समुत्पद्यते तथाऽनावारणकाले यन्महत्त्वप्रत्यक्षं समुत्पद्यते तदपि निरुक्तसन्निकर्षकार्यतावच्छेदकाक्रान्तमेव, न चोक्तसन्निकर्षातिरिक्तमपि विशिष्य तत् प्रति कारणमित्यावरणकाले तस्यापि समुत्पत्तिः स्यात्, तद्विलम्बे हेत्वभावादित्याह–**तत्तत्कालीनेति** । **'नहि'** इत्यस्य 'क्लृप्तम्' इत्यनेनान्वयः । **तत्रापि** अनावरणकालीनविलक्षणमहत्त्वादिप्रत्यक्षेऽपि । **विशिष्येति**–यद्यपि यत्काले यदुत्पद्यते तत्कार्यं प्रति तत्कालोऽपि कारणमित्यनावरणकालीनविलक्षणमहत्त्वादिप्रत्यक्षेऽनावरणकालस्य कारणत्वात् तस्यावरणकालेऽभावान्न तदानीं तदुत्पत्त्यापत्तिः, तथापि कालस्य विशिष्य कारणत्वे तत्तत्कालरूपकारणाभावादेव तत्तत्कालजन्यतत्तत्कार्यस्य नान्यदोत्पत्तिस्तत्काल एव चोत्पत्तिरिति कालमात्रमेव कार्यमात्रे कारणम्, किमन्यकारणकल्पनेन? अन्यकारणाभावेऽपि तत्कालाऽभावस्यावश्यकत्वेन तद्विलम्बादेव तत्कार्यविलम्बस्य सम्भवादिति कालैककारणमात्रापत्तिभिया सामान्यत एव कालस्य कार्यमात्रं प्रति कारणत्वमिति तत्तत्कार्यस्य स्वाखिलकारणसमवधानकाल एव स्वकारणकाल इति कालोऽपि न विशिष्य कारणं क्लृप्तमित्यभिसन्धिः । किञ्च, यद् विलक्षणमहत्त्वादिकं सर्वदाऽऽवृतमेव जन्यप्रत्यक्षाविषय एव विनष्टं तन्महत्त्वादेः कदापि प्रत्यक्षाभावात् तत्र प्रतिबध्याप्रसिद्धिरप्युक्तप्रतिबध्य-प्रतिबन्धकभावकल्पनाया दोष इत्याह–**अपि चेति** । **आवृतेति**–आवृतमदृष्टमेव सद् यद् नष्टं तत्स्थले इत्यर्थः । प्रकारान्तरेण विशिष्य प्रतिबध्य–प्रतिबन्धक-

स्वप्राचीस्थपुरुषीयोक्तवैजात्यसाक्षात्कारत्वावच्छिन्न एव स्वप्रतीच्यवच्छिन्नावारकसंयोगत्वेन प्रतिबन्धकत्वे तु द्रव्यचाक्षुषेऽप्येवं भित्त्यादिसंयोगप्रतिबन्धकत्वेन निर्वाहे व्यवहितार्थाऽदर्शनान्यथानुपपत्त्या चक्षुःप्राप्यकारित्वसाधनप्रयासस्य वैफल्यापत्तिरिति न किञ्चिदेतत् ।

एतेन 'तादृशवैलक्षण्यसाक्षात्कारप्रयोजकतया चक्षुरादिसंयोगे तिष्ठति वैजात्यान्तरस्वीकारेणैव निर्वाहः' इति कल्पनाऽपि तेषामपास्ता, '०तद्धेतोः' इति न्यायेनाऽऽभिमुख्यविशेषेणावरणाभावविशेषेण वा निर्वाहे तादृशवैजात्यकल्पनायां महागौरवात्, अन्यापेक्षयेव स्वदेशापक्षेयाऽपि न्यूनाधिकतारूपवैजात्यानुभवस्यापेक्षां विनाऽनुपपत्तेश्चेति दिक् ॥ ३ ॥

---

भावकल्पनाऽपि परस्य न युक्ता, स्वाभ्युपगमहानिप्रसक्तेरित्याह-**स्वप्राचीस्थे**ति-एतच्च 'प्रतीच्यां वस्तु, तदनन्तरं प्राच्यामावरणम्, ततः प्राच्या प्रमाता पुरुषः, तत्रावरणप्राचीस्थस्य प्रमातुरावरणप्रतीचीस्थितवस्तुपरिमाणगतवैजात्य साक्षात्कारो न भवति' तदुपपादकम्, तत्सङ्गमना चेत्थम्-स्वमावरणम्, तदवधिकप्राचीस्थः पुरुषः, तदीयवस्तुपरिमाणवैजात्यसाक्षात्कारत्वावच्छिन्ने, स्वमावरणम्, तदवधिकप्रतीच्यवच्छिन्नो य आवरकसंयोगस्तत्त्वेन प्रतिबन्धकत्वम्, अत आवरणप्राचीस्थपुरुषस्य तद्वैजात्यप्रत्यक्ष न भवति, तदन्यदिगवस्थितस्य तु पुरुषस्य तत्प्रत्यक्षं भवत्येव, परमेवमभ्युपगमे अप्राप्यकार्यपि चक्षुः स्वसम्मुखस्थितं वस्तु गृह्णाति, यत् क्वचिद् भित्त्यादिव्यवहितस्य वस्तुनो न चक्षुषा ग्रहणम्, तत् स्वप्राचीस्थपुरुषीयचाक्षुषसाक्षात्कार प्रति स्वप्रतीच्यवच्छिन्नावारकभित्त्यादिसयोगस्य प्रतिबन्धकत्वमित्येवं दिशा प्रतिबध्यप्रतिबन्धकभावं प्रकल्प्य निर्वाह्यमिति व्यवहितार्थादर्शनस्य चक्षुष. प्राप्यकारित्वमन्तराऽप्युपपन्नत्वेन व्यवहितार्थादर्शनान्यथानुपपत्त्या चक्षुषः प्राप्यकारित्वसाधनप्रयासस्य वैफल्यापत्तिः स्यादिति ।

**'एतेन'** इत्यस्य 'अपास्ता' इत्यनेनान्वयः । **'चक्षुरादिसंयोगे तिष्ठति वैजात्या०'** इत्यस्य स्थाने 'चक्षुरादिसयोगनिष्ठवैजात्या०' इति पाठो युक्त., अर्द्धनिखातादिस्थले अर्द्धनिखातवंशादिपरिमाणगतवैलक्षण्याप्रत्यक्षत्वोपपत्तये आवारकसयोग-तादृशवैलक्षण्यप्रत्यक्षयो. प्रतिबध्य-प्रतिबन्धकभावो न कल्पनीय., किन्तु विजातीयचक्षुस्सयोग एव तादृशवैलक्षण्यसाक्षात्कारं प्रति कारणम्, अर्द्धनिखातवंशादौ चक्षुस्संयोगस्तु न विजातीय इति विजातीयचक्षुःसंयोगाभावादेव नार्द्धनिखातवंशादिपरिमाणवैलक्षण्यसाक्षात्कार इति, तथा च तादृशवैलक्षण्यसाक्षात्कारप्रयोजकतया चक्षुरादिसंयोगनिष्ठवैजात्यान्तरस्वीकारेणैव तत्र चक्षुस्सयोगगतवैजात्यान्तराभावात्, तादृशवैलक्षण्यप्रत्यक्षाभावस्य निर्वाह., एवकारेण निरुक्तप्रतिबध्य-प्रतिबन्धकभावकल्पनस्य व्यवच्छेदः । **इति कल्पनाऽपि** एवंस्वरूपा कल्पनाऽपि । **तेषां** परेषाम् । **अपास्ता** निरस्तेत्यर्थः । 'एतेन' इत्यतिदिष्ट निरासहेतुमुपदर्शयति-**'तद्धेतोः' इति न्यायेने**ति-'तस्य हेतुत्वकल्पनापेक्षया तद्धेतोरेव हेतुत्व न्याय्यम्' इति सम्पूर्ण न्यायस्वरूपम्, 'प्रकृते चक्षुषो विषयाभिमुख्यविशेषेणाऽऽवरणाभावविशेषेण वा तादृशविजातीयचक्षुस्संयोगकारणतया भवद्भिरवश्यं कल्पनीयेन, तादृशाभिमुख्यविशेषसत्त्वे आवरणाभावविशेषसत्त्वे वा तादृशवैलक्षण्यसाक्षात्कार', तयोरन्यतरस्याभावे तादृशवैलक्षण्यसाक्षात्काराभाव इत्येवं निर्वाहे सति, **तादृशवैजात्यकल्पनायां** तादृशवैलक्षण्यसाक्षात्कारप्रयोजकतया चक्षुस्संयोगगतवैजात्यकल्पनायाम् । **महागौरवात्** चक्षुःसयोगः कल्पनीयः, तद्गत निरुक्तवैजात्यं च कल्पनीयमित्येवं महागौरवादित्यर्थः । यथा चाऽऽम्रवृक्षो निम्बवृक्षापेक्षयाऽल्पो महान् वेत्येवमनुभूयते, तथाऽऽम्रवृक्षः स्वदेशैकशाखापेक्षयाऽन्यशाखावच्छिन्नोऽल्पो महान् वेत्येवमप्यनुभूयते, तादृशानुभवस्यापेक्षा विना नोपपत्तिरित्यपेक्षात्मकान्वयबोधरूपनयसिद्धिरित्याह-**अन्यापेक्षयेवे**ति ॥ ३ ॥

चतुर्थपद्यमवतारयति-**नन्वि**ति । **'मतभेदोऽध्यवसायः'** इति स्थाने 'मतभेदाध्यवसायः' इति पाठः समुचितः । **यत्र** बौद्धादिदर्शने, मतभेदोऽध्यवसीयते, वस्तुस्थित्या बौद्धाद्यभ्युपगतैकान्तक्षणिकादिपदार्थानामेवाभावाद् 'अमुकापेक्षया बाह्यमाभ्यन्तर च वस्तु क्षणिकम्, अमुकापेक्षया विज्ञानमात्रमेव क्षणिकं वस्तु, तथाऽमुकापेक्षया शून्यमेव तत्त्वम्' इत्यस्य,

ननु सर्वत्र वास्तव्येवाऽपेक्षा नयप्रवृत्तिहेतुः ? उत वैज्ञानिक्यपि ? उच्यते–क्वचिद् वैज्ञानिक्यपि, यत्र मतभेदोऽध्यवसायः, तथा चाह—

**नानानयमयो व्यक्तो मतभेदो ह्यपेक्षया ।**
**कोट्यन्तरनिषेधस्तु प्रस्तुतोत्कटकोटिकृत् ॥ ४ ॥**

**नया०–नानेति** । हि निश्चितम्, **मतभेदः** बौद्धौपनिषदादिदर्शनभेदः, **नानानयमयः** स्वेच्छानिवेशितत्वेनाऽनेकनयविकाररूपः, वस्तुतः प्रकृतिरूपो वा, अपेक्षया व्यक्तः, शुद्धपर्याय-विशुद्धद्रव्याद्यपेक्षयैव तत्तदर्थव्यवस्थितेः । नयविशेषतात्पर्यमेतद्, न त्वपेक्षेति चेत् ? न–तात्पर्यस्यापि वस्तुसंबन्धरूपापेक्षामालम्ब्य प्रवृत्तेः, असति संबन्धे तात्पर्यस्य प्रामाण्याऽप्रसरात्, सा चेयमपेक्षा वैजातिकः संबन्धः, अत एव विकल्पसिद्धस्य धर्मिणः प्रतिषेधादिसाधनमामनन्ति सांप्रदायिकाः, 'ईश्वरो नास्ति, प्रकृतिर्नास्ति' इत्यादौ विशिष्टज्ञानाकारविषयत्वेन तत्र धर्मिणो विकल्पसिद्धत्वात् । विशिष्टवस्त्वसिद्धौ

---

तथा ब्रह्माद्वैतैकान्तस्यैवाभावेन तत्र 'अमुकापेक्षया दृष्टिसृष्टिवाद एकजीववादानुगतः, व्यापकैजीववादः, परिच्छिन्नाऽनेकजीववादः' इत्यादेर्वास्तविकापेक्षाश्रितस्यासम्भवात्, किन्तु तत्र यथामतभेदः कल्पितस्तथाऽपेक्षाभेदोऽपि कल्पित एवेति वैज्ञानिक्यपेक्षा नयप्रवृत्तिहेतुरित्यभिसन्धिः ।

विवृणोति–**नानेती**ति । एकनयसमुत्थमेव यद्येकदर्शनं भवेत् तदा नानानयमयत्वं न स्याद्, अपि न चैवम्, किन्तु यस्य यद् यत् स्वरुचितं तत् तत् तत्र सन्निवेशितम्, अतोऽनेकनयविषयविषयकत्वान्नानानयमय इत्याह–**स्वेच्छानिवेशितत्वेने**ति । **प्रकृतिरूपो** नानानयप्रकृतिरूपः, तस्मादपि मतभेदादवान्तरनयविशेषलक्षणमतभेदप्रवृत्तिसम्भवेन प्रकृतिरूपत्वमपि बौद्धोपनिषदादिदर्शनभेदे सम्भवतीति । नन्वपेक्षामन्तरेणैव बौद्धादिदर्शनभेदो व्यक्त एवानुभूयत इति रिक्तमुच्यते 'अपेक्षया व्यक्त' इत्यत आह–**शुद्धे**ति–मतभेदो हि तत्तदर्थविषयकतयैवावभासते, तत्तदर्थश्च यद्यव्यवस्थितरूपः स्यात् कथं व्यवस्थितरूपो नयभेदो भवेत् ? अव्यवस्थितरूपत्वे च संदिग्धस्वरूपतयाऽवभासमानो दर्शनभेदो व्यक्तः कथमिव भवेत् ? अतः शुद्धपर्यायापेक्षया क्षणिकत्वरूपार्थव्यवस्थित्या तद्विषयक बौद्धदर्शनं निर्णीतार्थकत्वान्निर्णीतस्वरूपं व्यक्तम्, एवं विशुद्धद्रव्यापेक्षया नित्य-शुद्ध-सन्मात्ररूपब्रह्मार्थव्यवस्थित्या तद्विषयक वेदान्तदर्शन निर्णीतार्थकत्वान्निर्णीतस्वरूप व्यक्तमिति 'अपेक्षया व्यक्तः' इति युज्यते । शङ्कते–**नयविशेषे**ति–'शुद्धपर्यायापेक्षया क्षणिक वस्तु' इत्यस्य ऋजुसूत्रनयतात्पर्येण वस्तु क्षणिकमित्यर्थः, शुद्धद्रव्यापेक्षया 'सदद्वितीय ब्रह्म' इत्यस्य सद्ग्रहनयतात्पर्येण सन्मात्रस्वरूप ब्रह्मेत्यर्थः, इत्थ नयविशेषतात्पर्योपवर्णनमेवापेक्षाशब्देन क्रियते, न तु तात्पर्यविशेषातिरिक्त किञ्चिदपेक्षावाच्यमिति शङ्कार्थः । प्रतिक्षिपति– **ने**ति । **सम्बन्धे** वस्तुसम्बन्धे । **'वैजातिकः सम्बन्धः'** इति स्थाने 'वैज्ञानिक. सम्बन्धः' इति पाठो युक्त । **अत एव** वैज्ञानिकसम्बन्धस्यापेक्षाशब्दवाच्यस्य बलादेव । **विकल्पसिद्धस्येति**– विकल्पो विज्ञानविशेष एव, तत्सिद्धस्य, नामान्तरेण वैज्ञानिकसम्बन्धलक्षणापेक्षासिद्धस्येत्यर्थः । विकल्पसिद्धस्य धर्मिण. प्रतिषेधादिसाधनमुदाहरणोपदर्शनेन स्पष्टयति– **ईश्वरो नास्तीति**– ईश्वरो नाम जगत्कर्तृत्वविशिष्टात्मस्वरूप., प्रकृतिर्नाम साम्यावस्थापन्नसत्त्व-रजस्तमोगुणत्रयस्वरूपा, तथा च 'ईश्वरो नास्ति' इत्यादौ धर्मिण ईश्वरस्य 'जगत्कर्त्रात्मा' इति विशिष्टाकारज्ञानविषयत्वेन विकल्पसिद्धत्वात्, 'प्रकृतिर्नास्ति' इत्यादौ च धर्मिण. प्रकृते. 'साम्यावस्थापन्न सत्त्व-रजस्तमोगुणत्रयम्' इति विशिष्टाकारज्ञानविषयत्वेन विकल्पसिद्धत्वात्, ईश्वर-प्रकृत्यादौ निरुक्तविशिष्टाकारज्ञानविषयत्वमेव विकल्पसिद्धत्वम्,. तदेव चापेक्षा यतो वैज्ञानिकसम्बन्धोऽपेक्षा, विज्ञान विशिष्टाकारज्ञानम्, तत्कृतो विषयत्वलक्षण सम्बन्ध इति । ननु जगत्कर्तृत्वादिविशिष्टात्मस्वरूपं साम्यावस्थापन्नत्रिगुणस्वरूप विशिष्टवस्त्वेवासिद्धमिति कुतस्तदाकारं ज्ञानम् ? येन तद्विषयत्वेन विकल्पसिद्धत्वं भवेदिति पृच्छति– **विशिष्टवस्त्वसिद्धावि**ति । उत्तरयति–**यथे**ति । **तत्र** नैयायिकस्य, यथा नैयायिकस्य मते गुण-कर्मान्यत्वविशिष्टसत्त्वस्य शुद्धसत्त्वानतिरिक्तत्वमिति शुद्धातिरिक्त विशिष्टं नाम नास्त्येव किञ्चित्, तथापि 'गुणे

कथं विशिष्टाकारो भवेदिति चेत् ? यथा तव विशिष्टाऽनतिरेकेऽपि विशिष्टाऽभावोऽतिरिक्तः प्रतीतिबलात् सिद्धस्तथा मम विशिष्टाकारोऽपीति किं बाधकम् ?, खण्डशःप्रसिद्धधर्म-धर्मिरूपसदुपरागेणासदाकारोत्पत्तेर्नासतः ख्यातिप्रसङ्गः । यद्वा, 'आलयविज्ञानसन्ततिरूप आत्माऽपि यदि क्षणिकः, किं पुनर्वाच्यं बाह्यवस्तुषु ?' इति वैराग्यप्रतिपन्थितृष्णोच्छेदकानित्यत्वभावनोद्देशेन बौद्धदर्शनस्य, 'मुमुक्षुणा सर्वं परित्यज्य स्वात्मनिष्ठेन भवितव्यम्, स चैक एवेति शोक-द्वेषादिनिबन्धनानेकसंबन्धबुद्धिमलप्रक्षालनगङ्गाजलसमानैकत्वभावेनोद्देशेन च वेदान्तिकदर्शनस्य प्रवृत्तेः, तत्तद्दर्शनार्थज्ञानेषु तत्तद्भावनोद्देशप्रयुक्तत्वमेवापेक्षात्वम्, तेनैव तस्य सुनयत्वव्यवस्थितेः, अन्यथा बौद्धसिद्धान्ते बाह्यार्थ-ज्ञानादिवादीनाम्, वेदान्तिसिद्धान्ते च प्रतिबिम्बाऽऽभासा-ऽवच्छेदक-दृष्टिसृष्टिवादादीनामन्योऽन्यविप्रतिषिद्धत्वेन जात्या दुर्नयत्वस्य सम्यग्-

---

सत्त्व नास्ति' इति प्रतीतिर्न भवति, 'गुणे गुण-कर्मान्यत्वविशिष्टसत्त्वं नास्ति' इति प्रतीतिश्च भवति, यदि सत्त्वाभावाद् विशिष्टसत्त्वाभावोऽनतिरिक्त एव स्याद् गुणे सत्त्वाभावप्रतीतिर्यथा न भवति तथा विशिष्टसत्त्वाभावप्रतीतिरपि न भवेत्, भवति च विशिष्टाभावप्रतीतिः, तद्बलाच्छुद्धाभावाद् विशिष्टाभावोऽतिरिक्तोऽभ्युपेयते तथा जैनमते विशिष्टस्य वस्तुनोऽसिद्धावपि विशिष्टाकारकज्ञानप्रतीतिबलाद् विशिष्टाकारः सिद्ध इत्यर्थः । ननु विशिष्टस्य वस्तुनोऽसत्त्वे तदाकारज्ञानमसत्ख्यातिः स्यात्, न चासत्ख्यातिर्जैनैरभ्युपेयत इति विशिष्टाकारज्ञानासम्भव इत्यत आह- **खण्डशःप्रसिद्धेति-** विशिष्टस्यासत्त्वेऽपि विशेषणं विशेष्यं च धर्म-धर्मिस्वरूपं सदेवेति खण्डशो विशिष्टस्वरूपानापन्नं पृथक्तयैव प्रसिद्धं यद् धर्मधर्मिस्वरूपं सत् तदुपरागेणासत आकारस्योत्पत्तेर्नासतः ख्यातिप्रसङ्ग इत्यर्थः ।

अपेक्षाया वैज्ञानिकसम्बन्धरूपतापक्षेऽपेक्षासिद्धिमुपदर्श्य प्रकारान्तरेण मतभेदस्यापेक्षिकत्वमुपदर्शयति- **यद्वेति** । **आलयविज्ञानेति-** बौद्धमते विज्ञानसन्ततिर्द्विविधा- आलयविज्ञानसन्ततिः प्रवृत्तिविज्ञानसन्ततिश्च, तत्र 'अहमहम्' इति निर्विकल्पकविज्ञानसन्ततिरालयविज्ञानसन्ततिः, सा च सुषुप्तावप्यनुवर्तते, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानं प्रति कारणत्वात् तत्सन्तानाविच्छेदः, तत्सन्ततिरूप आत्मा, 'अयं घटोऽयं पटः' इति सविकल्पकज्ञानसन्ततिः प्रवृत्तिविज्ञानसन्ततिः, तस्याः सुषुप्तौ विलयः, सुषुप्त्यन्तिमक्षणसमुत्थं चालयविज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानं च जनयतीति जाग्रद्दशायां स्वप्नदशायां च प्रवृत्तिविज्ञानसन्ततिसम्भव इति । '**आलयविज्ञानसन्ततिरूप आत्माऽपि**' इत्यारभ्य '**वाह्यवस्तुषु**' इत्यन्तमनित्यत्वभावनाया आकारोपवर्णनम्, उक्ताकारा चानित्यत्वभावना, वैराग्यस्य प्रतिपन्थिनी- विरोधिनी या तृष्णा- 'सर्वदा सुखी भवेयम्, सुखकारणं धन-कलत्र-पुत्रादिकं मे भवतु, दुःखी च मा भूवम्, मम शत्रवो नश्यन्तु' इत्यादिरूपा, तस्या उच्छेदिका, एतादृशानित्यत्वभावनोद्देशेन, **बौद्धदर्शनस्य** 'सर्वं क्षणिकम्' इत्यभ्युपगन्तृबौद्धदर्शनस्य, 'प्रवृत्तेः' इत्यन्वयः । '**मुमुक्षुणा**' इत्यारभ्य '**स चैक एवेति**' इत्यन्तमेकत्वभावनाया आकारोपवर्णनम् । **स च** आत्मा पुनः **शोकेति-** पुत्र-कलत्रादिकं किञ्चिद् वस्तु यदि स्वस्माद् भिन्नं स्यात् तदा तन्मरणादिप्रभवः शोकः स्यात्, एवं स्वभिन्ने शत्रावपकारिणि द्वेषः, अन्यपरिगृहीतायामपरिगृहीताया रूप-यौवन-लावण्यादिसम्पन्नायामबलायां मोहः स्यादित्येवं शोक-द्वेष-मोहादिनिबन्धनं याऽनेकसम्बन्धबुद्धिस्तद्रूपं यन्मलं तस्य प्रक्षालने गङ्गाजलसमाना "यदा सर्वमात्मैवाभूत् तत् केन कं पश्येत् ?, तत्र को मोहः ? कः शोकः ? एकत्वमनुपश्यतः, आत्मानं चेद् विजानीयादयमस्तीति पुरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" [ ] इत्यादिश्रुतिवचनाभ्यसनप्रभवैकत्वभावनाया उक्तमलप्रक्षालकत्वं युज्यत एव, एतादृशैकत्वभावनोद्देशेन च, **वेदान्तिकदर्शनस्य** ब्रह्माद्वैतवादस्य प्रवृत्तेरित्यर्थः । एवं च **तत्तद्दर्शनार्थज्ञानेष्विति-** बौद्धदर्शनविषयज्ञाने निरुक्तानित्यत्वभावनोद्देशप्रयुक्तत्वमपेक्षात्वम्, वेदान्तदर्शनविषयज्ञाने निरुक्तैकत्वभावनोद्देशप्रयुक्तत्वमपेक्षात्वमित्यर्थः । **तेनैव** निरुक्तापेक्षात्वेनैव । **तस्य** तत्तद्दर्शनविषयज्ञानस्य । **अन्यथा** तत्तद्दर्शनार्थज्ञानेषु तत्तद्भावनोद्देशप्रयुक्तत्वलक्षणापेक्षात्वस्यानाश्रयणे '**बाह्यार्थ-ज्ञानादि**' इत्यादिपदात् साकारज्ञानमात्रवाद-शून्यवादयोरुपग्रहः '**वादीनाम्**' इति स्थाने 'वादादीनाम्' इति पाठो युक्तः, वाह्यार्थ-ज्ञानवादः

दृष्टिपरिग्रहेणापि निराकर्तुमशक्यत्वात्, नहि जात्या हलाहलं सद्वैद्यहस्तोपादानमात्रेणामृतायते, रसायनीकरणं तु तस्योक्तापेक्षयैवेति दृढतरमवधेयम् ।

ननूक्तापेक्षयापि शुद्धर्जुसूत्रादीनामितरनयार्थप्रतिषेधप्रवृत्तौ कथं न दुर्नयत्वम् ? इतरांशौदासीन्यस्यैव सुनयलक्षणत्वात्, दृश्यन्ते च ते नयाः स्वसमये परसमये च स्वेतरनयार्थबाधेनैव प्रगल्भमाना इत्याशङ्कयाऽऽह-कोट्यन्तरस्य-इतरनयार्थस्य, निषेधः-निराकरणम्, प्रस्तुता या उत्कटकोटिस्तत्कारी, विशिष्टविधेर्विशेषणविश्रामेण प्रस्तुतकोटेरुत्कटत्वकृदित्यर्थः । अयं भावः-यदीतरनयार्थप्रतिषेधो द्वेषबुद्ध्या तदा दुर्नयत्वमेव, यदि चोक्तभावनादार्ढ्यानुकूलस्वविषयोत्कर्षाधानाय तदा सुनयत्वमेव, जात्या दुर्नयस्यापि चिन्ताज्ञानेन फलतः सुनयीकरणात्, भावनाज्ञानेनैदम्पर्यार्थप्रधानकप्रमाणवाक्यैकदेशत्वापादनाच्च, तदाहुः श्रीहरिभद्रसूरयः षोडशप्रकरणे—

सौत्रान्तिक-वैभाषिकयोः, तत्रापि साकारविज्ञानवादः सौत्रान्तिकस्य, साकारं च विज्ञानमर्थं न गृह्णाति, किन्तु ज्ञानगतप्रतिनियताकाराऽन्यथाऽनुपपत्त्या बाह्यार्थकल्पनम्, निराकारविज्ञानवादो वैभाषिकस्य, तन्मते निराकारं ज्ञानं विषयश्च समकालमेवैकसामग्र्योपजायते समानसामग्रीप्रभवयोर्ज्ञान-बाह्यार्थयोः समकालीनयोर्विषय-विषयिभावश्च सम्बन्ध इति, साकारविज्ञानमात्रवादो योगाचारस्य, शून्यमेव तत्त्वमिति वादो माध्यमिकस्येति । प्रतिबिम्बेति-अनेकाऽव्यापकजीववादे बुद्धिरन्तःकरणम्, तत्प्रतिबिम्बितं चैतन्यं जीवः, अविद्याप्रतिबिम्बितं चैतन्यमीश्वर इति, व्यापकजीववादे मायाऽविद्ययोर्भेदपक्षे मायाप्रतिबिम्बितं चैतन्यमीश्वरः, अविद्याप्रतिबिम्बितं चैतन्यं जीव इति, तयोरभेदपक्षेऽविद्याबिम्बत्वाक्रान्तं चैतन्यमीश्वरः अविद्याप्रतिबिम्बत्वाक्रान्तं चैतन्यमीश्वर इति, एवमन्तःकरणे यश्चैतन्यस्याऽऽभासः स जीवः, मायायां चैतन्यस्याऽऽभास ईश्वर इत्याभासवादः, अन्तःकरणावच्छिन्नं चैतन्यं जीवः, मायावच्छिन्नं चैतन्यमीश्वर इत्यवच्छेदकवादः, दृष्टिसृष्टिवादस्तु दृष्टिरेव सृष्टिरिति एक एव जीवो यद् यद् वस्तु यदा पश्यति तदैव तदस्ति, अदर्शनकाले च नास्त्येव तद् वस्तु, इत्येवं बौद्धसिद्धान्ते बाह्यार्थ-ज्ञानादिवादादीनां वेदान्तिसिद्धान्ते च प्रतिबिम्बवादादीनाम् । **अन्योऽन्यविप्रतिषिद्धत्वेन** परस्परविरुद्धार्थकत्वेन, **जात्या** स्वभावतः, दुर्नयत्वस्य, **सम्यग्दृष्टिपरिग्रहेणापि** सम्यग्दृष्टिर्यदि निरुक्तवादानां परिग्रहं कुर्यात् तदापि निराकर्तुमशक्यत्वात् तत्तद्भावनोद्देशप्रयुक्तत्वलक्षणमपेक्षात्वमाश्रित्य सम्यग्दृष्टिरुक्तवादानां सुनयत्वोपपादनतो दुर्नयत्वं निराकुर्यात्, निरुक्तापेक्षात्वाश्रयणमन्तरेण च तेषां दुर्नयत्वं निराकर्तुमशक्यं सम्यग्दृष्टिपरिग्रहेणापीति । उक्तमर्थं दृष्टान्तावष्टम्भेन द्रढयति-**नहीति**-अस्य **'अमृतायते'** इत्यनेन सम्बन्धः । **तस्य** हलाहलस्य ।

उत्तरार्द्धमवतारयति-**नन्विति** । **ते नयाः** शुद्धर्जुसूत्रादयो नयाः । ननु स्थैर्यस्य निषेधेऽनिषेधे वा बौद्धस्य स्वाभ्युपगतः क्षणिकत्वपक्षः समस्त्येव, यो हि परमतं न प्रतिक्षिपति तस्यापि तद्विपरीतं स्वमतं समस्त्येवेति 'उत्कटकोटि' इत्यत्र विशेष्यीभूता या स्वाभिमतवस्तुस्वरूपा कोटिस्तत्कारित्वमितरनयार्थनिषेधस्य न सम्भवतीत्यत आह-**विशिष्टविधेरिति**-यद्यप्यनन्तधर्मात्मके वस्तुनि परस्परविरुद्धमतद्वयार्थौ कोटिद्वयौ सम्भवतस्तथाऽपि ऋजुसूत्रनयः स्थैर्यखण्डनेन क्षणिकत्वं व्यवस्थापयन् स्वाभिमतस्य क्षणिकत्वस्योत्कटत्वं विदधातीत्येव परनयार्थखण्डनं प्रस्तुतकोटेरुत्कटत्वकृदित्यर्थ इति । अस्यैव भावार्थमाविष्करोति-**अयं भाव** इति । **उक्तभावनेति**-बौद्धस्यानित्यत्वभावनेति वेदान्तिन एकत्वभावनेत्यर्थः, अनित्यत्वभावनादार्ढ्यानुकूलो यो बौद्धसिद्धान्तविषयस्य क्षणिकत्वस्योत्कर्षः, तदाधानाय – तद्व्यवस्थापानाय सङ्ग्रहादिनयविषयस्य स्थैर्यस्य निराकरणम्, एवमेकत्वभावनादार्ढ्यानुकूलो यो वेदान्तसिद्धान्तविषयस्य ब्रह्माद्वैतस्योत्कर्षस्तद्व्यवस्थापनाय नैगमादिनयविषयस्य द्वैतवादस्य निराकरणं यदभिमतं तदा बौद्धादिदर्शनानामपि सुनयत्वमेवेत्यर्थः । **जात्या** स्वभावेन । **दुर्नयरूपस्यापि** बौद्धादिदर्शनस्य **चिन्ताज्ञानेन** 'अस्येदं तात्पर्यम्' इत्यादिविचारात्मकमतिज्ञानेन । **फलत** इति-यथा सुनयस्य फलं सम्यग्ज्ञानादिकं भवति तथा दुर्नयस्यापि चिन्ताज्ञानसहकारेण तत्फलं समुपजायत इति कृत्वा फलतः सुनयीकरणं बोध्यम् । **भावनाज्ञानेनेति**-उपदर्शितभावनाज्ञानेन, ऐदम्पर्यार्थप्रधानकम्-तात्पर्यार्थप्रधानकम्, यत् प्रमाणवाक्यं सप्तभङ्ग्यात्मकम्, तदेकदेशत्वस्य – तद्घटकावान्तरवाक्यत्वस्य, आपादनात्-प्रापणाच्चेत्यर्थः ।

" ऐदम्पर्यं शुद्ध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित् स्यादन्यथाग्रहणात् ॥ १ ॥
तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत् प्रवचनादन्यत्" ॥२॥ इति ।

नन्वेवं स्वसमयवाक्येभ्यः परसमयवाक्यानां को विशेषः ? फलतो जातितश्च शुद्ध्यशुद्ध्योरविशेषात्, नहि ज्ञान-दर्शन-लिङ्ग-चारित्रादिवादेषु स्वसमये स्थितपक्षोऽपि स्वविषये प्राधान्यं विदधानः, ज्ञानादिनयविषये च तन्निराकुर्वाणो जात्या शुद्धत्वमङ्गीकुरुते, तथा च स्थितपक्षवचनम्—

" जम्हा दंसण-नाणा संपुण्णफलं न दिंति पत्तेयं ।
चारित्तजुआ दिंति उ विसिस्सए तेण चारित्तं " ॥ १ ॥ति [ ]

अत्र हि ज्ञानादिनयेनैतद् वक्तुं शक्यम्—' यथा त्वया संपूर्णफलप्रापकत्वेन चारित्रमुत्कृष्यते तथा मया तदुपनायकत्वेन " दासेन मे० " [ नयोपदेश–५५ ] इत्यादिन्यायात् व्यापारतया चारित्रान्यथासिद्ध्यापादानाच्च ज्ञानादिकमेवोत्कर्षमारोपणीयम् ' इति, विजृम्भितं चेदमध्यात्ममतपरीक्षायां बहुधाऽस्माभिः, तथा च प्राधान्यस्याप्यव्यवस्थितत्वात् कुत्र केन नयेन जात्या व्यवस्थेयम् ?, फलतः शुद्धिस्तु स्व-परसमयोरविशिष्टेति चेद् ? अत्रास्माकमाभाति—यथा देश-प्रदेश-खण्ड-परमाण्वादेः स्कन्धसंबन्धा-

उक्तार्थे श्रीहरिभद्रसूरिवचनं प्रमाणयति—तदाहुरिति । यत्र यस्मिन्नागमे स्वसमये परसमये वा, **ऐदम्पर्यं** तात्पर्यम्, **शुद्ध्यति** सम्यक्तयोपपद्यते, **असावागमः** स्वीयः परकीयो वा, **सुपरिशुद्धः** प्रमाणवाक्यमित्यर्थः, **तदभावे** शुद्धैदम्पर्याभावे, ऐदम्पर्यं तु विद्यत एव परं तच्छोधनं न जातमिति यावत्, **अन्यथाग्रहणात्** अन्यप्रकारेण स्थितस्यार्थस्यान्यप्रकारेण ग्रहणात्, कश्चिद् आगमैकदेशः स्यात् । तत्रापि तस्मिन्नप्यागमैकदेशे क्षणिकत्वाद्येकैकधर्ममात्रप्रतिपादके, **द्वेषो न कार्यः** ' एकान्तप्रतिपादकत्वान्नायमुपादेयः ' इत्येव न विधेयं, **तु** पुनः किन्तु, **यत्नतः** तात्पर्यान्वेषणतो विषयो **मृग्यः** सम्यक्तात्पर्यमाकलय्यास्याऽऽगमस्यायमर्थो युक्त्युपपन्नत्वाद् ग्राह्योऽयं तु युक्त्या न घटतेऽतो न ग्राह्य इत्येवं परिभावनीयः, यत् **प्रवचनाद्** जैनागमात्, **अन्यत्** तीर्थान्तरीयम्, तस्यापि सर्वं वचन न सत्, किन्तु यत्र तात्पर्यार्थो घटते तत् सद् वचनम्, यत्र तात्पर्यो न घटते न तत् सद्वच-मित्येवं विवेक इत्यर्थः ॥

शङ्कते—**नन्वेवमिति** । **'नहि'** इत्यस्य **'शुद्धत्वमङ्गीकुरुते'** इत्यनेनान्वयः । **तन्निराकुर्वाणः** प्राधान्य निराकुर्वाणः । 'स्थितपक्षोऽपि जात्या शुद्धत्वं नाङ्गीकुरुते' इत्येव स्थितपक्षवचनमुद्भाव्य समर्थयति—**तथा चेति** । **'जम्हा०'** इति—"यस्माद् दर्शन-ज्ञाने सम्पूर्णफलं न दत्त. प्रत्येकम् । चारित्रयुक्ते दत्तस्तु विशिष्यते तेन चारित्रम् " इति संस्कृतम् । 'चारित्रयुक्ते ज्ञान-दर्शने सम्पूर्णं फल दत्तः ' इत्येतावता चारित्रस्य ज्ञान-दर्शनाभ्यामुत्कृष्टत्वमनेन वचनेन प्रतिपादितम्, तत्रोक्तदिशा प्राधान्यस्योररीकारे तस्याव्यवस्थितत्वमेव स्यादित्येतत् प्रकटयति—**अत्रेति**—उक्तरीत्या चारित्रस्योत्कृष्टत्वे इत्यर्थः । **त्वया** चारित्रप्राधान्यवादिना । **मया** ज्ञानादिप्राधान्यवादिना । **तदुपनायकत्वेन** ज्ञानाद्युपनायकत्वेन, सम्यग्ज्ञान-दर्शनयोर्भाव एव चारित्रं समीचीनं सत् फलमुपजनयतीति चारित्रं व्यापारभूतमेव व्यापारिणी ज्ञान-दर्शने उपनाययतीत्यतो ज्ञान-दर्शने एव फल प्रति प्रधानकारणम्, चारित्रं तु तद्व्यापारतयाऽन्यथासिद्धमेवेत्येवं ज्ञानादिकमेवोत्कर्षपदमारोपणीयं मया, यथा—दासद्वारा क्रीते खरे स्वामिन एव प्राधान्यमित्यर्थः । **दासेन मे०** इति—"दासेन मे खरः क्रीतो दासो मम खरोऽपि मे " इति सम्पूर्णन्यायस्वरूपम् । श्रीमद्भिर्यशोविजयोपाध्यायैरेतद्विषये विशेषजिज्ञासून् स्वकृताध्यात्ममतपरीक्षावलोकनमावश्यकपद्धतावानेतुमुपदिश्यते—**विजृम्भितमिति** । एव च प्राधान्यस्याव्यवस्थितत्वाज्जात्या परिशुद्धत्वं न कुत्रापि, फलतस्तु परिशुद्धिः स्वसमय-परसमययोरविशिष्टेति स्वसमयवाक्येभ्य परसमयवाक्याना न कश्चिद् विशेष इति शङ्कार्थमुपसंहरति—**तथा चेति** । उक्ताशङ्कायां ग्रन्थकार. स्वसूक्ष्मेक्षिकाकृतं समाधानमुपदर्शयति—**अत्रेति**-उक्तशङ्कायामित्यर्थः । **अस्माकं** यशोविजयोपाध्यायानाम् । **आभाति** समाधान प्रतिभासते । तदेव समाधानमुपदर्श्यते—**यथेति**— स्कन्धसम्बद्धो द्विप्रदेशादिको देशः, स्कन्धसम्बद्धः परमाणुः प्रदेशः, स्कन्धाद् विच्छिन्नश्च द्विप्रदेशादिकः स्कन्धासम्बद्धः खण्डः, स्कन्धात् पृथग्भूतश्चाऽणुः स्वतन्त्रतयाऽसम्बद्धः परमाणुरित्येवं स्कन्धसम्बन्धाभ्यां यथा देशादेर्भेदः, तथा स्वसमयस्थविचित्रनयानां प्रमाण-

ऽसंबन्धाभ्यां भेदः, तथा स्वसमय-परसमयस्थविचित्रनयानां प्रमाणवाक्यान्तर्भाव-बहिर्भावाभ्याम्, तौ च पदार्थवाक्यार्थादिभावेन साकाङ्क्षतया स्वातन्त्र्येण निराकाङ्क्षतया चेति न जातिभेदानुपपत्तिः, स्वसमय-नयेषु निराकाङ्क्षप्रमाणबोधपर्यवसानेन तदत्यन्तोत्कर्षरूपकेवलज्ञानफलोद्देशः, परसमयनयेषु च उक्त-भावनामात्रफलोद्देश इति फलतोऽपि भेदो व्यक्त एवेति सर्वमवदातम् ।

ननु यद्येवं नयार्था आपेक्षिकास्तदा अवयव्येकत्वमपि द्वित्वादिवद् बुद्धिजन्यमेव स्यात्, उभयमपि वा ज्ञानाकारमात्रमिति चेत्, न– एकत्वद्वित्वादीनामनन्तानां संख्यापर्यायाणामेकद्रव्यवृत्तीनामेव सतां यथाक्षयोपशमं बुद्धिविशेषेण प्रतिनियतानामेव ग्रहणमित्यभ्युपगमात्, युक्तं चैतत्, अन्यथा एकत्रैव घटे 'तद्रूप-तद्रसवतोरैक्यम्' इत्यादिना द्विवचनप्रयोगस्य, बहुषु च करि-तुरग-रथ-पदातिषु 'सेना' इत्येकवचनप्रयोगस्यानुपपत्तेः । अथैकत्वद्वित्वादि तत्तद्धर्मप्रकारकबुद्धिविषयत्वादिकं गौणमेव द्वित्वादि-व्यवहारनिमित्तम्, तच्च तत्तद्धर्मावच्छेदेन पर्याप्तमिति न 'एको द्वौ' इत्यादेः प्रसङ्गः, मुख्यं तु द्वित्व-

वाक्यान्तर्भूतत्वम्, परसमयस्थविचित्रनयाना प्रमाणवाक्यबहिर्भूतत्वमित्येव स्वसमय-परसमयस्थनयाना विशेष इत्यर्थः । यदा च प्रमाणवाक्यान्तर्भाव-बहिर्भावाभ्या स्वसमय-परसमयस्थविचित्रनयाना भेदो व्यवस्थितो भवति तदा जातिभेदोऽपि तेषा सूपपादः, यतः सप्तभङ्ग्यात्मकप्रमाणवाक्यान्तर्भूतं च नयवाक्य प्रमाणवाक्यार्थांशप्रतिपादकत्वात् पदस्थानीयं तदर्थस्य पदा-र्थान्तरसाकाङ्क्षत्वम्, प्रमाणवाक्यबहिर्भूतं च नयवाक्यं स्वतन्त्रत्वाद् वाक्यमेव तदर्थस्य निराकाङ्क्षत्वमित्येवं प्रमाणवाक्या-न्तर्भूत-प्रमाणबहिर्भूतौ पदार्थ-वाक्यार्थभावेन साकाङ्क्षतया स्वातन्त्र्येण निराकाङ्क्षतया च विभिन्नजातीयाविति न जाति-भेदानुपपत्तिरित्याह– **तौ चेति**– प्रमाणवाक्यान्तर्भावबहिर्भावौ चेत्यर्थः । एतावता जातितो भेदास्योपपादनेन स्वसमयस्थनय-वाक्याना जातितः शुद्धिः, परसमयस्थनयवाक्यानां जातितोऽशुद्धिः समर्पिता । इदानीं फलभेदोपपादनद्वारा फलतः शुद्ध्य-शुद्धी उपदर्शयते– **स्वसमयनयेष्विति** । **तदत्यन्तोत्कर्षरूपेति**– निराकाङ्क्षप्रमाणबोधात्यन्तोत्कर्षरूपेत्यर्थः । **उक्तभाव-नेति**– उक्तानित्यत्वभावना-निरुक्तैकत्वभावनेत्यर्थः ।

नयार्थानामापेक्षिकत्वमसहमानः परः शङ्कते– **नन्विति** । **एवम्** उक्तप्रकारेण । **द्वित्वादिवदिति**– आदिपदात् त्रित्वादि-परार्धपर्यन्तसङ्ख्याना परिग्रहः, "द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मता" । [कारिकावलिश्लो० १०७] इति नैयायिक-सिद्धान्ताद् यथा द्वित्वादिकमपेक्षाबुद्धिजन्यं तथाऽवयव्येकत्वमप्यपेक्षाबुद्धिजन्य स्याद् आपेक्षिकत्वस्येत्थमेवोपपत्तेरित्यर्थः । अपेक्षा वैज्ञानिकसम्बन्धरूपतयेष्टा, वैज्ञानिकसम्बन्धश्च विज्ञानजन्यत्वाद् विज्ञानाकाररूपत्वाद् वा सम्भवतीति तत्र विज्ञान-जन्यत्वेनापेक्षिकत्वमापाद्य विज्ञानाकाररूपत्वेन तदापादयति– **उभयमपि वेति**– अवयव्येकत्व-द्वित्वाद्युभयमपि वेत्यर्थः, एकत्व-द्वित्वादयः सर्वेऽपि सङ्ख्यापर्याया अनन्ता अप्येकत्र द्रव्ये सम्भवन्ति, परं तेषा मध्यात् प्रतिनियतानामेव तत्र सताम्, यथाक्षयोपशम बुद्धिविशेषणम्, क्षयोपशमापेक्षबुद्धिविशेषग्राह्यत्वमपि वैज्ञानिकसम्बन्ध एवेत्येतावताऽऽपेक्षिकत्व-मुपपद्यत इति समाधत्ते– **नेति** । एकत्रैव द्रव्ये एकत्व-द्वित्वादिक समस्त्येव, अपेक्षया तु प्रतिनियतानां ग्रहणमित्यस्य युक्तत्वं व्यवस्थापयति– **युक्त चैतदिति** । **अन्यथा** अनन्ताना सङ्ख्यापर्यायाणामेकद्रव्यवृत्तित्वाभावे । **द्विवचनप्रयो-गस्य** 'तद्रूप-तद्रसवतो' इति षष्ठीद्विवचनप्रयोगस्य 'अनुपपत्ते.' इत्यनेनान्वय, यद्येकस्मिन् घटे एकत्वमेव न द्वित्वं तदा तद्रूपवान् य एव घट स एव तद्रसवानपीति तस्यैकत्वेन द्वित्वार्थस्य तत्राघटमानत्वेन तदर्थकस्य द्विवचनप्रयोगस्यानुपपत्तेरित्यर्थः । **'इत्यादिना'** इत्यादिपदात् 'तद्रूप-तद्रस-तत्स्पर्शवतामैक्यम्' इत्यादिप्रयोगस्यापि ग्रहणेन तत्रत्यबहुवचनप्रयोगस्या-प्येकस्मिन् बहुत्वस्याभावेऽनुपपत्तेरित्यपि बोध्यम् । **बहुषु चेति**– सेनापदेन बहूनां करि-तुरग-पदातीनामेवावबोधनम्, नह्येकः कर्येव तुरगादिरेव वा प्रत्येक सेनेत्युच्यते, तथा च सेनापदप्रतिपाद्याना बहूना करि-तुरग पदातिप्रभृतीनामेकत्वस्याभावे तदर्थकस्य सेनापदोत्तरैकवचनस्यानुपपत्तेरिति यत्रैकत्वं तत्र द्वित्वादिकमपि, यत्र द्वित्वादिकं तत्रैकत्वमपि, यथाक्षयोपशमं च बुद्धिविशेषेण प्रतिनियतस्य ग्रहणमेष्टव्यम्, तदेवाऽऽपेक्षिकत्वमित्यर्थः । एकस्मिन् द्रव्ये मुख्य द्वित्वादिकमसहमानो नैयायिकः शङ्कते– **अथेति**– 'एकत्व-द्वित्वादि' इति स्थाने 'एकत्र द्वित्वादि' इति पाठो युक्तः, एकत्र द्वि[illegible]दिव्यवहारनिमित्त तत्तद्धर्मप्रकारकबुद्धिविषयकत्वादिक गौणमेव द्वित्वादीत्यन्वयः । **तच्च** तत्तद्धर्मप्रकारकबुद्धिविषयत्वादिरूपं द्वित्वादि च ।

मपेक्षाबुद्धिजन्यं द्विष्ठमन्यदेवेति न दोष इति चेत् ? न– उक्तविषयतारूपद्वित्वादेरप्येकत्वपर्याप्तत्वात्, तत्तद्धर्मप्रकारतानिरूपितत्वविशिष्टविषयताया अपि क्वचित् संबन्धादिभेदेन प्रकारताभेदादेकस्या अभावात्, भावेऽपि च द्वयस्य प्रत्येकानतिरिक्तत्वेन एकधर्मावच्छेदेन द्वित्वादिपर्याप्तिप्रसङ्गात्, धर्मगतद्वित्वस्यैव तत्पर्याप्त्यवच्छेदकतावच्छेदकत्वस्वीकारे च तत्रापि द्वित्वस्य वास्तवस्याभावाद् रूपत्व-रसत्वादिप्रकारक-बुद्धिविषयत्वरूपस्यैव गौणस्य स्वीकारे च तत्पर्याप्त्यवच्छेदकादिगवेषणेऽनवस्थितेः, वास्तवद्वित्वाद्यभावे ज्ञानाकारतापर्यवसानेन साकारवादप्रसङ्गाच्च । तस्माद् द्रव्यत्वावच्छिन्नैकत्वादेः पर्याप्तिस्वीकारेऽनेकान्त-वाद एवानाविला व्यवस्थेति ध्येयम् । अत एव " दव्वट्ठयाए एगे अहं नाण-दंसणट्ठयाए दुवे अहं " इत्यादि पारमर्षम् ।

---

**तत्तद्धर्मावच्छेदेन पर्याप्तमिति**–यद्यद्धर्मप्रकारकबुद्धिविषयत्वादिरूपं द्वित्वादि तत् तत्तद्धर्मावच्छेदेन पर्याप्तम् । **इति** एतस्मात् कारणात् । **न 'एको द्वौ' इति प्रसङ्ग** इति– उक्तद्वित्वस्यैकत्वाद्यवच्छेदेनापर्याप्तत्वाद् 'एको द्वौ, घटोऽयं द्वौ' इत्यादेर्न प्रसङ्गः, तद्रूपवत्त्व-तद्रसवत्त्वप्रकारकबुद्धिविषयत्वरूपस्य द्वित्वस्य तद्रूपवत्त्व-तद्रसवत्त्वावच्छेदेन पर्याप्तत्वात् 'तद्रूप-तद्रसवतोः' इति द्विवचनप्रयोग उपपद्यत इत्यर्थः । **'मुख्यं तु द्वित्वम्'** इत्यत्र द्वित्वं त्रित्वादेरुपलक्षणम्, **'द्विष्ठम्'** इति च त्रिष्ठमित्यादेरुपलक्षणम् । **अन्यदेव** तत्तद्धर्मप्रकारकबुद्धिविषयत्वादितो भिन्नमेव । समाधत्ते– **नेति** । **उक्तविषयता-रूपेति**– तत्तद्धर्मप्रकारकबुद्धिविषयतारूपेत्यर्थः । **'अप्येकत्वपर्याप्तत्वाद्'** इति स्थाने 'अप्येकत्र पर्याप्तत्वाद्' इति पाठो युक्तः, 'एकत्र पर्याप्तत्वाद्' इत्यस्यैकत्वावच्छेदेनैकधर्मावच्छेदेन वा पर्याप्तत्वादित्यर्थः, तथा च 'एको द्वौ, घटो द्वौ' इत्यादि-प्रसङ्गः स्यादिति भावः । ननु तद्रूपवत्त्वप्रकारतानिरूपितत्वे सति तद्रसवत्त्वप्रकारतानिरूपिता या विशेष्यता तदात्मक-विषयतारूपद्वित्वमेकं तद्रूपवत्त्व-तद्रसवत्त्वरूपधर्मद्वयावच्छेदेनैव पर्याप्तम्, न त्वेकत्वावच्छेदेनैकधर्मावच्छेदेन वेति न 'एको द्वौ' इत्यादेः प्रसङ्ग इत्यत आह– **तत्तद्धर्मेति**– धर्मद्वयादौ प्रकारता यद्येका स्यात् तदा तन्निरूपितविशेष्यताविशेषरूपाया विषयताया ऐक्यं स्याद्, यदा त्ववच्छेदकधर्मभेदादवच्छेदकसम्बन्धभेदाच्च प्रकारताया भेदस्तदा तद्रूपनिरूपकभेदाद् विशेष्यताभेदस्यावश्यम्भावे तदात्मकविषयताया अपि भेद इति तद्रूपद्वित्वस्यैकधर्मावच्छेदेनैकत्वावच्छेदेन च पर्याप्तत्वाद् 'एको द्वौ' इत्यादेः प्रसङ्ग स्यादेव, एवं निरूपकभेदेऽपि विषयताभेदो यदि नाभ्युपेयते तदाऽपि समुदायस्य समुदाय्य-नतिरिक्तत्वमिति धर्मद्वयस्य प्रत्येकधर्मानतिरिक्तत्वेन धर्मद्वयस्यावच्छेदकत्वे प्रत्येकधर्मस्याप्यवच्छेदकत्वमिति प्रत्येकधर्मावच्छे-देनापि द्वित्वपर्याप्तेः सम्भवेनोक्तप्रसङ्गः स्यादेवेत्यत उक्तदोषभयाद् गौण-मुख्यद्वित्वव्यवस्थाऽपि परस्य न युक्तेति मुकु-लितोऽर्थः । **तत्तद्धर्मेति**– तत्तद्धर्मप्रकारतानिरूपितत्वविशिष्टविषयताया अप्येकस्या अभावादित्यन्वयः, 'तद्दण्ड-तद्रूपवतोरैक्यम्' इत्यादावच्छेदकसम्बन्धभेदो ज्ञेयः । **'भावेऽपि च'** इत्यस्य तत्तद्धर्मप्रकारतानिरूपितत्वविशिष्टविषयताया एकस्या भावेऽपि चेत्यर्थः । ननु धर्मद्वयस्य न स्वस्वासाधारणरूपेण निरुक्तद्वित्वपर्याप्त्यवच्छेदकत्वं किन्तु द्वित्वेनैवेति पर्याप्त्यवच्छेदक-तावच्छेदकस्य द्वित्वस्य प्रत्येकधर्मेऽभावान्न प्रत्येकधर्मावच्छेदेन द्वित्वस्य पर्याप्तत्वमिति नोक्तप्रसङ्ग इत्यत आह– **धर्मगत-द्वित्वस्यैवेति** । **तत्पर्याप्त्यवच्छेदकतेति**– निरुक्तद्वित्वपर्याप्त्यवच्छेदकतेत्यर्थः । **तत्रापि** रूपरसादिलक्षणधर्मद्वयेऽपि । रूप-रसादीनां गुणत्वेन गुणे गुणानङ्गीकारेण गुणविशेषसङ्ख्यारूपद्वित्वस्य वास्तवस्य तत्राभावादित्याह–**द्वित्वस्य वास्तवस्या-भावादिति** । **तत्पर्याप्त्यवच्छेदकेति**– रूपत्व-रसत्वादिप्रकारकबुद्धिविषयत्वरूपरूप-रसादिगतगौणद्वित्वपर्याप्त्यवच्छेदकेत्यर्थः, तादृशद्वित्वस्य रूपत्व रसत्वादिधर्मद्वयावच्छेदेन पर्याप्तत्वे उक्तदिशा प्रत्येकधर्मावच्छेदेनापि पर्याप्तत्वतो निरुक्तदोषप्रसङ्गस्त-दवस्थ इति तत्परिहाराय रूपत्व-रसत्वगतद्वित्वमभ्युपेत्य तस्य तत्पर्याप्त्यवच्छेदकतावच्छेदकत्वमुररीकरणीयमित्येवं दिशाऽनव-स्थाप्रसङ्गादित्यर्थः । यदि च 'तद्रूप-तद्रसवतोरैक्यम्' इत्यादौ द्विवचनाद्यर्थतया वास्तवद्वित्वादिकं न स्वीक्रियते तर्हि तत्रत्य-द्विवचनाद्यर्थस्य द्वित्वादेर्ज्ञानाकाररूपत्वमेव स्यादिति साकारविज्ञानवादः प्रसज्येतेत्याह– **वास्तवद्वित्वाद्यभाव** इति । उपसंहरति–**तस्मादिति** । **'द्रव्यत्वावच्छिन्नैकत्वादेः पर्याप्तिस्वीकारे'** इति स्थाने 'द्रव्यत्वाद्यवच्छिन्नैकत्वादिपर्याप्ति-स्वीकारे' इति पाठः सम्यक्, एकस्मिन् घटे तद्द्रव्यत्वावच्छेदेनैकत्वस्य पर्याप्तिः, तद्रूप-तद्रसवत्त्वावच्छेदेन द्वित्वस्य पर्याप्ति-रित्येव स्वीकार इत्यर्थः । उक्तार्थे आगमवचनसंवादमाह– **अत एवेति** । **दव्वट्ठ०**– "द्रव्यार्थतया एकोऽहं ज्ञानदर्शनार्थतया द्वावहम्" इति संस्कृतम् ॥

इदमप्यत्र विचार्यते— द्वित्वादिकमपेक्षाबुद्धिजन्यं व्यङ्ग्यं वेति, तत्र जन्यमेवेति नैयायिकाः, व्यङ्ग्यमिति प्राभाकराः। तत्र नैयायिकानामयमाशयः— द्वित्वस्य व्यङ्ग्यत्वनयेऽपेक्षाबुद्धेर्द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वं कार्यतावच्छेदकं वाच्यम्, जन्यत्वनये तु द्वित्वत्वमेवेति लाघवम्। न च व्यङ्ग्यत्वनयेऽपि लौकिकप्रकारतासंबन्धेन द्वित्वत्वमेव तत्कार्यतावच्छेदकं वक्तुं शक्यम्, गुणत्व-संख्यात्व-तद्व्यक्तित्वादिना विनाऽप्यपेक्षाबुद्धिं तत्प्रत्यक्षप्रसङ्गात्, तेन रूपेण तत्प्रत्यक्षं प्रति तस्या हेतुत्वकल्पने चातिगौरवात्। न च स्वाश्रयविषयतया द्वित्वत्वस्य कार्यतावच्छेदकतया न दोष इति वाच्यम्, तथापि व्यङ्ग्यत्वनये स्वाश्रयविषयत्वं कार्यतावच्छेदकतावच्छेदकः संबन्धः, जन्यत्वनये तु समवाय इति जन्यत्वपक्ष एव लाघववान्। अथ द्वित्वप्रत्यक्षेऽपि प्रत्यक्षत्वमेव कार्यतावच्छेदकं द्वित्ववृत्तिविषयतायाः कार्यतावच्छेदक-

अत्र शिष्यबुद्धिवैशद्याय नैयायिक-प्रभाकरयोर्मन्तव्यभेदमुपदर्शयति— इदमपीति। अत्र द्वित्वादिस्वरूपपर्यालोचनायाम्। इदम् 'द्वित्वादिकम्' इत्याद्यनन्तरमेव वक्ष्यमाणम्। व्यङ्ग्यं वा अपेक्षाबुद्धिव्यङ्ग्यं वा। तत्र जन्य-व्यङ्ग्ययोर्मध्ये। जन्यमेव अपेक्षाबुद्धिजन्यमेव द्वित्वादिकम्। व्यङ्ग्यम् अपेक्षाबुद्धिव्यङ्ग्यं द्वित्वादिकम्। प्रथमं नैयायिकाभिप्रायं प्रकटयति— तत्रेति— द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यत्वं नामापेक्षाबुद्धिजन्यप्रत्यक्षविषयत्वमिति द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वावच्छिन्नं प्रत्यपेक्षाबुद्धेः कारणत्वम्, अतो द्वित्वस्यापेक्षबुद्धिव्यङ्ग्यत्वमिति प्रभाकरमते द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वमपेक्षाबुद्धेः कार्यतावच्छेदकमुररीकरणीयम्, द्वित्वमपेक्षाबुद्धिजन्यमिति नैयायिकमते तु द्वित्वत्वावच्छिन्नं प्रत्यपेक्षाबुद्धेः कारणत्वमिति द्वित्वत्वमेवापेक्षाबुद्धेः कार्यतावच्छेदकमिति लाघवम्, अतो द्वित्वस्यापेक्षाबुद्धिजन्यत्वमेव स्वीकरणीयमित्याशयः। ननु लौकिकप्रकारतासम्बन्धेन द्वित्वत्वावच्छिन्नं प्रत्येवापेक्षाबुद्धेः कारणत्वं द्वित्वस्य व्यङ्ग्यत्वपक्षेऽपि वाच्यम्, तथा च मतद्वयेऽपि कार्यतावच्छेदकं द्वित्वत्वमेवेति न लाघवं न्यायमतेऽपि, प्रकारतायाश्च संसर्गतानियामकः सम्बन्धो निरूपकत्वम्, तथा च लौकिकप्रकारतासम्बन्धेन द्वित्वत्वावच्छिन्नं द्वित्वत्वप्रकारकलौकिकप्रत्यक्षमिति तस्यापेक्षाबुद्धिकार्यतया तद्विषये द्वित्वेऽपेक्षाबुद्धिव्यङ्ग्यत्वलाभ इत्याशङ्क्य प्रतिक्षिपति— न चेति— अस्य 'शक्यम्' इत्यनेनान्वयः। तत्कार्यतावच्छेदकम् अपेक्षाबुद्धिकार्यतावच्छेदकम्। निषेधे हेतुमाह— गुणत्वेति— लौकिकप्रकारतासम्बन्धेन द्वित्वत्ववत्प्रत्यक्षमपेक्षाबुद्धिकार्यमिति तदपेक्षाबुद्धिं विना मा भवतु, गुणत्वादिना तु द्वित्वप्रत्यक्षं नापेक्षाबुद्धिकार्यमिति तदपेक्षाबुद्धिं विनाऽप्यापद्येत, यदि च गुणत्वादिना द्वित्वप्रत्यक्षं प्रत्यप्यपेक्षाबुद्धेः कारणत्वं स्वीकृत्य तद्वारणं क्रियते तदाऽतिगौरवमित्यतो व्यङ्ग्यत्वपक्षो न समीचीन इत्यर्थः। तत्प्रत्यक्षेति— द्वित्वप्रत्यक्षेत्यर्थः। तेन रूपेण गुणत्वादिरूपेण। तत्प्रत्यक्षं प्रति द्वित्वप्रत्यक्षं प्रति। तस्याः अपेक्षाबुद्धेः। ननु स्वाश्रयविषयतासम्बन्धेन द्वित्वत्वावच्छिन्नं प्रत्यपेक्षाबुद्धेः कारणत्वम्, द्वित्वत्वप्रकारकप्रत्यक्षं यथा स्वाश्रयविषयतासम्बन्धेन द्वित्वत्ववत् तथा गुणत्वादिना द्वित्वप्रत्यक्षमपि स्वाश्रयविषयतासम्बन्धेन द्वित्वत्ववद् भवतीति तदपि निरुक्तकार्यतावच्छेदकाक्रान्तमित्यपेक्षाबुद्धिं विना न तत्प्रसञ्जनसम्भव इत्याशङ्क्य प्रतिक्षिपति— न चेति— अस्य 'वाच्यम्' इत्यनेन सम्बन्धः। न्यायमते समवायेन द्वित्वत्वं कार्यतावच्छेदकमिति द्वित्वत्वनिष्ठाया कार्यतावच्छेदकताया अवच्छेदकः सम्बन्धः समवायः, स च व्यङ्ग्यत्वपक्षीयकार्यतानिरूपितद्वित्वत्वनिष्ठावच्छेदकतावच्छेदकस्वाश्रयविषयत्वसम्बन्धापेक्षया लघुभूत इत्येवं लाघवाद् व्यङ्ग्यत्वपक्षो न युक्त इति निषेधहेतुमुपदर्शयति— तथापीति— स्वाश्रयविषयत्वस्य द्वित्वत्वनिष्ठकार्यतावच्छेदकतावच्छेदकसम्बन्धत्वमुपगम्यापेक्षाबुद्धिं विना गुणत्वादिना द्वित्वप्रत्यक्षापत्तेर्वारणेऽपीत्यर्थः। निषेधहेत्ववबोधाय 'लाघववान्' इति स्थाने 'लाघवात्' इति पाठो युक्तः। ननु नैयायिकमते यथा द्वित्वत्वमपेक्षाबुद्धेः कार्यतावच्छेदकं तथा प्रभाकरमते प्रत्यक्षत्वमेव तत्कार्यतावच्छेदकम्, द्वित्ववृत्तिविषयता च कार्यतावच्छेदकसम्बन्धः, तेन सम्बन्धेन द्वित्वप्रत्यक्षमेव द्वित्वे वर्तते नान्यप्रत्यक्षमिति तस्यैव प्रत्यक्षत्वेन रूपेणापेक्षाबुद्धिकार्यत्वमिति नातिप्रसङ्गो न वा गौरवमिति शङ्कते— अथेति।

संबन्धत्वेनैवानतिप्रसङ्गात्, अन्यथा द्वित्वप्रत्यक्षस्य विषयतया द्वित्वत्वादावपि जायमानत्वेन व्यभिचारात् । अपेक्षाबुद्धित्वं कारणतावच्छेदकम्, तच्च मानसत्वव्याप्यो जातिविशेषः, कारणतावच्छेदकसंबन्धः स्वविषयपर्याप्तत्वम्, तेन 'घट-पटैकत्वबुद्धित्वेनापेक्षाबुद्धेर्घट-पटद्वित्वप्रत्यक्षहेतुत्वेऽनन्तकार्यकारणभावापत्तिः, द्वित्वप्रत्यक्षत्वावच्छिन्नेऽपेक्षाबुद्धित्वेन सामान्यतो हेतुत्वेऽपि घट-पटद्वित्वप्रत्यक्षकाले घट-कुड्यद्वित्वप्रत्यक्षापत्तिः, स्वविषयवृत्तित्वसंबन्धेनापेक्षाबुद्धेस्तत्रापि सत्त्वाद्, इत्यादिदूषणानवकाशः, घट-पटैकत्वबुद्धेर्घट-कुड्यद्वित्वे स्वविषयपर्याप्तत्वसंबन्धेनासत्त्वादिति व्यङ्ग्यत्वनयेऽपि न गौरवमिति चेत् ? न- एवं सति प्रत्यक्षत्वं कार्यतावच्छेदकम्, ज्ञानत्वं वा, अनुभवत्वं वेत्यादौ विनिगमकाभावात् । किञ्च, व्यङ्ग्यत्ववादिना मैत्रीयापेक्षाबुद्ध्या सन्निकर्षादिवशाद् द्वित्वे चैत्रीयप्रत्यक्षोत्पत्तिवारणाय चैत्रीयापेक्षाबुद्धित्व-चैत्रीयप्रत्यक्षत्वादिना कार्यकारणभावो वाच्य इति गौरवमेव। अथ तव पुरुषान्तरापेक्षाबुद्धिजनितद्वित्वस्य पुरुषान्तराप्रत्यक्षत्वाय द्वित्वनिष्ठविषयतासंबन्धेन चैत्रीयप्रत्यक्षे मैत्रीयद्वित्वादिभेदस्यापि हेतुत्वं कल्पनीयम्, यद्वा चैत्रीयद्वित्वप्रत्यक्षं प्रति चैत्रापेक्षाबुद्धिजन्यद्वित्वेन हेतुता कल्पनीया, कार्यता-

---

द्वित्वप्रत्यक्षत्वस्यापेक्षाबुद्धिकार्यतावच्छेदकत्वोपगमेऽपि द्वित्ववृत्तिविषयतायाः कार्यतावच्छेदकसम्बन्धत्वमवश्यमभ्युपेयम्, विषयतामात्रस्य कार्यतावच्छेदकसम्बन्धत्वे द्वित्वप्रत्यक्षस्य तेन सम्बन्धेन द्वित्वत्वादावपि जायमानत्वेन तत्र स्वविषयपर्याप्तत्वसम्बन्धेनापेक्षाबुद्धेरभावेन व्यभिचारापत्तेरित्याह- **अन्यथेति**- द्वित्ववृत्तिविषयतायाः कार्यतावच्छेदकसम्बन्धत्वानभ्युपगम इत्यर्थः । **तच्च** अपेक्षाबुद्धित्वं च । **तेन** मानसत्वव्याप्यजातिविशेषरूपस्यापेक्षाबुद्धित्वस्य कारणतावच्छेदकतया स्वविषयपर्याप्तत्वस्य कारणतावच्छेदकसम्बन्धतया चाभ्युपगमेन, अस्य 'इत्यादिदूषणानवकाशः' इत्यत्रान्वयः । **घट-कुड्यद्वित्वप्रत्यक्षापत्तिरिति**- 'घटश्चैकः पटश्चैक.' इत्याकारकापेक्षाबुद्धितो घट-पटद्वित्वप्रत्यक्ष यदोपजायते तदा घट-कुड्यद्वित्वप्रत्यक्षमपि स्यात्, द्वित्वप्रत्यक्षत्वरूपकार्यतावच्छेदकस्य घट-पटद्वित्वप्रत्यक्ष इव घट-कुड्यद्वित्वप्रत्यक्षेऽपि सत्त्वात्, अपेक्षाबुद्धित्वलक्षणकारणतावच्छेदकस्य घट-कुड्यद्वित्वप्रत्यक्ष प्रति कारणे 'घटश्चैकः कुड्य चैकम्' इत्याकारकापेक्षाबुद्धिविशेष इव 'घटश्चैकः पटश्चैकः' इत्याकारकापेक्षाबुद्धिविशेषेऽपि सत्त्वेन तद्रूपेण तस्यापि घट-कुड्यद्वित्वप्रत्यक्षं प्रति कारणत्वात्, अपेक्षाबुद्धेः कारणतावच्छेदकसम्बन्धतयाऽभ्युपगतस्य स्वविषयवृत्तित्वस्यापि 'घटश्चैकः पटश्चैकः' इत्यपेक्षाबुद्धेः स्वविषयघटवृत्तित्वमुपादाय घट-कुड्यद्वित्वे सत्त्वादित्यर्थः । स्वविषयपर्याप्तत्वस्य कारणतावच्छेदकसम्बन्धतयाऽभ्युपगमे तु घट-पटैकत्वबुद्ध्यात्मकापेक्षाबुद्धेः स्वविषयपर्याप्तत्वसम्बन्धेन घट-कुड्यद्वित्वेऽसत्त्वान्न घट-पटैकत्वबुद्धितो घट-कुड्यद्वित्वप्रत्यक्षापत्तिरित्याह- **घट-पटैकत्वबुद्धेरिति** । समाधत्ते- **नेति** । **एवं सति** द्वित्ववृत्तिविषयत्वस्य कार्यतावच्छेदकसम्बन्धतया मानसत्वव्याप्यजातिविशेषात्मकापेक्षाबुद्धित्वस्य कारणतावच्छेदकतया स्वविषयपर्याप्तत्वस्य कारणतावच्छेदकसम्बन्धतया चाभ्युपगमेनाऽतिप्रसङ्गव्यभिचारवारणे सति । **प्रत्यक्षत्वमिति**- प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे यथा न कोऽपि दोषस्तथा ज्ञानत्वानुभवत्वयोरपि कार्यतावच्छेदकत्वेऽपि न कोऽपि दोष इति प्रत्यक्षत्वमेव कार्यतावच्छेदकमिति विनिगन्तुमशक्यत्वेनानेककार्य-कारणभावप्रसङ्गादित्यर्थः । व्यङ्ग्यत्वपक्षे गौरवान्तरमप्याह- **किञ्चेति**- चैत्रस्य चक्षु.सयुक्तसमवायो द्वित्वे वर्तते, मैत्रस्यापेक्षाबुद्धिरस्ति, सा चापेक्षाबुद्धिः स्वविषयपर्याप्तत्वसम्बन्धेन द्वित्वे वर्तते इति तद्बलाच्चैत्रस्य द्वित्वप्रत्यक्षमापाद्येतेति तद्वारणाय चैत्रीयप्रत्यक्षत्वावच्छिन्नं प्रति चैत्रीयापेक्षाबुद्धित्वेन कारणत्वम्, मैत्रीयप्रत्यक्षत्वावच्छिन्नं प्रति मैत्रीयापेक्षाबुद्धित्वेन कारणत्वमित्येवं पुरुषभेदेनानन्तकार्य-कारणभावकल्पनगौरवं व्यङ्ग्यत्वपक्षे इत्यर्थः । प्रभाकरमतानुयायी शङ्कते- **अथेति** । **तव** अपेक्षाबुद्धिजन्यं द्वित्वमितिवादिनो नैयायिकस्य, मत इति शेषः; यत्पुरुषीयापेक्षाबुद्ध्या यद् द्वित्वं जन्यते तद्द्वित्वस्य तेनैव पुरुषेण प्रत्यक्षं भवति, चक्षुःसंयुक्तसमवायसन्निकर्षस्तु यथा तत्पुरुषस्य तत्र समस्ति तथा पुरुषान्तरस्यापि तत्र समस्तीति तद्बलात् पुरुषान्तरस्य तत्प्रत्यक्ष स्यात्, तद्वारणाय द्वित्वनिष्ठविषयतासम्बन्धेन चैत्रीयप्रत्यक्ष प्रति मैत्रीयापेक्षाबुद्धिजनित-

वच्छेदकः संबन्धो द्वित्वनिष्ठविषयता, कारकतावच्छेदकश्च तादात्म्यम्, अत एव चैत्रमैत्रापेक्षाबुद्धिभ्यां तुल्यविषयाभ्यां युगपदुत्पन्नाभ्यामुत्पादितं द्वित्वमेकमेवेति मतेऽपि न क्षतिरिति कल्पनायामधिकं गौरवमिति चेत्? न--तद्गौरवस्य फलमुखत्वेनादोषत्वात्। यद्यपि द्वित्वादावपेक्षाबुद्धेर्नैकत्वावगाहिबुद्धित्वेन हेतुता 'अयं घट एकः' इति बुद्धितोऽपि द्वित्वोत्पत्त्यापत्तेः, नापि नानैकत्वावगाहिबुद्धित्वेन 'अयमेकश्चिरविनष्टो घटश्चैकः' इति बुद्धितोऽपि तदापत्तेः, तथापि द्वित्वादिजनकतावच्छेदिका मानसत्वव्याप्या नाना जातयो वाच्याः, अन्यथा कदाचिद् द्वित्वं, कदाचिच्च त्रित्वमिति नियमो न स्यात्। न च स्मृतित्वव्याप्यत्वमेव तासां न कुत इति वाच्यम्, यद्व्यक्तिविशेष्यकैकत्वस्मरणं कस्यापि न जातं तत्र स्मरणानुभवकार्य-

द्वित्वभेदस्य देवदत्तीयाद्यपेक्षाबुद्धिजन्यद्वित्वभेदस्य च कारणत्वं कल्पनीयमिति गौरवमित्यर्थः। **तादात्म्यमिति**- चैत्रीयापेक्षाबुद्धिजन्यं द्वित्वं तादात्म्येन चैत्रीयापेक्षाबुद्धिजन्यद्वित्व एव वर्तते, न तु मैत्रीयापेक्षाबुद्धिजनितद्वित्वे इति तद्रूपकारणाभावाच्च चैत्रीयद्वित्वप्रत्यक्ष द्वित्वनिष्ठविषयतासम्बन्धेन मैत्रीयापेक्षाबुद्धिजन्यद्वित्वे समुत्पद्यत इति। **'अत एव'** इत्यस्य 'न क्षतिः' इत्यनेनान्वयः, अत एव चैत्रीयद्वित्वप्रत्यक्ष प्रति चैत्रापेक्षाबुद्धिजन्यद्वित्वेन हेतुत्वकल्पनलक्षणद्वितीयकल्पस्याऽऽदरणादेव। **चैत्र-मैत्रेति**- यदैव चैत्रस्य 'घटश्चैकः पटश्चैकः' इत्यपेक्षाबुद्धिस्तदैव मैत्रस्यापि 'घटश्चैकः पटश्चैकः' इति तत्समानविषयाऽपेक्षाबुद्धिः, ताभ्यामुत्पादितं घट-पटगतद्वित्वमेकमेवेति मते द्वित्वनिष्ठविषयतासम्बन्धेन चैत्रीयप्रत्यक्षे मैत्रीयापेक्षाबुद्धिजन्यद्वित्वादिभेदस्य कारणत्वमिति प्रथमकल्पे द्वित्वनिष्ठविषयतासम्बन्धेन चैत्रीयप्रत्यक्ष चैत्रीयापेक्षाबुद्धिजन्यद्वित्वे समुत्पद्यते, तच्च द्वित्वं मैत्रीयापेक्षाबुद्धिजन्यद्वित्वरूपमपीति तद्भेदस्य तत्रासत्त्वाच्चैत्रस्यापि तत्प्रत्यक्षं न स्यादिति दोषो न भवति, चैत्रीयद्वित्वप्रत्यक्षं द्वित्वनिष्ठविषयतासम्बन्धेन चैत्र-मैत्रापेक्षाबुद्धिद्वयजनितद्वित्वे वर्तते, तत्र तादात्म्यसम्बन्धेन चैत्रापेक्षाबुद्धिजन्य तदेव द्वित्वं समस्तीति, एवं कल्पनाया नैयायिकस्य मते प्रभाकरमतापेक्षयाऽधिकं गौरवमित्यर्थः। समाधत्ते- नेति। **तद्गौरवस्य** नैयायिकमतेऽनन्तरदर्शितगौरवस्य। **फलमुखत्वेनेति**- व्यङ्ग्यत्वपक्षे अपेक्षाबुद्धेर्द्वित्वप्रत्यक्षत्वं कार्यतावच्छेदकम्, जन्यत्वपक्षे द्वित्वत्वमपेक्षाबुद्धे. कार्यतावच्छेदकमिति लाघवाज्जन्यत्वपक्षव्यवस्थितौ तत्र यस्यैवापेक्षाबुद्ध्या जन्यं यद् द्वित्वं तत्पुरुषस्यैव तद्द्वित्वप्रत्यक्ष नान्यपुरुषस्येत्येतदर्थं कल्पनीयस्य निरुक्तगौरवस्य फलमुखत्वेनादोषत्वादित्यर्थ.। द्वित्वादिक प्रति अपेक्षाबुद्धेर्यत् कारणत्वं तदवच्छेदकनिर्वचनाय विचारमारभते- **यद्यपी**त्यादिना। द्वित्वं प्रत्यपेक्षाबुद्धेरेकत्वावगाहिबुद्धित्वेन कारणत्वस्य प्रतिक्षेपे हेतुमुपदर्शयति- **'अयं घट एकः' इती**ति। **नापीति**- द्वित्वादिकं प्रत्यपेक्षाबुद्धेर्नानेकत्वावगाहिबुद्धित्वेन कारणत्वे 'अय घट एकः' इति बुद्धेर्नानेकत्वावगाहिबुद्धित्वाभावात् कारणत्वाभावेन न ततो द्वित्वोत्पत्त्यापत्तिः, परन्तु 'अयमेकश्चिरविनष्टो घटश्चैक.' इति बुद्धेर्निरुक्तकारणावच्छेदकाक्रान्ताया द्वित्वोत्पत्त्यापत्तेर्न नानैकत्वावगाहिबुद्धित्वेनापेक्षाबुद्धेः कारणत्वमित्यर्थः। **तथाऽपि** एकत्वावगाहिबुद्धित्वेन नानैकत्वावगाहिबुद्धित्वेन वाऽपेक्षाबुद्धेः कारणत्वाऽसम्भवेऽपि। **द्वित्वादी**ति- आदिपदात् त्रित्वादीनामुपग्रहः, तथा द्वित्वजनकतावच्छेदिकापेक्षाबुद्धिगता मानसत्वव्याप्या जातिरेका, तदन्या त्रित्वजनकतावच्छेदिका, तदन्या च चतुष्ट्वजनकतावच्छेदिकेत्येवमपेक्षाबुद्धिगता मानसत्वव्याप्या नानाजातयो वाच्या इत्यर्थः। **अन्यथा** एकैवापेक्षाबुद्धिगता मानसत्वव्याप्या जातिर्द्वित्वादिकारणतावच्छेदिकेत्येवमुपगमे। **कदाचिदिति**- 'घटश्चैकः पटश्चैकः' इत्येवमपेक्षाबुद्ध्यनन्तरकाले द्वित्वमुत्पद्यते, 'घटश्चैकः पटश्चैको मठश्चैकः' इत्येवमपेक्षाबुद्ध्यनन्तरकाले त्रित्वमुत्पद्यत इत्येव नियमो न स्यात्, यैव द्वित्वकारणतावच्छेदिका मानसत्वव्याप्यजाति. 'घटश्चैकः पटश्चैकः' इति बुद्धौ वर्तते सैव त्रित्वकारणतावच्छेदिकाऽपीति तद्रूपेण द्वित्वकारणापेक्षाबुद्धेरेव त्रित्व प्रति कारणीभूताया अपि सत्त्वाद् द्वित्वोत्पत्तिकाले त्रित्वोत्पत्तिरपि स्यादित्यर्थ.। ननु भवन्तु जातयो द्वित्वादिजनकतावच्छेदिका अपेक्षाबुद्धिगता विभिन्नाः, तासा स्मृतित्वव्याप्यत्वमेव कुतो नाङ्गीक्रियते? इत्याशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य 'वाच्यम्' इत्यनेनान्वयः। **तासां** द्वित्वादिजनकतावच्छेदकजातीनाम्। निषेधे हेतुमाह--**यद्व्यक्ती**ति- द्वित्वादिजनकतावच्छेदकजातीनां स्मृतित्वव्याप्यत्वे स्मरणात्मकापेक्षाबुद्धित एव द्वित्वाद्युत्पत्तिर्न ज्ञानान्तरादिति यद्व्यक्तिविशेष्यकैकत्वस्मरणं कस्यापि प्रमातुर्न जात तद्व्यक्तिगतद्वित्वादिकं कथमुत्पद्येतेति तदर्थ तद्व्यक्तिविशेष्यकैकत्वानुभव-तत्स्मरणयो कार्य-कारण-

कारणभावकल्पने संस्कारव्यवधानेन क्षणविलम्बे च गौरवात्, स्मृतित्वव्याप्यत्वेऽपि स्मरणात्मकैकत्वबुद्धिकल्पनाक्षणे मानसोत्पत्तौ बाधकाभावाद् उपनायकज्ञानघटितसामग्रीसत्त्वात्, मानसं प्रति तत्तत्स्मृतिसामग्र्या प्रतिबन्धकत्वकल्पने च महागौरवात्। सन्तु वा चाक्षुषत्वादिव्याप्या नाना जातयः, द्वित्वादौ मानाभावाद् [न च द्वित्वादौ मानाभावः] 'द्वौ त्रयः' इत्यादिविलक्षणबुद्धेः प्रकारभेदं विनाऽसम्भवात्, अन्यथा सर्वत्र विषयनिरपेक्षैरेव ज्ञानैस्तत्तद्व्यवहारजननप्रसङ्गात्। न च 'द्वौ' इत्यादिबुद्धेर्विजातीयज्ञानं विषयः, अचाक्षुषत्वापत्तेः। न च 'इमौ द्वौ मधुपौ,' 'एते त्रयः कमल-कल्हार-कलहंसाः' इत्यादौ युगपदेव द्वित्व-त्रित्वप्रतीति(त्ते)रेकत्र बुद्धौ द्वित्वजनकतावच्छेकजात्युपगमे [त्रित्वजनकतावच्छेदकजात्यभ्युपगमे च] जातिसंकरप्रसङ्ग इति वाच्यम्, द्वित्व-त्रित्वोत्पादकापेक्षाबुद्ध्योरुत्पादे सूक्ष्मकाल-

---

भावः कल्पनीयः, संस्कारं विना न स्मरणमित्यनुभवात् संस्कार कल्पनीय, तथा च तद्व्यक्तिविशेष्यकैकत्वप्रकारकानुभवतत्प्रभवसस्कार-तज्जन्यतद्व्यक्तिविशेष्यकैकत्वप्रकारकस्मरणलक्षणापेक्षाबुद्धितस्तद्गतद्वित्वाद्युत्पत्तिरितीत्थं क्षणविलम्बश्च कल्पनीय इत्येवं गौरवान्न तासां स्मृतित्वव्याप्यत्वम्, किन्तु मानसत्वव्याप्यत्वमेवेत्यर्थ.। यदा चैकत्वस्य स्मृतिस्तदानीमपि तस्य मानसं बाधकाभावात् सम्भवत्येव ज्ञानलक्षणप्रत्यासत्तेस्तन्मानसप्रत्यक्षकारणीभूताया. सत्त्वे तद्घटितसामग्र्याः सत्त्वादिति किमिति तस्यैव न द्वित्वादिकारणत्वं ? येनानुभव-सस्कार-स्मरणादिकल्पनाप्रयुक्तगौरवमपि परिहृत भवतीत्याह– **स्मृतित्वव्याप्यत्वेऽपी**ति। **उपनायकज्ञाने**ति– ज्ञानलक्षणप्रत्यासत्तीत्यर्थ.। ननु मानस प्रति तत्तत्स्मृतिसामग्री प्रतिबन्धिकेति न तद्विषयकस्मृतिकाले तद्विषयकमानससम्भव इत्यत आह– **मानसं प्रती**ति– बहिरिन्द्रियजन्यप्रत्यक्षसामग्र्याः सर्वतो बलवत्वात् सैव स्मृतिप्रतिबन्धिका, न तु चाक्षुषादिक प्रति स्मृतिसामग्री प्रतिबन्धिकेति द्वित्वादिजनकतावच्छेदिकाश्चाक्षुषत्वादिव्याप्या जातय एव नाना सन्तु, ततोऽपि कदाचिद् द्वित्वं, कदाचित् त्रित्वमिति नियमोपपत्तिर्भविष्यतीत्याह– **सन्तु वे**ति। ननु द्वित्वादिरेव नास्ति, एकत्वद्वयमेव द्वित्वमेकत्वत्रयमेव त्रित्वमित्यादिकल्पनयैवोपपत्तेरित्याशङ्क्य प्रतिक्षिपति– **न चे**ति। **'द्वित्वादौ मानाभावात्'** इति स्थाने 'न च द्वित्वादौ मानाभावः' इति पाठो युक्त., 'अयमेकोऽयमेक.' इति ज्ञानानन्तरम्, 'इमौ द्वौ' इति ज्ञानमुपजायते, न च तत्रैकत्वद्वयादिकमवभासते, न च विषयवैलक्षण्यं विना 'द्वाविमौ, त्रय इमे' इत्यादिप्रतीतिवैलक्षण्यसम्भव इति तादृशप्रतीतिवैलक्षण्यान्यथानुपपत्तिरेव द्वित्वादौ मानमिति निषेधहेतुमुपदर्शयति– **'द्वौ त्रयः'** इति। **अन्यथा** विषयवैलक्षण्याभावेऽपि प्रतीतिवैलक्षण्याभ्युपगमे। **अचाक्षुषत्वापत्तेरि**ति– ज्ञानस्य चक्षुरिन्द्रियायोग्यत्वेन विजातीयज्ञानस्य द्वित्वादिस्थानाभिषेके तस्य चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं न स्यादित्यर्थः। नन्वेकदैव द्वित्व-त्रित्वप्रतीतिर्भविष्यति यत्र तत्र द्वित्व-त्रित्वयोरेकैवापेक्षाबुद्धिः कारणमिति तस्यामपेक्षाबुद्धौ द्वित्वजनकतावच्छेदकवैजात्यवत् त्रित्वजनकतावच्छेदकवैजात्यमपि स्वीकरणीयं स्यात्, तथा च जातिसङ्करप्रसङ्ग इत्याशङ्क्य प्रतिक्षिपति– **न चे**ति– अस्य 'वाच्यम्' इत्यनेनान्वयः। द्वित्वजनिकाऽपेक्षाबुद्धिरन्या, अन्या च त्रित्वजनिकाऽपेक्षाबुद्धिः, तयोश्च क्रमेणोत्पत्तिर्भवति, व्यवधायककालस्याऽतिसौक्ष्म्याच्च कालभेदो नाऽवभासत इति नैकत्र जातिद्वयमिति न साङ्कर्यमिति निषेधहेतुमुपदर्शयति– **द्वित्व-त्रित्वोत्पादके**ति। सूक्ष्मकालभेदानुपलक्षणेन यौगपद्याभिमाने निदर्शनमुपदर्शयति– **गिरिरयमिति**– नात्रैककल्पना भद्रा, 'गिरिरय वह्निमान्' इति ज्ञानस्यानुमाविकरूपत्वात् 'अहं तज्ज्ञानवान्' इति ज्ञानस्य प्रत्यक्षरूपत्वादिति। स्पष्टप्रतिपत्त्यर्थमुक्तम्– **अनुमिति-प्रत्यक्षयोरिवे**ति। ननु समानविषये प्रत्यक्षानुमितिसामग्र्योः सत्योः प्रत्यक्षमेवोपजायते नानुमितिरिति समानविषयकप्रत्यक्षसामग्री समानविषयानुमितिं प्रति प्रतिबन्धिका कल्प्यते, भिन्नविषये प्रत्यक्षा-ऽनुमितिसामग्र्यो. समवधाने तु भिन्नविषयिकानुमितिरेवोपजायत इति भिन्नविषयकप्रत्यक्ष प्रति भिन्नविषयकानुमितिसामग्री प्रतिबन्धिका, अतः प्रकृते भिन्नविषयकानुमितिसामग्रीत· पूर्वं भिन्नविषयकानुमितिः, ततः प्रत्यक्षसामग्रीतः प्रत्यक्षमिति क्रमेणैव तयोरुत्पादो न तु युगपत्, प्रकृते तु द्वित्व-त्रित्वयोः प्रत्यक्षमेव, तत्कारणीभूताऽपेक्षाबुद्धिरपि प्रत्यक्षात्मिकैवेति युगपदेकैव द्वित्व-त्रित्वप्रतीतिरेकैव द्वित्व-त्रित्वयोः कारणमपेक्षाबुद्धिः किं न स्यादिति शङ्कते– **अथे**ति।

भेदकल्पनात्; 'गिरिरयं वह्निमान्, अहं तज्ज्ञानवान्' इत्यनुमिति-प्रत्यक्षयोरिव । अथ तत्र भिन्नविषयेऽनुमितिसामग्र्याः प्रतिबन्धकत्वादस्तु तयोर्युगपदनुत्पादः, न तु प्रकृते इति चेत्? तर्हि प्रतिबन्धकं किञ्चिदत्रापि कल्प्यताम्, अन्यथानुपपत्तेर्बलीयस्त्वात् । अस्तु वा तत्रापेक्षाबुद्धावुभयजनकतावच्छेदको जातिविशेषः, आस्तां च द्वित्व-त्रित्वयोस्तज्जन्यतावच्छेदको जातिविशेषः । एतेन 'समवाय्यसमवायि-निमित्तकारणानामविशिष्टत्वे द्वित्व-त्रित्वाद्युत्पत्तिनियमे किं कारणम्? द्वाभ्यामेकत्वाभ्यां द्वित्वम्, त्रिभिस्त्रित्वमारभ्यत इति वक्तुमशक्यत्वाद्, एकत्वेषु द्वित्वादेरभावात्, न च शुद्धयाऽपेक्षाबुद्ध्या द्वित्वम्, द्वित्वसहितया च तया त्रित्वमुत्पाद्यत इत्यपि सुवचम्, द्वित्व-त्रित्वयोर्युगपदेवोक्तप्रत्ययविषयत्वात्, न चैकत्वेष्विव द्वित्वादिजनकतावच्छेदका जातिविशेषा अभ्युपेयाः, तत एव द्वित्वादिव्यवहारोपपत्तौ द्वित्वाद्युच्छेदप्रसङ्गाद्, इत्यादिपर्यनुयोगो निरस्तः, अपेक्षाबुद्धिनिष्ठद्वित्व-त्रित्वादिजनकतावच्छेदकजातिभेदेनैव तयोः सामग्रीभेदात्, एकापेक्षाधीजघन्यद्वित्व-त्रित्वयोरन्यत्र परिदृष्टभेदवज्जातीयत्वेनैव भेदात् ।

---

**तयोः** अनुमिति-प्रत्यक्षयो । समाधत्ते—**तर्हीति** । **प्रतिबन्धकं** द्वित्वोत्पादकतत्पुरुषीयापेक्षाबुद्धिकाले त्रित्वोत्पादकतत्पुरुषीयापेक्षाबुद्ध्युत्पादप्रतिबन्धकम् । **अत्रापि** अपेक्षाबुद्धावपि । प्रमाणाभावात् तत्कल्पनं न न्याय्यमिति चेत्? तत्राह—**अन्यथानुपपत्तेरिति**— यदि प्रतिबन्धकं किञ्चिन्न कल्प्येत तर्हि द्वित्वोत्पादकापेक्षाबुद्धि-त्रित्वोत्पादकापेक्षाबुद्धिसामग्र्योः सत्त्वाज्ज्ञानद्वययुगपदुत्पत्तिनिषेधादेकैवापेक्षाबुद्धिर्द्वित्वोत्पादिका त्रित्वोत्पादिका च भवेदिति तत्र द्वित्वजनकतावच्छेदक-त्रित्वजनकतावच्छेदकजात्योः साङ्कर्यं स्यात्, जातिसाङ्कर्यं च नेष्टमिति तत्परिहारान्यथानुपपत्तेर्बलीयस्याः सत्त्वात् किञ्चित् प्रतिबन्धकं कल्प्यत इत्यर्थः । अथवा तत्रैकैवापेक्षाबुद्धिर्द्वित्व-त्रित्वोभयजनिका, किन्तु या द्वित्वमात्रजनकतावच्छेदिका या च त्रित्वमात्रजनकतावच्छेदिका जातिः, तयोस्तत्र नाऽभ्युपगमः, द्वित्व-त्रित्वोभयजनकतावच्छेदिकाऽन्यैव जातिस्तत्रोपेयते, तादृशापेक्षाबुद्धिजन्ययोर्द्वित्व-त्रित्वयोरपि जातिविशेषस्तादृशापेक्षाबुद्धिजन्यताऽवच्छेदकोऽन्य एव कल्प्यते, इत्थमपि न कश्चिद् दोष इत्याह— **अस्तु वेति** । **तज्जन्यतावच्छेदक** अपेक्षाबुद्धिजन्यतावच्छेदकः । **'एतेन'** इत्यस्य 'निरस्तः' इत्यनेनान्वय । **द्वित्व-त्रित्वाद्युत्पत्तिनियमे** कदाचिद् द्वित्वमुत्पद्यते, कदाचित् त्रित्वमुत्पद्यत इति नियमे । **'किं कारणम्'** इत्यत्र किम आक्षेपे, न किञ्चित् कारणमिति तदर्थः । द्वाभ्यामेकत्वाभ्या द्वित्वमुत्पद्यत, त्रिभिरेकत्वैस्त्रित्वमुत्पद्यत इति नियमस्तु तदा वक्तुं शक्यो यद्येकत्वेषु द्वित्व-त्रित्वादिक समवेयात्, न चैवम्, गुणे गुणानङ्गीकारादित्याह—**द्वाभ्यामिति** । **'न च'** इत्यस्य 'सुवचम्' इत्यनेनान्वय. । **'द्वित्वम्'** इत्यस्य 'उत्पाद्यते' इत्यनेनान्वयः । **तया** अपेक्षाबुद्ध्या । **उक्तप्रत्ययविषयत्वात्** 'इमौ द्वौ मधुपौ, इमे त्रय. कमल-कह्लार-कलहंसाः' इतिप्रत्ययविषयत्वात् । ननु द्वित्वजनकं विजातीयमेकत्वम्, विजातीयं च त्रित्वजनकमेकत्वम्, तथा च तादृशकारणवैलक्षण्याद् द्वित्व-त्रित्वाद्युत्पत्तिनियमो भविष्यतीत्याशङ्क्य प्रतिक्षिपति— **न चेति** । **'न चैकत्वेष्विव'** इति स्थाने 'न चैकत्वेष्वेव' इति पाठो युक्त, **'न च'** इत्यस्य 'अभ्युपेयाः' इत्यनेनान्वय । निषेधे हेतुमाह— **तत एवेति**— यदि द्वित्वकारणं विजातीयमेकत्वम्, विजातीयं च त्रित्वकारणमेकत्वम्, तर्हि द्वित्वादिकल्पना निरर्थिका, विजातीयैकत्वेन द्वित्वव्यवहारो विजातीयैकत्वेन त्रित्वव्यवहार इत्येवं विजातीयैकत्वत एव द्वित्वादिव्यवहारोपपत्तौ द्वित्वाद्युच्छेदप्रसङ्गादित्यर्थ. । **'एतेन'** इत्यतिदिष्ट निरासहेतुमुपदर्शयति— **अपेक्षाबुद्धिनिष्ठेति** । **तयोः** द्वित्व-त्रित्वयोः । एकापेक्षाबुद्धिजन्ये द्वित्व-त्रित्वे चान्यद्वित्व-त्रित्वतो विजातीये, अन्यद्वित्वजनकविजातीयापेक्षाबुद्धितो विजातीयापेक्षाबुद्धिजन्ये इति तयोरन्यद्वित्व त्रित्वतो भेदादेवैकदोत्पत्तिरपि युज्यत इत्याह **एकापेक्षेति** । **'एकापेक्षाधीजन्यद्वित्व-त्रित्वयोः'** इत्यस्य 'भेदाद्' इत्यनेनान्वय. । **अन्यत्र** अन्ययोर्द्वित्व-त्रित्वयो., परिदृष्टा या जातिस्तद्भेदवती— तद्भिन्ना, या जातिस्तद्वत्त्वेनैव, एकापेक्षाधीजन्यद्वित्व-त्रित्वयो, **भेदाद्** अन्यद्वित्व-त्रित्वाभ्या भिन्नत्वात्, तत एव चान्यद्वित्व त्रित्वयोर्विभिन्नापेक्षाबुद्धिजन्यत्वाद् विभिन्नकालोत्पत्तिकत्वेऽप्यनयोरेकापेक्षाबुद्धिजन्यत्वादेककालिकोत्पत्तिकत्वमविरुद्धमित्याशयः ।

उदयनाचार्यास्तु–" द्वित्वप्रागभावगर्भैव द्वित्वसामग्री, त्रित्वप्रागभावगर्भा च त्रित्वसामग्रीति तयोर्विशेषः, इतोऽपि हि प्रागभावसिद्धिः, अन्यथा तयोर्विशेषो न स्यात्, पर्याप्तिसंबन्धेन द्वित्वादिकं प्रति पर्याप्तिसंबन्धेन तत्प्रागभाव एव नियामकः, अत एवैकस्मिन् न पर्याप्तिसम्बन्धेन द्वित्वादिप्रत्ययः, तत्प्रागभावस्यैकस्मिन् पर्याप्त्यभावेन तस्यापि तदभावाद्" इत्याहुः । अथापेक्षाबुद्धिजन्यत्वे द्वित्वस्य 'द्वे द्रव्ये' इति लौकिकप्रत्यक्षानुपपत्तिः, 'अपेक्षाबुद्धिः, अथ द्वित्वम्, अथ द्वित्वत्वनिर्विकल्पकम्, ततो द्वित्वत्वविशिष्टप्रत्यक्षम्, तदैव च द्वित्वनिर्विकल्पकेन स्वोत्तरवृत्तिविशेषगुणविधया जनितोऽपेक्षाबुद्धिविनाशः, ततश्च 'द्वे द्रव्ये' इति लौकिकप्रत्यक्षम्, तदैव चापेक्षाबुद्धिविनाशाद् 'द्वित्वविनाशः' इति हि त्वदभिमता व्यवस्था, साऽत्रानुपपन्ना, अपेक्षाबुद्धेः स्वजन्यसंस्कारेण द्वित्वनिर्विकल्पकोत्पत्तिक्षण एव नाशात्, योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवृत्तियोग्यजातीयविभुविशेषगुणत्वेन हेतुत्वात्,सुषुप्तिप्राक्कालवर्तिज्ञाननाशकतयैव तत्सिद्धेः,अन्यथाऽनुभवध्वंसेनैव संस्कारान्यथासिद्धे-

नैयायिकधुरन्धराणामुदयनाचार्याणां मतमुपदर्शयति– **उदयनाचार्यास्त्विति**– अस्य 'आहुः' इत्यनेनान्वयः । **तयोर्विशेषः** द्वित्व-त्रित्वसामग्र्योर्भेदः । **इतोऽपि** द्वित्व-त्रित्वसामग्रीभेदतोऽपि । **अन्यथा** प्रागभावानभ्युपगमे । **तयोः** द्वित्व-त्रित्वसामग्र्योः । पर्याप्तिसम्बन्धेन द्वित्वमुभयस्मिन्नेव, न त्वेकस्मिन्, एवं पर्याप्तिसम्बन्धेन त्रित्वं त्रिष्वेव, न त्वेकस्मिन् द्वयोर्वेत्यत्रापि प्रागभाव एव नियामक इत्याह– **पर्याप्तिसम्बन्धेनेति**। **तत्प्रागभाव एव** द्वित्वादिप्रागभाव एव । **अत एव** पर्याप्तिसम्बन्धेन द्वित्वादिप्रागभावस्य नियामकत्वादेव । **तत्प्रागभावस्य** द्वित्वादिप्रागभावस्य । **तस्यापि तदभावात्** द्वित्वादेरप्येकस्मिन् पर्याप्त्यभावात् । शङ्कते –**अथेति** । कीदृशी अपेक्षाबुद्धितो द्वित्वोत्पत्त्यभ्युपगमे नैयायिकप्रक्रिया ? यस्यां द्वित्वस्य लौकिकप्रत्यक्षानुपपत्तिरित्याकाङ्क्षायामाह– **अपेक्षाबुद्धिरिति**–प्रथमक्षणे अपेक्षाबुद्धिरुत्पद्यते, ततो द्वितीयक्षणे द्वित्वमुत्पद्यते, ततस्तृतीयक्षणे द्वित्वत्वनिर्विकल्पकम्, ततश्चतुर्थक्षणे द्वित्वत्वविशिष्टप्रत्यक्षम्, तदानीमेव च च 'स्वोत्तरवर्तिविशेषगुणस्य योग्यविभुविशेषगुणनाशकत्वम्' इति नियमतोऽपेक्षाबुद्ध्युत्तरवर्तिविशेषगुणेन द्वित्वत्वनिर्विकल्पकेनापेक्षाबुद्धिविनाशः, तत. पञ्चमक्षणे 'द्वे द्रव्ये' इत्याकारक द्वित्वप्रकारकद्रव्यविशेष्यकप्रत्यक्षम्, तदानीमेव चापेक्षाबुद्धिनाशाद् द्वित्वनाश इति नैयायिकाभिमता व्यवस्थेत्यर्थः । **साऽत्राऽनुपपन्ना** सा व्यवस्था क्रियमाणे विचारे नोपपद्यते । प्रथमक्षणेऽपेक्षाबुद्धिः, ततो द्वितीयक्षणे द्वित्वोत्पत्तिः, तदानीमेव चापेक्षाबुद्धितः स्वविषयैकत्वविषयकः संस्कारः, तेन चापेक्षाबुद्धिजनितेन संस्कारेणापेक्षाबुद्ध्युत्तरवर्तिना द्वित्वत्वनिर्विकल्पकक्षण एवापेक्षाबुद्धेर्नाश., ततश्च यदा द्वित्वत्वविशिष्टप्रत्यक्षमभिमतं तदानीपेक्षाबुद्धिनाशाद् द्वित्वनाशे कथं द्वित्वप्रत्यक्षमित्युक्तव्यवस्थानुपपत्तौ हेतुमुपदर्शयति– **अपेक्षाबुद्धिरिति**– अस्य 'नाशाद्' इत्यनेनान्वय. । ननु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवृत्तियोग्यजातीयविभुविशेषगुणत्वेन कारणत्वम्, संस्कारश्च स्वोत्तरवर्त्यपि न योग्यजातीय इति न ततोऽपेक्षाबुद्धिनाशः, निर्विकल्पके तु प्रकारता-विशेष्यता-संसर्गताभिन्ना तुरीयविषयतोपेयते, तावतैव सविकल्पकज्ञानाद् भेदे सिद्धे न तत्र निर्विकल्पकत्वं जातिः, किन्तु ज्ञानत्वमेव, तच्च योग्यमिति स्वोत्तरवर्तियोग्यजातीयविशेषगुणेन निर्विकल्पकेनापेक्षाबुद्धिनाशः सम्भवतीत्यत आह– **योग्यविभुविशेषगुणनाशं प्रतीति**–**'स्वोत्तरवृत्तियोग्यजातीयविभुविशेषगुणत्वेन'** इति स्थाने 'स्वोत्तरवर्तियोग्यायोग्यजातीयसाधारणविभुविशेषगुणत्वेन' इति पाठो युक्तः, तथा च कारणकोटौ योग्यजातीयत्वमयोग्यजातीयत्वं वा न निवेश्यते, किन्तु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवृत्तिविभुविशेषगुणत्वेन हेतुत्वात् स्वजन्यसंस्कारेणापेक्षाबुद्धेर्नाशसम्भवान्नैयायिकव्यवस्थाऽनुपपन्नेत्यर्थः । अत एव सुषुप्तिप्राक्कालवर्तिनो ज्ञानस्य स्वजन्यसंस्कारेण नाश इति सुषुप्तिप्राक्कालवर्तिज्ञाननाशकतया संस्कारसिद्धिरित्याह– **सुषुप्तीति** । **तत्सिद्धेः** संस्कारसिद्धे. । **अन्यथा** उक्तदिशा कार्य-कारणभावानभ्युपगमे सुषुप्तिप्राक्कालवर्तिज्ञाननाशकतया संस्कारसिद्ध्यभावे । स्मरणं प्रति यदनुभवस्य करणत्व तद्व्यापारतया संस्कार. कल्प्यते, पर संस्कारस्य तथाऽकल्पनेऽप्यनुभवध्वंस एवानुभवव्यापारः,

रिति चेत्? न- अपेक्षाबुद्धेः संस्काराजनकत्वादपेक्षाबुद्धिभिन्नत्वस्यापि संस्कारजनकतावच्छेदककोटिप्रवेशात्। न चैवमप्यपेक्षाबुद्धिजनितैकत्वादिविशिष्टबुद्ध्याऽपेक्षाबुद्धिनाशप्रसङ्गः, तदुक्तम्-"अपेक्षाबुद्धिः संस्कारं मा कार्षीद् विशिष्टबुद्धिं तु कुर्यादेव" इति वाच्यम्, विशिष्टबुद्धिजननेऽपि द्वित्वसामग्र्यादेरेव फलबलेन प्रतिबन्धकत्वकल्पनात्। वस्तुतोऽपेक्षाबुद्धिनाशे द्वित्वलौकिकप्रत्यक्षस्य विशिष्य कारणत्वकल्पनान्न दोषः। न च तथापि पूर्वापेक्षाजनितद्वित्वनिर्विकल्पकेन स्वद्वितीयक्षणोत्पन्नेनापेक्षाबुद्धेस्तृतीयक्षणे नाशप्रसङ्गः, प्रतियोगितयापेक्षाबुद्धिनाशे स्वविषयजनकत्वसंबन्धेन द्वित्वलौकिकप्रत्यक्षत्वेन हेतुत्वात्। नन्वेवमपि 'द्वे द्रव्ये' इति लौकिकप्रत्यक्षं कथम्? तदुत्पत्तिक्षणे द्वित्वनाशादिति चेत्? मैवम्-द्वित्वस्य हि प्रत्यक्षे विषयविधया हेतुत्वं न तु कार्यसहवर्त्तितयेति दोषाभावात्, नहि सर्वेषां कारणानां कार्यसहवर्त्तितयैव हेतुत्वं प्रागभाव-पक्षतादेरहेतुत्वप्रसङ्गादिति ॥

प्रभाकरवृद्धानुसारिणस्तु-" सोऽयं नैयायिकाशयो न युक्तः, अनन्तद्वित्वादिध्वंस-प्रागभावादि-

तत एव च स्मृतेः सम्भवादित्याह- **अनुभवध्वंसेनैवे**ति। अपेक्षाबुद्धिभिन्नानुभवत्वेनैव संस्कारं प्रति कारणत्वमित्यतोऽपेक्षाबुद्ध्या संस्कारो न जन्यत एवेति न संस्काराद् द्वित्वत्वनिर्विकल्पकक्षणेऽपेक्षाबुद्धिनाशः, किन्तु निर्विकल्पकादेव द्वित्वत्वविशिष्टप्रत्यक्षकालेऽपेक्षाबुद्धिनाश इति न नैयायिकव्यवस्थाऽनुपपन्नेति समाधत्ते- **नेति**। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। **एवमपि** अपेक्षाबुद्धेः संस्काराजनकत्वमभ्युपेत्य संस्कारस्यापेक्षाबुद्धिनाशकत्वाभावोपपादनेऽपि। एकत्वादिविशिष्टबुद्धितोऽपेक्षाबुद्धिनाशप्रसञ्जने संवादमुपदर्शयति- **तदुक्तमि**ति। विशिष्टबुद्धिं प्रति द्वित्वसामग्री प्रतिबन्धिकेति द्वित्वोत्पत्तिकाले विशिष्टबुद्धेरनुत्पादादेव न ततोऽपेक्षाबुद्धिनाशसम्भव इति निषेधहेतुमुपदर्शयति- **विशिष्टबुद्धिजननेऽपीति**। अपेक्षाबुद्धितः संस्कारोत्पत्तिवारणाय संस्कारं प्रत्यपेक्षाबुद्धिभिन्नानुभवत्वेन यत् कारणत्वम्, यच्च विशिष्टबुद्ध्युत्पत्तिवारणाय द्वित्वोत्पादकसामग्र्याः प्रतिबन्धकत्वम्, तदपेक्षया लाघवादपेक्षाबुद्धिनाशं प्रति द्वित्वलौकिकप्रत्यक्षस्य निर्विकल्पात्मकस्य कारणत्वमेव कल्प्यते, तत एव द्वित्वत्वनिर्विकल्पकक्षणे नापेक्षाबुद्धिनाशो द्वित्वोत्पत्तिकालेऽपेक्षाबुद्धितः संस्कारैकत्वविशिष्टबुद्ध्योरुत्पादेऽपीत्याह- **वस्तुत** इति। ननु पूर्वमेकापेक्षाबुद्धिः, तदनन्तरं द्वित्वोत्पत्तिः, तदानीमेव च द्वितीयाऽपेक्षाबुद्धिः, तदनन्तरं प्रथमापेक्षाबुद्धितो द्वित्वत्वनिर्विकल्पकप्रत्यक्षम्, तदानीमेव च द्वितीयापेक्षाबुद्धितो द्वित्वान्तरोत्पत्तिः, तदनन्तरं प्रथमापेक्षाबुद्धिप्रभवद्वित्वत्वनिर्विकल्पकप्रत्यक्षतो यथा प्रथमापेक्षाबुद्धेर्नाशस्तथा द्वितीयापेक्षाबुद्धेरपि नाशः स्यात् कारणीभूतस्य द्वित्वत्वनिर्विकल्पकस्य पूर्वक्षणे भावादित्याशङ्क्य प्रतिक्षिपति- **न चेति**। **तथापि** अपेक्षाबुद्धिविनाशे द्वित्वलौकिकप्रत्यक्षस्य विशिष्य कारणत्वकल्पनेऽपि। **स्वद्वितीयक्षणोत्पन्नेन** द्वितीयापेक्षाबुद्धिद्वितीयक्षणोत्पन्नेन। **अपेक्षाबुद्धेः** द्वितीयापेक्षाबुद्धेः, प्रथमापेक्षाबुद्धेस्तदानीं नाशस्त्विष्ट एव। **तृतीयक्षणे** द्वितीयापेक्षाबुद्ध्युत्पत्तिक्षणापेक्षया तृतीयक्षणे। निषेधे हेतुमाह- **प्रतियोगितये**ति-प्रतियोगितासम्बन्धेनापेक्षाबुद्धिनाशं प्रति स्वविषयजनकत्वसम्बन्धेन द्वित्वलौकिकप्रत्यक्षत्वेन द्वित्वलौकिकप्रत्यक्षस्य हेतुत्वादित्यर्थः, तथा च द्वितीयापेक्षाबुद्धिनाशं प्रतियोगितासम्बन्धेन द्वितीयापेक्षाबुद्धावुत्पद्यते, तत्र पूर्वापेक्षाबुद्धिजनितद्वित्वनिर्विकल्पकं स्वविषयजनकत्वसम्बन्धेन न वर्तते, यतः स्वं पूर्वापेक्षाबुद्धिजनितद्वित्वनिर्विकल्पकम्, तद्विषयः पूर्वापेक्षाबुद्धिजनितद्वित्वम्, तज्जनकत्वं पूर्वापेक्षाबुद्धावेव वर्तत इति तेन द्वित्वनिर्विकल्पकेन पूर्वापेक्षाबुद्धेरेव नाशो न तु द्वितीयापेक्षाबुद्धेरिति भावः। ननु द्वित्वत्वविशिष्टप्रत्यक्षकाले चतुर्थक्षणेऽपेक्षाबुद्धिनाशाद् द्वित्वप्रकारकद्रव्यविशेष्यकप्रत्यक्षकालपञ्चमक्षणे द्वित्वनाशात् कथं द्वित्वस्य तत्कालीनं प्रत्यक्षमिति शङ्कते- **नन्वेवमिति**। 'द्वे द्रव्ये' इतिद्वित्वप्रकारकप्रत्यक्षकाले द्वित्वस्याभावेऽपि तत्पूर्वक्षणे सत्त्वतो विषयविधया कारणत्वं सम्भवत्येव, नहि सर्वस्य कारणस्य कार्यसहवर्तितयैव कारणत्वम्, प्रतियोगिनं प्रति प्रागभावस्य कारणत्वम्, न च प्रागभावः प्रतियोग्युत्पत्तिकाले वर्तते, एवं साध्यसन्देहरूपा पक्षताऽनुमितौ कारणम्, न च साध्यनिश्चयात्मकानुमित्युत्पत्तिकाले पक्षता वर्तते इति समाधत्ते- **मैवमिति**। एतावताऽपेक्षाबुद्धिजन्यं द्वित्वादिकमिति नैयायिकमतमुपपादितम् ॥

इदानीं द्वित्वादिकमपेक्षाबुद्धिव्यङ्ग्यमेवेति प्रभाकरमतमुपपादयितुमाह- **प्रभाकरवृद्धानुसारिणस्त्वि**ति-अस्य 'आहुः' इत्यनेन सम्बन्धः। **सोऽयं** द्वित्वस्यापेक्षाबुद्धिजन्यत्वोपपादकोऽनन्तरोपवर्णितः। द्वित्वस्य व्यङ्ग्यत्वपक्षे एकमेव द्वित्वं यदा

कल्पनायां गौरवात् तद्व्यङ्ग्यत्वपक्षस्यैव युक्तत्वात्; अन्यथा नानापुरुषीय-क्रमिकापेक्षाबुद्धिसमसंख्यतुल्यव्यक्तिकनानाद्वित्वादिकल्पनेऽपि महागौरवात्, मम तु नित्यानामेव तेषां तत्तदपेक्षाबुद्धिव्यङ्ग्यत्वे दोषाभावात्। न चैवं तेषां जातित्वापत्तिः, असमवायित्वे सत्यनेकसमवेतत्वस्य समवेतत्वस्यैव वा जातिव्यवहारनिमित्तत्वात्। न च विशेषेऽतिप्रसङ्गः, तत्र मानाभावात्। किञ्च, द्वित्वादेर्जन्यत्वे प्रतियोगितया-[आश्रय]नाशाजन्यतन्नाशे स्वप्रतियोगिजन्यत्वसंबन्धेनापेक्षाबुद्धिनाशत्वेन हेतुता वाच्या, तथा च द्व्यणुकपरिमाणहेतुपरमाणुद्वित्वस्येश्वरापेक्षाबुद्धिजन्यस्य नाशानुपपत्तिः। न च, चैत्रीयद्वित्वनाशे चैत्रापेक्षाबुद्धिनाशो हेतुरित्येवं विशिष्यैव कल्प्यते, परमाणुद्वित्वे तु यादृशोपाधिविशिष्टाया ईश्वरापेक्षाबुद्धेर्हेतुत्वं तादृशोपाधिनाशादेव तन्नाशः, अविशिष्टायास्तस्या हेतुत्वे सर्वदा द्वित्वोत्पत्तिप्रसङ्गादिति वाच्यम्, स्वाव्यवहितपूर्वक्षणावच्छिन्नत्वेनैव तस्या अपेक्षाबुद्धित्वमिति तन्नाशात् परमाणुद्वित्वनाशे तस्य क्षणिकत्वप्रसङ्गात्, अतिरिक्तानुगतोपाधेश्चानिर्वचनात्। अपि चैवं तत्तद्द्वित्वनाशे तत्तदपेक्षाबुद्धिनाशत्वेन हेतुत्वे महागौरवम्। न च फलमुखत्वादस्यादोषत्वम्, अस्यां कल्पनायामेतावद्गुरुतरं कल्पनीयमिति

---

यदाऽपेक्षाबुद्धिर्भवति तदा तदा व्यज्यते, अपेक्षाबुद्ध्यभावकालेऽनभिव्यक्तं भवति, जन्यत्वपक्षे तु यद् द्वित्वं ययाऽपेक्षाबुद्ध्या जन्यते तदपेक्षाबुद्धिनाशान्नश्यति, एव कालान्तरे द्वित्वान्तरमपेक्षाबुद्ध्यन्तरादुत्पद्यते, तन्नाशान्नश्यति चेति बहूनि द्वित्वानि तत्प्रागभावास्तद्ध्वंसाश्च बहवः कल्पनीया इति जन्यत्वपक्षो व्यङ्ग्यत्वपक्षापेक्षयाऽतिगौरवकदर्थितत्वान्न युक्तः, व्यङ्ग्यत्वपक्ष एव ततो लाघवाद् युक्त इत्याह- **अनन्तद्वित्वादीति**। **तद्व्यङ्ग्यत्वपक्षस्यैव** द्वित्वादीनामपेक्षाबुद्धिव्यङ्ग्यत्वपक्षस्यैव। **अन्यथा** द्वित्वादीनामपेक्षाबुद्धिव्यङ्ग्यत्वमनभ्युपगम्याऽपेक्षाबुद्धिजन्यत्वस्यैवाभ्युपगमे। **नानेति**- एकदाऽपि नानापुरुषीया या अपेक्षाबुद्धयः, याश्चैकपुरुषीया क्रमिका विभिन्नकालीना अपेक्षाबुद्धयः, तत्समसङ्ख्यकास्तुल्यव्यक्तिका ये नाना द्वित्वादयस्तेषां कल्पनेऽपि महागौरवादित्यर्थ. अपिना तत्तत्प्रागभावतत्तध्वंसकल्पने तु सुतरा महागौरवादिति दर्शित भवति। **मम तु** प्रभाकरमतानुयायिनः पुन.। **तेषां** द्वित्वादीनाम्। ननु नित्यत्वे सत्यनेकसमवेतत्वात् तेषा जातित्व प्रसज्यत इत्याशङ्क्य प्रतिक्षिपति- **न चेति**। **एवं** व्यङ्ग्यत्वपक्षे द्वित्वादीनां नित्यत्वाभ्युपगमे। **तेषां** द्वित्वादीनाम्। निषेधे हेतुमाह- **असमवायित्वे सतीति**- समवायानुयोगिभिन्नत्वे सतीत्यर्थ., द्वित्वादौ तु द्वित्वत्वादिकं समवायेन वर्तत इति समवायानुयोग्येव द्वित्वादीति समवायानुयोगिभिन्नत्वस्य तत्राभावान्न जातित्वापत्तिरित्यर्थः। नन्वसमवायित्वे सति समवेतत्वं विशेषेऽप्यस्तीति तत्राप्युक्तनिमित्तबलाज्जातित्वव्यवहारापत्तिरित्याशङ्कां प्रतिक्षिपति- **न चेति**। **तत्र** विशेषे। जन्यत्वपक्षे दोषान्तरमुपदर्शयति- **किञ्चेति**। **तन्नाशे** द्वित्वनाशे, आश्रयनाशाजन्यत्वस्य कार्यतावच्छेदककोटावनिवेशे यत्रापेक्षाबुद्धिकाले आरम्भकसंयोगनाशानुगुणो विभाग, ततो द्वित्वोत्पत्तिक्षणे आरम्भकसयोगनाशः, ततो द्वित्वत्वनिर्विकल्पकोत्पत्तिक्षणे द्वित्वाश्रयद्रव्यस्य नाशः, ततोऽपेक्षाबुद्धिनाशक्षणे द्वित्वनाशः, तत्र द्वित्वनाशात् पूर्वमपेक्षाबुद्धिनाशस्याभावाद् व्यभिचारः स्यात्, तद्वारणायाश्रयनाशाजन्यत्वस्य कार्यतावच्छेदकतया निवेश.। '**द्व्यणुकपरिमाणहेतुपरमाणुद्वित्वस्य**' इत्यस्य 'नाशानुपपत्तिः' इत्यनेन सम्बन्ध', तादृशद्वित्वनाशस्याश्रयनाशाजन्यत्वेन निरुक्तकार्यतावच्छेदकाक्रान्ततया तादृशद्वित्वकारणीभूताया ईश्वरीयापेक्षाबुद्धेर्नाशासम्भात् तादृशनाशरूपकारणाभावेन तदनुपपत्तिरित्यर्थः। '**न च**' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। **यादृशोपाधिविशिष्टायाः** परमाणुद्वित्वोत्पत्त्यव्यवहितपूर्वकालविशेषविशिष्टायाः। **तन्नाशः** परमाणुद्वित्वनाशः। **तस्या** ईश्वरापेक्षाबुद्धेः। **सर्वदेति**- ईश्वरापेक्षाबुद्धिरूपकारणस्य सर्वदा सत्त्वेन परमाणुद्वित्वरूपकार्यस्य सर्वदोत्पत्तिप्रसङ्गादित्यर्थः। निषेधहेतुमाह-**स्वाव्यवहितेति**। **तस्या** ईश्वरापेक्षाबुद्धेः। **तन्नाशात्** परमाणुद्वित्वोत्पत्त्यव्यवहितपूर्वक्षणावच्छिन्नत्वविशिष्टेश्वरापेक्षाबुद्धिनाशात्। **तस्य** परमाणुद्वित्वस्य। **अतिरिक्तेति**- परमाणुद्वित्वोत्पत्त्यव्यवहितपूर्वक्षणव्यतिरिक्तेत्यर्थ'। विशिष्य कार्य कारणभावो महागौरवग्रस्तत्वात् कल्पयितु न शक्य इत्याह- **अपि चेति**। फलमुखगौरवस्याऽदोषत्वमाशङ्क्य परिहरति- **न चेति**। **अस्य** विशिष्यकार्यकारणभावकल्पननिबन्धनमहागौरवस्य। यद् गौरव पूर्वं नोप-

प्रागेवोपस्थितौ तद्दोषताया बाहुलेयत्वात्, तददोषत्वे प्रागनुपस्थितेरेव बीजत्वात् । अपि च मानसत्वादिव्याप्यजातिविशेषेणापेक्षाबुद्धेर्द्वित्वादिहेतुत्वे ईश्वरापेक्षाबुद्ध्या परमाणुद्वित्वाद्यजननापत्तिः, ईश्वरज्ञानसाधारणद्वित्वादिजनकतावच्छेदकजातिस्वीकारे च जन्यसाक्षात्कारत्वादिना सांकर्यम्, त्रित्वाद्युत्पत्तिकाले द्वित्वाद्युत्पत्त्यापत्तिश्च दुर्निवारा । एतेन द्वित्वादिजनकतावच्छेदकतयाऽपेक्षाबुद्धिनिष्ठलौकिकविषयत्वस्वीकारोऽपि निरस्तः, परार्द्धादिसंख्यानुत्पत्तिप्रसक्तेश्च तदाश्रययावद्द्रव्यवृत्तिलौकिकविषयताया असम्भवात् । ईश्वरीयापेक्षाबुद्ध्यैव तदुत्पत्त्यङ्गीकारे चान्यत्रापि कारणान्तरोच्छेद इति न किञ्चिद् एतद्" इत्याहुः ।

केचित् तु–" द्वित्व-त्रित्वादिकं तुल्यव्यक्तिवृत्तिकमेव सामान्यम्, अनित्यस्य संयोगादेरिव नित्यस्यापि द्वित्वादेर्व्यासज्यवृत्तित्वे विरोधाभावात् । भिन्नेन्द्रियग्राह्याणां रूप-रसादीनामिव सामान्येन्द्रियग्राह्याणामपि सत्यप्येकावच्छेदेन समानदेशत्वे प्रतिनियतव्यञ्जकव्यङ्ग्यत्वे विरोधाभावात्, सहचारदर्शन-

---

स्थितं तस्य फलमुखस्यादोषत्वेऽपि यच्च गौरवं पूर्वमेवोपस्थितं सत् कल्पनाप्रतिग्रन्थि तस्य फलमुखस्यापि दोषत्वमेवेति निषेधहेतुमुपदर्शयति– **अस्य**।मिति । **तद्दोषतायाः** फलमुखगौरवदोषतायाः । **तददोषत्वे** फलमुखगौरवस्यादोषत्वे । यच्च, द्वित्वादिजनकतावच्छेदिका मानसत्वव्याप्या या जातयः, तद्रूपेण चापेक्षाबुद्धेर्द्वित्वादिकं प्रति कारणत्वम्, तदपि न समीचीनमित्याह– **अपि चेति** । मानसत्वव्याप्यजातिविशेषो मनोरूपेन्द्रियजन्यप्रत्यक्ष एव स्यात्, ईश्वरपेक्षाबुद्धिस्तु नित्यत्वान्न मनोरूपेन्द्रियजन्येति न तत्र मानसत्वव्याप्यजातिरिति कारणतावच्छेदकधर्माऽनाक्रान्तत्वादन्यस्या अपेक्षाबुद्धेः परमाणुगतैकत्वविषयाया अभावात् परमाणुद्वित्वाद्युत्पत्तिर्न स्यात्, यदि चेश्वरज्ञान-तदन्यापेक्षबुद्धिगतमेकं सामान्यमुररीकृत्य तस्यैव द्वित्वादिजनकतावच्छेदकत्व स्वीक्रियते तदा जन्यसाक्षात्कारत्वादिना तस्य सामान्यस्य साङ्कर्यं दुष्परिहरमेव, जन्यसाक्षात्कारत्वाभाववतीश्वरज्ञाने तस्य सामान्यस्य तदभाववत्यपेक्षाबुद्ध्यनात्मके जन्यसाक्षात्कारे जन्यसाक्षात्कारत्वस्य तदुभयोश्च जन्यसाक्षात्कारात्मकापेक्षाबुद्धौ समावेशात्, एवमुक्तसामान्येनापेक्षाबुद्धिर्द्वित्वादिकं त्रित्वादिकं च प्रति कारणमित्येकेन केनचिदपेक्षात्मकज्ञानेन यदा त्रित्वादिकमुत्पद्यते तदा द्वित्वादिकमप्युत्पद्येत, तद्रूपकारणस्य सर्वान् प्रत्यविशिष्टत्वाद् विशिष्य कारणान्तरस्यानिरुक्तेरित्याह– **ईश्वरापेक्षाबुद्ध्येति** ।

**'एतेन'** इत्यस्य 'निरस्तः' इत्यनेनान्वयः, एतेन– त्रित्वाद्युत्पत्तिकाले द्वित्वाद्युत्पत्तिप्रसङ्गेन । निरासे हेत्वन्तरमाह– **परार्द्धादीति** । **तदाश्रयेति**– परार्द्धसङ्ख्याश्रयेत्यर्थः, परार्द्धसङ्ख्याश्रयाणां यावतां द्रव्याणां लौकिकप्रत्यक्षस्यास्मदादीनामसम्भवेन तद्वृत्तिलौकिकप्रत्यक्षविषयताया असम्भवादित्यर्थः । **ईश्वरीयेति**– ईश्वरस्य सर्वविषयको लौकिक एव साक्षात्कारः, तदात्मकापेक्षाबुद्धिनिरूपितलौकिकविषयतायाः परार्द्धादिसङ्ख्याश्रययावद्द्रव्यवृत्तित्वेन तथाभूतलौकिकविषयताश्रयेश्वरीयापेक्षाबुद्ध्यैव परार्द्धादिसङ्ख्योत्पत्तिस्वीकारे त्वन्यत्रापीश्वरीयापेक्षाबुद्धिरेव कारणमित्यस्मदाद्यपेक्षाबुद्धेर्द्वित्वादिकारणत्वमुच्छिद्येत, अतो द्वित्वादिजनकतावच्छेदकतयाऽपेक्षाबुद्धिनिष्ठलौकिकविषयत्वस्वीकारोऽपि न समीचीन इत्येवं प्रभाकरानुसारिण आहुरित्यर्थः ॥

अन्येषां मतमुपदर्शयति– **केचित् त्विति**– अस्य 'आहुः' इत्यनेन सम्बन्धः । समानव्यक्तिवृत्तिकं द्वित्वमेकमेव, एवं त्रित्वादिकमपि, तच्च सामान्यमेवेत्यर्थः । ननु द्वित्वादिकं व्यासज्यवृत्ति, सामान्यं च व्यासज्यवृत्ति न भवतीति कथं द्वित्वादेः सामान्यरूपत्वमत आह– **अनित्यस्येति** । यदा च द्वित्व-त्रित्वादिकं तुल्यव्यक्तिवृत्तिकं सामान्यरूपं तदा तेषां समानेन्द्रियग्राह्याणां कथं नैकव्यञ्जकव्यङ्ग्यत्वम् ? कुतः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमित्यपेक्षायामाह– **भिन्नेन्द्रियग्राह्याणामिति** । **'सामान्येन्द्रियग्राह्याणामपि'** इति स्थाने 'समानेन्द्रियग्राह्याणाम्' इति पाठो युक्तः । ननु समानेन्द्रियग्राह्याणां घट पटादीनां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं न, किन्त्वेकव्यञ्जकव्यङ्ग्यत्वमेवेति कथं प्रकृते प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमित्यत आह– **सहचारेति**– केषाञ्चित् समानेन्द्रियग्राह्याणामेकव्यञ्जकव्यङ्ग्यत्वदर्शनेन यत्र समानेन्द्रियग्राह्यत्वं तत्रैकव्यञ्जक-

मात्रस्याऽकिञ्चित्करत्वात्, भेदश्च विरुद्धधर्माध्यासात्, स च न्यूनाधिकदेशपर्याप्तवृत्तिकत्वम्" इत्याहुः ।

अपरे तु–"घट-कुट-कुड्य-कुशूलेषु द्वित्व-त्रित्वादिप्रतीतावेकतरनाशे तद्वृत्तेर्द्वित्वादेरपि संयोगादेरिव विनाशप्रत्ययादनित्यवृत्ति नानाव्यक्तिकमेव द्वित्वादिकम्, आश्रयविनाशोत्पादाभ्यामेव तस्योत्पाद-विनाशौ, असमवायिकारणं त्वाश्रयस्यैकत्वं परिमाणं वा, एकव्यक्तिवृत्तिकमेकत्वमिव तुल्यव्यक्तिवृत्तिकं द्वित्वाद्यपि नाऽनेकम्, तुल्यव्यक्तिवृत्तित्वादेः प्रतिबन्धकत्वात्, बुद्धिविशेषस्तद्व्यञ्जको न तूत्पादकः, नित्येषु त्वेकव्यक्तिकमनेकव्यक्तिकं वा नित्यम्" इत्याहुः ।

वयं तु ब्रूमः–जन्यत्वनयेऽपेक्षाबुद्धेर्जन्यतावच्छेदकमेकत्वान्यसंख्यात्वं वाच्यम्, यद्वा, एकत्वजन्यतावच्छेदकतया द्वित्वमारभ्य परार्द्धपर्यन्तमेका जातिः सिद्ध्यति लाघवात्, न तु जन्यसंख्यात्वमेवैकत्व-

व्यञ्जयत्वमेवेति नियमो न कल्पयितुं शक्यः, क्वचित् पार्थिवे लोहलेख्यत्वदर्शनेऽपि यत्र पार्थिवत्वं तत्र लोहलेख्यत्वमिति नियमो नास्ति, वज्रे व्यभिचारादिति सहचारदर्शनमात्रं न नियमप्रयोजकमित्यर्थः । ननु द्वित्व-त्रित्वादीना सामान्यरूपत्वे भेद एव कथम्? येन प्रतिनियतव्यञ्जकव्यङ्ग्यत्व स्यादित्यत आह– **भेदश्चेति** । **स च** विरुद्धधर्मश्च । **न्यूनेति**– द्वित्वस्य त्रित्वापेक्षया न्यूनदेशपर्याप्तवृत्तिकत्वं त्रित्वस्य द्वित्वापेक्षयाधिकदेशपर्याप्तवृत्तिकत्वमित्येवं विरुद्धधर्माध्यासाद् द्वित्व-त्रित्वादीनां भेद इत्यर्थः । एतन्मते सर्वं द्वित्वादिकं नित्यं सामान्यरूपमेवेति ॥

अनित्यगत द्वित्वादिकमनित्यं नित्यगतं पुनर्नित्यमिति मतान्तरमुपदर्शयति– **अपरे त्विति**– अस्यापि 'आहुः' इत्यनेन सम्बन्धः । **तस्य** द्वित्वादे. । **असमवायिकारणं तु** द्वित्व-त्रित्वादीनामसमवायिकारण पुनः, आश्रयद्वयगतमेकत्वद्वयं परिमाणद्वयं वा द्वित्वस्यासमवायिकारणम्, त्रित्वस्य त्वाश्रयत्रयगतमेकत्वत्रयं परिमाणत्रयं वाऽसमवायिकारणम्, एवं दिशा चतुष्ट्वादीनामप्यसमवायिकारणं बोध्यम् । नानाव्यक्तिकं द्वित्वादिकं यथा नाना न तथा तुल्यव्यक्तिकम्, तत् तु एकव्यक्तिवृत्तिकमेकत्वमिवैकमेवेत्याह– **एकव्यक्तिकमिति** । अनेकत्वं तत्र कथ नेत्यपेक्षायामाह– **तुल्यव्यक्तिवृत्तित्वादेरिति** । **प्रतिबन्धकत्वात्** अनेकत्वस्य प्रतिबन्धकत्वात् । **बुद्धिविशेषः** 'अयमेकोऽयमेकः' इत्यपेक्षाबुद्धिरूप । **तद्व्यञ्जकः** द्वित्वादिव्यञ्जक, अर्थाद् द्वित्वादिप्रत्यक्षकारणम् । **न तूत्पादकः** द्वित्वादेरुत्पादको न भवति । यदा चाश्रयविनाशोत्पादाभ्यामेव द्वित्वादीना विनाशोत्पादौ, तदा नित्यद्रव्यरूपस्याश्रयस्य विनाशोत्पादयोरभावात् तद्गतं द्वित्वादिकं न विनश्यति नाप्युत्पद्यते, किन्तु नित्यमित्याह– **नित्येषु त्विति** । **'एकव्यक्तिकम्'** इत्यस्य तुल्यव्यक्तिवृत्तिकमित्यर्थः, यथाश्रुत तु द्वित्वादौ न सङ्गतं द्वित्वादेरेकव्यक्तिमात्रवृत्तित्वाभावात् ।

अत्र ग्रन्थकार. स्वाभिप्रेतमुपदर्शयति– **वयं त्विति**– अपेक्षाबुद्धिर्द्वित्वादेर्निमित्तकारणम्, एकत्व त्वसमवायिकारणम्, तत्र निमित्तकारणस्यापेक्षाबुद्धेर्जन्यतावच्छेदकमेकत्वान्यसङ्ख्यात्व द्वित्वाद्यारभ्य परार्द्धपर्यन्तसङ्ख्यावृत्ति वाच्यम् । **यद्वा** अथवा, एकत्व यद् द्वित्वादिपरार्द्धपर्यन्तसङ्ख्याया असमवायिकारण तन्निरूपितजनकतावच्छेदकतया द्वित्वमारभ्य परार्द्धपर्यन्तमेका जातिर्लाघवात् सिद्ध्यतीत्यर्थ. । ननु अवयवगतमेकत्वमवयविगतैकत्वं प्रति असमवायिकारणमित्येकत्वस्यैकत्वमपि कार्यमिति तदेकत्वसाधारण परार्द्धपर्यन्तजनसङ्ख्यावृत्तिजन्यसङ्ख्यात्वमेवैकत्वजन्यतावच्छेदकं ततोऽपि लाघवादस्त्वित्यत आह– **न त्विति** । निषेधे हेतुमाह– **कारणेति**– अवयविगतैकत्वं प्रति यदवयवगतैकत्वस्य कारणत्वं तत्र कारणैकार्थप्रत्यासत्तिः कारणतावच्छेदकसम्बन्धः, अर्थात् समवायसम्बन्धेनावयव्येकत्वं प्रति स्वसमवायिसमवेतत्वसम्बन्धेनावयवगतैकत्वं कारणमिति, द्वित्वादिक प्रति यदेकत्वस्य कारणत्व तत्र कार्यैकार्थप्रत्यासत्ति. कारणतावच्छेदकसम्बन्धः, अर्थात् समवायसम्बन्धेन द्वित्वादिकं प्रति समवायसम्बन्धेनैकत्वं कारणमिति, तथा च कारणतावच्छेदकसम्बन्धभेदेन तदवच्छिन्नकारणताया भिन्नत्वे तन्निरूपित–कार्यताया अपि भिन्नत्वान्न तयोः कार्यत्वयोरेकमवच्छेदकम्, किन्तु समवायसम्बन्धावच्छिन्नैकत्वनिष्ठकारणतानिरूपित-समवायसम्बन्धावच्छिन्नैकत्वनिष्ठकार्यताया जन्यैकत्वत्वमवच्छेदकम्, स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नैकत्वनिष्ठकारणता-निरूपितसमवायसम्बन्धावच्छिन्नद्वित्वादिनिष्ठकार्यताया द्वित्वमारभ्य परार्द्धपर्यन्तसङ्ख्यावृत्तिजातिविशेषोऽवच्छेदक इत्यत आह–

जन्यतावच्छेदकम्, कारण-कार्यैकार्थप्रत्यासत्तिभेदात्, इति तस्यैव द्वित्वादिपरार्द्धपर्यन्तसंख्यावृत्तिजाति-विशेषितस्य तथात्वम् । व्यङ्ग्यत्वनये चैकत्वान्यसंख्याप्रत्यक्षत्वम्, उक्तजातिविशेषप्रत्यक्षत्वं वाऽपेक्षा-बुद्धेर्जन्यतावच्छेदकं वाच्यम्, द्वयोरप्यनयोर्मतयोः 'एको धान्यराशिः' इत्यादिप्रत्ययसिद्धे सामूहि-कैकत्वे व्यभिचारः । न च तत्रैकत्वं गौणमेव, वस्तुतस्त्वपेक्षाबुद्ध्या राशि-सेना-वनादौ बहुत्वविशेष एवोत्पाद्यते व्यज्यते वेति वाच्यम्, स्वारसिकैकत्वानुभावविरोधात्, 'एते बहवः कणाः, एते बहवः करि-तुरग-रथ-पदातयः, एते बहवः आम्र-निम्ब-धव-खदिराः' इत्यादौ राशित्व-सेनात्व-वनत्वाद्य-नापत्तेश्च, अपेक्षाबुद्ध्या तत्र राशित्वादिरूपस्यैव बहुत्वस्योत्पत्तिरभिव्यक्तिर्वेति त्वयोपगमात् । न च बहुपदशक्यतावच्छेदकं बहुवचनप्रवृत्तिनिमित्तं वा बहुत्वत्वमेकत्वद्वित्वान्यसंख्यात्वम्, त्रित्वमारभ्य परार्द्धपर्यन्ते वृत्तिर्जातिविशेषो वा, राशित्वादिरूपबहुत्वे चापेक्षाबुद्धिविशेषजन्यतावच्छेदकस्तद्व्याप्य एव जातिविशेषो बहुत्वत्वम्, तदवच्छिन्नोपस्थितिश्चैकवचनान्तराश्यादिपदादेवेति शाब्दबोधस्थले नानु-पपत्तिः, प्रत्यक्षे च 'बहवः' इत्यादौ क्वचित् दोषवशात् तदग्रहान्नानुपपत्तिरिति वाच्यम्, अनुभूयमानै-

---

**तस्यैवेति** । **'जातिविशेषितस्य'** इति स्थाने 'जातिविशेषस्य' इति पाठो युक्तः । **तथात्वम्** एकत्वजन्यतावच्छेद-कत्वम् । **व्यङ्ग्यत्वनये च** द्वित्वादिकमपेक्षाबुद्धिव्यङ्ग्यमिति प्रभाकरमते तु । **'एकत्वान्यसङ्ख्याप्रत्यक्षत्वम्'** इत्यत्र 'एकत्वान्य' इति विशेषणोपादानादेकत्वप्रत्यक्षस्यापेक्षाबुद्ध्यजन्यत्वेऽपि न क्षतिः । **उक्तजातिविशेषप्रत्यक्षत्वमिति**– द्वित्वमारभ्य परार्द्धपर्यन्तं यैका जातिस्तद्विशिष्टप्रत्यक्षत्वमित्यर्थ. । धान्यसमूहगतैकत्वं यद् उत्पद्यते तत्रोक्तसङ्ख्यावृत्तिजाति-विशेषो न वर्तते, नवा तत्प्रयक्षं तादृशजातिविशिष्टप्रत्यक्ष भवति, अथापि तदेकत्वमेकत्वेन जन्यते, अपेक्षाबुद्ध्या तु नैकत्व नवा तत्प्रत्यक्षमिति तत्रोक्तकार्यकारणभावो नास्ति, नवा तदुपपादको मतद्वयेऽपि कश्चित् कार्यकारणभावोऽस्ति, यच्च समवायेनैकत्वं प्रति स्वसमवायिसमवेतत्वसम्बन्धेनैकत्व कारणम्, तथा कारणस्यैकत्वस्याभावेऽपि तदेकत्व तदेकत्वप्रत्यक्षं चोपजायत इति व्यभिचारो मतद्वयेऽपि दुरुद्धर इत्यतो व्यङ्ग्यत्व-जन्यत्वपक्षौ न समीचीनावित्याह– **द्वयोरपीति** । **'न च'** इत्यस्य 'वाच्यम्' इत्यनेनान्वयः । **तत्र** धान्यसमूहे, उत्पाद्यत इति न्यायमते, व्यज्यत इति प्रभाकरमते 'एको धान्यराशिः' इत्येवमेकत्वमेव स्वरसतोऽनुभूयते, न च स्वरसतोऽनुभूयमानस्य गौणत्व युक्तम्, नवा तत्राप्रतीयमानस्य बहुत्वविशेषस्य कल्पन युक्तमिति निषेधे हेतुमुपदर्शयति– **स्वारसिकैकत्वेति** । अपि च 'एते बहवः कणा राशिः' इति, 'एते बहव. करि-तुरग-रथ-पदातयः सेना' इति, 'एते बहव आम्र-निम्ब-धव-खदिरादयो वनम्' इति च प्रतीतिरुपजायते, उक्तमतद्वये तु राशित्वं सेनात्व वनत्वं च बहुत्वविशेषरूपमपेक्षाबुद्ध्योत्पद्यतेऽभिव्यज्यते वेत्युपेयते, तथा च 'बहव.' इत्यनेनैव बहुत्वस्यावभासमानत्वाद्राशित्वादिक तदनधिक तत एव लब्धमिति तथाप्रतीतिर्न स्यादित्याह– **एत** इति । **त्वया** नैयायिकेन प्रभाकरेण वा । ननु बहुपदशक्यतावच्छेदकं यद् बहुत्वत्व तद्व्याप्यजातिविशेष एव राशित्वादि-रूपबहुत्वे इति सामान्यरूपेण बहुत्वत्वेन विशिष्टस्याश्रये तद्व्याप्यबहुत्वत्वविशेषविशिष्टस्यावच्छिन्नान्वयसम्भवाद् 'एते बहवः कणा राशि., एते बहवः करि-तुरग-रथ-पदातयः सेना, एते बहव आम्र-निम्ब-धव-खदिरा वनम्' इत्यादौ शाब्दबोधस्य नानुपपत्तिः, उक्तबहुत्वद्वयस्य सत्त्वेऽपि प्रत्यक्षे यदेकमेव बहुत्वत्वमनुभूयते तत्र सौसादृश्यलक्षणदोषविशेष एव बहुत्वत्वा-न्तरग्रहप्रतिबन्धक इति तदप्रतिभासनमप्युपपद्यत इत्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वय' । **'राशित्वादि'** इत्यादिपदात् सेनात्व-वनत्वादेरुपग्रहः । **तद्व्याप्य एव** त्रित्वादिपरार्द्धपर्यन्तसङ्ख्यावृत्तिजातिविशेषव्याप्य एव । **तदवच्छिन्नोपस्थितिश्च** त्रित्वादिपरार्द्धपर्यन्तसङ्ख्यावृत्तिजातिविशेषव्याप्यजातिविशेषावच्छिन्नोपस्थितिश्च, तथा च यत्र 'एते बहवः कणाः' इत्याद्येव प्रयुज्यते न तु राश्यादिपदमपि तत्र प्रयुज्यते तत्रोक्तजातिविशेषव्याप्यजातिविशेषा-वच्छिन्नस्य प्रतीतिर्न भवति, यत्र तु 'एते बहवः कणा राशि.' इत्यादि प्रयुज्यते तत्रोक्तजातिविशेषव्याप्यजातिविशेषा-वच्छिन्नस्यापि शाब्दबोधो भवति । शब्दाऽनियन्त्रितविषये प्रत्यक्षे च कथमुक्तजातिद्वयावच्छिन्नस्य क्वचिदनवभासनमित्य-पेक्षायामाह– **प्रत्यक्षे चेति** । **तदग्रहात्** उक्तजातिविशेषव्याप्यजातिविशेषाऽग्रहात् । निषेधे हेतुमाह– **अनुभूय-**

कत्वप्रतीतेर्बहुत्वविशेषेण समर्थने द्वित्वादिप्रतीतेरप्येकत्वविशेषेणैव समर्थयितुं शक्यत्वात्, वास्तवाभावे गौणानुपपत्तेरप्युक्तत्वाच्च । न च 'द्वाविमौ नील-पीतौ' इति गौणद्वित्वाद् विलक्षणं 'द्वाविमौ घट-पटौ' इत्यत्र द्वित्वमनुभूयते, न चैकत्र ज्ञाने द्वित्वं प्रकारः, अन्यत्र तु नेत्यपि विनिगन्तुं शक्यम्, विजातीयज्ञानविषयत्वसंबन्धेन स्वस्थितस्वप्रकारतया बुद्धिवैलक्षण्योपपादनमप्युभयत्र तुल्ययोगक्षेमम् । एकत्रापि च घटे नीलत्व-घटत्वाभ्यां द्वित्वमनुभूयत एव, अनुभूयत एव च 'एते वृक्षा वनम्' इति बहुत्वावच्छिन्नेऽपि केनचिदुपाधिनैकत्वमिति, स्वसामग्रीप्रभवैकत्वद्वित्वाद्यनन्तपर्यायोपेतद्रव्य एवापेक्षाबुद्धिहेतोरपेक्षात्मकभावे यथाक्षयोपशमं कदाचिदेकत्वप्रकारकं कदाचिच्च द्वित्वादिप्रकारकं ज्ञानं जायत इत्यपेक्षाबुद्धिगम्यत्वमेव द्वित्वादेर्युक्तम् । अत नयरूपत्वादस्या नयान्तरसंयोजनया सप्तभङ्गीसंगतिरपि सङ्गता, यादृशविषयता-

---

**मानैकत्वप्रतीतेरि**ति– 'एको धान्यराशिः' इत्यत्रैकशब्देनैकवचनेनैकत्वप्रतीतेस्त्रित्वादिपरार्द्धपर्यन्तसङ्ख्यावृत्तिबहुत्वत्वव्याप्यापेक्षाबुद्धिविशेषजन्यतावच्छेदकजातिविशेषविशिष्टबहुत्वविशेषात्मकराशित्वविषयकत्वेनोपपादने द्वित्व-त्रित्वादिप्रतीतेरप्येकत्वत्वव्याप्यजातिविशेषविशिष्टैकत्वविशेषेणैवोपपादयितुं शक्यत्वाद् वास्तवद्वित्व-त्रित्वादेरप्युच्छेदः प्रसज्येत, यदि च वास्तवद्वित्वादि न भवेत् तदैकत्वविशेषलक्षणगौणद्वित्वादि कल्पयितुं न शक्यत इति विभाव्यते तर्हि सामूहिकैकत्वस्यानुभूयमानस्य वास्तवत्वे बाधाभावेन तत्रापि तदैकत्वं वास्तवं विहाय गौणं बहुत्वविशेषादिरूपं न कल्पयितु शक्यं क्वचिदपि सामूहिकैकत्वस्य वास्तवस्याभावे तद्गौणानुपपत्तेरित्यर्थः । **उक्तत्वाच्चे**ति– 'अथैकत्व-द्वित्वादि तत्तद्धर्मप्रकारकबुद्धिविषयत्वादिकं गौणमेव' इत्याद्याशङ्क्य अन्ते 'वास्तवद्वित्वाद्यभावे ज्ञानाकारतापर्यवसानेन साकारवादप्रसङ्गाच्च' इत्यनेन ग्रन्थेनोक्तत्वाच्चेत्यर्थः । **'न च'** इत्यस्य 'अनुभूयते' इत्यनेनान्वयः, 'द्वाविमौ नील-पीतौ' इत्यत्र गौण नील-पीतगतं द्वित्वं विषयः, 'द्वाविमौ घट-पटौ' इत्यत्र मुख्यं द्वित्व विषय इति कल्पना तदा स्याद् यदि प्रतीत्योर्वैलक्षण्यं तद्विषययोर्वा वैलक्षण्यमनुभूयेत, न च तथा वैलक्षण्यमनुभूयत इति, एवं च यदि 'द्वाविमौ नील-पीतौ' इत्यत्र गौणं द्वित्वं विषयस्तर्हि 'इमौ घट-पटौ' इत्यत्र गौणमेव द्वित्व विषयोऽस्तु, 'द्वाविमौ घट-पटौ' इत्यत्र मुख्यद्वित्वस्य विषयत्वे 'द्वाविमौ नील-पीतौ' इत्यत्रापि मुख्यस्यैव द्वित्वस्य विषयत्वं भवतु, अनुभवस्य समानस्यैवोभयत्र सद्भावादिति भावः । **'न च'** इत्यस्य 'शक्यम्' इत्यनेनान्वयः । **एकत्र ज्ञाने** 'द्वाविमौ घट-पटौ' इत्यस्मिन् ज्ञाने घट-पटरूपविशेष्ये द्वित्व प्रकारः, **अन्यत्र तु न** 'द्वाविमौ नील-पीतौ' इति ज्ञाने पुनर्नील-पीतरूपविशेष्ये द्वित्वं न प्रकारः, **इत्यपि** एवप्रकारेणापि, विनिगन्तुं न च शक्य विनिगमकहेतोरभावात्, इत्युभयत्रैव प्रकारतया भासमानस्य द्वित्वस्यैकत्र गौणत्वमपरत्र मुख्यत्वमित्यपि कल्पयितु न शक्यमिति भावः । 'द्वाविमौ नील-पीतौ' इत्यत्र द्वित्व स्वस्मिन्नेव प्रकारतया भासते, 'द्वाविमौ घट-पटौ' इत्यत्र तु द्वित्व पट-पटयोः प्रकारतया भासते, इत्येवं बुद्धिवैलक्षण्यकल्पनमपि न विशेषकम्, यतः 'द्वाविमौ घट-पटौ' इत्यत्र द्वित्वं स्वस्मिन् प्रकारतया भासते, 'द्वाविमौ नील-पीतौ' इत्यत्र तु द्वित्व नील-पीतयोः प्रकारतया भासते इत्यपि वक्तुं शक्यत एव, द्वित्वे द्वित्वस्य विजातीयज्ञानविषयत्वसम्बन्धस्य प्रकारतावच्छेदकस्योभयत्र सम्भवादित्याह– **विजातीयज्ञानविषयत्वसम्बन्धेने**ति । **'स्वस्थितस्वप्रकारतया'** इति स्थाने 'स्वस्मिन् स्वप्रकारतया' इति पाठो युक्तः । यद्यनुभवमुखप्रेक्षाविदग्धो भवति विपश्चित् तदाऽपेक्षाभेदेनैकत्रापि द्वित्वं बहुष्वप्येकत्वमनुभूयमान नापलपनीयम्, एकत्रापि द्रव्येऽपेक्षात्मकभावे सतामेकत्वाद्यनन्तपर्यायाणा मध्यादपेक्षाबुद्धिरूपकारणबलतो यथाक्षयोपशमं कदाचिदेकत्वप्रकारकं ज्ञानं कदाचिद् द्वित्वादिप्रकारकं ज्ञानं जायत इत्यतोऽपेक्षाबुद्धिगम्यत्वमेव द्वित्वादेर्युक्तमित्युपदर्शयति– **एकत्रापि च घट** इति । **'अनुभूयत एव'** इत्यनुभवप्रमाणमावेदितम्, एवमग्रेऽपि । एकस्मिन् द्रव्येऽनन्तपर्यायसम्भवाऽऽवेदनायोक्तम्– **स्वसामग्रीप्रभवे**ति– स्वस्वसामग्रीप्रभवेत्यर्थः । **'अपेक्षात्मकभावे'** इति द्रव्यस्य विशेषणम्, अपेक्षात्मको भावः स्वभावो यस्य सोऽपेक्षात्मकभावः, तस्मिन्नित्यर्थः, यत एवापेक्षात्मकस्वभावमनन्तपर्यायोपेतद्रव्यं तत एव तत्रापेक्षाबुद्धिरूपकारणात् कस्यचित् पर्यायस्य कदाचिदभिव्यक्तिरित्यभिसन्धिः । **अत एव** द्वित्वादेरपेक्षात्मकबुद्धिगम्यत्वादेव । **अस्या** अपेक्षाबुद्धेः, एकयापेक्षाबुद्ध्यैकः पर्यायोऽभिव्यज्यते, द्वितीयया तया द्वितीयः पर्यायस्तत्पर्यायप्रतिक्षेपात्माऽभिव्यज्यते, ताभ्यां सम्मिलिताभ्यां क्रमेण युगपद् वा तादृशपर्यायद्वयं तथाऽभिव्यज्यत इति तथाऽभिव्यज्यमानपर्यायकदम्बकावगतये सप्तभङ्गीवाक्यं

विशिष्टाया अपेक्षाबुद्धेः परैर्जनकत्वं व्यञ्जकत्वं वाऽभ्युपगम्यते, तादृशविषयतानिरूपितापेक्षात्वाख्य-विषयता द्वित्वादौ नास्माकमसुलभा । सामान्य-विशेषत्वादेरापेक्षिकत्वेऽपीयमेव रीतिरनुसर्तव्या । न चैवमनपेक्षैकत्व-द्वित्वादिप्रत्यक्षानुपपत्तिः, द्रव्यनयालम्बनेनानपेक्षात्मकविषयतान्तरस्यापि स्वीकारात् । अत एव सापेक्षत्वा-ऽनपेक्षत्वाभ्यामपि स्याद्वादः, अस्मदुक्त पक्ष एवापेक्षाबुद्धि-द्वित्वबुद्ध्योः पौर्वापर्या-नवभासोपपत्तिः, अनन्तकार्यकारणभाव-प्रतिबध्यप्रतिबन्धकभावादिकल्पनागौरवदूषणानवकाशश्चेति सर्वं-मवदातम् । तस्मात् स्वसमये परसमये एकत्व-द्वित्वादिप्रकारकनानाविधलौकिकव्यवहारे च नयापेक्षयैव विविक्तो बोध इति स्थितम् ॥ ४ ॥ फलितमाह—

**तेन सापेक्षभावेषु प्रतीत्यवचनं नयः ।**
**अभावाभावरूपत्वात् सापेक्षत्वं विधावपि ॥ ५ ॥**

**नया०-तेनेति**— तेन उक्तहेतुना, **सापेक्षभावेषु** परस्परप्रतियोगिकेषु, धर्मेषु **प्रतीत्यवचनम्** अपेक्षात्मकं वाक्यम्, नय इति सिद्धम् । नन्वेवं 'स्यान्नास्त्येव' इत्येकवचनं नयः स्यात्, न तु 'स्याद-स्त्येव' इति, तदर्थस्य विधेरप्रतियोगिकत्वादत एवाह—**विधावपि** अस्तित्वादिभावेऽपि, **अभावाभावरूप-त्वात्** नास्तित्वाद्यभावस्वरूपत्वात्, तेन रूपेण प्रतियोगिनिरूपणाधीननिरूपणतया सापेक्षत्वमस्त्येव । अयं

प्रवर्तत इत्येवमेकस्या अपेक्षाबुद्धेर्नयरूपाया द्वितीयापेक्षाबुद्ध्यात्मकनयसयोजनया सप्तभङ्गीप्रवृत्तिः सङ्गतिमङ्गतीत्यर्थः । **परैः** नैयायिकैः प्रभाकरानुयायिभिर्वा । **अस्माकं** जैनानाम्, नासुलभा किन्तु सुलभैव । यथा चोक्तापेक्षात्वाख्यविषयता-शालित्वाद् द्वित्वादीनामापेक्षिकत्व तथा सामान्यत्व-विशेषत्वादेरप्यपेक्षाबुद्धिगम्यत्वात् तत्तदपेक्षाबुद्धिवैलक्षण्यप्रयोजकविषयता-विशेषनिरूपितापेक्षात्वविषयताशालित्वादापेक्षिकत्वमित्याह— **सामान्य-विशेषत्वादेरिति** । ननु यद्येकत्व-द्वित्वादीनामुक्ता-पेक्षात्वाख्यविषयताशालित्वादापेक्षिकत्व तर्हि किञ्चिदपेक्षयैकत्व-द्वित्वादिप्रत्यक्षस्यापेक्षाबुद्धिप्रभवस्य सम्भवेऽप्यनपेक्षैकत्वबुद्धेः 'एको घटः' इत्याद्याकारिकायाः, अनपेक्षद्वित्वबुद्धेः 'द्वाविमौ घट-पटौ' इत्याद्याकारिकायाश्चानुपपत्तिरित्याशङ्का प्रति-क्षिपति— **न चेति** । **एवं** द्वित्वादावपेक्षात्वाख्यविषयत्वोररीकारे । निषेधे हेतुमाह— **द्रव्यनयावलम्बनेनेति** । **अत एव** सापेक्षत्वाख्या-ऽनपेक्षत्वाख्यविषयत्वद्वयस्वीकारादेव । अन्यमतापेक्षया स्वाभ्युपगतपक्षे विशेषमुपदर्शयति— **अस्मदुक्तपक्ष एवेति**— अपेक्षाबुद्ध्याऽनन्तपर्यायोपेतद्रव्ये यथाक्षयोपशम कदाचिद् द्वित्वप्रत्यक्षं कदाचित् त्रित्वप्रत्यक्षमित्युपगमे क्षयो-पशमविशेषादेव द्वित्व-त्रित्वादिप्रत्यक्षसम्भवे न विभिन्नकार्यकारणभावकल्पना, त्रित्वप्रत्यक्षकाले क्षयोपशमविशेषस्य द्वित्व-प्रत्यक्षनियामकस्याभावादेव न द्वित्वप्रत्यक्षमिति न त्रित्वादिप्रत्यक्षसामग्र्या द्वित्वादिप्रत्यक्षप्रतिबन्धकत्वम्, अपेक्षाबुद्धि-द्वित्वबुद्ध्योरत्यन्ताव्यवधानाच्च पौर्वापर्यानवभासनमित्यर्थः । उपसहरति— **तस्मादिति** ॥ ४ ॥

पञ्चमपद्यमवतारयति— **फलितमाहेति**— अनन्तराभिहितविचारेण यत् फलित तदाहेत्यर्थः । पञ्चमपद्यं विवृणोति— **तेनेतीति** । ननु निषेधस्य सप्रतियोगिकत्वेन तत्प्रतिपादकवचनस्यापेक्षात्मकवाक्यत्वेन नयत्वस्य सम्भवेऽपि विधेरप्रति-योगिकत्वात् तत्प्रतिपादकवचनस्यापेक्षात्मकवाक्यत्वाभावात् कथ नयत्वमिति शङ्का-समाधानपरतयोत्तरार्द्धमवतारयति— **नन्वे-वमिति** । **एवम्** अपेक्षात्मकवाक्यस्य नयत्वे । **तदर्थस्य** 'स्यादस्त्येव' इतिवचनार्थस्य । **तेनेति**— नास्तित्वाद्यभावत्वेन रूपेणास्तित्वादिलक्षणभावस्य प्रतियोगिनो नास्तित्वस्य यन्निरूपणं— तद्विषयकज्ञानानुकूलव्यापार, तदधीन— तत्प्रयोज्य निरू-पण यस्य तत्त्वेन— तत्प्रयोज्यज्ञानविषयत्वेन, नास्तित्वाभावप्रतियोगिज्ञानजन्यनास्तित्वाभावज्ञानविषयत्वेनेति यावत् । ननु नास्तित्वस्य नियमतोऽस्तित्वाभावरूपतया प्रतीयमानत्वात् तत्प्रतिपादकवचनस्य सापेक्षवाक्यत्वेऽपि विधिरूपस्यास्तित्वस्य विधि-स्वरूपेणापि प्रतीयमानत्वात् तद्रूपेण तत्प्रतीतौ प्रतियोगिज्ञानापेक्षाभावात् कथं तत्प्रतिपादकवचनस्य सापेक्षवाक्यत्वम्, अतो

भावः—अभावज्ञानेऽपि न सर्वत्र प्रतियोगिज्ञानापेक्षा, प्रतियोगिज्ञानं विनाऽपीदन्त्व-प्रमेयत्वादिनाऽभाव-भानस्य सार्वजनीनत्वात्, घटाभावत्वादिना घटाभावादिज्ञाने घटज्ञानाद्यपेक्षाध्रौव्यात् तेन रूपेणैव तेषां सप्रतियोगिकत्वं ग्रहीष्यते तर्हि नास्तित्वाभावत्वादिनाऽस्तित्वादीनां तेन रूपेण तथात्वे तुल्यम्, 'अभावाऽभावः प्रतियोग्येव' इति परेषामपि मूलसिद्धान्तात्, संयोगादावेव विशेषणतात्वकल्पनया निर्वाहेण 'नास्ति' इति प्रतीतिबलादतिरिक्त एव स इति नव्यमतस्य निर्युक्तिकत्वात्। तस्मात्, स्वरूपतो भावाऽभावयोरपि निष्प्रतियोगिकत्वम्, विशिष्टतया तु द्वयोरपि सप्रतियोगिकत्वमिति स्याद्वाद एव श्रेयान्। अथ निष्प्रतियोगिकाभावपक्षे प्रतियोगिज्ञानस्याभावप्रत्ययाहेतुत्वे विना प्रतियोगिज्ञानं 'न' इत्याकारकप्रत्ययापत्तिः। न चाभावस्याऽपीदन्त्वेन ग्रहादापादकाभावः, प्रथममभावा-ऽभावत्वयोर्निर्विकल्पके 'अभावः' इत्याकारकप्रत्यक्षापत्तेर्दुर्वारत्वात्। इन्द्रियस्य चक्षुस्त्वगादिभेदभिन्नत्वेन महागौरवम्। न च पृथक् प्रतियोगिधी-

भावार्थमुपदर्शयति— **अयं भाव** इति— नियमेनाभावज्ञानमपि न प्रतियोगिज्ञानापेक्षम्, इदन्त्व-प्रमेयत्वादिनाऽभावज्ञानस्य प्रतियोगिज्ञानमन्तरेणैव भावात्, किन्त्वस्तित्वाभावत्वादिरूपेणैव तज्ज्ञानं प्रतियोगिज्ञानसापेक्षमित्येतावता तत्प्रतिपादकवचनस्य यथा सापेक्षवाक्यत्वं तथाऽस्तित्वादिनाऽस्तित्वादिज्ञानस्यास्तित्वाभावादिज्ञानमन्तरेण भावेऽपि नास्तित्वाभावत्वादिना तज्ज्ञानस्य नियमतो नास्त्वादिज्ञाने सत्येव भावाद् तद्रूपेण तत्प्रतिपादकवचनस्य सापेक्षवाक्यत्वं स्यादेवेत्युपपाद्य दर्शयति— **अभावज्ञानेऽपीति**। **तेन रूपेणैव** घटाभावत्वादिरूपेणैव। **तेषां** घटाभावादीनाम्। **तेन रूपेण** नास्तित्वाभावत्वादिरूपेण। **तथात्वे** सप्रतियोगिकत्वे। **परेषामपि** नैयायिकानामपि। **मूलसिद्धान्तात्** प्राचीननैयायिकसिद्धान्तात्, अत एव "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता"। [कुसुमाञ्जलिस्तवक०, श्लो० ] इति नैयायिकप्रकाण्डोदयनाचार्यवचनं सङ्गच्छते। ननु घटादिर्भावः संयोगादिना वर्तते, घटाभावाभावादिश्च विशेषणतया वर्तते, अभावस्य सामान्येन विशेषणतासम्बन्धस्य स्वारसिकत्वात्, तथा च विभिन्नसम्बन्धेन वर्तमानयोर्भावाऽभावयोः कथमेकतेत्यत आह— **संयोगादावेवेति**— विशेषणतासम्बन्धेन घटाभावाभावादिर्वर्तत इत्यत्र न नो विद्वेषः किन्तु विशेषणतात्वं संयोगादावेव कल्प्यत इति विशेषणतात्वेन संयोगादेरेव संसर्गत्वम्, तथा च घटादिर्यथा संयोगादिना वर्तते तथा घटाभावाभावादिरपीत्येतावतैव विशेषणतासम्बन्धेन घटाभावाभावादिक घटादिस्वरूपमुपादाय 'घटाभावो नास्ति' इति प्रतीतेर्निर्वाहेण भावो घटः 'अस्ति' इत्येव प्रतीयते, घटाभावाभावः 'घटाभावो नास्ति' इत्येवं प्रतीयत इति 'नास्ति' इति प्रतीतिबलाद् घटाभावाभावादिर्घटादिरूपभावाद् भिन्न एवेति नव्यनैयायिकमतस्य निर्युक्तिकत्वादित्यर्थः। उपसंहरति— **तस्मादिति**। **विशिष्टतया तु** घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टाभावरूपतया घटाभावत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टाभावरूपतया च। **द्वयोरपि** भावाभावोभयोरपि। ननु भावाऽभावयोरुभयोरपि सप्रतियोगिकत्वं निष्प्रतियोगिकत्वं चेति स्याद्वादे अभावो निष्प्रतियोगिक इति पक्षे अभावज्ञाने प्रतियोगिज्ञान न हेतुरिति प्रतियोगिज्ञानं विनाऽपि 'न' इत्याकारकमभावज्ञानं स्यादिति शङ्कते— **अथेति**। ननु प्रतियोगिज्ञानं विनाऽपीदन्त्वेनाभावज्ञानं भवत्येव, तथा च 'इदम्' इत्येवमभावज्ञानस्यापादनमिष्टापत्तिरूपत्वान्न दोषावहम्, 'न' इत्याकारकप्रत्ययापादनं तु यत् क्रियते तदापादकाभावान्न सम्भवतीत्याशङ्क्य प्रतिक्षिपति— **न चेति**। **आपादकाभावः** 'न' इत्याकारकप्रत्ययापत्तेः कारणाभावः, तथा च प्रतियोगिज्ञानासत्त्वे आपादकाभावादेव 'न' इत्याकारकप्रत्ययापादन न सम्भवतीति शङ्कार्थः। निषेधहेतुमुपदर्शयति— **प्रथममिति**— आपादकाभावात् प्रतियोगिज्ञानाऽसद्भावे 'न' इत्याकारकाभावप्रत्ययापत्तिर्मा भवतु, परन्तु प्रथममभावाऽभावत्वयोर्निर्विकल्पकज्ञाने सति तद्रूपविशेषणज्ञानात्मकापादकबलाद् 'अभावः' इत्याकारकप्रत्यक्षापत्तेर्दुर्वारत्वादित्यर्थः। ननु चक्षुरादीन्द्रियमप्यभावप्रत्यक्षं प्रति कारणम्, तच्च प्रतियोगिविशेषिताभावप्रत्यक्षकारणमेव, तत्र च प्रतियोगिज्ञानमपि सहकारीति प्रतियोगिविनाकृतम् 'अभावः' इत्याकारकप्रत्यक्षं नापादयितुं शक्यत इत्यत आह— **इन्द्रियस्य चेति**— अत्र 'इन्द्रियस्य विशिष्याभावप्रत्यक्षकारणत्वे च चक्षुस्त्वगादिभेदभिन्नत्वेन महागौरवम्' इति पाठो युक्तः। अभावज्ञाने प्रतियोगिज्ञानस्य पृथक्कारणत्वेऽपि प्रतियोगिज्ञानसत्त्वे तद्बलाद् 'न' इत्याकारकमभावप्रत्यक्षं स्यादित्याशङ्का प्रतिक्षिपति— **न चेति**। प्रतियोगिज्ञानस्य ज्ञानलक्षण-

हेतुत्वेऽपि ' न ' इत्याकारकप्रत्यक्षापत्तिः, उपस्थितस्य प्रतियोगिनोऽभावे वैशिष्ट्यभाने बाधकाभावात् । न च ' अभावो न घटीयः ' इत्यादिबाधधीदशायां तदापत्तिः, अभावत्वावच्छेदेनाभावे तादृशबाधधिय आहार्य्यत्वात्, अभावत्वसामानाधिकरण्येन च तद्दशायामपि प्रतियोगिवैशिष्ट्यभानसम्भवात् । यद्वा, घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वम्, अन्यथा ' घटाद्यभावः ' इत्याकारकप्रत्यक्षं च न जायेत, निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तेदृशप्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानेऽसम्भवात्, यावत्प्रतियोगिज्ञानस्य चासम्भवात् । अभावत्वांशे निर्विकल्पकं स्वभावांशे यत्किञ्चित्प्रतियोगिविशिष्टविषयत्वाद् यत्किञ्चित्प्रतियोगिधीसाध्यमेवेति नानुपपत्तिरिति चेत् ? न– प्रतियोगिज्ञानाभावेऽप्यभावत्वमात्रेण प्रत्यक्षस्येष्टत्वात् ' शून्यमिदं दृश्यते ' इत्यादिप्रत्ययात्, इत्थमेवाभावत्वस्य भावभेदस्य पिशाचादिभेदवद् योग्यस्य 'घटो नास्ति' इत्यादौ स्वरूपतो भानमिति प्राचां

विधया प्रतियोगिभानप्रयोजकस्य सत्त्वे प्रतियोगिनोऽभावांशे विशेषणविधया भाने बाधकाभावात् प्रतियोगिविशिष्टाभावस्यैव प्रत्यक्षं भवति न केवलस्याभावस्येति निषेधहेतुमुपदर्शयति– **उपस्थितस्येति** । ननु 'अभावो न घटीयः' इति बाधधीदशायां घटस्य प्रतियोगितासम्बन्धेनाभावे वैशिष्ट्यभानासम्भवात् तदानीं प्रतियोगिज्ञानबलाद् 'न' इत्याकारकाभावप्रत्यक्षापत्तिरित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **तदापत्तिः** 'न' इत्याकारकाभावप्रत्यक्षापत्ति । 'अभावो न घटीय.' इति बाधज्ञानमभावत्वावच्छेदेनाभावे घटीयत्वाभावमवगाहते ? अभावत्वसामानाधिकरण्येन वा ? आद्ये तादृशबाधज्ञानमाहार्यमेव स्यात्, अभावत्वाधिकरणयावन्मध्ये घटीयस्याप्यभावस्य प्रविष्टत्वेन घटीयत्ववति तत्र घटीयत्वाभावावगाहनात्, अभावत्वावच्छेदेन घटीयत्वाभावस्यासत्तयाऽभावत्वावच्छेदेन घटीयत्वाभावाभाववत्यभावे घटीयत्वाभावज्ञानस्येच्छयैव सम्भवेन बाधकालीनेच्छाजन्यज्ञानस्य तस्याहार्यत्वात्, अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितस्यैव विरोधिनिश्चयस्य प्रतिबन्धकत्वमित्युक्ताहार्यबाधनिश्चयस्याप्रतिबन्धकतया तत्सत्त्वेऽप्यभावे घटस्य वैशिष्ट्यभानसम्भवात्, द्वितीये सामानाधिकरण्येन बाधज्ञानमवच्छेदकावच्छेदेनैव तद्वत्ताबुद्धिं प्रतिबध्नातीत्यभावत्वसामानाधिकरण्येन घटीयत्वाभावग्रहेऽप्यभावत्वसामानाधिकरण्येनाभावे घटस्य वैशिष्ट्यभानसम्भवादिति निषेधहेतुमुपदर्शयति– **अभावत्वावच्छेदेनेति** । **तादृशबाधधियः** 'अभावो न घटीयः' इत्यादिबाधधिय । **तद्दशायामपि** 'अभावो न घटीयः' इत्यादिबाधधीदशायामपि । विशेषतोऽभावज्ञान-प्रतियोगिज्ञानयोः कार्यकारणभावावेदकं कल्पान्तरं शङ्किताऽऽश्रयति– **यद्वेति** । **अन्यथा** अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वमित्येव कार्यकारणभावस्याभ्युपगमे, घटसामान्याभावो यथैकस्य घटस्याभावस्तथाऽन्यस्यापि घटस्याभाव इति प्रत्येकं सर्वेषामपि प्रतियोगिना ज्ञानं घटाभावज्ञाने कारणमिति सर्वेषामपि प्रतियोगिना ज्ञाने सत्येव घटाभावज्ञानं स्यात्, न यत्किञ्चिद्घटरूपप्रतियोगिज्ञाने, यावता घटाना च प्रत्येकं ज्ञानं तु न सम्भवत्येवेति 'घटाद्यभाव.' इत्याकारकप्रत्यक्षं न स्यात्, घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावविषयताकप्रत्यक्षे घटादिधिय. कारणत्वमिति विशिष्य कार्यकारणभावे तु यत्किञ्चिद्घटज्ञानमपि घटज्ञानत्वेन कारणमिति यत्किञ्चिद्घटज्ञानेऽपि 'घटाद्यभाव.' इत्याकारकप्रत्यक्षं सम्भवतीति, 'घटाभाव' इति ज्ञानं चाभावत्वांशे निर्विकल्पकमभावांशे च यत्किञ्चित्प्रतियोगिवैशिष्ट्यावगाहि, तथा च तज्ज्ञानं निरुक्तकार्यतावच्छेदकधर्माक्रान्तत्वाद् यत्किञ्चिद्घटज्ञानकार्यं भवतीति यत्किञ्चिद्घटज्ञानतस्तादृशज्ञानस्योपपत्तिरित्याह– **अभावत्वांश** इति । निष्प्रतियोगिकाभावपक्षे प्रतियोगिज्ञानं विनाऽपि 'अभाव.' इत्याकारकप्रत्यक्षापादनं यदाशङ्कितं तत्रेष्टापत्तिरेवेति समाधत्ते– **नेति** । प्रतियोगिज्ञानं विनाऽभावत्वमात्रेणाभावप्रत्यक्षाऽभ्युपगमतः प्राचां वचनमपि सङ्गतिमङ्गतीत्याह– **इत्थमेवेति**– 'घटो नास्ति' इत्यादौ घटविशिष्टाभावत्वेन घटाभावो भासते, तत्राभावत्वं भावभेद एवेति भावभेदस्य भाव प्रतियोगीति भावरूपप्रतियोगिनो ज्ञानमन्तरेणापि भावभेदरूपाभावस्य स्वरूपतो भानं संभवतीत्यभिप्रायकस्य प्राचां वचनस्येत्थमेवोपपत्तेः । समवाय-स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन सत्त्ववत्त्वलक्षणभावत्वाश्रयस्य चक्षुराद्ययोग्यत्वे तद्भेदस्य कथं योग्यत्वमित्यपेक्षायामाह– **पिशाचादिभेदवदिति**– पिशाचादेश्चक्षुरादीन्द्रियायोग्य-

**वचनस्योपपत्तेः । नञुल्लेखस्तु प्रतियोगिवाचकपदनियतः, न सार्वत्रिकः । किञ्च, उक्तरीत्या प्रतियोगिज्ञानस्य हेतुत्वे केवलाभावत्वनिर्विकल्पकापत्तिः, अभावत्वस्याखण्डत्वाद्, अन्यथाऽभावविशिष्टबुद्धावपि तन्निर्विकल्पकायोगात् । अपि च 'घट-पटौ न' इत्यादिप्रत्यक्षं घटज्ञान-पटज्ञानादिकार्यतावच्छेदकानाक्रान्ततया तद्विरहेऽपि स्यात्, तस्माद् घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षमेव लाघवाद् घटादिधीकार्यतावच्छेदकं युक्तमिति घटास्तित्व-नास्तित्वयोः सप्रतियोगित्वा-ऽप्रतियोगिकत्वे तुल्ययोग-**

---

त्वेऽपि तद्भेदस्य यथा चक्षुरादीन्द्रिययोग्यत्वम्, अत एव 'स्तम्भः पिशाचो न भवति' इत्येव चक्षुरिन्द्रियज प्रत्यक्षं भवति तथेत्यर्थ. । ननु 'शून्यमिदं दृश्यते' इति प्रत्ययवलात् प्रतियोगिज्ञानमन्तरेणापि प्रतियोग्यविशेषिताभावज्ञान यदीष्यते तर्हि 'शून्यम्' इत्याकारकाभावज्ञानवत् 'न' इत्याकारकमप्यभावप्रत्यक्षं किं न स्यादित्यत आह– **नञुल्लेखस्त्विति**– अभाववाचकनञ्शब्दप्रयोगस्तु प्रतियोगिवाचकपदप्रयोगे सत्येव भवति, तथा च प्रतियोगिवाचकपदसमभिव्याहृतस्यैवाभाववाचकनञ्शब्दस्य प्रयोगो न केवलस्येति यत्रैव प्रतियोगिवाचकशब्दस्तत्रैव नञ्शब्दः प्रयुज्यते, न सर्वत्रेत्यर्थ. । नैयायिकोपदर्शितप्रतियोगिज्ञानाऽभावप्रत्यक्षकार्यकारणभावं दूषयति– **किञ्चेति** । **उक्तरीत्येति**–घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वमित्येव प्रकारेणेत्यर्थः । **केवलेति**– अभावाऽविषयकाऽभावत्वविषयकनिर्विकल्पकापत्तिरित्यर्थः । तादृशनिर्विकल्पकस्य घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताऽभावविषयताकप्रत्यक्षत्वलक्षणघटादिधीकार्यतावच्छेदकधर्माऽनाक्रान्ततया तं प्रति घटादिधियः कारणत्वाभावेन तामन्तरेणापि तदुत्पत्तौ वाधकाभावादित्यभिसन्धिः । नन्वभावत्वस्य भावभेदरूपत्वेन सखण्डोपाधिरूपस्य स्वरूपतो भानं न सम्भवतीति न केवलस्य तस्य निर्विकल्पकापत्तिसम्भव इत्यत आह– **अभावत्वस्येति** । **अखण्डत्वात्** अखण्डोपाधिरूपत्वात्, 'घटाभावः पटाभावो मठाभावः' इत्यादिप्रतीतौ सर्वत्राऽभावांशेऽनुगततया भासमानस्याऽभावत्वस्याऽखण्डोपाधिरूपत्वमेवेत्याशयः । **अन्यथा** अभावत्वस्य सखण्डोपाधिरूपतयैवाभ्युपगमे । **तन्निर्विकल्पकेति**– अभावत्वनिर्विकल्पकेत्यर्थः । अभावविशिष्टबुद्धिरप्यभावत्वांशे निर्विकल्पात्मिका नैयायिकेनोपेयते, साऽपि कथं स्यात्? अभावत्वस्य सखण्डत्वेन स्वरूपतो भानासम्भवेन किञ्चिद्रूपेणैव तद्भानस्य स्वीकरणीयत्वादिति । किञ्च, घटज्ञानस्य कार्यतावच्छेदकं घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताऽभावविषयताकप्रत्यक्षत्वम्, पटज्ञानस्य कार्यतावच्छेदक पटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताऽभावविषयताकप्रत्यक्षत्वम्, तदुभयमपि 'घट-पटौ न' इत्याकारकाभावप्रत्यक्षे नास्ति, तदीयाभावविषयतायाः प्रतियोगित्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारत्वान्या या प्रतियोगित्वसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रकारता तन्निरूपितत्वेन तदनिरूपितत्वस्य, तथा प्रतियोगित्वसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रकारत्वान्या या प्रतियोगित्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारता तन्निरूपितत्वेन तदनिरूपितत्वस्य चासत्त्वात्, तथा च घटज्ञान-पटज्ञानकार्यतावच्छेदकानाक्रान्तस्य 'घट-पटौ न' इत्याकारकाऽभावप्रत्यक्षस्य घटज्ञान-पटज्ञानविरहेऽप्युत्पादप्रसङ्ग इत्याह– **अपि चेति**। **तद्विरहेऽपि** घटज्ञान-पटज्ञानविरहेऽपि । **तस्मात्** परोक्तकार्यकारणभावस्य दूषितत्वात्। **'प्रत्यक्षमेव'** इति स्थाने 'प्रत्यक्षत्वमेव' इति पाठो युक्तः । **लाघवात्** घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताऽभावविषयताकप्रत्यक्षत्वापेक्षया लाघवात् । एव च 'घट-पटौ न' इति प्रत्यक्षमपि घटत्वावच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षत्वरूपघटज्ञानकार्यतावच्छेदकाक्रान्त पटत्वावच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षत्वरूपपटज्ञानकार्यतावच्छेदकाक्रान्त च भवतीति घटज्ञान-पटज्ञानयोः सत्त्व एव 'घट-पटौ न' इति प्रत्यक्षम्, न तद्विरहे इति, अत्र कार्यतावच्छेदककोटौ घटत्वावच्छिन्नप्रकारतानिरूपितत्वेन विषयतामात्रमेव प्रविष्टं न त्वभावविषयतामात्रमिति घटास्तित्वत्वेन घटास्तित्वप्रत्यक्षमपि घटत्वावच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षत्वरूपघटज्ञानकार्यतावच्छेदकाक्रान्तमिति घटज्ञान एव घटास्तित्वज्ञानमिति तस्य भवति सप्रतियोगिकत्व तथा घटनास्तित्वत्वेन घटनास्तित्वप्रत्यक्षमपि घटत्वावच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षत्वरूपघटज्ञानकार्यतावच्छेदकाक्रान्तमिति घटज्ञान एव घटनास्तित्वज्ञानमिति भवति तस्यापि सप्रतियोगिकत्वम्, प्रमेयत्वादिना च घटास्तित्व-घटनास्तित्वयोर्ज्ञानं च नोक्तघटज्ञानकार्यतावच्छेदकाक्रान्तमिति घटज्ञानं विनाऽपि स्यादेवेत्येव घटास्तित्व-घटनास्तित्वयोः सप्रतियोगिकत्वाऽप्रतियोगिकत्वे तुल्ययुक्त्योपपन्नतरे इत्याह– **घटास्तित्व-नास्तित्वयोरिति** ।

क्षेमे त्वदुक्तहेतुसद्भावेऽपि लाघवाद् भावांशत्यागेन केवलाभावस्येव केवलभावस्यापि न भानमिति वक्तुं शक्यत्वात्, निर्विकल्पके प्रमाणाभावात्, क्षयोपशमविशेषेणैव तत्तद्विशिष्टज्ञानोपपत्तौ तस्य तद्-कल्पकत्वात् । अत एव—

"द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः । क्व कदा केन किंरूपा दृष्टा मानेन केन वा ?" ॥ १ ॥

[ ] इत्यस्मत्संप्रदायवृद्धाः संगिरन्ते ।

"शुद्धाभावप्रत्यक्षं तु प्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपिताऽभावविषयताकप्रत्यक्ष एव विशेषणताया हेतुत्वान्न भवति" इत्यपि रिक्तं वचः, प्रतियोगितामात्रेण 'द्रव्यं नास्ति, मेयं नास्ति' इत्याद्यापत्तेः, प्रकारीभूतकिञ्चिद्धर्मावच्छिन्नत्वेन प्रतियोगिताविशेषणेऽपि न निस्तारः, घटाभाव-पटा-

यश्च नैयायिकाऽभिमतोऽभावप्रत्यक्ष-प्रतियोगिज्ञानयोः कार्यकारणभावस्तत्रापि लाघवात् कार्यतावच्छेदककोटावभावांशं परित्यज्य घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपितविषयताकप्रत्यक्षत्वावच्छिन्नं प्रति घटज्ञानस्य कारणत्वमित्युपगमे केवलस्याभावस्य यथा न भानं तथा केवलभावस्यापि न भानम्, अस्तित्वादिभावप्रत्यक्षस्यापि निरुक्तकार्यतावच्छेदकधर्माक्रान्तत्वेन घटादिज्ञानकार्यत्वतो घटादिभानस्यापि तत्र विशेषणतया सम्भवादित्याह– **त्वदुक्तहेतुसद्भावेऽपीति**– अत्र 'त्वदुक्तहेतु-हेतुमद्भावेऽपि' इति पाठो युक्त. । '**लाघवाद् भावांशत्यागेन**' इति स्थाने 'लाघवादभावांशत्यागेन' इति पाठो युक्तः । यच्च निर्विकल्पकज्ञानस्य प्रतियोगिधीसाध्यत्वमभिहित तत् तदा शोभेत यदि निर्विकल्पकज्ञानं प्रामाणिकं भवेत्, तत्रैव तु प्रमाण न पश्याम इति तत्र प्रतियोगिधीसाध्यत्व-तदसाध्यत्वादिविचारः काकदन्तविचारवन्निष्प्रयोजन एवेत्याह– **निर्विकल्पक** इति । ननु विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुत्वमिति विशिष्टबुद्ध्युत्पादनाय विशेषणज्ञानमावश्यकम्, तदपि विशेषणज्ञानं यदि विशिष्टबुद्धिरूपमेव स्यात् तर्हि तदर्थमपि विशेषणज्ञानान्तर कल्पनीयं स्याद्, एव तत्रापीत्यनवस्था स्यात्, तत्परिहाराय विशिष्टबुद्धिहेतुतया कल्पनीय विशेषणज्ञानं क्वचिन्निर्विकल्पकमभ्युपगन्तव्यमिति विशिष्टबुद्ध्यन्यथानुपपत्तिरेव निर्विकल्पके प्रमाणमित्यत आह– **क्षयोपशमविशेषेणैवेति**– कस्यचिद् धर्मस्य विशिष्टबुद्धिर्भवति कस्यचिद् धर्मस्य विशिष्टबुद्धिर्न भवति तत्र क्षयोपशमविशेष एव नियामको न तु तत्तद्धर्मज्ञानमिति क्षयोपशमविशेषेणैव तत्तद्विविशिष्टज्ञानोपपत्तौ, **तस्य** विशिष्टज्ञानस्य, **तदकल्पकत्वात्** निर्विकल्पकज्ञानाऽकल्पकत्वात । **अत एव** विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वाभावेन क्षयोपशमविशेषेणैव तत्तद्विशिष्टज्ञानस्य सम्भवादेव । **द्रव्यमिति**– अर्थात् पर्यायसहितमेव द्रव्यं भानेन गृह्यते, द्रव्यसहिता एव पर्याया भानेन गृह्यन्त इति न च तत्र पूर्वं पर्यायज्ञानमनन्तरं पर्यायसहितद्रव्यज्ञानम्, तथा पूर्वं द्रव्यज्ञान ततो द्रव्यसहितपर्यायज्ञानमिति ।

शुद्धाभावप्रत्यक्षाभवने परवक्तव्यमुपदर्श्य प्रतिक्षिपति– **शुद्धाभावप्रत्यक्षं त्विति**– अस्य 'न भवति' इत्यनेनान्वयः । तत्र हेतु.– **प्रतियोगितासम्बन्धेत्यादि** । **विशेषणताया** चक्षुरादीन्द्रियसंयुक्तादिविशेषणतायाः । परवचनस्याऽयुक्तत्वे हेतुमुपदर्शयति– **प्रतियोगितामात्रेणेति**– यद्यपि द्रव्यं सर्वत्र वर्तते मेयं च सर्वत्र वर्तत इति द्रव्यत्वावच्छिन्नप्रतियोगितासम्बन्धेन द्रव्यविशिष्टाभावो मेयत्वावच्छिन्नप्रतियोगितासम्बन्धेन मेयविशिष्टाभावश्च नास्तीति तत्प्रत्यक्षापादनं न सम्भवति तथाऽपि घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन द्रव्यविशिष्टाभावस्य घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन मेयविशिष्टाभावस्य च सम्भवात् तत्प्रत्यक्षस्य प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावविषयताकप्रत्यक्षत्वलक्षणकार्यतावच्छेदकधर्माक्रान्तत्वाद् विशेषणतालक्षणेन्द्रियसन्निकर्षरूपकारणबलादापत्तेरित्यर्थ. । ननु प्रकारीभूतकिञ्चिद्धर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावविषयताकप्रत्यक्ष एव विशेषणता हेतुः, अन्यधर्मावच्छिन्नप्रतियोगितासम्बन्धेन द्रव्यप्रकारकाभावविशेष्यक प्रत्यक्षं तेन सम्बन्धेन मेयप्रकारकाभावविशेष्यकप्रत्यक्ष च न निरुक्तकार्यतावच्छेदकधर्माक्रान्तमिति न विशेषणतातस्तदापादन सम्भवतीत्येव कल्पनायामपि न परस्य निर्दोषतेत्याह– **प्रकारीभूतेति** । '**न निस्तारः**' इत्यत्र हेतुमुपदर्शयति– **घटाभावेति** । **प्रतियोगिविशेषितस्य** घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटविशेषितस्य । तद्-

भावयोरुभयोः सन्निकर्षे घटाभावांशे प्रतियोगिविशेषितस्य पटाभावांशे च तदविशेषितस्य समूहालम्बनस्य प्रसङ्गात्। किञ्च, एवमिदन्त्वादिनाऽभावप्रत्यक्षं न स्यात्, न स्याच्च 'अभावप्रतियोगी घटः' इत्याद्याकारम्, तादृशप्रत्यक्षेष्वपि पृथक्कारणत्वकल्पने चातिगौरवम्, तस्मात् सन्निकर्षमात्रस्यैव किञ्चिद्धर्मावच्छिन्न-विषयतानिरूपितविषयताकप्रत्यक्षत्वावच्छिन्ने विशिष्टाकारप्रत्यक्षत्वावच्छिन्ने वा हेतुत्वम्, अतो नापाय-मात्रस्य विचारजन्यचरमशुद्धद्रव्योपयोगतुल्यतेति भावांशेऽभावांशे वा न शुद्धविषयकं प्रत्यक्षमित्यभाव एव सापेक्षो न भाव इति किमिदमर्द्धजरतीयम्। एतेन "अभावलौकिकप्रत्यक्षस्य घटाद्यन्यतमविशिष्ट-विषयकत्वनियमाद् विशेषसामग्रीं विना सामान्यसामग्रीमात्रात् कार्यानुत्पत्तेर्नाभावनिर्विकल्पकम्, 'न' इत्याकारकप्रत्यक्षं वा विशेषणादिज्ञानरूपविशेषसामग्र्यभावात्। न चाभावलौकिकप्रत्यक्षत्व-घटत्वादि-

---

**विशेषितस्य** पटत्वावच्छिन्नप्रतियोगितासम्बन्धेन पटाविशेषितस्य। **समूहालम्बनस्य** घटाभाव-पटाभावोभयविषयक-समूहालम्बनप्रत्यक्षस्य, तादृशप्रत्यक्षस्यापि प्रकारीभूतकिञ्चिद्धर्मो घटत्वम्, तदवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नघटत्वा-वच्छिन्नप्रकारताकप्रत्यक्षत्वरूपकार्यतावच्छेदकधर्माक्रान्ततया विशेषणतासन्निकर्षतस्तदुत्पत्तिप्रसङ्गादित्यर्थः। अपि च प्रकारी-भूतकिञ्चिद्धर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावविषयताकप्रत्यक्षत्वरूपकार्यतावच्छेदकधर्माऽनाक्रान्तत-येदन्त्वादिनाऽभावप्रत्यक्षस्यभावप्रतियोगी 'अघट' इत्यादिप्रत्यक्षाणां च विशेषणतासन्निकर्षादुत्पत्तिर्न भवेदिति तदुत्पत्तये कारणान्तरकल्पन चातिगौरव स्यादित्याह–**किञ्चेति**। **एवम्** उक्तप्रकारेण विशेषणताया अभावप्रत्यक्ष प्रति कारणत्वाभ्युपगमे। **तादृशप्रत्यक्षेष्वपि** इदन्त्वादिनाऽभावप्रत्यक्षे 'अभावप्रतियोगी घट' इत्यादिप्रत्यक्षेष्वपि। यादृशकार्यकारणभावस्वीकारे भावांशेऽभावांशे च किञ्चिद्विशेषणमुपादायैव प्रत्यक्षम्, न तु केवलाभावविषयकं केवलभावविषयकं वा प्रत्यक्षं तादृशकार्य-कारणभावमुपदर्शयति– **तस्मादिति**– पराभ्युपगतकार्यकारणभावस्य दोषग्रस्तत्वादित्यर्थः। **'सन्निकर्षमात्रस्यैव'** इत्येवकारेण केवलविशेषणताया व्यवच्छेद। 'किञ्चिद्धर्म०'इत्यादिकार्यतावच्छेदककोटौ विशिष्य भावविषयताया अभावविषयताया वा अप्रवेशाद् भावप्रत्यक्षाऽभावप्रत्यक्षोभयोरपि निरुक्तकार्यतावच्छेदकाक्रान्तत्वात् सन्निकर्षमात्रेणैव जायमान प्रत्यक्ष विशिष्ट-विषयकमेवेत्याह– **अत** इति– अनन्तरोपदर्शितकार्यकारणभावाभ्युपगमत इत्यर्थः। **'नापायमात्रस्य'** इत्यत्र नञ्. 'तुल्यता' इत्यनेनान्वयः, अवग्रहेहाऽपायधारणारूपचतुष्टयात्मकमतिज्ञानतृतीयभेदस्याऽपायमात्रस्य, विचारजन्य.– सङ्ग्रहनयविचारप्रभवः यश्चरमशुद्धद्रव्योपयोगः– पर्यायाऽविशेषितद्रव्यमात्रोपयोग., तत्तुल्यता नेत्यर्थः। एवं च भावांशेऽभावांशे वा शुद्धविषयक प्रत्यक्षं विशेषणासम्पृक्तविषयकप्रत्यक्षं सन्निकर्षमात्रकार्यतावच्छेदकधर्मानाक्रान्तत्वान्न भवत्येव, **इति** एतस्माद्धेतोः, परस्य यदभाव एव सापेक्षो न भाव इतीद वचनमर्द्धजरतीय कि– न किञ्चित्, अभावस्येव भावस्यापि किञ्चिद्विशिष्टतयैव प्रत्यक्षेण विषयीक्रियमाणत्वादुभयोः सापेक्षत्वमेवेत्याशय.।

**'एतेन'** इत्यस्य 'इत्यादिनव्यकल्पनाऽपि निरस्ता' इत्यनेनान्वय', अभावलौकिकप्रत्यक्षस्य घटाद्यन्यतमविशिष्टविषय-कत्वनियमस्तदोपपद्येत यदि चक्षुरादीन्द्रियसम्बद्धविशेषणतासन्निकर्षो घटादिज्ञानसहकृतो घटाद्यन्यतमविशिष्टाभावलौकिकप्रत्यक्षे कारणमित्येव विशिष्य कार्यकारणभावः स्यात्, तथा च तादृशविशेषसामग्रीसहितैवाभावलौकिकप्रत्यक्षसामान्यसामग्री कार्य-जनिका, न विशेषसामग्रीमन्तरा सामान्यसामग्री कार्यजनिका, विशेषसामग्री च घटादिविशिष्टाभावलौकिकप्रत्यक्षजनिकैवेति तत्सापेक्षसामान्यसामग्रीतोऽपि घटादिविशिष्टाभावलौकिकप्रत्यक्ष एव, नाऽभावनिर्विकल्पम्, 'न' इत्याकारकप्रत्यक्ष वा, तादृश-प्रत्यक्षं च विशेषणज्ञानविरहकाल एव भवेत्, तदानी च विशेषसामग्र्यभावात् तत्सहिताया. सामान्यसामग्र्या अप्यभावे कार्यासम्भवादित्यर्थ.। ननु अभावलौकिकप्रत्यक्षत्वावच्छिन्न प्रति इन्द्रियसम्बद्धविशेषणता हेतुरित्येकः कार्यकारणभावः, अपरश्च घटत्वादिविशिष्टविषयकप्रत्यक्षत्वावच्छिन्न प्रति घटादिविशेषणज्ञानं हेतुरिति, तत्र घटादिविशेषणज्ञानसहकृतैवाभावलौकिक-प्रत्यक्षसामग्री कार्यजनिकेति नियमभावेऽभावलौकिकप्रत्यक्षं घटाद्यन्यतमविशिष्टविषयकमेवेति नियमो भवेत्, तादृशनियम-सद्भावश्चाभावलौकिकप्रत्यक्षत्वस्य घटत्वादिविशिष्टविषयकप्रत्यक्षत्वव्यापकत्वे सति घटत्वादिविशिष्टविषयकप्रत्यक्षसामग्र्या विशेष-सामग्रीत्वादुपपद्यते, न चाभावलौकिकप्रत्यक्षत्व-घटत्वादिविशिष्टविषयकप्रत्यक्षत्वयोर्व्याप्यव्यापकभावः समस्तीत्याशङ्क्य प्रति-

विशिष्टविषयकप्रत्यक्षत्वयोर्व्याप्यव्यापकभावाभावात् कथं विशेषसामग्रीत्वमिति वाच्यम्, कार्यतावच्छेदकीभूततद्धर्माश्रययत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत् प्रत्येकं तावदवच्छिन्न[स्य] सत्त्वेऽवश्यं तद्धर्म्मावच्छिन्नोत्पत्तिरित्येव नियमात्, 'तद्धर्मव्याप्यधर्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपित०' इत्याद्युक्तौ व्याप्तिज्ञान-परामर्शयोः सतोर्बाधधीसत्त्वेऽप्यनुमित्यापत्तौ, 'तद्धर्मव्याप्यव्यापकधर्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपित०' इत्याद्युक्तौ गौरवात्, घटत्वादिविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वस्याभावलौकिकप्रत्यक्षत्वव्याप्यत्वात् तत्तद्भावलौकिकप्रत्यक्षत्वव्याप्यतत्तदभावलौकिक-

क्षिपति- न चेति- अस्य 'वाच्यम्' इत्यनेनान्वयः । निषेधे हेतुमाह-**कार्यतावच्छेदकीभूतेति**- कार्यतावच्छेदकीभूततद्धर्मोऽभावलौकिकप्रत्यक्षत्वम्, तदाश्रयकिञ्चिद्व्यक्तिर्घटविशिष्टाभावलौकिकप्रत्यक्षव्यक्तिः, तन्निष्ठकार्यता अभावलौकिकप्रत्यक्षत्वावच्छिन्नकार्यता अभावलौकिकप्रत्यक्षत्वव्यापकाशेषधर्मावच्छिन्नकार्यता घटविशिष्टाभावलौकिकप्रत्यक्षत्वावच्छिन्नकार्यता च, तन्निरूपितकारणतावच्छेदकं यावत्- अभावलौकिकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकाऽभावलौकिकप्रत्यक्षत्वव्यापकाशेषधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदक- घटविशिष्टाभावलौकिकप्रत्यक्षत्वावच्छिन्नकार्यतानिरुपितकारणतावच्छेदकानां समुदाय., प्रत्येक तावदवच्छिन्नस्य सत्त्वेऽवश्यं तद्धर्मावच्छिन्नोत्पत्ति.- अभावलौकिकप्रत्यक्षत्वोत्पत्तिरित्येव नियमात्, तथा च 'प्रत्येकं तावदवच्छिन्नस्य' इत्यनेन घटात्मकविशेषणज्ञानस्यापि ग्रहणेन तत्सत्त्वे जायमानस्याभावलौकिकप्रत्यक्षस्य घटविशिष्टविषयकत्वस्याऽवश्यम्भावेनाऽभावनिर्विकल्पकप्रत्यक्षस्य 'न' इत्याकारकप्रत्यक्षस्य चासम्भवादित्यर्थ., 'कार्यतावच्छेदकीभूततद्धर्माश्रयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत्' इत्यस्य स्थाने 'कार्यतावच्छेदकीभूततद्धर्मव्याप्यधर्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत्' इत्युक्तिर्न सम्भवति, तथा सति व्याप्तिज्ञान-परामर्शादिकार्यतावच्छेदकीभूतधर्मोऽनुमितित्वम्, तद्व्याप्यधर्मः पर्वतविशेष्यकवह्निप्रकारकानुमितित्वम्, तदवच्छिन्ना या 'पर्वतो वह्निमान्' इत्याकारकानुमित्यात्मकयत्किञ्चिद्व्यक्तिनिष्ठकार्यता, तन्निरूपितकारणतावच्छेदक व्याप्तिज्ञानत्व-परामर्शत्वादिकम्, न तु बाधज्ञानाभावत्वम्, बाधज्ञानस्य विशिष्टबुद्धिमात्रं प्रत्येव प्रतिबन्धकत्वेन बाधज्ञानाऽभावत्वेन विशिष्टबुद्धित्वेनैव कार्यकारणभावः, न तु बाधज्ञानाऽभावत्वेनाऽनुमितिविशेषत्वेनेति बाधधीसत्त्वे बाधज्ञानाभावाऽसत्त्वेऽपि व्याप्तिज्ञान-परामर्शयोः सत्त्वेन निरुक्तकारणतावच्छेदकयावदवच्छिन्नस्य सत्तयाऽनुमित्यापत्तिः स्यादित्याह- **तद्धर्मव्याप्येति** । '**प्यनुमित्यापत्तौ**' इति स्थाने 'प्यनुमित्यापत्तेः' इति पाठो युक्तः । यद्युक्तापत्तिवारणाय 'कार्यतावच्छेदकीभूततद्धर्मव्याप्यधर्मावच्छिन्ना, या च कार्यतावच्छेदकीभूततद्धर्मव्यापकधर्मावच्छिन्ना यत्किञ्चिद्व्यक्तिनिष्ठकार्यता तन्निरूपितकारणतावच्छेदकं यावत्, इत्याद्युच्यते तदा कार्यतावच्छेदकीभूतानामितित्वव्याप्यपर्वतविशेष्यकवह्निविधेयकानुमितित्वावच्छिन्ना कार्यता तादृशानुमितित्वव्यापकविशिष्टबुद्धित्वावच्छिन्ना च कार्यता ग्रहीतु शक्या, तन्निरूपितकारणतावच्छेदकयावन्मध्ये बाधज्ञानाभावत्वमपि भवति, तदवच्छिन्नस्य सत्त्वं बाधधीसत्त्वे न भवतीति बाधधीसत्त्वे व्याप्तिज्ञान-परामर्शयोः सतोरप्यनुमित्यापत्तिर्न सम्भवति, किन्त्वेवमुक्तौ गौरवं स्यादित्याह- **तद्धर्मव्याप्यव्यापकधर्मेति**- 'तद्धर्म' इत्यस्य व्याप्ये व्यापके चान्वयः, अथवाऽग्रिमग्रन्थस्वारस्यात् तद्धर्मव्याप्यस्य व्यापको यो धर्मस्तदवच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतेत्यादिरप्यर्थः सम्भवति, तत्रापि तद्धर्मस्यानुमितित्वस्य व्याप्यं पर्वतविशेष्यकवह्निविधेयकानुमितित्वादि, तद्व्यापकं विशिष्टबुद्धित्वम्, तदवच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदक बाधज्ञानाभावत्वं भवति, तदवच्छिन्नस्य सत्त्व बाधधीसत्त्वे न भवतीति न बाधधीसत्त्वेऽनुमित्यापत्तिरित्येवमुक्तापत्तिवारण सम्भवतीति । अनुमित्यापत्तिगौरवदोषतः 'तद्धर्मव्याप्य' इत्यादि 'तद्धर्मव्याप्यव्यापक' इत्यादिनियमद्वयासम्भव उपदर्शितः, उक्तनियमद्वयोररीकारेऽप्यभावस्य विशिष्टबुद्ध्यात्मकमेव प्रत्यक्षम्, न निर्विकल्पक 'न' इत्याकारकं वेति प्रकृतसिद्धिर्भवत्येवेत्याह- **घटत्वादीति**- तद्धर्मोऽभावलौकिकप्रत्यक्षत्वम्, तद्व्याप्यत्वं तदभाववदवृत्तित्वरूपं यथाश्रुते घटत्वविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वे न सम्भवति, अभावलौकिकप्रत्यक्षत्वाभाववति 'घटवद् भूतलम्' इति प्रत्यक्षे घटत्वविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वस्य सत्त्वात्, स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वलक्षणन्यूनवृत्तित्वरूपव्याप्यत्वस्य सम्भवेऽपि तथाविधव्याप्यत्वाक्रान्तधर्मा-

प्रत्यक्षत्वव्यापकत्वात् प्रकृतसिद्धेश्च " इत्यादिनव्यकल्पनाऽपि निरस्ता, एवं सति द्रव्यविषयकप्रत्यक्षस्य वस्तुविषयकप्रत्यक्षस्य वा यत्किञ्चित्पर्यायविशिष्टविषयकत्वनियमेन भावनिर्विकल्पस्य शुद्धभावप्रत्यक्षस्यापि चासम्भवात् ।

अत एव सविचारणया सामान्यदृष्ट्या च सर्वं निर्विकल्पकं विशेषदृष्ट्या च सर्वं सविकल्पकमित्यनेकान्तः पुरुषदृष्टान्तेन संमतौ प्रतिपादितः । तथाहि—

" वंजणपज्जायस्य उ पुरुसो पुरुसो त्ति निच्चमविअप्पो ।
वालाइविगप्पं पुण पासइ से अत्थपज्जाओ ॥ ३४ ॥
सविअप्प-णिव्विअप्पं इय पुरिसं जो भणेज्ज अविअप्पं ।
सविअप्पमेव वा णिच्छएण ण स णिच्छिओ समये ॥ ३५ ॥

—[ सम्मतितर्ककाण्ड० ]

वच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नस्य सत्त्वं न तद्धर्मावच्छिन्नोत्पत्तौ प्रयोजकम्, किन्तु घटत्वविशिष्टस्य प्रतियोगित्वलक्षणवैशिष्ट्यविषयकप्रत्यक्षत्वं भवत्येवाभावलौकिकप्रत्यक्षत्वस्य तदभाववदवृत्तित्वलक्षणव्याप्यत्ववत्, तदवच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकयावदन्तर्गतविशेषणबुद्धित्वावच्छिन्नस्य सत्त्व एवाभावलौकिकप्रत्यक्षत्वावच्छिन्नोत्पत्तिरित्यभावलौकिकप्रत्यक्षं विशिष्टविषयकमेव भवति. तथा तद्धर्मोऽभावलौकिकप्रत्यक्षत्वम्, तद्व्याप्यं घटविशिष्टाभावलौकिकप्रत्यक्षत्वम्, तद्व्यापकधर्मो घटत्वविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वम्, तदवच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकयावद्धर्मान्तर्गतविशेषणबुद्धित्वावच्छिन्नसत्त्वे सत्येवाभावलौकिकप्रत्यक्षत्वावच्छिन्नस्योत्पत्तिरिति तस्य घटत्वादिविशिष्टवैशिष्ट्यविषयकत्वप्रसिद्धिरित्यर्थ । निरासहेतुमुपदर्शयति- **एवं सतीति**- कार्यतावच्छेदकीभूततद्धर्माश्रययत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत् प्रत्येकं तदवच्छिन्नस्य सत्त्वेऽवश्यं तद्धर्मावच्छिन्नोत्पत्तिरित्यादिनियमाभ्युपगमेनाभावलौकिकप्रत्यक्षस्य विशिष्टविषयकत्वमेवेति नियमस्योपपादने सतीत्यर्थः । **द्रव्यविषयकप्रत्यक्षस्येति**- कार्यतावच्छेदकीभूततद्धर्मो द्रव्यविषयकप्रत्यक्षत्वम्, तदाश्रययत्किञ्चिद्व्यक्तिर्यत्किञ्चित्पर्यायविशिष्टद्रव्यविषयकप्रत्यक्षव्यक्तिः, तन्निष्ठकार्यता यत्किञ्चित्पर्यायविशिष्टद्रव्यविषयकबुद्धित्वावच्छिन्नकार्यता, तन्निरूपितकारणता यत्किञ्चित्पर्यायरूपविशेषणविषयकबुद्धित्वावच्छिन्नकारणता, तदवच्छेदकयावद्धर्मान्तर्गतयत्किञ्चित्पर्यायरूपविशेषणविषयकबुद्धित्वरूपधर्मावच्छिन्नस्य सत्त्वे एव द्रव्यविषयकप्रत्यक्षत्वावच्छिन्नस्योपपत्तिरिति तस्य यत्किञ्चित्पर्यायवैशिष्ट्यविषयकत्वस्य, तथा वस्तुविषयकप्रत्यक्षत्वरूपकार्यतावच्छेदकीभूतधर्माश्रययत्किञ्चित्पर्यायविशिष्टवस्तुविषयकप्रत्यक्षव्यक्तिनिष्ठयत्किञ्चित्पर्यायविशिष्टवस्तुविषयकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितयत्किञ्चित्पर्यायविषयकबुद्धित्वावच्छिन्नकारणतावच्छेदकयावदन्तर्गतयत्किञ्चित्पर्यायविषयबुद्धित्वावच्छिन्नस्य सत्त्व एव वस्तुविषयकप्रत्यक्षत्वावच्छिन्नस्योत्पत्तिरिति तस्य यत्किञ्चित्पर्यायवैशिष्ट्यविषयकत्वस्य च, नियमेन भावनिर्विकल्पकस्य शुद्धभावप्रत्यक्षस्यापि चासम्भवादित्यर्थ. । एव 'तद्धर्मव्याप्यधर्मावच्छिन्न'इत्यादिनियमे 'तद्धर्मव्याप्यव्यापकधर्मावच्छिन्न' इत्यादिनियमेऽपि चोक्तासम्भवो वोध्य· ।

**अत एव** अभावस्येत्येव सापेक्षत्वं न भावस्येकान्तस्योक्तयुक्त्या निरासेन निरपेक्षत्वपक्षे इदन्त्वादिनाऽभावज्ञानमपि प्रतियोगिज्ञान विना भवति, तथा भावज्ञानमपि, सापेक्षत्वपक्षे अभावज्ञानस्येव भावज्ञानस्यापि सविकल्पकत्वमेवेत्यस्य व्यवस्थितत्वादेव । सामान्यदृष्ट्या सर्वं निर्विकल्पकं विशेषदृष्ट्या सविकल्पकमित्येवमनेकान्तस्य पुरुषदृष्टान्तेन समर्थकं सम्मतिगाथायुगलमुल्लिखति- **वंजण०** इति- " व्यञ्जनपर्यायस्य तु पुरुषः पुरुष इति नित्यमविकल्पः । बालादिविकल्प पुनः पश्यति तस्यार्थपर्यायः ॥ सविकल्प-निर्विकल्पमिति पुरुष यो भणेदविकल्पम् । सविकल्पमेव वा निश्चयेन न स निश्चितः समये ॥" इति संस्कृतम् । विवृणोति- **व्यञ्जयतीति** । व्यञ्जनपदेनार्थमात्रवाचकस्य शब्दस्यैव ग्रहणम्, न शब्दनयस्येत्याह- **न पुनः**

व्याख्या— व्यञ्जयति व्यनक्ति चार्थानिति व्यञ्जनं शब्दः, न पुनः शब्दनयः, तस्यर्जुसूत्रसमानपर्यायविषयत्वात्, तस्य पर्यायः— वाच्यता, तद्ग्राहकनयेन पुरुषः, पुरुष इति— पुरुषत्वप्रकारकज्ञानविषय इति, नित्यम्— आ जन्मनो मरणान्तं यावद्, अविकल्पः— पुरुषत्वातिरिक्ताप्रकारकज्ञानविषयः, इदमुपलक्षणं द्रव्यत्व-वस्तुत्वादिनाऽप्यविकल्पत्वस्य, शुद्धद्रव्योपयोगे तु पदद्वयस्य निर्धर्मकत्वलक्षणया शुद्धधर्मिविषयकभानविषयत्वमेवाविकल्पत्वं द्रष्टव्यम्, से— तस्य पुरुषस्य, अर्थपर्यायः— ऋजुसूत्राद्यर्थग्राहकनयः, पुनर्बालादिविकल्पं— बालादिभेदं पश्यति ॥ ३४ ॥

सविकल्पं निर्विकल्पं स्यात्काराङ्कितं तदुभयपदघटितमहावाक्यबोधरूपपुरुषद्रव्यस्य यो भणेद् अविकल्पमेव सविकल्पमेव वा, निश्चयेन— एकान्तेन, समये-परमार्थे, न निश्चितः— निश्चयो निश्चितं तदस्यास्तीति निश्चितः, अर्शआदित्वाच्प्रत्ययः, न तदर्थे इत्यर्थः, दुर्नयाभिनिवेशाद् नयत्वाद् वा संपूर्णानेकान्तवस्तुस्वरूपापरिच्छेदादिति रहस्यम् ॥ ३५ ॥

तदेवं निषेधवद् विधावपि सापेक्षत्वं प्रतिपादितम्। एवं स्वद्रव्याद्यपेक्षया सन् परद्रव्याद्यपेक्षया

---

**शब्दनय** इति । शब्दनयस्य कुतो न ग्रहणमित्यपेक्षायामाह— **तस्येति**— शब्दनयस्येत्यर्थ., व्यञ्जनपदेन शब्दनयस्य ग्रहणे तस्य पर्यायस्तन्नयविषयीभूतपर्याय ऋजुसूत्रनयविषय प्रतिक्षणमन्यान्यपर्याय एव स्यात्, न तु आ जन्मनो मरणान्तं यावद् व्यवस्थितैकरूपपुरुषपर्यायः, अभिमतश्च सोऽविकल्पतयेत्यतो न शब्दनयस्य ग्रहणम्, किन्तु शब्दस्य । **तस्य** शब्दस्य । **तद्ग्राहकनयेन** शब्दवाच्यताग्राहकनयेन । **पुरुषः** पुरुष इति लोके प्रसिद्ध. । **'पुरुष इति'** इत्यस्य 'पुरुषत्वप्रकारकज्ञानविषय इति' इति, **'नित्यम्'** इत्यस्य च 'आ जन्मनो मरणान्त यावद्' इति विवरणम् । यश्च पुरुषत्वप्रकारकज्ञानलक्षणसविकल्पकज्ञानविषयः स कथ निष्प्रकारकज्ञानरूपनिर्विकल्पकज्ञानविषयात्मकाविकल्प इत्यतः **'अविकल्पः'** इत्यस्य विवरणम्— **पुरुषत्वातिरिक्ताप्रकारकज्ञानविषय** इति । पुरुषस्य पुरुषत्वेन रूपेण पुरुषत्वातिरिक्ताऽप्रकारकज्ञानविषयत्वलक्षणमविकल्पत्वम्, तथा तस्य द्रव्यत्वेन रूपेणाऽविकल्पत्व द्रव्यत्वातिरिक्ताप्रकारकज्ञानविषयत्वलक्षणम्, वस्तुत्वेनाविकल्पत्व वस्तुत्वातिरिक्ताऽप्रकारकज्ञानविषयत्वलक्षणमवसेयमित्याह— **इदमिति**— द्रव्यत्व-वस्तुत्वादिनाप्यविकल्पत्वस्योपलक्षणमिदमित्यन्वयः । शुद्धद्रव्योपयोगे तु द्रव्यत्वमपि प्रकारतया नैव भासते, किन्त्वखण्डद्रव्यव्यक्तिरेव 'इद द्रव्यम्, अयं पुरुषः' इत्यादि शब्दजन्यज्ञानविषय इति तत्र द्रव्यत्वप्रकारकज्ञानविषयत्वं तस्य नास्ति, येन सविकल्पकज्ञानविषये तस्मिन्नविकल्पत्वोपपत्तये द्रव्यत्वातिरिक्ताप्रकारकज्ञानविषयत्वलक्षण पारिभाषिकमविकल्पकत्वमुच्येत, किन्तु पदद्वयस्यापि निर्द्धर्मकत्वलक्षणया शुद्धधर्मिविषयकभानविषयत्वमेवाविकल्पत्वमित्याह— **शुद्धद्रव्योपयोगे** त्विति । **'से'** इति प्राकृतस्य 'तस्य' इति संस्कृतम्, पुरुषस्येति तदर्थः, तस्य 'बालादिविकल्पम्' इत्यनेनान्वय. । **'अर्थपर्यायः'** इत्यस्यार्थकथनम्—'ऋजुसूत्राद्यर्थग्राहकनय.' इति, पुरुषस्य बालादिभेद पश्यति ऋजुसूत्रादिनय इति ॥ ३४ ॥

द्वितीयगाथार्थमाह—**सविकल्पमिति** । 'स्यात्काराङ्कितं तदुभय०' इति स्थाने 'स्यात्काराङ्किततदुभय०' इति पाठो युक्तः, स्यात् सविकल्प स्यान्निर्विकल्पं स्यादवक्तव्यमित्येवं यन्महावाक्यं तज्जबोधरूपं यत् पुरुषद्रव्यम् 'उपयोगलक्षणो जीव.' इति सिद्धान्तमनुसृत्य, एवस्वरूपस्य यः प्रमाता अविकल्पमेव सविकल्पमेव वा पुरुष भणेत् वदेत् । **'निश्चयेन'** इत्यस्यार्थः— 'एकान्तेन' इति, तस्यान्वय. 'भणेत्' इति पूर्वेण, स इति दृश्यम्, स- प्रमाता, **'समये'** इत्यस्य विवरणम्— 'परमार्थे' इति, 'न निश्चितः' इत्यस्य न निश्चयवानित्यर्थोऽभिमतः, स यथा सम्पद्यते तथोपदर्शयति— **निश्चयो निश्चितमिति** । **तदस्यास्तीति** निश्चितमस्यास्तीति । **'न तदर्थे'** इत्यस्य स्थाने 'मतुबर्थे' इति पाठो युक्त । कथं परमार्थविषयकनिश्चयवान्न स प्रमातेत्यपेक्षायामाह—**दुर्नयाभिनिवेशादिति** ॥ ३५ ॥

एवं च यथा 'स्यान्नास्ति' इति वाक्यं सापेक्षनिषेधरूपार्थप्रतिपादक तथा 'स्यादस्ति' इति वाक्यमपि सापेक्षविधिरूपार्थप्रतिपादकमिति प्रथम-द्वितीयभङ्गौ नयवाक्ये भवत इत्याह—**तदेवमिति** । **तृतीयोल्लिख्यमानेति**— 'स्वद्रव्याद्यपेक्षया'

चासन्निति तृतीयोल्लिख्यमानावच्छेदकप्रतीत्याऽपि सापेक्षत्वं भावनीयम्, अत एव परेऽपि व्याप्यवृत्तावप्यव्याप्यवृत्ताविव प्रतीतिवलात् तत्तदवच्छिन्नवृत्तिकत्वं स्वीकुर्वते, इति दिक् ॥ ५ ॥

नय-प्रमाणवाक्ययोः कथं भेद इति व्युत्पादयति—

**सप्तभङ्ग्यात्मकं वाक्यं प्रमाणं पूर्णबोधकृत् ।**
**स्यात्पदादपरोल्लेखि वचो यच्चैकधर्मगम् ॥ ६ ॥**

**नया०—** सप्तेति । सप्तभङ्ग्यात्मकम् 'स्यादस्त्येव, स्यान्नास्त्येव' इत्यादिकं वाक्यं प्रमाणम्, यतः **पूर्णबोधकृत्** सप्तविधजिज्ञासानिवर्तकशाब्दबोधजनकतापर्याप्तिमत्, तदाहुः— "स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः" १, "स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयो भङ्गः" २, "स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधि-निषेधकल्पनया तृतीयो भङ्गः" ३, "स्यादवक्तव्यमेवेति युगपद्विधि-निषेधकल्पनया चतुर्थः" ४, "स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधि-निषेधकल्पनया च पञ्चमः" ५, "स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधि-निषेधकल्पनया च षष्ठः" ६, "स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधि-निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमः" ७, [ प्रमाणनयतत्त्वालोकालङ्कारचतुर्थपरिच्छेदे १५, १६, १७, १८, १९, २०, २१,

---

इति या तृतीया, या च 'परद्रव्याद्यपेक्षया' इति तृतीया तयोल्लिख्यमाना याऽवच्छेदकप्रतीतिस्तयाऽपि सापेक्षत्वं भावनीयमित्यर्थः । अवच्छेदकप्रतीत्यनुरोधेन व्याप्यवृत्तेरपि सावच्छिन्नवृत्तिकत्वतः सापेक्षकत्व नैयायिका अपि स्वीकुर्वन्तीत्याह— **अत एवेति**— अवच्छेदकप्रतीतिवलतः सापेक्षत्वादेवेत्यर्थः । **परेऽपि** नैयायिका अपि, "साध्यासामानाधिकरण्यानधिकरण्यम्" इतिव्याप्तिलक्षणव्याख्या सार्वभौमेन "हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणावच्छेदेन साध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावाधिकरणत्वाभाववत्त्वम्" इति कृता, तत्र 'पर्वतो वह्निमान् धूमाद्' इत्यादौ हेतुतावच्छेदकसम्बन्धेन सयोगेन धूमरूपहेत्वधिकरण पर्वतः, तदवच्छेदेन वह्न्यधिकरणनिरूपितसयोगसम्बन्धावच्छिन्नवृत्तित्वाभावाधिकरणत्वं पर्वतीयरूपे प्रसिद्धम्, तदभाववत्त्व धूमे इत्येव लक्षणसमन्वयः कृत, तथा च, पर्वतीयरूपे वह्न्यधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वं व्याप्यवृत्त्येव, तथापि 'पर्वते पर्वतीयरूपे न वह्निसंयुक्तत्वम्' इति प्रतीतिवलाद् व्याप्यवृत्तेरपि पर्वतीयरूपनिष्ठवह्निमत्संयुक्तत्वाभावाधिकरणत्वस्य पर्वतावच्छिन्नपर्वतीयरूपनिरूपितवृत्तित्वमव्याप्यवृत्ताविव नैयायिकाः स्वीकुर्वन्ति, एवमन्यत्रापि बोध्यमित्यर्थः ॥ ५ ॥

षष्ठं पद्यमवतारयति— **नय-प्रमाणवाक्ययोरिति** । **सप्तभङ्ग्यात्मकमिति** पद्य विवृणोति— **सप्तेतीति** । सप्तभङ्ग्यात्मकवाक्यस्य प्रमाणरूपताया हेतुः पूर्णबोधजनकत्वम्, तत्प्रतीतये **'पूर्णबोधकृत्'** इत्युक्तमित्याह— **पूर्णबोधकृदिति**— पूर्णबोधजनकत्वात् प्रमाणमित्यर्थः । 'पूर्णबोधकृत्' इत्यस्य विवरणम्— **'सप्तविधजिज्ञासानिवर्तकशाब्दबोधजनकतापर्याप्तिमत्'** इति । सप्तभङ्ग्यात्मकमहावाक्यस्वरूपाधिगतये तदवयवानां सप्तानामपि भङ्गानां प्रत्येकं क्रमेण स्वरूपमुपदर्शयति— **तदाहुरिति** । **'स्यादस्त्येव'** इत्यादिभङ्गस्वरूपावधारणं सुगममेवेति नात्र व्याख्यानमपेक्षितमिति बोध्यम् । **एते चेति**— वस्तुनि प्रतिपर्याय विधि-निषेधप्रकारापेक्षयैते सप्तैव भङ्गा इत्यन्वयः, यथा वस्तुनोऽस्तित्वधर्मात्मकपर्यायं समाश्रित्य 'स्यादस्त्येव सर्वम्' इत्यादय सप्त भङ्गा भवन्तीति तत्समुदायात्मकं महावाक्यमेका सप्तभङ्गी, तथा वस्तुनो नित्यत्वधर्मात्मकपर्यायं समाश्रित्य 'स्यान्नित्यमेव सर्वम्' इति विधिकल्पनया प्रथमो भङ्गः, 'स्यादनित्यमेव सर्वम्' इति निषेधकल्पनया द्वितीयो भङ्ग इत्येव प्रकारेण सप्तभङ्गप्रवृत्त्या तत्समुदायात्मकमहावाक्यात्मिका द्वितीया सप्तभङ्गी, एवं भेदादिधर्ममुपादाय तृतीय-तुरीयाद्या अपि सप्तभङ्ग्यः सम्भवन्तीति धर्मभेदेनाऽनन्ता अपि सप्तभङ्ग्यः, तथापि प्रतिधर्मं सप्तानामेव

सूत्राणि ] इति, एते च विधि-निषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुनि सप्तैव भङ्गाः, धर्मभेदेनानन्तसप्तभङ्गीसम्भवेऽपि प्रतिधर्मं सप्तानामेव भावात्, अयं च नियमः प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव सम्भवात्, तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात्, तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात्, तस्याऽपि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेरिति। अत्र विधिमुख्यविषयताकः [ बोधः ] प्रथमस्य [ भङ्गस्य फलम् ], निषेधमुख्यविषयताको द्वितीयस्य, क्रमादुभयमुख्यविषयताकस्तृतीयस्य। न च क्रमबलादेव तत्र ज्ञानद्वयमर्थसिद्धमित्याद्यभङ्गद्वयानतिरेकः, क्रमगर्भोभयप्राधान्यबोधकत्वाभिप्रायेणोभयपदप्रयोगात् तत्र 'एकत्र द्वयम्' इति विषयशालिनो बोधान्तरस्यानुभविकत्वात्। न च तत्र शब्दयोः क्रमव्यापारेऽप्यर्थस्य विशिष्टस्य क्रमाघटितत्वात् क्रमाद्यनतिप्रयोजनम्।

"न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते" ॥१॥

[ वाक्यपदीये० ] इति नयाश्रयणाच्छब्दगतस्याऽपि क्रमस्यार्थेऽध्यारोपणात्। अस्तु वा 'क्रमाद्'

---

भङ्गाना भावान्नाऽष्टभङ्गादिप्रसङ्ग इत्याह– धर्मभेदेनेति। प्रतिधर्मं सप्तानामेव भङ्गाना सम्भव इति नियम एव कथमत आह– अयं च नियम इति। प्रतिपाद्यपर्यनुयोगानामिति– यस्य पुसस्तत्त्वप्रतिपत्त्यर्थं महावाक्यं प्रयुज्यते स प्रतिपाद्य. पुरुषः, तस्य ये पर्यनुयोगाः– प्रश्ना., तेषामित्यर्थ। सप्तैव प्रतिपाद्यपर्यनुयोगा इति नियम एव कुत इत्यत आह– तेषामपीति– प्रतिपाद्यपर्यनुयोगानामपीत्यर्थ.। तज्जिज्ञासेति– प्रतिपाद्यजिज्ञासेत्यर्थ। तस्या अपि प्रतिपाद्यजिज्ञासाया अपि। तत्सन्देहेति– प्रतिपाद्यसन्देहेत्यर्थ.। तस्यापि सन्देहस्यापि। स्वगोचरेति– सन्देहगोचरेत्यर्थ। तथा च प्रतिपर्यायं वस्तुनि विधि-निषेधकल्पनया सप्तैव धर्मा., अतस्तद्विषया. सप्तैव सन्देहा, ततः सन्देहजनिता. सप्तैव जिज्ञासाः, ततस्तन्मूलकाः. प्रतिपाद्यप्रश्ना· सप्तैव, ततस्तत्प्रतिविधानस्वरूपा भङ्गा अपि सप्तैवेत्यत प्रतिपर्यायं वस्तुनि सप्तभङ्ग्यात्मकमहावाक्यमेव सप्तविधजिज्ञासानिवर्तकशाब्दबोधजनकतापर्याप्तिमत्त्वात् प्रमाणमिति। सप्तानामपि भङ्गाना प्रत्येक क्रमेण विविक्त फलमुपदर्शयति– अत्रेति– सप्तभङ्ग्यात्मकमहावाक्य इत्यर्थ, विधिमुख्यविषयताको बोध· प्रथमभङ्गस्य फलमित्यर्थ.। निषेधेति– निषेधमुख्यविषयताको बोधो द्वितीयभङ्गस्य फलमित्यर्थ·। क्रमादिति– क्रमाद् विधि-निषेधोभयमुख्यविषयताको बोधस्तृतीयस्य भङ्गस्य फलमित्यर्थ। ननु प्रथमभङ्गेन विधिमुख्यविषयताको बोधो द्वितीयभङ्गेन निषेधमुख्यविषयताको बोध. क्रमेण भवत्येव तथैव च तृतीयभङ्गेनापि क्रमबलान्निरुक्तबोधद्वयमुपजायत इति तृतीयभङ्गस्य प्रथमद्वितीयभङ्गाभ्यामभेद एवेत्याशङ्क्य प्रतिक्षिपति– न चेति। तत्र तृतीयभङ्गे। तत्र क्रमिकोभयधर्मस्य प्राधान्यबोधकत्वमित्यभिप्रायेण विधिप्रतिपादकपद निषेधप्रतिपादकपद च प्रयुज्यत इति 'एकत्र द्वयम्' इति रीत्यैक एव बोधो विधिनिष्ठप्रकारतानिरूपितत्वे सति निषेधनिष्ठप्रकारतानिरूपितवस्तुनिष्ठविशेष्यताको भवति, न चेदृशो बोध प्रथम-द्वितीयभङ्गाभ्या भवतीति बोधान्तररूपफलजनकत्वात् प्रथम-द्वितीयाभ्यामस्य भेद इति निषेधहेतुमुपदर्शयति– क्रमगर्भोभयप्राधान्येति। तत्र तृतीयभङ्गे। ननु क्रमो नामैकानन्तरमपरस्य भाव., स च शब्दगतो विधिबोधकपदप्रयोगानन्तर निषेधबोधकपदप्रयोगात्, न तु विधि-निषेधरूपधर्मद्वयगतः, तयो· समकालमेवैकत्र वस्तुनि भावादिति शब्दस्य क्रमव्यापारेऽपि नार्थे क्रम इति क्रमाऽघटितस्यैव विधि-निषेधविशिष्टस्यार्थस्य तृतीयभङ्गजन्यबोधेऽवभासनात् 'क्रमगर्भ०' इत्याद्यभिधानमनतिप्रयोजनकमित्याशङ्क्य प्रतिक्षिपति– न चेति। शब्दगतस्य क्रमस्यार्थेऽध्यारोपणात् तृतीयभङ्गेऽर्थगततया क्रमाऽवभासनं समस्त्येव, शब्दविशिष्टस्यैवार्थस्य ज्ञानमात्रेऽवभासनमिति भर्तृहरिमतावलम्बनेन क्रमावभासनं तथा सङ्गतिमङ्गतीति निषेधहेतुमुपदर्शयति– न सोऽस्तीति– य. प्रत्यय. शब्दानुगमादृते–शब्दानुगमनं शब्दप्रतिभासनमन्तरेणेति यावद् भवेत्, स प्रत्ययो लोके नास्ति, सर्वं ज्ञानं शब्देनानुविद्धमिव– व्याप्तमिवाभासत इत्यर्थ.। अथवा शब्दगतोऽर्थगतो वा क्रमो नावभासत एव, किन्तु 'एकत्र द्वयम्' इति रीत्या तत्र ज्ञानमुपजायते, तदाकारविशेषोपलक्षकमेव 'क्रमाद्' इत्यभिधानमित्याह– अस्तु वेति। 'स्यादवक्तव्य एव' इति चतुर्थभङ्गस्य फलमुपदर्शयति– युगपदिति– युगपद्विधिनिषेधात्मनाऽवक्तव्यत्वमुख्यविषयताको बोधश्चतुर्थभङ्गस्य फलमित्यर्थ.।

इति वचनं ज्ञानाकारविशेषोपलक्षकमेव ३ । युगपद्विधि-निषेधात्मनाऽवक्तव्यत्वमुख्यविषयताकश्चतुर्थस्य, तादृशो बोधोऽवक्तव्यपदस्य खण्डशः शक्त्या कारितो विशेषशक्त्या वेत्यन्यदेतत् । न चानुभयवचनेनैवास्य गतार्थताऽऽशङ्कनीया, अनुभयस्यैकतरप्राधान्यपर्यवसायित्वेनाद्यभङ्गद्वयान्तर्भावानतिक्रमात् । न च, उभयपदेन युगपदुभयप्राधान्यबोधसम्भवादवक्तव्यत्वभङ्गोऽनुत्थानोपहत एव, यथा पुष्पदन्तपदाच्चन्द्रत्व-सूर्यत्वाभ्यां चन्द्र-सूर्ययोर्युगपदेव बोधस्तथोभयपदेन सत्त्वाऽसत्त्वाभ्यां युगपदेकोभयात्मकवस्तुबोधसम्भवाद्, अत एव "पुष्पदन्तौ पुष्पदन्तावेकोक्त्या शशि-भास्करौ" [ ] इत्युक्तेः 'एकोक्त्या' इत्यस्य 'एकया शक्त्या' इत्यर्थः. पुष्पदन्तस्य हि चन्द्र-सूर्ययोरेका शक्तिः, शक्यतावच्छेदकत्वं तु चन्द्रत्व-सूर्यत्वयोर्व्यासज्यवृत्तीत्युपगमः, तद्वदुभयपदस्यापि प्रकृते शबलवस्तुन्येका शक्तिः, शक्यतावच्छेदकत्वं तु सत्त्वाऽसत्त्वयोर्व्यासज्यवृत्तीति किं न स्यादिति वाच्यम्, पुष्पदन्तपदवदुभयपदस्यासाधारणत्वाभावात्, बुद्धिविषयतावच्छेदकत्वादस्त्यादिधर्मद्वयावच्छिन्नबोधकत्वे च प्राधान्येनोभयाकारबोधासिद्धेः । किञ्च, व्यासज्यवृत्तिशक्यतावच्छेदकताकस्य पदस्य द्विवचनान्तस्यैव साधुत्वेन न पुष्पदन्तपदवदत्रोभयपदस्य

---

**तादृश इति**– अवक्तव्यपदस्य युगपद्विधि-निषेधरूपेऽर्थेऽवक्तव्यत्वरूपे च पृथगेव शक्तिः, तादृशशक्तितस्तादृशो बोधः कारितः– जनितः, वा– अथवा, युगपद्विधिनिषेधात्मनाऽवक्तव्यत्वरूपेऽर्थेऽवक्तव्यपदस्य शक्तिविशेषः, तेन तादृशो बोधो जायत इति वादान्तरम्, सर्वथा तथाबोधश्चतुर्थभङ्गाद् भवतीति । ननु 'स्यादवक्तव्य' इति स्थाने 'स्यादनुभयम्' इत्येव प्रयुज्यताम्, क्रमेण यदुभयं तन्नेत्यर्थतो युगपदुभयप्राधान्यप्रतीतिसम्भवादित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अनुभयवचनेनैवाऽस्य गतार्थता न चाऽऽशङ्कनीयेत्यन्वयः । क्रमेण यदुभयप्राधान्यं तत्प्रतिक्षेपकस्यानुभयस्यैकतरप्राधान्येनाप्युपपत्तेः, एकतरप्राधान्यप्रतिपादनं च प्रथम-द्वितीयभङ्गाभ्यामेव क्रियत इति 'स्यादनुभयम्' इत्यस्याद्यभङ्गद्वय एवान्तर्भावात् 'स्यादवक्तव्य.' इति चतुर्थभङ्गो युगपद्विधि-निषेधात्मनाऽवक्तव्यत्वमुख्यविषयताकबोधजनक आवश्यक इति निषेधहेतुमुपदर्शयति– **अनुभयस्यैकतरेति** । ननु 'स्यादुभयम्' इत्यनेन युगपदुभयप्राधान्यबोधसम्भवेन 'स्यादवक्तव्य' इति चतुर्थभङ्गः प्रयोजनान्तराभावादनुत्थानोपहत इत्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्युत्तरेण सम्बन्धः । पुष्पदन्तपदेन यथा युगपदेव चन्द्रत्वसूर्यत्वाभ्यां चन्द्र-सूर्ययोर्बोधस्तथैवोभयपदेन युगपदेव सत्त्वा-ऽसत्त्वाभ्यामुभयात्मकवस्तुनो बोध इति दृष्टान्तावष्टम्भेन समर्थयति– **यथेति** । **अत एव** पुष्पदन्तपदस्य युगपदेव चन्द्रत्व सूर्यत्वाभ्यां चन्द्र-सूर्योभयबोधकत्वादेव । '**पुष्पदन्तौ**' इत्येकस्य स्थाने 'पुष्पवन्तौ' इति पाठो युक्तः । दृष्टान्त दार्ष्टान्तिकयो. साम्यं भावयति–**पुष्पदन्तपदस्य हीति** । '**व्यासज्जवृत्ति**' इति स्थाने 'व्यासज्यवृत्ति' इति पाठो युक्तः, एवमग्रेऽपि, व्यासज्यवृत्तित्वं चैकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम्, तथा च पुष्पदन्तपदशक्यतावच्छेदकत्व चन्द्रत्व-सूर्यत्वयोस्तद्गतद्वित्वावच्छेदेन पर्याप्तम्, एवमुभयपदशक्यतावच्छेदकत्वं सत्त्वाऽसत्त्वयोस्तद्गतद्वित्वावच्छेदेन पर्याप्तमित्यर्थः । पुष्पदन्तपद नियमतश्चन्द्र-सूर्योभयप्रतिपादकत्वादसाधारणम्, नैवमुभयपदम्, पदान्तरासमभिव्याहृतस्य तस्य सामान्यत उभयमात्रप्रतिपादकत्वेन प्राधान्येनाऽस्तित्व-नास्तित्वोभयाप्रतिपादकत्वात्, प्रतिपाद्यस्य विशिष्यार्थावगतये हि वाक्य प्रयुज्यते, न च 'स्यादुभयम्' इत्यतो विशिष्यार्थावगतिः, अत एव विशिष्यार्थावगतये पदान्तरसमभिव्याहृतमेवोभयपदं प्रयुज्यत इति निषेधहेतुमुपदर्शयति– **पुष्पदन्तपदवदिति** । ननु 'स्यादस्त्येव' इत्यनेनाऽस्तित्वस्य 'स्यान्नास्त्येव' इत्यनेन नास्तित्वस्य 'स्यादस्त्येव, स्यान्नास्त्येव' इत्यनेन क्रमेणाऽस्तित्व-नास्तित्वोभयस्य च प्रतिपत्तौ बुद्धिविषयतावच्छेदकमस्तित्व-नास्तित्वोभयमिति तदनन्तरं प्रयुज्यमानेन 'स्यादुभयम्' इत्यनेन बुद्धिविषयतावच्छेदकत्वादस्तित्व-नास्तित्वधर्मद्वयावच्छिन्नावबोधो भविष्यतीत्यत आह– **बुद्धिविषयतेति**– उभयत्वेन रूपेणोभयपदादस्तित्व-नास्तित्वधर्मद्वयावच्छिन्नबोधस्य सम्भवेऽपि तादृशबोधाकार. उभयम' इत्येव स्यान्न तु प्राधान्येनास्तित्व-नास्तित्वोभयाकार इति तादृशबोधस्याभिलपितस्यासिद्धेर्न 'स्यादुभयम्' इति चतुर्थभङ्गस्थानेऽभिषेकमर्हतीति । पुष्पदन्तपदस्य व्यासज्यवृत्तिशक्यतावच्छेदकताकस्य द्विवचनान्तत्वनियमादुभयपदस्य तत्त्वाभावेन न तथाऽवबोधकत्वमित्याह–**किञ्चेति** । पञ्चमभङ्गस्य फलमुप-

बोधकत्वमिति दिक्, ४ । विध्यात्मना मुख्यविषयतावच्छिन्ना या उभयात्मना युगपदवक्तव्यत्वमुख्य-विषयता तद्वान् बोधः पञ्चमस्य भङ्गस्य फलम्, ५ । निषेधात्मना मुख्यविषयतावच्छिन्ना या उभया-त्मना युगपदवक्तव्यत्वविषयता तद्वान् षष्ठस्य, ६ । क्रमादुभयमुख्यविषयताद्वयावच्छिन्नाऽवक्तव्यत्वमुख्य-विषयताकः सप्तमस्य, ७ ।

अत्र सप्तभङ्ग्यामित्थं नयविभागमुपदिशन्ति श्रीसिद्धसेनदिवाकरपादाः—

"एवं सत्तविअप्पो वयणपहो होइ अत्थपज्जाए । वंजणपज्जाए पुण सविअप्पो णिव्विअप्पो अ" ॥

—[ सम्मतिप्रथमकाण्डे गाथा-४१ ]

एवम्– अनन्तरोक्तप्रकारेण, सप्तविकल्पः– सप्तभेदः, वचनपथो भवति, अर्थपर्याये– अर्थनये सङ्ग्रह-व्यवहारर्जुसूत्रलक्षणे, तत्र प्रथमो भङ्गः सङ्ग्रहे सामान्यग्राहिणि. द्वितीयस्तु 'नास्ति' इत्ययं व्यवहारे विशेषग्राहिणि, ऋजुसूत्रे तृतीयः, चतुर्थः सङ्ग्रह-व्यवहारयोः, पञ्चमः सङ्ग्रहर्जुसूत्रयोः, षष्ठो व्यवहारर्जु-सूत्रयोः, सप्तमः सङ्ग्रह-व्यवहारर्जुसूत्रेष्विति । प्रयोगश्चैतैश्चतुर्थ-तृतीययोर्व्यत्ययेनेष्यत इति न तृतीये

---

दर्शयति– विध्यात्मनेति– स्पष्टम् । षष्ठभङ्गस्य फलमुपदर्शयति– निषेधात्मनेति– व्यक्तमदः । सप्तमभङ्गस्य फलमुपदर्शयति– क्रमादिति । उभयेति– अस्तित्व-नास्तित्वोभयेत्यर्थ. । सप्तभङ्गीवाक्यं कुत्र नये सम्पूर्णं प्रवर्तते, कुत्र नयेऽन्यथेत्यत्र सिद्धसेनदिवाकरपादैरुपदर्शितो नयविभाग एव कान्त इत्याकलयन् ग्रन्थकार आह अत्रेति । इत्थम् 'एव सत्तविअप्पो' इतिगाथयाऽनन्तरमभिधीयमानप्रकारेण । एवं सत्त० इति– "एव सप्तविकल्पो वचनपथो भवत्यर्थपर्याये व्यञ्जनपर्याये पुनः सविकल्पो निर्विकल्पश्च" ॥ १ ॥ इति संस्कृतम् । विवृणोति– एवमिति । नैगमस्य सङ्ग्रह-व्यवहारयोरेवान्तर्भावः श्रीसिद्धसेनदिवाकरपादाना मते ततोऽर्थनयास्त्रय एव सङ्ग्रह-व्यवहारर्जुसूत्राः, तत्र को भङ्गः कस्मिन्नर्थनये ? इत्यपेक्षा-यामाह– तत्रेति– सङ्ग्रह-व्यवहारर्जुसूत्रलक्षणेष्वित्यर्थ । 'स्यादस्त्येव' इत्येवंस्वरूपः प्रथमो भङ्ग. सामान्यग्राहिणि सङ्ग्रहनये भवतीत्याह- प्रथम इति । 'स्यान्नास्त्येव' इत्येवस्वरूपो द्वितीयो भङ्गो विशेषग्राहिणि व्यवहारे प्रवर्तत इत्याह– द्वितीय-स्त्विति । 'स्यादवक्तव्य एव' इति तृतीयो भङ्ग ऋजुसूत्रनये प्रवर्तत इत्याह– ऋजुसूत्रे तृतीय इति । यथा च तृतीय-भङ्गस्य ऋजुसूत्रनय एव प्रवृत्तिर्न सङ्ग्रह-व्यवहारयोस्तथाऽत्रैव ग्रन्थकारो दर्शयिष्यतीति । 'स्यादस्त्येव स्यान्नास्त्येव च' इति चतुर्थभङ्गः सङ्ग्रह व्यवहारयोः प्रवर्तत इत्याह– चतुर्थं सङ्ग्रह-व्यवहारयोरिति । 'स्यादस्ति स्यादवक्तव्यश्च' इति पञ्चमो भङ्ग. सङ्ग्रहर्जुसूत्राभ्यामुपजायत इत्याह– पञ्चमः सङ्ग्रहर्जुसूत्रयोरिति । 'स्यान्नास्ति स्यादवक्तव्यश्च' इति षष्ठो भङ्गो व्यवहारर्जुसूत्राभ्यामात्मलाभमासादयतीत्याह– षष्ठो व्यवहारर्जुसूत्रयोरिति । 'स्यादस्ति स्यान्नास्ति स्यादवक्त-व्यश्च' इति सप्तमो भङ्गः सङ्ग्रहव्यवहारर्जुसूत्रैरुपजायत इत्याह– सप्तमः सङ्ग्रह व्यवहारर्जुसूत्रेष्विति । इतिशब्दः सप्तभङ्ग्यामर्थनययोजनोपवर्णनसमाप्त्यर्थ. । ननु 'स्यादस्त्येव स्यान्नास्त्येव' इति तृतीयो भङ्ग. प्रथमं भवता दर्शित., स च सङ्ग्रह-व्यवहाराभ्यामुपजायत इति, इदानीं तत्स्थाने 'स्यादवक्तव्यः' इति तृतीयो भङ्ग ऋजुसूत्रनयप्रवर्तितो दर्शित इति तत् कथ सङ्गतिमङ्गतीत्यत आह– प्रयोगश्चैतैरिति– श्रीसिद्धसेनदिवाकरपादै 'स्यादवक्तव्यः' इतिचतुर्थभङ्ग–'स्यादस्ति स्यान्नास्ति' इतितृतीयभङ्गयोर्व्यत्ययेन तृतीयस्थाने 'स्यादवक्तव्यम्' इति, चतुर्थस्थाने 'स्यादस्ति स्यान्नास्ति' इत्येवं प्रकारेण व्यत्यासेन प्रयोग इष्यत इत्यर्थ । ये च श्रीमद्देवसूरिप्रभृतय. सप्तभङ्गी सम्पूर्णैव सकलादेशस्वभावा विकला-देशस्वभावा चेत्येवमामनन्ति तेषा मते सङ्ग्रह-व्यवहारयो. प्रथम-द्वितीयभङ्गमूलयो. संयोगस्यैव प्रथममुपस्थिततया ततो जायमानस्य 'स्यादस्ति स्यान्नास्ति' इति भङ्गस्यैवोपस्थितिरिति तस्य तृतीयस्थानेऽभिषेकः, ततो विधि-निषेधयो-र्युगपत्प्राधान्यविवक्षयाऽऽविर्भवनस्वभावस्य 'स्यादवक्तव्यः' इत्यस्य चतुर्थस्थानेऽभिषेक इति । श्रीसिद्धसेनदिवाकरपादाना मते अखण्डार्थत्वात् सप्तभङ्ग्या त्रयः सकलादेशाः, सखण्डार्थत्वाच्चत्वारो विकलादेशा अभिमता इत्यखण्डार्थाना 'स्यादस्त्येव' इति 'स्यान्नास्त्येव' इति 'स्यादवक्तव्य एव' इति भङ्गाना क्रमेण सन्निवेश., ततो विकलादेशाना चतुर्णां भङ्गानामिति, तथा च तृतीयस्थानेऽभिषिक्ते 'स्यादवक्तव्य एव' इति भङ्गे ऋजुसूत्रनययोजना सम्भवत्येवेत्याह– इति न

ऋजुसूत्रयोजनानुपपत्तिः । अत्र यद्धर्मप्रकारकः सङ्ग्रहाख्यो बोधः प्रथमभङ्गफलत्वेनाभिमतस्तद्धर्मा-ऽभावप्रकारको व्यवहाराख्यो बोध एव द्वितीयभङ्गफलत्वेनैष्टव्यः, तेन 'स्याद् घटः' 'स्यान्नीलघटः' इत्यादिसामान्य-विशेषसङ्ग्रह-व्यवहाराभ्यां न सप्तभङ्गीप्रवृत्तिः, नवैकवचन-बहुवचनादिना भङ्गान्तर-वृद्धिरित्यवधेयम् । अथ तृतीयभङ्गस्यर्जुसूत्रनिमित्तकतायां किं वीजम् ? युगपत्सत्त्वाऽसत्त्वाभ्यामादिष्टं हि सङ्ग्रह-व्यवहारावप्यवक्तव्यमेव ब्रूतः, सङ्ग्रह-व्यवहारौ युगपदुभयथाऽऽदिशत एव नेति चेद् ? ऋजुसूत्रोऽपि कथं तथाऽऽदेष्टुं प्रगल्भताम् ? मध्यमक्षणरूपायाः सत्तायास्तेनाप्युपगमात्, सङ्ग्रहाभि-मतयावद्व्यक्त्यनुवृत्तसामान्यानभ्युपगमादृजुसूत्रेणाऽवक्तव्यत्वभङ्गो न स्थाप्यत इति चेत् ? सोऽयं प्रत्येकावक्तव्यत्वकृतोऽवक्तव्यत्वभङ्गः, तदुत्थापने च सङ्ग्रहोऽपि समर्थः, ऋजुसूत्राभिमतमध्यमक्षणरूप-सत्तानभ्युपगन्त्रा तेनापि तदुत्थापनस्य सुकरत्वादिति चेत् ? अत्रेदमाभाति– सङ्ग्रह-व्यवहारौ युगपन्नो-भयथाऽऽदेष्टुं प्रगल्भेते स्वानभिमतांशादेशेऽनिष्टसाधनत्वप्रतिसन्धानात्, ऋजुसूत्रस्य तु वर्तमानपर्याय-मात्रग्राहिणस्तिर्यगूर्ध्वताधारांशान्यतररूपं सामान्यम् अन्यापोहरूपो विशेषश्चेति द्वावपि संवृतावेवेति

---

**तृतीये ऋजुसूत्रयोजनानुपपत्तिरिति** । 'स्यादस्त्येव' इत्येव प्रथमभङ्गे सति 'स्यान्नास्त्येव' इत्येवमेव द्वितीयभङ्गप्रवृत्त्या सप्तभङ्गीप्रवृत्तिर्नान्यथेत्युपदर्शयति– **अत्रेति** । **तेन** प्रथमभङ्गजन्यबोधप्रकारीभूतधर्माभावप्रकारकव्यवहाराख्यबोधस्यैव द्वितीय-भङ्गफलतयेष्टत्वेन । 'स्याद् घट.' इति प्रथमभङ्गफलत्वेन घटत्वप्रकारक. सङ्ग्रहाख्यो बोधोऽभिमत इति घटत्वाभावप्रकारको व्यवहाराख्यो बोधो द्वितीयभङ्गफलत्वेनेष्ट स्यात्, तथाविधश्च बोध. 'स्यादघट ' इत्यत एव सम्भवतीति 'स्यादघट·' इत्येव द्वितीयभङ्गो न 'स्यान्नीलघटः' इति घटत्वलक्षणसामान्यविषयकसङ्ग्रह-नीलघटत्वलक्षणविशेषविषयकव्यवहाराभ्या सप्तभङ्गी-प्रवृत्तिर्न सभवति, तथा सामान्यमेकमाश्रित्यैकवचनमिति तद्विषयक सङ्ग्रहः, अनेकान् विशेषान् समाश्रित्य बहुवचनमिति तद्विषयको व्यवहार इति ताभ्या 'स्याद् घटः, स्याद् घटाः' इत्येव दिशाऽपि भङ्गान्तरवृद्धयाऽष्टभङ्ग्यादिप्रवृत्तिरपि न सम्भवतीत्याह– **'स्याद् घट.' इति** । 'स्यादवक्तव्यः' इति तृतीयो भङ्ग ऋजुसूत्र इत्युपदर्शितम्, तत्र युक्तिमपश्यन् परः शङ्कते– **अथेति** । अत्र कस्यचित् समाधान प्रतिक्षेप्तुमाशङ्कते– **सङ्ग्रह-व्यवहारावि**ति । **उभयथा** सत्त्वाऽस-त्त्वाभ्याम् । सङ्ग्रह· सत्त्वमभ्युपगच्छतीत्यत सत्त्वादेशसमयेऽसत्त्व कथं स आदिशतु ?, एव व्यवहारोऽपि सङ्ग्रहाभिमत-सत्त्वप्रतिपक्षमसत्त्वमभ्युपगच्छतीत्यतोऽसत्त्वादेशसमये सत्त्व कथ स आदिशतु ? इत्यभिसन्धानेन यदि भवतोच्यते– 'सङ्ग्रह व्यवहारौ युगपदुभयथाऽऽदिशत एव नेति' इति तर्हि मध्यमक्षणरूपसत्त्वमभ्युपगच्छन्नृजुसूत्रस्तदादेशसमये तद्विपक्ष-मसत्त्व कथमादिशत्वित्याह– **ऋजुसूत्रोऽपी**ति । **तथाऽऽदेष्टुं** युगपदुभयथाऽऽदेष्टुम् । **मध्यमक्षणरूपायाः सत्तायाः** वर्तमानैकक्षणमात्रसत्त्वलक्षणाया सत्ताया. । **तेनाऽपि** ऋजुसूत्रेणापि । समाधानान्तरमाशङ्कते– **सङ्ग्रहाभि-मतेति**– **'भङ्गो न स्थाप्यते'** इत्यस्य स्थाने 'भङ्ग उत्थाप्यते' इति पाठो युक्तः, तथा च सङ्ग्रहाभिमतं यद् यावद्व्यक्त्यनुवृत्तं सामान्य तस्यास्वीकाराद् ऋजुसूत्रेण तथाभूतसामान्यरूपमस्तित्वं वक्तव्यं न भवतीत्यतस्तदवक्तव्यत्वतः सत्त्वाऽसत्त्वेऽपि युगपदादिष्टे न वक्तव्ये इत्यवक्तव्यत्वभङ्ग इत्यमृजुसूत्रेणोत्थाप्यत इत्यर्थ. । उक्तसमाधान दूषयति– **सोऽय-मिति** । **तदुत्थापने** प्रत्येकावक्तव्यत्वकृतावक्तव्यत्वभङ्गोत्थापने । **तेनापि** सङ्ग्रहेणापि । **तदुत्थापनस्य** अवक्तव्यत्व-भङ्गोत्थापनस्य । उक्ताशङ्काया ग्रन्थकार· स्वमनीषासमुपढौकितं समाधानमुपदर्शयति– **अत्रेदमाभातीति**– उक्ताशङ्कायामन-न्तरमेवाभिधीयमान समाधानमस्माक हृदये स्फुरतीत्यर्थ । **उभयथा** सत्त्वाऽसत्त्वाभ्याम् । **स्वेति**– सङ्ग्रहस्य स्वान-भिमतांशस्य नास्तित्वस्याऽऽदेशेऽनिष्टसाधनत्वज्ञानात्, व्यवहारस्य स्वानभिमतांशस्यास्तित्वस्याऽऽदेशेऽनिष्टसाधनत्वप्रति-सन्धानात्, अनिष्टसाधनताज्ञानलक्षणप्रतिबन्धकसद्भावात् स्वानभिमतांशाऽऽदेशाऽसम्भवादित्यर्थ. । ऋजुसूत्रस्तु युगपदुभय-थाऽऽदेष्टु प्रगल्भत इत्याह– **ऋजुसूत्रस्य त्विति** । **'वर्तमानपर्यायमात्रग्राहिण.'** इति ऋजुसूत्रस्य विशेषणम्, 'मते' इति शेषः । **द्वावपि** निरुक्तस्वरूपौ सामान्य-विशेषावपि । **संवृतावेव** काल्पनिकावेव । **तदपेक्षया** ऋजुसूत्र-नये काल्पनिकसत्त्वाऽसत्त्वापेक्षया । **तदादेशेति**– सत्त्वा-ऽसत्त्वोभयादेशेत्यर्थ. । ननु यदि ऋजुसूत्रनये सत्त्वाऽसत्त्वोभया-

तदपेक्षया युगपदुभयथाहार्यतदादेशसम्भवादवक्तव्यभङ्गोत्थानमनाबाधम् । न चैवमपि तज्जनित-बोधस्य प्रसङ्गरूपत्वाद् विपर्ययपर्यवसाने सङ्ग्रह-व्यवहारान्यतरसाम्राज्यमिति वाच्यम्, विषयाबाधे कूटलिङ्गजानुमितिरिव प्रकृतभङ्गजबोधस्य प्रमात्वेन विपर्ययपर्यवसानकदर्थनानवकाशात् ।

व्यञ्जनपर्याये– शब्दनये पुनः सविकल्पः प्रथमे पर्यायशब्दवाच्यताविकल्पसद्भावादर्थस्यैकत्वाच्च, द्वितीय-तृतीययोर्निर्विकल्पश्च द्रव्यार्थात् सामान्यलक्षणान्निर्गतस्य पर्यायरूपस्य विकल्पस्याभिधायकत्वात् तयोः, तथा च घटो नाम घटवाचकयावच्छब्दवाच्यः शब्दनयेऽस्त्येव, समभिरूढैवंभूतयोर्नास्त्येवेति द्वौ भङ्गौ लभ्येते । लिङ्ग-सङ्ख्या-क्रियाभेदेन भिन्नस्यैकशब्दावाच्यत्वाच्छब्दादिषु तृतीयः । प्रथम-द्वितीय-संयोगे चतुर्थः, तेष्वेव चानभिधेयसंयोगे पञ्चम-षष्ठ-सप्तमवचनमार्गाः सम्भवन्ति । अथवा शब्दनये पर्यायान्तरसहिष्णौ सविकल्पो वचनमार्गः, तदसहिष्णौ तु निर्विकल्प इति द्वावेव भङ्गौ, अवक्तव्य-

---

देशो यद्याहार्यस्तदा तदुत्थतृतीयभङ्गजन्यज्ञानं प्रसङ्गरूपम्, प्रसङ्गस्य विपर्ययपर्यवसानमिति तद्विपर्यय सत्त्वावधारणं यदि तदा सङ्ग्रहः, यदि च नास्तित्वावधारणं तदा व्यवहार इत्येवं सङ्ग्रह-व्यवहारान्यतरसाम्राज्यमित्याशङ्क्य प्रतिक्षिपति– **न चैवमपीति । तज्जनितबोधस्य** आहार्यतदादेशस्वरूपतृतीयभङ्गजनितबोधस्य । आहार्यतदादेशोऽपि ऋजुसूत्र-नयापेक्षयैव, वस्तुतस्तु तृतीयभङ्गप्रतिपाद्यं यदवक्तव्यत्व तदस्त्येव वस्तुनीति तज्ज्ञानं प्रमात्मकमेवेति न तस्य विपर्ययपर्यवसानम्, यत्र देशे वह्निरस्ति तत्र धूलीपटलाद् धूमत्वेन गृहीतात् कूटादपि जायमानस्य वह्निज्ञानस्यानुमित्यात्मकस्य विषयाबाधतो यथा प्रमात्वं तथा प्रकृतस्यापि प्रमात्वसम्भवादिति निषेधहेतुमुपदर्शयति– **विषयाबाध** इति ।

उत्तरार्द्धं विवृणोति– **व्यञ्जनपर्याय** इति । शब्दनयः खलु साम्प्रत-समभिरूढैवम्भूतभेदेन त्रिविध, तत्र सवि-कल्पः कस्मिन्नित्यपेक्षायामाह– **प्रथम** इति– साम्प्रताख्ये शब्दनयस्य प्रथमभेदे पुनः सविकल्प इत्यर्थ । 'सविकल्पः' इत्यस्य विकल्पसहित इत्यर्थः, विकल्पश्चात्र पर्यायशब्दवाच्यतालक्षण इत्यभिप्रायेणाह– **पर्यायेति**– साम्प्रतनये एक एव घटरूपोऽर्थो घट-कुट कुम्भ-कलशाद्यनेकशब्दवाच्यो भवति, तथा चैकस्य शब्दस्य तत्समानार्थकोऽन्यशब्दः पर्याय-शब्द, तद्वाच्यतालक्षणविकल्पसद्भावात्, **अर्थस्य** अभिधेयस्य घटात्मकस्यैकत्वाच्च साम्प्रतनये सविकल्पक इत्युप-पद्यत इत्यर्थः । **द्वितीय तृतीययोः** शब्दनयस्य द्वितीय-तृतीयभेदयोः समभिरूढैवम्भूतयो. । **'निर्विकल्पश्च'** इति कथ घटते ? इत्यपेक्षायामाह– **द्रव्यार्थादिति**– द्रव्यार्थिकनयविषयात् सामान्यस्वरूपात्, निर्गतस्य– सर्वथा भिन्नस्य, पर्यायात्मकस्य विकल्पस्याऽभिधायकत्वात्, तयोः– समभिरूढैवम्भूतयोः, अत्र निर्गतो विकल्पो वाच्यतया यस्य स निर्वि-कल्प., कस्मान्निर्गत इत्यपेक्षाया 'सामान्याद्' इति, कोऽथ विकल्प इत्यपेक्षाया पर्यायरूप इति बोध्यम् । एतावता शब्द-नये को भङ्गः कस्मिन्नये इति न ज्ञायत इति तदवगमायाह– **तथा चेति**– शब्दनये उक्तदिशा सविकल्प-निर्विकल्प-व्यवस्थितौ चेत्यर्थः । **शब्दनये** साम्प्रताख्यशब्दनये । **समभिरूढेति**– समभिरूढैवम्भूतयोर्घटो घटवाचकयावच्छब्दवाच्यो नास्त्येवेत्यर्थ', एवं च 'घटवाचकयावच्छब्दवाच्यत्वेनास्त्येव घट.' इति प्रथमभङ्ग' साम्प्रतनये, 'घटवाचकयावच्छब्दवाच्यत्वेन नास्त्येव घटः' इति द्वितीयभङ्गः समभिरूढैवम्भूतयोरित्येव सविकल्पो निर्विकल्पश्चेत्यतो द्वौ भङ्गौ लभ्येते इत्यर्थ. । 'स्यादवक्तव्य' इति तृतीयभङ्ग शब्दनये उपपादयति– **लिङ्गेति**– लिङ्गभेदेन भिन्नस्यार्थस्यैकशब्दावाच्यत्वात् साम्प्रतनये 'स्यादवक्तव्य' इति, संज्ञाभेदेन भिन्नस्यार्थस्यैकशब्दावाच्यत्वात् समभिरूढनये 'स्यादवक्तव्य.' इति, क्रियाभेदेन भिन्न-स्यार्थस्यैकशब्दावाच्यत्वादेवम्भूतनये 'स्यादवक्तव्यः' इत्येवं शब्दादिषु तृतीयभङ्ग इत्यर्थ । 'स्यादस्त्येव' इतिप्रथमभङ्ग-'स्यान्नास्त्येव'इतिद्वितीयभङ्गयो· सयोगे' स्यादस्ति स्यान्नास्ति च' इति चतुर्थभङ्ग इत्याह– **प्रथमेति । तेष्वेव चेति**–प्रथम द्वितीय-चतुर्थेष्वेव चेत्यर्थ. । **अनभिधेयसंयोगे** 'स्यादवक्तव्यः' इति तृतीयभङ्गसंयोगे । **पञ्चमेत्यादि**– प्रथमतृतीयभङ्ग-संयोगे पञ्चमभङ्ग., द्वितीय-तृतीयसंयोगे षष्ठभङ्ग., चतुर्थ-तृतीयसयोगे सप्तमभङ्ग इत्यर्थ. । शब्दनये प्रथम-द्वितीयावेव भङ्गौ न त्वन्ये इति कल्पान्तरमाह– **अथवेति । पर्यायान्तरसहिष्णौ** घटशब्दवाच्यस्य घटस्य कुटादिशब्दा अपि वाचका भवन्तीत्यभ्युपगन्तरि **शब्दनये** साम्प्रताख्ये । **सविकल्पो वचनमार्गः** सविकल्पवचनमार्गो घटवाचकयावच्छब्दवाच्यो घटोऽस्त्येवेत्यर्थकः 'स्यादस्त्येव' इति प्रथमो भङ्ग इत्यर्थः । **तदसहिष्णौ तु** पर्यायान्तरासहिष्णौ समभिरूढैवम्भूताख्य-शब्दनये पुनः । **निर्विकल्पः** घटवाचकयावच्छब्दवाच्यो घटो नास्त्येवेत्यर्थकः 'स्यान्नास्त्येव' इति द्वितीयभङ्ग इत्यर्थ. ।

भङ्गस्तु व्यञ्जननये न सम्भवत्येव, श्रोतरि शब्दोपरक्तार्थबोधनस्यैव तत्प्रयोजनत्वात्, अवक्तव्यबोधनस्य च तन्नये सम्प्रदायविरुद्धत्वेन तथाबुबोधयिषाया एवासम्भवादित्यधिकमस्मत्कृताऽनेकान्तव्यवस्थायाम्। तदेवं प्रतिपर्यायं सप्तप्रकारबोधजनकतापर्याप्तिमद् वाक्यं प्रमाणवाक्यमिति लक्षणं सिद्धम्। इत्थञ्च तदन्तर्भूतस्य तद्बहिर्भूतस्य वाऽन्यतरभङ्गस्य प्रदेश-परमाणुदृष्टान्तेन नयवाक्यत्वमेवेत्यर्थतो लभ्यते। इतर-प्रतिक्षेपी तु नयो नयाभासो दुर्नयो वेत्युच्यते।

मलयगिरिचरणास्तु- "नयो दुर्नयः सुनयश्चेति दिगम्बरी व्यवस्था, न त्वस्माकं नय-दुर्नययोरर्थोऽविशेषात्, स्याच्छब्देन विवक्षितधर्मोपरागेण कालादिभिरभेदवृत्त्याऽभेदोपचाराद् वाऽनन्तधर्मात्मकवस्तुप्रतिपादने प्रमाणवाक्यस्यैव व्यवस्थितेः, अत एव स्याच्छब्दलाञ्छिततयैव सर्वत्र साधूनां भाषाविनयो विहितः, अवधारणी भाषा च निषिद्धा, तस्या नयरूपत्वात्, नयानां च सर्वेषां मिथ्यादृष्टित्वात्, तथा चानुस्मरन्ति- "सव्वे णया मिच्छावायिणो" [ ]त्ति, न च, सप्तभङ्गात्मकं प्रमाणवाक्यम्, एकभङ्गात्मकं च नयवाक्यमित्यपि नियन्तुं शक्यम्, सप्त भङ्गाः सप्तविधजिज्ञासोपाधिनिमित्तत्वात्, न च तासां सार्वत्रिकत्वम्, को जीवः? इति प्रश्ने लक्षणमात्रजिज्ञासया 'स्याज्ज्ञानादिलक्षणो जीवः' इति प्रमाणवाक्यरूपस्योत्तरस्य सिद्धान्तसिद्धत्वात्, स्यात्पदस्य चात्राऽनन्तधर्मात्मकत्वद्योतकत्वेन प्रामाण्याङ्गत्वम्, द्योतकत्वं चात्रौपसम्पदानकी शक्तिर्लक्षणा वेत्यन्यदेतत्, तत्र च श्रुतपदप्रतिपाद्यधर्मांशे लौकिकी

---

इति एवं प्रकारेण। द्वावेव भङ्गौ प्रथम-द्वितीयावेव भङ्गौ। व्यञ्जननये शब्दनये। व्यञ्जननयेऽवक्तव्यभङ्गासम्भवे हेतुमुपदर्शयति- श्रोतरीति- प्रतिपाद्यपुरुषे शब्दविशिष्टार्थबोधनस्यैव वाक्यप्रयोजनत्वादित्यर्थः। तन्नये शब्दनये। तथाबुबोधयिषया अवक्तव्यबोधनेच्छया। एतदर्थविशेषावगमेच्छुभिरस्मत्कृताऽनेकान्तव्यवस्थाप्रकरणमवलोकनीयमित्युपदेशाभिप्रायेण ग्रन्थकार आह- इत्यधिकमिति। 'सप्तभङ्ग्यात्मक वाक्यं प्रमाणं पूर्णबोधकृत्' इत्यस्य पर्यवसितमर्थं पूर्वोपदर्शितमुपसंहरति- तदेवमिति। इत्थ च सप्तभङ्ग्यात्मकमहावाक्यस्यैव प्रमाणत्वे च। तदन्तर्भूतस्य सप्तभङ्ग्यन्तर्गतस्य। तद्बहिर्भूतस्य वा सप्तभङ्गीबहिर्भूतस्य वा। अन्यतरभङ्गस्य सप्तानां भङ्गाना मध्यादेकैकस्य भङ्गस्य। प्रदेश-परमाणुदृष्टान्तेनेति- स्कन्धसन्निविष्टः परमाणुः प्रदेश इत्युच्यते, स्कन्धात् पृथग्भूतश्च केवल. परमाणुरिति व्यपदिश्यते, तथा सप्तभङ्गीस्वरूपमापन्नो भङ्गस्तदात्मना प्रमाणवाक्यम्, प्रत्येकासाधारणस्वस्वरूपात्मना तत्सन्निविष्टो बहिर्भूतो वा नयवाक्यमित्येवमन्यतरभङ्गस्यार्थान्नयवाक्यत्व लभ्यत इत्यर्थः। सप्तभङ्गीसन्निविष्टस्य तद्बहिर्भूतस्य वाऽन्यतरभङ्गस्य स्यात्कारलाञ्छितत्वेनेतरनयप्रतिक्षेपित्वाभावान्नयत्वम्, स्यात्कारालाञ्छितस्य तु भङ्गस्येतरनयप्रतिक्षेपित्वेन नयाभासत्व दुर्नयत्व वेति स नयाभास इत्याख्यायते, दुर्नय इति वा व्यपदिश्यत इत्याह- इतरप्रतिक्षेपी त्विति।

अत्र मलयगिरिचरणानां मन्तव्यभेदमुपदर्शयति- मलयगिरिचरणास्त्विति- अस्य 'इत्यभिसन्दधते' इत्यनेनान्वयः। न त्वस्माकं श्वेताम्बराणां नयो दुर्नय. सुनयश्चेति व्यवस्था नैव। तत्र हेतुमाह- नयेति। यत्र स्याच्छब्दोपादानमस्ति तन्नयवाक्यम्, यत्र तन्नास्ति तद् दुर्नयवाक्यमित्येव कथञ्चिद्घटितार्थ-तदघटितार्थरूपार्थविशेषसद्भावो न वाच्य., स्याच्छब्दघटितेनैकेनापि भङ्गेनैकधर्मप्रतिपादनमुखेन कालादिभिरभेदवृत्त्याऽभेदोपचारेण वाऽशेषधर्मप्रतिपादनतोऽनन्तधर्मात्मकवस्तुप्रतिपादने तथाभूतभङ्गस्य प्रमाणवाक्यत्वस्यैव सम्भवादित्याह- स्याच्छब्देनेति। कालादिभिरिति- "कालाऽऽत्मरूपसम्बन्धाः संसर्गोपक्रिये तथा। गुणिदेशार्थशब्दाश्चेत्यष्टौ कालादयः स्मृताः" ॥ १ ॥ [ ] इति वचनादादिपदादात्मरूपादीनां ग्रहणम्। अभेदवृत्त्येति- द्रव्यार्थिकनयादेशादभेदवृत्तिप्राधान्याश्रयणेनेत्यर्थः। अभेदोपचारादिति- पर्यायार्थिकनयादेशाद् धर्माणा परस्परं भेदेऽप्यभेदोपचारादित्यर्थ.। अत एव स्यात्पदलाञ्छितस्यैकस्यापि भङ्गस्योक्तदिशा प्रमाणवाक्यत्वादेव। अवधारणी भाषा स्यात्कारालाञ्छितैवकारसंवलिता भाषा। तस्याः निरुक्तभाषायाः। नयानां मिथ्यादृष्टित्वे आगमवचन प्रमाणयति- तथा चेति। सव्वे० इति- "सर्वे नया मिथ्यावादिनः" इति। 'न च' इत्यस्य 'शक्यम्' इत्यनेनान्वयः। तासां जिज्ञासानाम्। अत्र 'स्याद् ज्ञानादिलक्षणो जीवः' इति वाक्ये। अनन्तधर्मात्मकत्वं यदि स्यात्पदेन द्योतते तदाऽनन्तधर्मान्तर्गतो धर्मः श्रुतोऽपि धर्मः, तस्याश्रुतधर्मापेक्षया किं वैलक्षण्यमित्यपेक्षायामाह- तत्र चेति-

विषयता स्यात्पदद्योत्या, अनन्तधर्मात्मकत्वांशे च लोकोत्तरेति विशेषः" इत्यभिसन्दधते; तन्मतमनुरुध्य प्रमाणलक्षणान्तरं समुच्चिनोति– च-पुनः, यद् वाक्यम्, **एकधर्मगं** प्रतिनियतैकधर्मप्रतिपिपादयिषया प्रयुक्तम्, [ **अपरोल्लेखि** ] स्यात्पदादपरे येऽनन्ता धर्मास्तांल्लिखतीत्येवंशीलं वाक्यम्, तदपि प्रमाण-वाक्यं व्यवर्तव्यमित्यर्थः । अयं च समुच्चयो मयापि सम्प्रदायमतमिति कृत्वा समुन्नीतः, वस्तुतो नय-दुर्नयविभागो न दैगम्बर एव, हेमसूरिभिरपि "सदेव सत् स्यात् सदिति त्रिधार्थो मीयेत दुर्नीति-नय-प्रमाणैः" [अन्ययोगव्य० श्लो. २८] इत्यादि विभज्याभिधानात्, आकरे नयत-दाभासानां व्यक्तेर्बोधित-त्वाच्च । अवधारणी च भाषा एकान्तवादात्मकैव निषिद्धा, न तु नयरूपाऽपि, तस्याः प्रमाणपरिकरत्वेन तत्रावधारणीत्वस्य निश्चायकत्वरूपभाषालक्षणान्वयेनैव सिद्धान्तसिद्धत्वात्, अत एव निराकाङ्क्षाऽनासन्नादि-स्थले शब्दसमानाकारमानसस्वीकारे किमपराद्धं शाब्दबोधेनेति पर्यनुयोगे मानसस्य संशयाऽऽकारस्यापि सम्भवाद् निश्चायकरूपशाब्दबोधानुपपत्तेरेव यौक्तिकैर्निराकृतः । न च, भाषामात्रस्यावधारणीत्वेऽप्या-राधकत्व-विराधकत्व-तदुभया-ऽनुभयैः सत्यादिभेदचतुष्टयोपदेशान्नयभाषाया देशाराधकत्वेन तृतीयभङ्ग

---

अनन्तधर्मेषु मध्ये इत्यर्थः । **तन्मतं** श्रीमलयगिरिमतम् । **अनुरुध्य** आश्रित्य । '**एकधर्मगम्**' इत्यस्य विवरणम्– '**प्रतिनियतैकधर्मप्रतिपिपादयिषया प्रयुक्तम्**' इति, '**स्यात्पदादपरोल्लेखि**' इत्यस्य '**अपरोल्लेखि**' इत्यस्य विवरणम्– '**अपरे येऽनन्तधर्मास्तांल्लिखतीत्येवंशीलम्**' इति । सप्तभङ्ग्यात्मकं वाक्य प्रमाणम्, **च** पुनः स्यात्पदादपरोल्लेख्येकधर्मगमपि वाक्य प्रमाणमिति सम्प्रदायमतमनुरुध्यैव ग्रन्थकृतोक्तम्, न तु तत्र निर्भर. स्वस्येति ग्रन्थकार आह– **अयं चेति** । **मयाऽपि** प्रकृतग्रन्थकृता श्रीयशोविजयोपाध्यायेनापि । श्रीहेमसूरि–देवसूरिप्रभृतयः श्वेताम्बर-शिरोमणयोऽपि नयदुर्नय-नयनयाभासविभागमुपयन्तीति नय-दुर्नयविभागो दैगम्बर एव न, किन्तु श्वेताम्बरसम्मतोऽपी-त्याह– **वस्तुत** इति । 'सदेव' इति वचनेन दुर्नीत्याऽर्थो मीयते, 'सद्' इति वचनेन नयेनार्थो मीयते, 'स्यात् सद्' इति वचनेन प्रमाणेनार्थो मीयते, इत्येव दुर्नीति-नय-प्रमाणवाक्याना श्रीहेमसूरिभिर्विभज्याभिधानान्नय-दुर्नयविभागस्त-त्सम्मत इत्यर्थः । **आकरे** इति–स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्काराभिधमूलग्रन्थगुम्फितसोदाहरणनय-तदाभासाना व्यक्तेर्विभागस्य श्रीदेवसूरिभिर्बोधितत्वान्नय–तदाभासविभागो देवसूरिसम्मत इत्यर्थ. । यत् तूक्तम्– 'अवधारणी भाषा च निषिद्धा' इति तत्राह– **अवधारणी चेति** । **तस्या.** नयरूपाया अवधारणीभाषाया. । **तत्र** नयभाषायाम् । **अवधारणी-त्वस्येति**– परस्य संशयाऽज्ञानादिनिवृत्तये निश्चायकमेव वचनं प्रयुञ्जते परीक्षका इति इति भाषाया निश्चायकत्वमेव लक्षणं सिद्धान्तानुमोदितमिति नयवाक्ये अवधारणीत्वस्य सद्भाषालक्षणसमन्वयेन सिद्धान्तसिद्धत्वतो गुणावहत्वमेवेति तादृश-भाषाभाषणं न साधूनां सिद्धान्तनिषिद्धमित्यर्थ. । **अत एव** निश्चायकत्वस्य भाषालक्षणस्य सिद्धान्तसिद्धत्वादेव । शाब्दबोधे आकाङ्क्षाऽऽसत्त्यादेश्च कारणत्वान्निराकाङ्क्षाऽनासन्नादिवाक्यस्थले न शाब्दबोध., किन्तु पदेभ्य उपस्थितानामर्थानामन्वयबोधो मानसः शाब्दबोधसमानाकारको भवतीत्येवमुपगमे यथा मानसे आकाङ्क्षादि न कारण तथा शाब्दबोधेऽपि तत् कारण माऽस्त्वित्युपगम्य शाब्दबोध एव किमिति निराकाङ्क्षाऽसन्नादिस्थले नोपेयते इति पर्यनुयोग., निश्चयात्मक एव मानसबोध इति न नियमस्तेन निराकाङ्क्षादिस्थले उपस्थिताना पदार्थानामन्वयबोधः संशयात्मक. सम्भवति, शाब्दबोधस्तु निश्चयात्मक एव भवतीति नियमेन तत्र शाब्दबोधस्य निश्चयात्मकस्याऽनुपपत्तेरेव युक्तिप्रधानैस्तार्किकैर्निराकृत इत्याह– **निराकाङ्क्षेति** । '**शब्दसमानाकारः**' इति स्थाने 'शाब्दसमानाकार' इति पाठो युक्त. । 'पर्यनुयोगे' इत्यस्य स्थाने 'पर्यनुयोगो' इति पाठो युक्तः, तस्य 'निराकृत' इत्यनेनान्वय । '**न च**' इत्यस्य 'युक्तम्' इत्यनेनान्वयः **तदुभयेति**- आराधकत्व-विराधकत्वोभ-येत्यर्थः । **अनुभयेति**- आराधकत्व-विराधकत्वोभयरहितेति, नाराधकस्वभावो नापि विराधकस्वभाव इति यावत् । **सत्यादि-भेदचतुष्टयेति**– सत्याभाषा, मृषाभाषा, सत्यामृषाभाषा, असत्याऽमृषाभाषेत्येव चतुष्टयेत्यर्थः । तत्र सत्याभाषा आराधकस्व-भावा मृषाभाषा विराधकस्वभावा, सत्यामृषाभाषा तदुभयस्वभावा, असत्यामृषाभाषा तदनुभयस्वभावेति । **तृतीयभङ्ग एव** सत्यामृषाभाषालक्षणभाषातृतीयप्रकार एव । **निक्षेपात्** प्रवेशात् । युक्तत्वप्रतिक्षेपयुक्तिमुपदर्शयति–**चतुर्धा विभागस्येति** ।

एव निक्षेपात् साधूनामनादरणीयत्वमित्यपि युक्तम्, चतुर्धा विभागस्य द्रव्य-भावभाषायामेवोपदेशात्, तत्र च परिमणितमिश्रभाषाभेददशकानन्तर्भावादेव नयभाषायां दोषाभावात्, श्रुतभावभाषायाश्च तृतीयभाषायामेवानधिकृतत्वात्, चारित्रभावभाषायामाद्यन्तयोर्भाषयोरधिकृतत्वेऽप्यायुक्ततया चतसृणामपि भाषणे आराधकत्वाविरोधस्य प्रज्ञापनादावुक्तत्वात् । किञ्च, प्रतीत्यसत्यालक्षणमत्र स्फुटमेव किं नोन्नीयते ?, न च सप्तभङ्गात्मकवाक्यस्यैव प्रतीत्यसत्यात्वम्, अपेक्षात्मकबोधजनकवाक्यत्वस्यैव तल्लक्षणत्वात्, अन्यथैकत्रापेक्षया ह्रस्व-दीर्घादि लौकिकवचनस्यालक्ष्यत्वापत्तेः । न च सत्या सर्वत्राऽलौकिक्येव लक्ष्या, जनपदसत्यादिभेदानुपसङ्ग्रहापत्तेः । ननु तथाप्युत्सर्गतोऽनादरणीयत्वादेव नय-दुर्नयभाषयोरविशेषः, तथा चोक्तं वादिना—

"सीसमइविप्फारणमेत्तत्थोऽयं कओ समुल्लावो । इहरा कहामुहं चेव णत्थि एयं ससमयंमि" ॥

—[ सम्मतितृतीयकाण्डे गाथा–२५ ]

इति चेत्, न– शिष्यमतिविष्फारकत्वं हि नयवाक्यस्य प्रमाणात्मकमहावाक्यजन्यशाब्दबोधजनकावान्तरवाक्यार्थज्ञानजनकत्वम्, तदनुकूलाकाङ्क्षोत्थापकत्वं वा, तेन तस्यादरणीयत्वस्यैव सिद्धेः, तदुक्तं वादिनैव—

"पुरिसज्जायं तु पडुच्च जाणओ पण्णविज्ज अन्नयरं। परिकम्मणानिमित्तं वाहेही सो विसेसं पि" ॥त्ति,

—[ सम्मतिप्रथमकाण्डे गाथा–५४ ]

---

**तत्र च** द्रव्य-भावभाषाया च । **तृतीयभाषायां** सत्यामृषभाषायाम् । **आद्यन्तयोः** सत्याभाषाऽनुभयस्वभावभाषयोः । **आयुक्ततया** अत्यन्तोपयोगवत्तया । **चतसृणामपि** सत्यादिचतुष्प्रकाराणामपि भाषाणाम् । अपि च प्रतीत्यसत्यारूपैव नयभाषा, तस्या भाषण युक्तमेव साधूनामित्याह– **किञ्चेति** । अत्र नयभाषायाम्, प्रतीत्यसत्या नाम किञ्चिदपेक्षया सत्या, सा नयभाषाऽपि 'अपेक्षावचन नय' इति वचनात् प्रतीत्यसत्यात्व तस्याः सुप्रतिपदम् । सप्तभङ्गीवाक्यस्यैव प्रतीत्यसत्यात्वम्, न नयवाक्यस्येत्याशङ्क्य प्रतिक्षिपति– **न चेति** । निषेधे हेतुमाह– **अपेक्षात्मकेति**– अपेक्षात्मको यो बोधस्तज्जनकवाक्यत्वस्यैव प्रतीत्यसत्या लक्षणत्वादित्यर्थ. । **अन्यथा** अपेक्षात्मकबोधजनकवाक्यत्वस्य प्रतीत्यसत्यालक्षणत्वमनभ्युपगम्य सप्तभङ्गात्मकवाक्यत्वस्यैव प्रतीत्यसत्यालक्षणत्वस्याभ्युपगमे । **एकत्रेति**– एकत्रैव निम्बादिवृक्षे आम्रवृक्षापेक्षया ह्रस्वोऽयमिति बिल्ववृक्षापेक्षया दीर्घोऽयमिति लौकिकवचनस्य सप्तभङ्गानात्मकत्वेन प्रतीत्यसत्यालक्षणलक्ष्यत्वं न स्यादित्यर्थः । अलौकिक्येव भाषा सत्यालक्षणलक्ष्या सर्वत्र, न लौकिकीत्याशङ्क्य प्रतिक्षिपति– **न चेति** । निषेधे हेतुमाह– **जनपदेति**– जनपदसत्यादिभेदा लौकिकवाक्यानामेवेति तत्सङ्ग्रहोऽलौकिक्या एव लक्ष्यत्वे न स्यादित्यर्थः । ननु भवतु प्रतीत्यसत्यात्वं नयवाक्यस्य तथापि दुर्नयवाक्यवन्नयवाक्यस्याप्युत्सर्गतोऽनादरणीयत्वात् तयोरविशेष, प्रमाणवाक्यस्यैव च सप्तभङ्गात्मकस्योत्सर्गत आदरणीयत्वमित्याशङ्कते– **नन्विति** । उक्तार्थे सम्मतिसवादमाह– **तथा चोक्तमिति** । **सीसमइ०** इति– "शिष्यमतिविस्फारणमात्रार्थोऽय कृतः समुल्लाप. । इतरथा कथामुखमेव नास्त्येतत् स्वसमये" ॥ इति सस्कृतम् । नयवाक्यस्य शिष्यमतिविस्फारकत्वे तत एवादरणीयत्वमपि तस्य सिद्ध्यतीति समाधत्ते– **नेति** । **प्रमाणेति**– प्रमाणात्मकमहावाक्येन जन्यस्य शाब्दबोधस्य जनकं यदवान्तरवाक्यार्थज्ञान तज्जनकत्वम्, **वा** अथवा तादृशवाक्यार्थानुकूलाकाङ्क्षोत्थापकत्व यतो नयवाक्यस्य शिष्यमतिविस्फारकत्वं तेन हेतुना नयवाक्यस्यादरणीयत्वस्यैव सिद्धेः, नयवाक्यं विनाऽवान्तरवाक्यार्थज्ञान न स्यात्, तदन्तरेण च प्रमाणात्मकमहावाक्यशाब्दबोध एव न भवेदिति प्रमाणवाक्यस्यादरणीयत्वे तज्जन्यज्ञानजनकज्ञानजनकत्वेन नयवाक्यमप्यादरणीयमित्याशय. । उक्तार्थेऽपि सम्मतिसंवादमाह– **तदुक्तमिति** । **वादिनैव** श्रीसिद्धसेनदिवाकरेणैव । **"पुरिसज्जायं तु०"** इति– "पुरुषजातं तु प्रतीत्य ज्ञायक. प्रज्ञापयेदन्यतरत् । परिकर्मणानिमित्तं वदेद्धि स विशेषमपि" ॥ इति सस्कृतम् । यथा च नयवाक्य कञ्चित् प्रतिपाद्य पुरुषमधिकृत्य प्रवर्तते तथा प्रमाणवाक्यमपि कञ्चित् पुरुषविशेषमेवोद्दिश्य प्रवर्तते, ततश्च कारणिकत्वे द्वयो. समाने यथा स्वकाले प्रमाणवाक्यस्यौत्सर्गिकत्व तथा स्वकाले नय-

प्रमाणवाक्यमपि ह्यनेकान्तरुचिशालिनं पुरुषविशेषमधिकृत्यैव प्रयुज्यते, तदनयोर्द्वयोरपि कारणिकत्वे प्राप्ते स्वस्वकाले उत्सर्गिकत्वमेव न्यायसिद्धम्, विप्रतिसिद्धकारणविधिस्थले तथाव्युत्पत्तेः, तस्मात् 'स्याज्ज्ञानादिलक्षणो जीवः' इत्यपि सुनयवाक्यमेव, एकभङ्गरूपत्वात्, प्रमाणवाक्यता तत्राप्युत्थाप्याकाङ्क्षाक्रमेण भङ्गषट्कसंयोजनयैव। सकलादेशत्वं च प्रतिभङ्गमनन्तधर्मात्मकत्वद्योतनेन, अन्यथा च विकलादेशत्वमित्यन्येके। अखण्डवस्तुविषयत्वेन त्रिष्वेवाद्यभङ्गेषु तत्, चतुर्षु चोपरितनेष्वेकदेशविषयत्वेन विकलादेशत्वमित्यन्ये। अयं व्युत्पत्तिविशेषः सर्वसप्तभङ्गीसाधारणः, स्याच्छब्दलाञ्छितैकमात्रेण तु न प्रमाणवाक्यविश्रामः सुनयवाक्यार्थस्यैव ततः सिद्धेः, अत एव– "कृष्णसर्प इत्यादिविशेषणविशेष्यभावबोधकवाक्येऽपि सर्पमात्रे कृष्णत्वस्याभावाद् अनन्ते व्यभिचारात्, पृष्ठावच्छेदेन कृष्णेप्युदरा-

---

वाक्यस्याप्यौत्सर्गिकत्वम्, यथा–'यवैर्यजेत्, व्रीहिभिर्वा यजेत्' इत्यादिविप्रतिपिद्धकारणविधिस्थले व्रीहिकरणकयागस्य स्वकाले, स्वकाले च यवकरणकयागस्यौत्सर्गिकत्वमित्याह– **प्रमाणवाक्यमपीति**। **तत्** तस्मात्। **अनयोः** प्रमाण-नयवाक्ययोः। 'विप्रतिसिद्ध' इति स्थाने 'विप्रतिषिद्ध' इति पाठो युक्तः, यत्र कारणद्वयस्य विकल्पस्तत्रैककारणविधानकालेऽपरो विप्रतिषिद्धो भवतीति। **तथाव्युत्पत्तेः** स्वस्वकाले औत्सर्गिकत्वमिति व्युत्पत्तेः। उपसहरति– तस्मादिति। **'सुनयवाक्यमेव'** इत्येवकारेण श्रीमलयगिरिसम्मतस्य तत्र प्रमाणवाक्यत्वस्य व्यवच्छेदः। सुनयवाक्यत्वे हेतुमाह– **एकभङ्गरूपत्वादिति**। 'स्याद् ज्ञानादिलक्षणो जीव' इति वाक्यस्य प्रमाणवाक्यताऽपि, किं ज्ञानादिलक्षणभिन्नोऽपि जीव इत्याद्युत्थाप्याकाङ्क्षाक्रमेण 'स्यात्र ज्ञानादिलक्षणो जीव, स्यादवक्तव्यो जीव.' इत्यादिभङ्गषट्कयोजनया भवतीत्याह– **प्रमाणवाक्यताऽपीति**– तेनाऽत्राप्यनेकान्त· कान्त इत्यभिसन्धि। इयं च सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा, प्रतिभङ्गं विकलादेशस्वभावा च श्रीदेवसूरिप्रभृत्याचार्याणा मते, तत्र यथा सकलादेशत्व यथा च विकलादेशत्व तदुपदर्शयति– **सकलादेशत्वं चेति**– स्यात्पदेन प्रतिभङ्गगतेनाऽनन्तधर्मात्मकत्वस्य वस्तुनि द्योतनेन प्रतिभङ्ग सकलादेशत्वमित्यर्थ·, एतच्च कालादिभिरष्टभिर्द्रव्यार्थादेशादभेदप्राधान्याश्रयणेन पर्यायार्थादेशादभेदोपचारतश्चैकधर्मप्रतिपादने तद्द्वारा सकलधर्मप्रतिपादनतः सम्भवति। यदा च कालादिभिरष्टभि पर्यायार्थादेशाद् भेदप्राधान्याश्रयणेन द्रव्यार्थिकनयादेशाद् भेदोपचारेण वा नैकधर्मप्रतिपादनेन ततो भिन्नानामन्यधर्माणा प्रतिपादनमिति न स्यात्पदेनाऽनन्तधर्मात्मकत्वस्य द्योतनं तदैकभङ्गेनैकधर्मस्य वस्त्वंशस्यैव प्रतिपादन न तु वस्तुन इति विकलादेशत्वमित्याह– **अन्यथा चेति**– स्यात्पदेनाऽनन्तधर्मात्मकत्व न द्योत्यते, किन्त्वपेक्षाभेद एवोल्लिखितधर्मस्य द्योतत इत्यभ्युपगमे त्वित्यर्थ। अखण्डवस्तुप्रतिपादकत्वं सकलादेशत्वमेकदेशप्रतिपादकत्व विकलादेशत्वमिति 'स्यादस्त्येव, स्यान्नास्त्येव, स्यादवक्तव्यमेव' इत्याद्यभङ्गत्रयाणा सकलादेशत्वम्, तदन्येषां चतुर्णां भङ्गाना विकलादेशत्वमित्यभ्युपगन्तॄणा तत्त्वार्थसूत्रकृत्प्रभृतीना मतमुपदर्शयति– **अखण्डवस्तुविषयत्वेनेति**। **तत्** सकलादेशत्वम्, एकधर्मात्मना वस्तुप्रतिपादने तदन्यधर्माणामप्यभेदवृत्त्या तदुपचारेण वा तद्धर्माभेदभावेन प्रतिपादनसम्भवत. सकलादेशत्वं घटत आद्यभङ्गत्रये, तदन्यभङ्गेषु पुनर्भेदाश्रयणेनैव विशिष्टधर्मप्रतिपादनमिति तत्राभेदाश्रयणासम्भवान्नान्यधर्माणा प्रतिपादनसम्भव इति विकलादेशत्वमित्यभिसन्धि। **अयम्** अनन्तरमुपदर्शितदिशा दर्शित.। **व्युत्पत्तिविशेषः** सकलादेशत्व-विकलादेशत्वज्ञानप्रकारः। **सर्वसप्तभङ्गीसाधारणः** 'स्याज्ज्ञानादिलक्षणो जीव.' इत्यादिसप्तभङ्ग्यामिव 'स्यादस्त्येव घट' इत्यादि-'स्यान्नित्य एव घट.' इत्याद्यशेषसप्तभङ्गीमनुगत.। **स्याच्छब्देति**– 'स्याज्ज्ञानादिलक्षणो जीवः' इत्येकभङ्गमात्रेण तु प्रमाणवाक्यविश्रामो न भवति, निराकाङ्क्षार्थावबोधस्यैकेन भङ्गेनाजननात्, किन्तु प्रतिनियतापेक्षयैकधर्मावधारणलक्षणसुनयवाक्यार्थस्यैवैकभङ्गत· सिद्धेरित्यर्थः। **अत एव** स्याच्छब्दलाञ्छितैकभङ्गस्य नयवाक्यत्वमेव न प्रमाणवाक्यत्वमित्यस्य सुव्यवस्थितत्वादेव। **कृष्णसर्प इत्यादिविशेषण-विशेष्यभावबोधकवाक्येऽपि स्याच्छब्दसंयोजनया नयवाक्यत्वमित्येवं** समन्तभद्र आर्हेत्यन्वय। **अपिना** यदा नागविशेषे रूढ एव कृष्णसर्प इति तदा पदत्वमेव तस्य न वाक्यत्वमिति सुनयवाक्यत्वसम्भावनैव नास्तीत्यर्थाम्रेडनम्। **अनन्त** इति– अनन्ताभिध. सर्प शुक्ल एव न कृष्ण इति सर्पत्व तत्रास्ति न तु कृष्णत्वमित्येव व्यभिचारादित्यर्थ.। सर्पविशेषे नियमेन कृष्णत्वमस्तीत्यपि नास्ति पृष्ठावच्छेदेन कृष्णस्यापि सर्पस्योदरावच्छेदेन शुक्लत्वस्योप-

वच्छेदेन शुक्लत्वोपलम्भाच्च, स्याच्छब्दसंयोजनया नयवाक्यत्वम्" इत्याह समन्तभद्रः। लक्ष्य-लक्षणादि-व्यवहारोऽपि नयवाक्यैरेव सिद्ध्यति, उद्देशत्रयलौकिकबोधस्यानप्रतिप्रसक्तस्य तेभ्य एव सिद्धेः, प्रमाण-वाक्यं त्वलौकिकबोधार्थं सप्तभङ्गात्मकमेवाश्रयणीयम्, अत एव तद्व्यापकत्वं सम्मत्यादौ महता प्रयत्नेन साधितमिति किमतिविस्तरेण ? ॥ ६ ॥

नन्वेकत्र वस्तुन्यनेकाकारा प्रमाणधीः, एकाकारा च नयधीः कथमुत्पाद्यत इति जिज्ञासायामाह—

**यथा नैयायिकैरिष्टा चित्रेऽनेकैकरूपधीः।**
**नय-प्रमाणभेदेन सर्वत्रैव तथाऽऽर्हतैः ॥ ७ ॥**

**नया०— यथेति—** यथा नैयायिकैः, चित्रे नील-पीतादिना शबले घटादौ अनेकरूपाद्याकारा, एक-रूपा च चित्राकारा धीः, इष्टा अभ्युपगता, तथानुभवस्वारस्याद्, मतभेदाश्रयणाद् वा, तथा सर्वत्रैव

लम्भेनैकान्तेन कृष्णत्वाभावादित्याह— **पृष्ठावच्छेदेनेति**। एव च 'स्यात् कृष्णसर्पः' इत्येव प्रयोक्तव्यमिति स्याच्छब्द-संयोजनया नयवाक्यत्वं तस्येत्याह—**स्याच्छब्देति**। तदिदमर्थं प्रामाणिकमित्यावेदयितुमाह—**इत्याह समन्तभद्र** इति। न केवल विशेषणविशेष्यभावबोधकवाक्यस्यैव सुनयवाक्यत्वम्, किन्तु लक्ष्य-लक्षणादिप्रतिपादकवाक्यानामपि सुनय-वाक्यत्वमेवेत्याह— **लक्ष्यलक्षणादिव्यवहारोऽपीति**। **उद्देशत्रयलौकिकबोधस्येति**— उद्देश-लक्षण-परीक्षात्मकवाक्य-जन्यलौकिकबोधस्येत्यर्थः। **अनतिप्रसक्तस्य** अलक्ष्यालक्षणाद्यविषयकस्य लक्ष्य-लक्षणादिमात्रविषयकस्येति यावत्। **तेभ्य एव** नयवाक्येभ्य एव। यदि च विशेषण-विशेष्यभावादिलक्ष्य-लक्षणादिव्यवहारश्च नयवाक्यादेव तर्हि प्रमाणवाक्य किमर्थमाश्रयणीयमित्यपेक्षायामाह— **प्रमाणवाक्यं त्विति**। **अलौकिकबोधार्थम्** एकधर्मिविशेष्यकसप्तधर्मप्रकारकनिरा-काङ्क्षबोधार्थम्, तथाबोधः सप्तभङ्गात्मकमहावाक्यत एवेति। **'सप्तभङ्गात्मकमेव'** इति 'प्रमाणवाक्यम्' इत्यस्य विशेषणम्। **अत एव** अलौकिकबोधार्थं सप्तभङ्गात्मकप्रमाणवाक्यस्याश्रयणीयत्वादेव। तद्व्यापकत्व सप्तभङ्गात्मकप्रमाणवाक्यस्य प्रतिपादकतया वस्तुमात्रव्यापकत्वम् ॥ ६ ॥

सप्तमपद्यमवतारयति— **नन्विति**— एकस्मिन् वस्तुनि वस्तुस्वाभाव्याद् यदि अनेकाकारा बुद्धिः प्रमाणात्मिका तदैकाकारा नयबुद्धिः कथम् ? यदि चैकाकारबुद्धिविषयत्वमस्य स्वाभाव्यादेव तदाऽनेकाकारा बुद्धिः कथम् ? तत्कारणस्याप्येकविधबुद्धि-जनकत्वस्वभाव्यादेवेत्यभिसन्धिः। यथेत्यादिपद्यं विवृणोति— **यथेतीति**। **'चित्रे'** इत्यस्य विवरणम्— **'नीलपीतादिना शबले घटादौ'** इति। **अनेकरूपाद्याकारा,** 'घटोऽय नील पीत-रक्तादिमान्' इति, 'अस्मिन् घटे नील-पीत-रक्तादिरूपाणि' इत्येवमनेकरूपाद्याकारा। **एकरूपा च** 'घटोऽयं चित्ररूपवान्' इति, 'घटेऽस्मिन् चित्रं रूपम्' इत्येवमाकारा। उक्त-दिशाऽनेकाकारा धीरैकाकारा धी. कथं नैयायिकैरभ्युपगतेत्यपेक्षायामाह— **तथानुभवस्वारस्यादिति**— चित्रघटादिश्चित्र-रूपात्मकैकाकारवत्तयाऽप्यनुभूयते, नील-पीताद्यनेकाकारवत्तयाऽप्यनुभूयत इति तथानुभवस्वारस्यात् तथाऽभ्युपेयत इति। नन्वेकान्तवादे एकविधानुभव एव प्रमाणमिति तत्रैकाकारानुभवप्रामाण्ये एकाकारा बुद्धिरेव प्रामाणिकी, अनेकाकारानुभव-प्रामाण्येऽनेकाकारा बुद्धिरेव प्रामाणिकी, न तूभयाकारबुद्ध्योः प्रामाण्यम्, यथार्थानुभवस्वारस्यादेव वस्तुव्यवस्थितेरित्यत आह— **मतभेदाश्रयणाद् वेति**— प्राचीननैयायिकैरवयवगतनीलादिरूपाणामवयविगतपीतादिरूप प्रति प्रतिबन्धकत्वाभ्युपगमान्न तत्रावयविनि नानारूपाण्युत्पत्तुमर्हन्ति, रूपादीना व्याप्यवृत्तिजातीयत्वस्वाभाव्यादवच्छेदकभेदेनाव्याप्यवृत्तिनानारूपाऽभ्युपगमोऽपि न सम्भवति, अवयविनि तत्र रूपानभ्युपगमे तु तस्य बहिरिन्द्रियजन्यप्रत्यक्षमेव न स्यात्, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणत्वात्, अतोऽवयवगतनानाजातीयरूपैरवयविनि चित्ररूपमेवैकमुत्पद्यते, तं प्रति चावयवगतनीलादिरूपाणां न प्रतिबन्धकत्वम्, अतस्तत्र चित्ररूपस्यैकस्यौत्पत्तिसम्भव इति, नवीननैयायिकैरवयवगतनीलादीनामवयविगतपीतादिरूप प्रति प्रतिबन्धकत्वस्यानभ्युपगमाद्रूपादीनां व्याप्यवृत्तिजातीयत्वमेवेति नियमस्यानभ्युपगमात् तत्र नील-पीतादिकं नानारूपमेव,

वस्तुन्येकानेकरूपतया चित्रे प्रमाण-नयभेदेन द्विविधा बुद्धिरार्हतैरिष्टा, अनुभवसिद्धेऽर्थे विरोधाभावादिति भावः ।

यथा च सर्वस्य वस्तुनश्चित्रत्वं तथोक्तमस्माभिरात्मख्यातौ विस्तरभिया नेह प्रतन्यते, चित्ररूपे तु मतभेदं तर्करसिकव्युत्पत्त्यर्थमुपदर्शयामः– तत्र 'नीलं नीलान्यरूपासमवायिकारणम्, नवा ?' इति चित्ररूपे विप्रतिपत्तिः, विधिकोटिः सामानाधिकरण्येन निषेधकोटिरवच्छेदेन, तेन नांशतो बाधः सिद्ध-

न त्वेकं विजातीयं चित्ररूपमिति, अत एव–" लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेत. खुर-विषाणाभ्यां स नीलो वृष उच्यते " ॥ १ ॥ [ ] इति वचनादेकस्मिन् नीलवृषे नानारूपसमावेशोऽवच्छेदकभेदेन प्रतिपादितः सङ्गच्छत इत्येव प्राचीन नवीननैयायिकमतभेदाश्रयणाद् वेत्यर्थः, एतन्मतद्वयाभिप्रायोऽनन्तरमेव ग्रन्थकृता स्पष्टीकृतो वेदितव्यः । '**एकानेकरूपतया चित्रे**' इति '**वस्तुनि**' इत्यस्य विशेषणम् । **प्रमाण-नयभेदेनेति**– प्रमाणेनानेकाकारा बुद्धिः, नयेन चैकाकारा बुद्धिर्जैनैरभ्युपगतेत्यर्थः । नन्वेकाकारबुद्धिविषयत्वा-ऽनेकाकारबुद्धिविषयत्वयोर्विरोधात् कथमेकस्मिन् वस्तुनि सम्भव इत्यत आह– **अनुभवसिद्ध** इति– ययोरेकत्र नानुभवस्तयोरेव विरोध., प्रकृते चापेक्षाभेदेनैकत्र वस्तुन्येकाऽनेकाकारबुद्धिविषयत्वयोरनुभव एवेति न विरोध इत्यर्थः । यथा घटादेर्नील-पीतादिना चित्रत्वं तथा सर्वस्य वस्तुनो यदि चित्रत्वं स्यात् तदा स्यादुक्तदिशैकाऽनेकाकारबुद्धिविषयत्वम्, तत्रैव तु प्रमाणं न पश्याम इत्यत आह - **यथा चेति**– आत्मख्यातिनामा कश्चिद् ग्रन्थोऽनेन ग्रन्थकृता कृतोऽस्ति, यत्र वस्तुमात्रस्य चित्रत्वं व्यवस्थापितम्, परमिदानीं न स दृष्टिपथमस्माकमुपयातीति ।

'मतभेदाश्रयणाद् वा' इति यदुक्तं तत्र मतभेदोपदर्शनमधिकरोति– **चित्ररूपे त्विति** । यद्यपि वादि-प्रतिवादिनौ स्वस्वपक्षनिर्णयवन्तावेव, तथाप्याहार्यसंशयोत्पादनार्थं कथाङ्गसंशयहेतुवादि प्रतिवाद्यभिमतपरस्परविरुद्धधर्मद्वयावबोधकविप्रतिपत्तिर्मध्यस्थेनाऽवश्य विधेयेत्याशयेन चित्ररूपे विप्रतिपत्तिमुपदर्शयति– **तत्रेति**–मतद्वयप्ररूपककथायामित्यर्थः । प्राचीनमते यत्राऽवयवमात्रे नीलमेव रूपं तत्रावयविनि नीलरूपमेवोत्पद्यत इति नीलरूपं नीलरूपस्याऽसमवायिकारण भवति, यत्र तु कुत्रचिदवयवे नीलं कुत्रचिदवयवे पीतादिरूपं तत्राऽवयविनि चित्ररूपमेव विजातीयमुत्पद्यते, तत्राऽवयवगत नीलरूप नीलान्यचित्ररूपं प्रत्यसमवायिकारणं भवतीति नील नीलान्यरूपाऽसमवायिकारणमिति विधिकोटि. प्राचीननैयायिकस्य, नव्यनैयायिकमते तु यत्रावयवेष्वेकजातीयमेव नीलादि तत्रावयविनि तत्समानजातीयमेकरूपमेवोत्पद्यते, यत्र त्ववयवेषु नानाजातीयनील पीतादिकं तत्र नानैव नील-पीतादिकमुत्पद्यते, तत्रावयवगतं नीलमवयविगतनील प्रत्यसमवायिकारणम्, एवमवयवगतपीतादिकमवयविगतपीतादिक प्रत्यसमवायिकारणम्, न तु नील नीलान्यरूप प्रत्यसमवायिकारणमिति निषेधकोटिर्नव्यनैयायिकस्येत्याह– **नीलमिति** । प्राचीनमते नीलत्वरूपपक्षतावच्छेदकसामानाधिकरण्येनैव नीलरूपासमवायिकारणत्वस्य विधिः, न तु नीलत्वावच्छेदेन, तथा सति यत्रावयवेषु नीलमेव रूप तस्य नीलरूपस्य नीलान्यरूपासमवायिकारणत्वाभावेन तन्मते बाधः स्यात्, एवं नवीनमते नीलत्वरूपपक्षतावच्छेदकावच्छेदेनैव नीलान्यरूपासमवायिकारणत्वस्य निषेधः, न तु नीलत्वसामानाधिकरण्येन, तथा सति यत्रावयवेषु नीलमेव रूपं तत्र प्राचीनमतेऽपि तस्मिन्नवयवनीले नीलान्यरूपाऽसमवायिकारणत्वनिषेधस्य सत्त्वेन तत्साधने तं प्रति सिद्धसाधन स्यादित्याह– **विधिकोटिरिति** । '**निषेधकोटिरवच्छेदेन**' इति स्थाने '**निषेधकोटिरवच्छेदकावच्छेदेन**' इति पाठ. समीचीनः, अथवाऽवच्छेदेनेत्यत., सामानाधिकरण्येनेत्यस्य पक्षतावच्छेदकसामानाधिकरण्येनेत्यर्थ, अवच्छेदकावच्छेदेनेत्यस्य पक्षतावच्छेदकावच्छेदेनेत्यर्थः, पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकव्यापकविधेयप्रतियोगिकसम्बन्धो विधेयतावच्छेदकतया भासते, पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ तु शुद्ध एव सम्बन्धो विधेयतावच्छेदकतया भासत इति तयोर्विवेकः । **तेन** विधिकोटेः पक्षतावच्छेदकसामानाधिकरण्येन निषेधकोटे पक्षतावच्छेदकावच्छेदेन साधनेन । **नांशतो बाध** इति—पक्षतावच्छेदकसामानाधिकरण्येन साध्याभावनिश्चयलक्षणबाधो न भवतीत्यर्थः, पक्षतावच्छेदकावच्छेदेन साध्यानुमतौ पक्षतावच्छेदकावच्छेदेन साध्याभावनिश्चयलक्षण. पक्षतावच्छेदकसामानाधि-

साधनं वा । यत् तु— 'नीलरूपासमवायिकारणकं पीतरूपासमवायिकारणकम्, नवा ? इति विप्रतिपत्तिः' इति, तन्न— नीलरूपासमवायिकारणस्य नीलस्य पक्षत्वे बाधात्, चित्ररूपस्य पक्षत्वे आश्रयासिद्धेः। यदपि— 'नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वं पीतरूपासमवायिकारणवृत्ति, नवा ?' इति केषा-

करण्येन साध्याभावनिश्चयलक्षणश्च बाधः प्रतिबन्धक इति पक्षतावच्छेदकसामानाधिकरण्येन साध्यानुमितौ तु पक्षतावच्छेदकावच्छेदेन साध्याभावनिश्चयलक्षणबाध एव प्रतिबन्धको न पक्षतावच्छेदकसामानाधिकरण्येन साध्याभावनिश्चयलक्षणो बाधः प्रतिबन्धक·, प्रकृते तु नीलत्वसामानाधिकरण्येन नीलान्यरूपासमवायिकारणत्वलक्षणसाध्यानुमितिरभिमतेति तत्र नीलात्वावच्छेदेनैव नीलान्यरूपासमवायिकारणत्वाभावनिश्चयः प्रतिबन्धको न तु नीलत्वसामानाधिकरण्येन नीलान्यरूपासमवायिकारणत्वाभावनिश्चय इति भाव. । **सिद्धसाधनं** वेति— पक्षतावच्छेदकावच्छेदेन साध्यानुमितौ पक्षतावच्छेदकावच्छेदेन साध्यनिश्चय एव सिद्धसाधनविधया प्रतिबन्धको न तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यनिश्चयः, पक्षतावच्छेदकसामानाधिकरण्येन साध्यानुमितौ तु पक्षतावच्छेदकावच्छेदेन साध्यनिश्चयः पक्षनावच्छदेकसामानाधिकरण्येन साध्यनिश्चयश्च प्रतिवन्धकः, तत्र प्रथमे प्रतिबध्यप्रतिबन्धकभावश्च प्रकृतपक्षतावच्छेदकव्यापकविधेयप्रतियोगिकविधेयतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नप्रतिवध्यतानिरूपितप्रकृतपक्षतावच्छेदकव्यापकविधेयप्रतियोगिकविधेयतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिवन्धकत्वमिति, द्वितीये प्रतिवध्य-प्रतिबन्धकभावश्च निर्विशेषितविधेयतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नप्रतिवध्यतानिरूपितविधेयतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिवन्धकतेति, प्रकृते तु नीलत्वावच्छेदेन नीलान्यरूपासमवायिकारणत्वाभावविधेयकानुमितिर्नव्यमतेऽभिमता, तां प्रति नीलत्वावच्छेदेनैव नीलान्यरूपासमवायिकारणत्वाभावनिश्चयः सिद्धसाधनविधया विरोधी, न च स प्राचीनमते समस्ति, किन्तु नीलत्वसामानाधिकरण्येन नीलान्यरूपासमवायिकारणत्वाभावनिश्चयः समस्ति, न च स प्रतिवन्धक इत्याशयः। अस्यां विप्रतिपत्तौ प्रसिद्धमेव नीलरूप पक्षीकृतम्, नीलान्यरूपासमवायिकारणत्वमपि पीतादौ प्रसिद्धमेव, तच्चेन्नीले चित्ररूपासमवायिकारणत्वमादायैव सिद्धयति तदभावोऽपि नीले चित्ररूपासत्त्वमुपादायैव सिद्धयतीति युक्तेयं विप्रतिपत्तिः।

विप्रतिपत्त्यन्तर पराभिप्रेतमुद्भाव्य प्रतिक्षिपति— **यत् त्विति**। 'नीलरूपासमवायिकारणकम्' इति पक्षनिर्देशः, 'पीतरूपासमवायिकारणकम्' इति साध्यनिर्देश. प्राचाम्, 'नवा' इति साध्यनिर्देशो नव्यानाम्, अत्र नीलरूपासमवायिकारणकत्वेन प्राचीन नवीनोभयमतसिद्धं नीलरूपमेव, तद् यदि पक्षस्तर्हि तत्र पीतरूपासमवायिकारणकत्वं नास्ति, नहि कोऽपि नील प्रति पीतरूपस्याऽसमवायिकारणत्व स्वीकरोतीति प्राचीनैस्तथासाधने बाध एव, नवीनैस्तदभावसाधने सिद्धसाधनमेव, प्राचीनैरपि नीलरूपे पीतरूपासमवायिकारणकत्वाभावस्योपगमात्, प्राचीनमतेन नीलरूपासमवायिकारणकत्वेन सिद्धं चित्ररूपमपि, तस्य पक्षत्वे आश्रयासिद्धिरेव, वादि-प्रतिवाद्युभयसिद्धस्यैव पक्षत्व नैकतरमात्रसिद्धस्येत्याशयेनोक्तविप्रतिपत्तिं प्रतिक्षिपति— **तन्नेति**— सिद्धसाधनदोषापेक्षया बाधदोषस्य प्रबलत्वात् तन्मात्रोपन्यास इति बोध्यम्।

अन्यामपि वाद्यन्तराभिमतां विप्रतिपत्तिमुद्भाव्य प्रतिक्षिपति— **यदपीति**, 'नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वम्' इति पक्षनिर्देशः, 'पीतरूपासमवायिकारणवृत्ति' इति स्थाने स्पष्टप्रतिपत्तये 'पीतरूपासमवायिकारणकवृत्ति' इति पाठो युक्तः, स च प्राचीनमते साध्यनिर्देशः, 'नवा' इति निषेधकोटिर्नव्यानाम्, अत्र नीलरूपासमवायिकारणक नीलरूपं चित्ररूपं च प्राचीनमते, तत्र नीलरूपमुपादाय नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वमुभयमतसिद्धं भवति पक्षः, पीतरूपासमवायिकारणकमपि प्राचीनमते पीतरूपं चित्ररूपं च, तत्र पीतरूपमुपादाय पीतरूपासमवायिकारणकवृत्तित्वलक्षण साध्यं प्राचीन-नवीनोभयमतेऽपि रूपत्वे पीतरूपत्वे च सिद्धम्, तद्वृत्तित्वविशिष्टस्य तत्रैव सत्त्वमिति नियमेन नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वं नीलरूपासमवायिकारणकवृत्त्येव भवितुमर्हति, एवं च तत्र पीतरूपासमवायिकारणकवृत्तित्वं तदेव सेद्धुमर्हति यदेव रूपं नीलरूपासमवायिकारणक तदेव यदि पीतरूपासमवायिकारणकमपि भवेत्, न च नीलरूपं पीतरूपं वा तथा, नीलरूपस्य नीलरूपासमवायिकारणकत्वेऽपि पीतरूपासमवायिकारणकत्वाभावात्, पीतरूपस्य पीतरूपासम-

श्चिद् विप्रतिपत्त्युद्भावनम्, तदपि न रमणीयम्– विशिष्टस्य विशिष्टाधेयताया वाऽनतिरिक्तत्वादिति दिक् ।

तत्र साम्प्रदायिकाः– "नानारूपवदवयवारब्धे वस्तुनि नील-पीतादिभिरेकं सम्भूय चित्रं रूपमारभ्यते, न च सामग्रीसत्त्वान्नीलादिभिः नीलादेरपि तत्र जननापत्तिः ? अगत्या नीलेतररूपादेर्नीलादिकं प्रति प्रतिबन्धकत्वकल्पनात्, प्रतिबन्धकतावच्छेदकः सम्बन्धः स्वसमवायिसमवेतत्वम्, प्रतिबध्यतावच्छेदकश्च समवायः; चित्रत्वावच्छिन्नेऽपि नीलेतर-पीतेतररूपत्वादिनैव हेतुता, तेन न केवलनीलकपालारब्धे चित्रोत्पत्तिप्रसङ्गः । यत् तु– 'अवयवनिष्ठनीलाभावादिषट्कस्यैव चित्रं प्रति हेतुत्वम्'

वायिकारणकत्वेऽपि नीलरूपासमवायिकारणकत्वाभावात्, किन्तु चित्ररूपमेव नीलरूपासमवायिकारणकं पीतरूपासमवायिकारणकं चेति चित्ररूपमुपादायैव निरुक्तरूपत्वलक्षणपक्षे निरुक्तविधिरूपसाध्यं सिद्ध्यतीति प्राचीनाभिलषितचित्ररूपसिद्धिः, नवीनमते नीलरूपासमवायिकारणकं नीलरूपमेव, पीतरूपासमवायिकारणकं पीतरूपमेवेति न नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वे पीतरूपासमवायिकारणकवृत्तित्वमिति निषेधकोटिस्तदैव सेद्धुमर्हति यदि चित्ररूपं न भवेदेवेति । तादृशविप्रतिपत्त्युद्भावनस्याऽरमणीयत्वे हेतुमुपदर्शयति– **विशिष्टस्ये**ति– नीलरूपासमवायिकारणकवृत्तित्वविशिष्टरूपत्वस्य शुद्धरूपत्वानतिरिक्तत्वेन शुद्धरूपत्वस्य पीतरूपासमवायिकारणके पीतरूपे सत्त्वे विशिष्टरूपत्वस्यापि तत्र सत्तया चित्ररूपाभावेऽपि पीतरूपासमवायिकारणकवृत्तित्वस्य तत्र सत्त्वेन विधिकोटौ सिद्धसाधनात्, तन्निषेधस्य तत्राभावेन निषेधकोटौ बाधाच्चेत्याशयः । यथा च विशिष्टस्य शुद्धानतिरिक्तत्व तथा विशिष्टाधेयताया अपि शुद्धाधेयतातोऽनतिरिक्तत्वमेवेति तत्साधने सिद्धसाधनं तदभावसाधने बाधः स्यादेवेत्याह– **विशिष्टाधेयताया** वेति– तद्वृत्तित्वविशिष्टस्य तत्रैव सत्त्वमिति नियमश्च विशिष्ट-शुद्धयोरनतिरिक्तत्वाभ्युपगन्त्रा नाभ्युपेयत एवेत्याशयः । यदि च विशिष्टस्य शुद्धानतिरिक्तत्वेऽपि विशिष्टनिरूपिताधिकरणत्वं शुद्धनिरूपिताधिकरणतातो व्यतिरिक्तमेव, तत एव 'गुणो गुण कर्मान्यत्वविशिष्टसत्तावान्' इति प्रतीतेर्न प्रमात्वम्, गुण-कर्मान्यत्वविशिष्टसत्तानिरूपिताधिकरणताया गुणेऽभावादिति विभाव्यते, तदा 'नीलरूपासमवायिकारणवृत्तित्वविशिष्टरूपत्वनिरूपिताधिकरणत्वं पीतरूपासमवायिकारणकवृत्ति नवा ?' इत्यपि विप्रतिपत्तिः सम्भवतीति बोध्यम् ।

एवं विप्रतिपत्तौ सत्या प्राचां मत प्रथमत उपदर्शयति– **तत्रे**ति । **साम्प्रदायिकाः** प्राचीनमतानुसारिण. । ननु समवायसम्बन्धेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नील कारणम्, एवं समवायसम्बन्धेन पीतादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन पीतादिकं कारणमित्येव कार्यकारणभावस्य मतद्वयेऽप्युपगमादवयवगतनीलादितो यथाऽवयविनि चित्ररूपस्यैकस्योत्पत्तिस्तथोक्तकारणघटितसामग्रीबलान्नीलादीनामप्युत्पत्तिः स्यादित्याशङ्क्य प्रतिक्षिपति– **न चे**ति । तत्र नानारूपवदवयवारब्धेऽवयविनि, यद्यत्र कस्यचित् प्रतिबन्धकत्व न कल्प्येत तदोक्तसामग्रीबलात् स्यादेव नीलादितो नीलाद्युत्पत्त्यापत्ति., अतः समवायेन नील प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलेतररूपस्य प्रतिबन्धकत्वम्, एवं समवायेन पीतं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन पीतेतररूपस्य प्रतिबन्धकत्वम्, इत्येवं दिशा रक्तादिकं प्रत्यपि रक्तेतररूपादेः प्रतिबन्धकत्वम्, तथा च समवायसम्बन्धेन नीलं प्रति यथा स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूपं कारणं तथा स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्ननीलेतररूपनिष्ठप्रतियोगिकाभावोऽपि प्रतिबन्धकाभावविधया कारणमिति तद्घटितकारणकूटलक्षणसामग्र्यभावान्न नानारूपवदवयवारब्धेऽवयविनि नीलरूपोत्पत्तिः, नवा पीतादिरूपोत्पत्तिरिति निषेधहेतुमुपदर्शयति–'**अगत्ये**ति– प्रतिबध्य-प्रतिबन्धकभावकल्पनाऽतिरिक्तगत्यभावेनेत्यर्थः । **'नीलेतररूपादेः'** इत्यत्रादिपदात् पीतेतररूपादेरुपग्रहः, **'नीलादिकम्'** इत्यत्रादिपदात् पीतादेरुपग्रह. । ननु समवायसम्बन्धेन नीलं प्रति यथा स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूप कारण तथा समवायसम्बन्धेन चित्र प्रत्यपि स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूप कारणमिति यत्र कपालद्वयेऽपि नीलरूपमेव तत्रापि तदारब्धघटे चित्ररूपं स्यात् सामग्रीसत्त्वादित्यत आह– **चित्रत्वावच्छिन्नेऽपी**ति । **'पीतेतररूपत्वादिना'** इत्यत्रादिपदाद्रक्तेतररूपत्वादेरुपग्रहः । **एव**कारेण चित्रत्वावच्छिन्न प्रति नीलत्वादिना कारणत्वस्य व्यवच्छेदः, तथा च चित्रत्वावच्छिन्न प्रति नीलेतररूपत्वेनैक कारणत्वम्, एवं पीतेतररूपत्वेन कारणत्वमित्येवं दिशा षट् कारणानि, तथा च केवलनीलकपालारब्धे घटे न चित्रोत्पत्तिप्रसङ्गः, तत्र पीतेतररूपादिलक्षणकारणपञ्चकस्य सत्त्वेऽपि नीलेतररूपलक्षणकारणस्याभावादित्याह– **तेने**ति– उक्तदिशा षड्विधकार्यकारणभावस्याभ्युपगमेनेत्यर्थ. । **'केवलनीलकपालारब्धे'** इति तु 'केवलपीतकपालारब्धे' इत्यादीनामप्युपलक्षणम् । **यत् त्वि**ति– 'अवयवनिष्ठनीलाभावादिषट्कस्यैव' इत्येवकारेण नीलेतररूपत्वादिना हेतुत्वस्य व्यवच्छेदः, अत्र समवायसम्बन्धेन कार्यताव-

इति, तत्र नील-पीतोभयकपालारब्धे घटे पाकनाशितावयवपीते स्वचित्रेऽवयवे व्याप्यवृत्तिनीलोत्पत्तिकाले चित्रोत्पत्त्यापत्तिः, न च कार्यसहभावेन नीलाभावादीनां तद्धेतुत्वादयमदोषः, नील-पीत-श्वेतत्रितयकपालारब्धे पीत-श्वेतयोः क्रमेण नाशे श्वेतनाशकालेऽपि तदापत्तेरिति, पाकजचित्रे च न व्यभिचारः, पाकादेवावयवे नानारूपोत्पत्त्यनन्तरमेवावयविनि चित्रस्वीकारात्, पाकजचित्रस्वीकारे च विजातीयचित्रं प्रति नीलेतरत्वादिना हेतुता, अग्निसंयोगजचित्रे चावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताका

---

च्छेदक', स्वाश्रयससमवेतत्वसम्बन्धः कारणतावच्छेदकः, केवलनीलकपालारब्धघटे तु स्वाश्रयसमवेतत्वसम्बन्धेन पीताभावादिपञ्चकस्य सत्त्वेऽपि तेन सम्बन्धेन नीलाभावस्यासत्त्वात् तद्रूपकारणाभावान्न चित्रोत्पत्तिः, एवं केवलपीतकपालारब्धघटादावपि पीताभावाद्यभावान्न चित्रोत्पत्तिः, नील-पीतकपालद्वयारब्धघटे तु नीलाभावस्य पीतकपालमादाय पीताभावस्य नीलकपालमादाय रक्ताभावादीनां च कपालद्वयमप्यादाय सत्त्वात् तत्र चित्रोत्पत्तिः सम्भवतीत्यर्थः। निरुक्तकार्यकारणभावं दूषयति– **तत्रेति**– निरुक्तकार्यकारणभावे इत्यर्थः । **नीलेति**-यस्य घटस्यारम्भकमेकं कपाल नीलं कपालान्तरं च ने लपीतोभयकपालिकारब्धत्वान्नीलपीतोभयरूपारब्धचित्ररूपवत्, तत्र पाकेन कपालिकागतपीते नष्टे सति कपाले तत्र व्याप्यवृत्तिनीलोत्पत्तिकाले घटे चित्रोत्पत्त्यापत्तिस्तदानी नीलाभावस्यापि तत्र सत्त्वादिति व्याख्यानं 'स्वचित्रेऽवयवे' इति पाठमाश्रित्य स्यात्, किन्तु 'स्वचित्रेऽवयवे' इति पाठोऽधिक एव, तथा चात्रेत्थ व्याख्यानम्– कपालमेकं नीलमपर च पीतम्, तदुभयारब्धे घटे पाकनाशितावयवपीते सति व्याप्यवृत्तिनीलमुत्पद्यते कपाले नीलोत्पत्तित, तत्र कपाले पीतरूपनाशकाले तत्कपालमादाय नीलाभावोऽपि वर्तते, पीताभावादयस्तु पञ्च नीलकपालमादाय वर्तन्त एवेति निरुक्त रूपाभावषट्कस्य सत्त्वाच्चित्रोत्पत्त्यापत्ति' स्यादित्यर्थः, वस्तुतः 'पाकनाशितावयवपीतस्वचित्रेऽवयवे' इति पाठ. समीचीनः, तत्र नीलकपाल-पीतकपालोभयारब्धो घटः पूर्वं चित्ररूपवानेव, तत, पाकेन कपालस्य पीतं रूपं घटस्य च चित्रं रूप विनष्टम्, ततः कपाले नीलरूपमुत्पद्यते, ततः कपालद्वयस्य नीलरूपवत्त्वाद् विनष्टचित्ररूपे घटेऽपि नीलरूपमुत्पद्यते, तत्र घटे कपाले नीलोत्पत्तिकाले चित्रोत्पत्त्यापत्तिरित्यर्थो ज्यायानिति बोध्यम्। ननु कार्यसहभावेन नीलाभावादीनां हेतुत्वादवयवे नीलोत्पत्तिकालेऽवयविनि चित्ररूपोत्पत्त्यापादनं न सम्भवति, तदानी नीलरूपोत्पत्त्या नीलाभावरूपकारणस्याभावादित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **तद्धेतुत्वात्** चित्ररूपं प्रति हेतुत्वात् । **अयं** चित्रोत्पत्त्यापत्तिलक्षण । निषेधे हेतुमाह–**नीलपीतेति**– एकं कपाल नीलमपरं च पीतं तदन्यच्च श्वेतमिति तादृशकपालत्रयारब्धे घटे, पीत-श्वेतयोः क्रमेण नाशे– पूर्वं पीतस्य नाशः, तत श्वेतस्य नाश इत्येवं पीत-श्वेतयोर्नाशे सति, श्वेतनाशकाले तत्र श्वेताभावोऽपि विद्यत इति कार्यसहभावेन तत्र रूपाभावषट्कस्य सत्त्वात्, **तदापत्तेः** चित्ररूपापत्ते', अवयवे नानारूपसत्त्व एवावयविनि चित्ररूपस्याभिमतत्वात् पीतनाशकाले नीलरूपस्य श्वेतरूपस्य च सत्त्वात् तदानीं तदुभयमुपादाय चित्ररूपस्य सम्भवेन तदानीं तदापत्तेरिष्टापत्त्याऽपि परिहर्तुं शक्यत्वाच्च तदानी चित्ररूपापादनं कृतम्, श्वेतरूपनाशकाले च पीतरूपनाशस्य पूर्वमेव वृत्तत्वात् तदानी श्वेतस्याप्यभावादेकमेव नीलं रूपमवयवे समस्तीति न तदानीं चित्ररूपापादनस्येष्टापत्त्या परिहारो युक्त इत्याशयः। ननु पाकजचित्रमपि चित्रत्वात्मककार्यतावच्छेदकधर्माक्रान्तम्, तच्च नीलेतररूपादिलक्षणकारण विनाऽपि पाकादेव भवतीति व्यतिरेकव्यभिचारान्नीलेतररूपत्व-पीतेतररूपत्वादिना चित्रत्वावच्छिन्नं प्रति कारणत्वं न सम्भवतीत्यत आह– **पाकजचित्रे चेति**– पाकजत्वेनाभिमते चित्रे त्वित्यर्थ., तेन पाकजं चित्रं नास्ति किन्तु तत्रावयवगतनानारूपोत्पत्त्यनन्तरं तथाभूतनानारूपेभ्य एवावयविनि चित्रमित्येव स्वीकारेण व्यभिचारपरिहारस्य नायुक्तत्वम्। व्यभिचाराभावे हेतुमाह– **पाकादेवावयव** इति– अत्र 'पाकादवयवे' इति पाठो युक्तः, तथा च पाकजत्वेनाभिमतं चित्ररूपमपि नीलेतररूपादिभ्य एवोपजायत इति न तत्र व्यभिचार इति भावः। यदि च पाकस्थले पाकादेवावयविनि चित्ररूपमुपेयते तदा तच्चित्ररूपमवयवरूपजचित्ररूपतो विजातीयमेव, तथा च विजातीयचित्रत्वावच्छिन्नं प्रति नीलेतररूपत्वादिना हेतुत्वम्, विजातीयचित्रत्वावच्छिन्नं प्रति चावच्छेदकत्वसम्बन्धावच्छिन्ननीलजनकाग्निसंयोगादिनिष्ठप्रतियोगिताकाभावा रूपजनकविजातीयाग्निसयोगाश्च हेतव इत्येवमुपगमेऽपि न दोष इत्याह– **पाकजचित्रस्वीकारे चेति**। **नीलेतरत्वादिना**' इति स्थाने 'नीलेतररूपत्वादिना' इति पाठो युक्तः। सयोगस्याव्याप्यवृत्तित्वेनावयविनि समवायेन वर्तमानो नीलजनकाग्निसयोगादिरवयवेऽप्यवच्छेदकतासम्बन्धेन वर्तते, नीलजनकाग्निसंयोगादवयविनि नीलरूपमेवोत्पद्यते पीतजनकाग्निसयोगादवयविनि पीतरूपमेवोत्पद्यते, एव रक्तादिजनकाग्निसयोगादितो रक्तादिरेवोत्पद्यत इत्यतस्तेषां चित्ररूपोत्पत्तौ

नीलजनकाग्निसंयोगादेरभावा रूपजनकविजातीयाग्निसंयोगाश्च हेतवः, अस्तु वा तेजःसंयोगमात्रजन्ये विजातीये चित्रे विजातीयतेजःसंयोगस्य हेतुत्वम्, पाक-रूपोभयजन्ये विजातीये चित्रे चोभयोरेव, रूपमात्रजातिरिक्ते एव वा विजातीयतेजःसंयोगो हेतुः, फलबलेन वैजात्यकल्पनात् । न चाग्निसंयोगजमात्रातिरिक्ते रूपमेव हेतुरस्तु, इति विनिगमकाभावः, उभयस्थले नीलेतरादिसमाजाभावस्यैव विनिगमकत्वाद्" इत्याहुः ।

शिरोमणिभट्टाचार्यमतानुसारिणस्तु—"चित्रघटेऽव्याप्यवृत्तीन्येव नील-पीतादीनि नानारूपाणि, 'एकरूपम्' इति प्रतीतेः 'एको धान्यराशिः' इतिवत् समूहैकत्वविषयत्वात्, सविषयावृत्ति-व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वविरोधस्त्वप्रामाणिक एव, अत एव—

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुर-विषाणाभ्यां स नीलो वृष उच्यते" ॥

—[ ]

प्रतिबन्धकत्वम्, तदभावाना च समवायेन चित्ररूपं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन कारणत्वमित्यवश्य स्वीकरणम्, अन्यथा रूपजनकविजातीयाग्निसयोगमात्रस्य चित्ररूपं प्रति कारणत्वे नीलजनकतेजस्सयोगोऽपि रूपजनकविजातीयाग्निसंयोगो भवत्येवेति ततोऽपि यत्रावयविनि नीलरूपत्पमुद्यते तत्र चित्ररूप स्यात्, केवलनिरुक्तप्रतिबन्धकाभावानामेव विजातीयचित्र प्रति हेतुत्वे च यत्र न रूपजनकविजातीयाग्निसंयोगस्तत्रापि तादृशरूपमुत्पद्येतेत्यतो रूपजनकविजातीयाग्निसयोगानामपि हेतुत्वं तत्र स्वीकरणीयमित्याशयः । प्रकारान्तरेण कार्यकारणभावमुपदर्शयति— **अस्तु वेति** । 'तेजस्सयोगमात्र०' इति मात्रपदेन रूपस्य व्यवच्छेद । **उभयोरेव** पाक-रूपोभयोरेव, हेतुत्वमित्यनुवर्तते । लाघवादाह— **रूपमात्रजातिरिक्त एवेति**— यच्च तेजस्सयोगमात्रजन्यं चित्रम्, यदपि पाक-रूपोभयजन्य चित्रम्, तदुभयमपि रूपमात्रज न भवति तेन रूपमात्रजातिरिक्तत्वेनोभयोरपि सङ्ग्रहः । तदुभयकारणे तेजस्सयोगे वैजात्यकल्पने किं नियामकमित्यपेक्षायामाह— **फलबलेनेति**— तादृशतेजस्संयोगादुभयविचित्ररूपमुत्पद्यत इति तद्बलात् तत्र वैजात्य कल्प्यत इत्यर्थः । ननु तेजस्सयोगमात्रजे चित्रे तेजस्संयोगो हेतु', तेजस्सयोगमात्रजातिरिक्ते च रूपमेव हेतुरित्येव किं न स्यात्, अत्रापि केवलरूपजन्यस्य पाक-रूपोभयजन्यस्य च चित्रस्याग्निसयोगमात्रजातिरिक्तत्वेन सङ्ग्रहतो लाघवस्य व्यक्तत्वात् पूर्वदिशेव कारणत्वं नैतद्दिशेत्यत्र विनिगमकस्य कस्यचिदभावादित्याशङ्क्य प्रतिक्षिपति— **न चेति** । प्रतिक्षेपे हेतुमाह— **उभयस्थले** इति— यच्च तेजस्सयोगजन्यं चित्रम्, यदपि पाक-रूपोभयजन्य चित्रम्, तदुभयस्थले नीलेतररूपादिसमाजो नापेक्षित इति नीलेतररूपादिसमाजाभाव उभयत्राऽविशिष्ट., रूपमात्रजे तु चित्रे नीलेतररूपादिसमाजोऽपेक्षित एवेति, तथा च यत्रैव चित्रे नीलेतररूपादिसमाजस्य कारणत्वं तत्रैव रूपमात्रस्य कारणत्वमन्यत्र तु विजातीयतेजस्संयोग एव हेतुरिति प्राचीनमतपरिष्कार' ।

शिरोमणिभट्टाचार्यमतानुसारिणां नव्यनैयायिकाना मतमुपदर्शयति— **शिरोमणिभट्टाचार्यमतानुसारिणस्त्विति**— अस्य 'आहु.' इत्यनेन सम्बन्धः । '**अव्याप्यवृत्तीन्येव**' इत्येवकारेण व्याप्यवृत्तेर्व्यवच्छेदः, चित्रघटे नील-पीतादीनि यदि व्याप्यवृत्तीनि स्युस्तदा नीलकपालावच्छेदेनापि घटे पीतादीनामुपलम्भ प्रसज्येतातोऽव्याप्यवृत्तीन्येव तानीति । यथा च धान्यसमूहगतैकत्वविषयकत्वेन 'एको धान्यराशि' इति प्रतीतिरुपपद्यते, तथा रूपसमूहगतैकत्वविषयकत्वेन 'एक रूपम्' इति प्रतीतिरपि चित्रघटगतनानारूपेपूपपद्यत इत्याह— **एकरूपमिति प्रतीतेरिति** । **सविषयावृत्तीति**— सविषयावृत्तिर्या व्याप्यवृत्तिवृत्तिर्जातिस्तस्या अव्याप्यवृत्तिवृत्तित्वविरोध, अव्याप्यवृत्तिवृत्तित्व न सम्भवतीति नियमस्त्वप्रामाणिक एवेत्यर्थ., उक्तनियमे सविषयावृत्तित्व यदि जातिविशेषणतया नोपादीयते तदा व्याप्यवृत्तय ईश्वरगता ज्ञानेच्छाप्रयत्नास्तद्वृत्ताना ज्ञानत्वेच्छात्व-प्रयत्नत्वजातीनामस्मदाद्यात्मगता अव्याप्यवृत्तयो ये ज्ञानेच्छाप्रयत्नास्तद्वृत्तित्व समस्त्येवेति प्राचीनमतेऽपि नोक्तनियमः स्यादिति तदुपादानम्, व्याप्यवृत्ति नीलादिक नीलावयवादिमात्रगत तद्वृता जातिर्नीलत्वादिका तस्या अव्याप्यवृत्तिवृत्तित्वं न सम्भवतीति, अय च नियम एकस्मिन्नवयविन्यव्याप्यवृत्तिनानारूपाभ्युपगमे युज्येत, ततो नाव्याप्यवृत्तिनानारूपसम्भव इति प्राचीनमतस्य खण्डनार्थमुक्तनियमस्याऽप्रामाणिकत्वमुक्तम्, तथा चोक्तनियमस्याऽप्रामाणिकस्य भङ्गो न दोषायेति भावः । **अत एव** एकस्मिन्नवयविन्यव्याप्यवृत्तिनानारूपस्याभ्युपगमादेव. 'लोहितः' इत्यादिस्मृतिरेकस्मिन् वृषभे नानारूप-

इति स्मृतिरप्युपपद्यते । अथाऽव्याप्यवृत्तिनीलादिकल्पने गौरवम्, तथाहि—अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलेतररूपादीनां प्रतिबन्धकत्वमस्मिन् पक्षे वाच्यम्, अन्यथा पीतावयवावच्छेदेन नीलोत्पत्तिप्रसङ्गात्, न च नीलस्य स्वाश्रयावच्छेदेन नीलजनकत्वस्वाभाव्यादेव न तदापत्तिः, विनैतादृशप्रतिबध्यप्रतिबन्धकभावं तथास्वाभाव्यानिर्वाहात् । ननु समवायेन नीलं जायत एव पीतावयवावच्छेदेनेत्यत्र चापादकाभाव इति चेत् ? न— समवायस्यैवावच्छेदकताया अपि कारणनियम्यत्वात्, एवं च नीलादौ नीलेतररूपादीनाम्, नीलेतररूपादौ वा नीलादीनां प्रतिबन्धकत्वे विनिगमकाभावः, मम तु नीलेतररूपादौ नीलादीनां न प्रतिबन्धकत्वम्, नील-पीतारब्धे नीरूपत्वप्रसङ्गस्य बाधकत्वादिति चेत् ? मैवम्— ममापि नीलत्वादिकमेव प्रतिबध्यतावच्छेदकम्, न तु नीलेतररूपत्वादि गौर-

समावेशप्रतिपादिका तदैवोपपद्येत यद्येकस्मिन्नानाव्याप्यवृत्तिरूपाभ्युपगमः स्यादिति । प्राचीनमतानुयायी शङ्कते— **अथेति** । अवयविनि अव्याप्यवृत्तिरूप तदैव स्याद् यद्यवयवे अवच्छेदकतासम्बन्धेन तदुत्पद्येत, तद् यदि सर्वावयवेषूत्पद्येत तदा व्याप्यवृत्त्येव स्यान्नाव्याप्यवृत्तीत्यत. समवायेनावयविन्यव्याप्यवृत्तिनीलमुत्पद्यमानमवच्छेदकतया तत्रैवावयवे उत्पद्यते यत्र समवायेन नीलरूपमस्ति, यत्र तु समवायेन नीलेतररूपादीनि सन्ति तत्रावच्छेदकतया तन्नोत्पद्यत इत्येतदर्थं समवायेन नीलेतररूपादिकमवच्छेदकतया नील प्रति प्रतिबन्धकं वाच्यमिति गौरवमित्याह— **तथाहीति** । **'नीलादिकम्'** इत्यत्रादिपदात् पीतादेरुपग्रहः । **'नीलेतररूपादीनाम्'** इत्यत्रादिपदात् पीतेतररूपादेः परिग्रहः । **अस्मिन् पक्षे** एकस्मिन्नवयविन्यव्याप्यवृत्तिनानारूपाभ्युपगन्तृपक्षे । **अन्यथा** अवच्छेदकतासम्बन्धेन नीलादिक प्रति समवायेन नीलेतररूपादीनां प्रतिबन्धकत्वानभ्युपगमे । नन्ववयवगत नीलमवयविगतनीलं प्रति कारणम्, तस्य चायमेव स्वभावः, यदुत— स्वाश्रयावच्छेदेनैव नीलमुपजनयति, इति न पीतावयवावच्छेदेन नीलोत्पत्तिप्रसङ्ग इत्याशङ्कय प्रतिक्षिपति— **न चेति** । **न तदापत्तिः** न पीतावयवावच्छेदेन नीलोत्पत्त्यापत्ति· । निषेधे हेतुमाह— **विनेति** । **एतादृशेति**— अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलेतररूपादीनां प्रतिबन्धकत्वमित्येवंस्वरूपेत्यर्थ. । **तथास्वाभाव्येति**- नीलस्य स्वाश्रयावच्छेदेन नीलजननस्वाभाव्येत्यर्थ. । उक्ताशङ्कायां नवीनानुयायी समाधानमाशङ्कते— **नन्विति**— समवायेनावयविनि जायमानं नीलं पीतावयवावच्छेदेनापि जायत इत्यापादनमापादकाभावान्न सम्भवतीत्यर्थ । यथा समवायेन नीलं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलं कारणमिति कार्यकारणभावबलादेवावयविनि नीलसमवायस्य सम्भवस्तथैवावयविगतनीलस्यावच्छेदकता नीलावयव एव न पीतावयवादावित्यत्रापि किञ्चित् कारणं वाच्यमेव, तादृशकारणबलादेवावच्छेदकताया नियमनसम्भवादित्याशयेनोक्तसमाधानाशङ्का प्रतिक्षिपति— **नेति** । **एवं च** अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलेतररूपादीनां प्रतिबन्धकत्वस्य नव्यमते आवश्यकत्वे च । **नीलादाविति**— यथाऽवच्छेदकतासम्बन्धेन नीलादिक प्रति समवायसम्बन्धेन नीलतररूपादीनां प्रतिबन्धकत्व तथाऽवच्छेदकतासम्बन्धेन नीलेतररूपादिकं प्रति समवायसम्बन्धेन नीलादीना प्रतिबन्धकत्वमपि विनिगमकाभावान्नव्यमते प्रसज्येतेत्यर्थः । **मम त्विति**— प्राचीनमते तु यथा समवायेन नीलादिक प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलेतररूपादीना प्रतिबन्धकत्वमिति नानारूपवदवयवारब्धेऽवयविनि नीलरूपाद्यसम्भवाच्चित्र रूप सिद्ध्यति, तथा समवायेन नीलेतररूपादौ स्वसमवायिसमवेतत्वसम्बन्धेन नीलादीना प्रतिबन्धकत्वमिति न सम्भवति, तथा सति नील-पीताद्यवयवारब्धे यथा न नील-पीतादिरूपं तथा चित्ररूपस्यापि नीलेतररूपत्वादिलक्षणप्रतिबध्यतावच्छेदकधर्माक्रान्तत्वेन न स्यात् तत्र सम्भव इति नीरूपमेव तदवयविस्वरूपमिति तत्प्रत्यक्षमपि न भवेदिति विनिगमकस्य भावान्नीलादिक प्रत्येव नीलेतररूपादीना प्रतिबन्धकत्वम्, न तु नीलेतररूपादिक प्रति नीलादीनां प्रतिबन्धकत्वमित्यर्थः । उक्तप्राचीनमतानुयायिशङ्कां नवीनमतानुयायिनः प्रतिक्षिपन्ति— **मैवमिति** । **ममापि** नवीनमतानुयायिनोऽपि । **नीलत्वादिकमेवेति**— अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायसम्बन्धेन नीलेतररूपादीनामेव प्रतिबन्धकत्वम्, न त्ववच्छेदकतासम्बधेन नीलेतररूपादिक प्रति समवायसम्बन्धेन नीलादीनां प्रतिबन्धकत्वम्, नीलेतररूपत्वस्य प्रतिबध्यतावच्छेदकत्वकल्पनापेक्षया नीलत्वस्य प्रतिबध्यतावच्छेदकत्वे लाघवादिति गौरवरूपबाधकबलान्न नीलेतररूपत्व प्रतिबध्यतावच्छेदकमिति विनिगमकस्य वक्तु शक्यत्वादित्यर्थः । ननु अवच्छेदकतासम्बन्धेन नील प्रति समवायसम्बन्धेन नीलेतररूपत्वेन प्रतिबन्धकत्वे नीलेतररूपत्वं प्रतिबन्धकतावच्छेदकम्, अवच्छेदकतासम्बन्धेन नीलेतररूपत्वावच्छिन्न प्रति समवायसम्बन्धेन नीलत्वेन प्रतिबन्धकत्वे नीलत्वं प्रतिबन्धकतावच्छेदकमिति नीलेतररूपत्वापेक्षया नीलत्व लघुभूतमिति तदेव प्रतिबन्धकतावच्छेदकं भवितुमर्हतीत्यत्रापि दीयतां

वादिति वक्तुं शक्यत्वात्, न च, नीलत्वेन प्रतिबन्धकत्वम्, न तु नीलेतरत्वेन गौरवादित्येव किं न स्यादिति वाच्यम्, प्रतिबन्धकतावच्छेदकगौरवस्यादोषत्वात्। अस्तु वाऽवच्छेदकतया नीलादौ समवायेन नीलादीनामेव हेतुत्वम्, न च नानारूपवत्कपालारब्धघटनीलस्य तत्कपालावच्छेदेनोत्पत्तिप्रसङ्गः, केवल-नीलत्वादिनैव तद्धेतुत्वात्; न च केवलत्वं नीलाभावासमानाधिकरणत्वमिति गौरवम्, अनवच्छिन्नस्य समवायेन नीलादिहेतुत्वस्यैव तदर्थत्वात्, समवायेन नीलादौ च स्वसमवायिसमवेतत्वसम्बन्धेन नीला-दीनां हेतुत्वम्, व्याप्यवृत्तिनीलस्थलेऽव्याप्यवृत्तित्ववारणाय चावच्छेदकतया नीलादौ स्वसमवायिसमवेत-द्रव्यसमवायित्वसम्बन्धेन नीलेतररूपादीनां हेतुत्वम्, इत्यव्याप्यवृत्तित्वपक्षेऽष्टादश कार्यकारणभावाः,

दृष्टिरित्याशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य 'वाच्यम्' इत्यनेनान्वयः। 'नीलेतरत्वेन' इति स्थाने 'नीलेतररूपत्वेन' इति पाठो युक्तः। निषेधे हेतुमाह- **प्रतिवन्धकतावच्छेदकगौरवस्येति**- नीलत्वावच्छिन्नं प्रति नीलत्वेन कारणत्वमवयव-गतनीलरूपस्यावयविगतनील प्रति कारणत्वानुरोधेन सुव्यवस्थितम्, तदेव नीलत्व प्रतिवध्यतावच्छेदकतयापि यद्युपेयते तदा प्रतिवन्धकाभावस्यापि कार्यतावच्छेदक तदिति लाघवात् तस्यैव कार्यतावच्छेदकत्व युक्तम्, नीलेतररूपत्वादिक त्वर्थसमाज-ग्रस्तत्वान्न कस्यचित् कार्यतावच्छेदकतया व्यवस्थितमिति तस्य प्रतिवन्धकाभावकार्यतावच्छेदकतयाऽभ्युपगमोऽपूर्वत्वान्नादर-णीय इत्यनाहार्याऽप्रामाण्यज्ञानानास्कन्दिततदभावनिश्चयत्वादिकं गुरुभूतमपि यथा प्रतिवन्धकतावच्छेदकं तथा नीलेतररूपत्वादिक गुरुभूतमपि प्रतिबन्धकतावच्छेदकमित्येव प्रतिवन्धकतावच्छेदकगौरवस्यादोषत्वादित्यर्थ। ननु गुरुधर्मस्य प्रतिवन्धकताव-च्छेदकत्वे तदवच्छिन्नप्रतियोगिताकाभावत्व गुरुभूतमेव कारणतावच्छेदकतया वाच्यमिति कारणतावच्छेदकगौरवस्य दोषत्व स्यादेवेति चेद्? न- यद्धर्मावच्छिन्न प्रति लघुधर्मस्य यन्निष्ठकारणतावच्छेदकत्वं सम्भवति तद्धर्मावच्छिन्न प्रत्येव तन्निष्ठ-कारणतावच्छेदकत्वं गुरुभूतस्य न सम्भवति, न तु सामान्यत एवेति, इतोऽप्यस्वरसादाह- **अस्तु वेति**। '**नीलादौ**' इत्यादिपदात् पीतादेरुपग्रहः, एव '**नीलादीनाम्**' इत्यत्र। ननु यत्रैकं कपाल नील-पीताद्यनेकरूपवत् तत्र तदारब्धघटो नील-पीताद्यनेकरूपवान् भवति, तस्य घटस्य यद् नीलं रूप तन्मात्रस्य नानारूपवत्कपालावच्छेदेनोत्पत्तिप्रसङ्ग., तस्मिन्नपि कपाले समवायेन नीलरूपस्य सत्त्वादित्याशङ्क्य प्रतिक्षिपति- **न चेति**। निषेधे हेतुमाह- **केवलनीलत्वादिनैवेति**। **तद्धेतुत्वात्** नीलहेतुत्वात्। ननु यत्र नानारूपं तत्र नीलं पीताद्यवच्छेदेन तत्रैव वर्त्तमानस्य नीलाभावस्य समानाधिकरणमिति नीलाभावा-सामानाधिकरण्यलक्षणकैवल्याभावान्न भवतीत्येतावता तत्कपालावच्छेदेन तस्मिन् घटे नीलमात्रोत्पत्तिप्रसङ्गस्य वारणेऽपि नीलाभावासामानाधिकरण्यविशिष्टनीलत्वस्य कारणतावच्छेदकत्वे गौरवं स्यादित्याशङ्क्य प्रतिक्षिपति- **न चेति**। अवच्छेदकता-सम्बन्धेन नील प्रति समवायसम्बन्धेनानवच्छिन्ननीलत्वेन नीलस्य हेतुत्वेन नानारूपवत्कपाले नीलस्य किञ्चिदवच्छेदेनैव वर्त्तमानस्यानवच्छिन्नत्वाभावेन नीलमात्र प्रति कारणत्वासम्भवादिति निषेधहेतुमुपदर्शयति- **अनवच्छिन्नस्येति**- नीलादेरिति दृश्यम्। **तदर्थत्वात्** केवलनीलत्वादिना नीलादिहेतुत्वमिति शब्दार्थत्वात्। अवच्छेदकत्वसम्बन्धेन नीलादौ समवायसम्बन्धेन नीलादीनां हेतुत्वमित्यत्र षट् कार्यकारणभावा. प्राप्नुवन्ति, अन्यांश्च षट् कार्य-कारणभावानुपदर्शयति- **समवायेनेति**। '**नीलादौ**' इत्यत्रादिपदात् पीतादेरुपग्रह., एवं '**नीलादीनाम्**' इत्यत्रापि, यत्र कपालद्वयमपि नीलरूपवदेव तत्र तदुभयारब्धघटे व्याप्यवृत्त्यैव नीलमुत्पद्यते, एव पीतकपालद्वयारब्धघटादावपि व्याप्यवृत्त्यैव पीतादिकमुत्पद्यते, तत्रा-प्यवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायसम्बन्धेन नीलादिक कारणमिति कार्यकारणभावबलादव्याप्यवृत्तिनीलाद्यु-त्पत्ति प्रसङ्गस्य वारणायान्येऽपि षट् कार्यकारणभावा कल्पनीया इत्याह- **व्याप्यवृत्तिनीलस्थल** इति। '**नीलादौ**' इत्यत्रादिपदात् पीतादेर्ग्रहणम्, '**नीलेतररूपादीनाम्**' इत्यत्रादिपदात् पीतेतररूपादीना ग्रहणम्, तथा च अवच्छेद-कतासम्बन्धेन नील प्रति स्वसमवायिसमवेतद्रव्यसमवायित्वसम्बन्धेन नील कारणम्, एवमवच्छेदकतासम्बन्धेन पीत प्रति स्वसमवायिसमवेतद्रव्यसमवायित्वसम्बन्धेन पीतं कारणमित्येवंदिशा षट् कार्यकारणभावा., तथा च यत्र कपालद्वये नील-मेव रूप तत्र तदारब्धघटे व्याप्यवृत्त्यैव नीलरूपं नाव्याप्यवृत्ति, यतस्तद्घटस्य नीलरूपमव्याप्यवृत्ति तदा भवेद् यदि तदवच्छेदकतया तद्घटावयवे नीलकपाले उत्पद्येत, न च तत्रावच्छेदकतया तदुत्पत्ति सम्भवति, तत्कारणस्य नीलेतर-रूपस्य स्वसमवायिसमवेतद्रव्यसमवायित्वसम्बन्धेन तत्राभावात्, यत्र चैकं कपाल नीलमपर च पीतं रक्तादि वा तत्र तदुभयारब्धस्य घटस्य यद् नीलरूप तदवच्छेदकतया नीलकपाले उत्पत्तुमर्हति, यत. पीतकपालगतस्य नीलेतररूपस्य पीतस्य स्वसमवायि यत् पीतकपाल तत्र समवेतं द्रव्यं स एव घटस्तत्समवायित्व नीलकपाले वर्तत इति तेन सम्बन्धेन

चित्ररूपपक्षेऽप्येतावन्त एव, चित्ररूपे नीलेतररूपादिषट्कस्य, नीलादौ च नीलादिषट्कस्य हेतुत्वम्, नीलेतरादिषट्कस्य च नीलादौ प्रतिबन्धकत्वमित्यादिनाऽऽधिक्याभावात्, वस्तुतोऽवच्छेदकतया नीलादौ स्वसमवायिसमवेतद्रव्यसमवायिसमवेतत्वसम्बन्धेन नीलेतररूपादिविशिष्टनीलत्वादिनैव हेतुत्वम्, न च नीलेतरत्वाद्यवच्छिन्नं प्रति नीलविशिष्टनीलेतरत्वादिना हेतुत्वेन विनिगमकाभावः, नीलत्वापेक्षया नीलेतरत्वस्य गुरुत्वात्, इत्थं च, अभिनिष्कर्षेऽस्माकं द्वादशैव कार्यकारणभावा इति लाघवाद्" इत्याहुः, तदसत्- चित्ररूपस्वीकारपक्षेऽपि नीलादौ नीलेतरादिप्रतिबन्धकत्वेनैव शुक्लावयवमात्रारब्धे नीलाद्यनुत्पत्ति-

---

पीतरूपस्य तत्र सत्त्वात्, उक्तदिशा त्रयाणां षट्कार्यकारणभावानां सम्मेलने अवयविगताव्याप्यवृत्तिनानारूपाभ्युपगमपक्षेऽष्टादश कार्यकारणभावा भवन्तीत्याह- **इत्यव्याप्यवृत्तित्वपक्ष** इति । चित्ररूपपक्षेऽप्यष्टादश कार्यकारणभावा इति नाव्याप्यवृत्तिरूपाभ्युपगमापेक्षया तत्पक्षे लाघवम्, किन्त्वतिरिक्तचित्ररूपमभ्युपगन्तव्यमिति तत्कल्पनप्रयुक्तगौरवमित्युपदर्शयति- **चित्ररूपपक्षेऽपीति** । **एतावन्त एव** अष्टादश एव कार्यकारणभावाः । कथं तत्राष्टादश कार्यकारणभावा इत्यपेक्षायामाह- **चित्ररूप** इति । '**नीलेतररूपादि**' इत्यादिपदात् पीतेतररूपादेरुपग्रहः । 'नीलेतररूपादिषट्कस्य' इत्यस्य 'हेतुत्वम्' इत्यनेन सम्बन्धः । '**नीलादौ**' इत्यादिपदात् पीतादेरुपग्रहः, एवं '**नीलादि**' इत्यत्रापि । नीलपीतकपालद्वयारब्धघटे नीलाद्युत्पत्तिवारणाय नीलादौ नीलेतररूपादिषट्कस्य प्रतिबन्धकत्वमिति नीलेतररूपाभावादिषट्कस्य नीलादौ कारणत्वमित्याह- **नीलेतरादिषट्कस्य चेति**- अत्र 'नीलेतररूपादिषट्कस्य च' इति पाठो युक्तः । अव्याप्यवृत्तिरूपवादी स्वपक्षे द्वादश कार्यकारणभावा एवेत्युपदर्शनेन अष्टादशकार्यकारणभावाभ्युपगन्तृचित्ररूपवाद्यपेक्षया लाघवमावेदयितुमाह- **वस्तुत** इति । '**नीलादौ**' इत्यत्रादिपदात् पीतादेरुपग्रहः, '**नीलेतररूपादि**' इत्यादिपदात् पीतेतररूपादेरुपग्रहः, यत्रैकस्मिन् कपाले नीलरूपमपरस्मिन् कपाले पीतरूपम्, तादृशकपालद्वयारब्धघटे जायमाननीलस्यावच्छेदकतया नीलकपाले उत्पत्तिरुक्तकार्यकारणभावबलात् सम्भवति, यतः स्वं नीलेतररूपं पीतरूपम्, तत्समवायि पीतकपालम्, तत्समवेतद्रव्यं तदुभयारब्धघटः, तत्समवायि नीलकपालम्, तत्समवेतत्वं तत्कपालनीले समस्तीति तेन सम्बन्धेन नीलेतररूपविशिष्टं नीलं तत्कपालनीलम्, तत् समवायसम्बन्धेन तस्मिन् कपाले वर्तत इति तद्रूपकारणबलात् तद्घटनीलरूपं तत्रावच्छेदकतयोत्पद्यत इति तद्घटनीलस्य भवत्यव्याप्यवृत्तित्वम्, यत्र तु नीलकपालद्वयादेव नीलघट उत्पद्यते तत्र तदारम्भके कपाले नैकस्मिन्नपि निरुक्तसम्बन्धेन नीलेतररूपविशिष्टनीलरूपमिति न तत्रावच्छेदकतया नीलोत्पत्तिसम्भव इति तद्घटनीलरूपस्य भवति व्याप्यवृत्तित्वमिति । अत्र विनिगमकाभावात् कार्यकारणभावमाशङ्क्य प्रतिक्षिपति- **न चेति** । '**नीलेतरत्वाद्यवच्छिन्नम्**' इति स्थाने 'नीलेतररूपत्वाद्यवच्छिन्नम्' इति पाठो युक्तः, आदिपदात् पीतेतररूपत्वादेरुपग्रहः । '**नीलविशिष्टनीलेतरत्वादिना**' इति स्थाने 'नीलविशिष्टनीलेतररूपत्वादिना' इति पाठो युक्तः, अत्रादिपदात् पीतविशिष्टपीतेतररूपत्वादेर्ग्रहणम्, यत्रावयवद्वये एकजातीयमेव नीलादिरूपं तत्रावयविन्यप्येकमेव नीलादिकम्, तस्याप्यव्याप्यवृत्तित्वं न सम्भवति, यतोऽवयविनि यदि नीलरूपं तस्य पीतेतररूपत्व-रक्तेतररूपत्वाद्यन्यतमलक्षणकार्यतावच्छेदकाक्रान्तत्वं सम्भवति तत्र पीतविशिष्टपीतेतररूपाद्यन्यतमस्यैव कारणत्वं स्यात्, न च पीतविशिष्टपीतेतररूपाद्यन्यतमस्य तत्र सत्त्वमिति, यत्र तु नील-पीतावयवाभ्यामारब्धेऽवयविनि नील-पीतोभयरूपं तत्र नीलरूपं पीतेतररूपत्वलक्षणकार्यतावच्छेदकावच्छिन्नं भवति, तत् प्रति पीतविशिष्टपीतेतररूपं यत् कारणं तदपि समस्तीति तस्याव्याप्यवृत्तित्वमुपपद्यते, एवमुक्तदिशा पीतरूपस्यापि तत्राव्याप्यवृत्तित्वमुपपन्नमिति, एवमुक्तदिशा विनिगमकाभावात् षण्णां कार्यकारणभावान्तराणां प्राप्तावष्टादश कार्यकारणभावा अव्याप्यवृत्तित्वपक्षेऽपि स्युरिति शङ्कितुरभिप्रायः । निषेधे हेतुमाह- **नीलत्वापेक्षयेति** । '**नीलेतरत्वस्य**' इति स्थाने 'नीलेतररूपत्वस्य' इति पाठो युक्तः । नव्यमतवादी स्वमतमुपसंहरति- **इत्थं चेति**- 'वस्तुतः' इत्यादिग्रन्थोक्तदिशा कार्यकारणभावोररीकारे चेत्यर्थः ।

प्राचीनमतानुयायी नवीनमतं प्रतिक्षिपति- **तदसदिति** । '**नीलादौ**' इत्यत्रादिपदात् पीतादेर्ग्रहणम् । '**नीलेतरादि**' इति स्थाने 'नीलेतररूपादि' इति पाठो युक्तः, तत्रादिपदात् पीतेतररूपादेः परिग्रहः, अत्र प्रतिबध्यतावच्छेदकसम्बन्धः समवायः, प्रतिबन्धकतावच्छेदकसम्बन्धश्च स्वसमवायिसमवेतत्वम्, समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन यदि नीलं न कारणं तर्हि शुक्लमात्रावयवारब्धे घटे शुक्लमेव रूपं भवति कथं न नीलमिति नाशङ्कनीयम्, तत्र

**निर्वाहात्, नीलादौ नीलादिहेतुत्वाकल्पनात् कार्यकारणभावसङ्ख्यासाम्यात्, अव्याप्यवृत्तिनानारूप-तत्प्राग-भाव-ध्वंसादिकल्पने परं परस्यैव गौरवात्। किञ्च, अव्याप्यवृत्तिरूपपक्षेऽवच्छेदकतासम्बन्धेन रूपे उत्पन्ने पुनस्तेनैव सम्बन्धेनावयवे रूपोत्पत्तिवारणायाऽवच्छेदकतासम्बन्धेन रूपं प्रत्यवच्छेदकतासम्बन्धेन रूपं प्रतिबन्धकं कल्पनीयमिति गौरवम्, न चावयविनि समवायेनोत्पद्यमानमेवावयवेऽवच्छेदकतयोत्पत्तुमर्हतीत्यवयविनि रूपस्य प्रतिबन्धकस्य सत्त्वेन रूपसामग्र्यभावादेव नावयवेऽवच्छेदकतया तदा रूपोत्पत्तिरिति वाच्यम्, एवं ह्यवयविनिष्ठरूपाभावोऽवच्छेदकतासम्बन्धेन रूपं प्रति हेतुर्वाच्यः, तथा च नानारूप-वत्कपालारब्धघटस्य नीलरूपादेर्नीलकपालिकावच्छेदेनाऽनुत्पत्तिप्रसङ्गात्, तदवयविनि कपाले रूपसत्त्वात्, अपि च, नील पीतवत्यग्निसंयोगान् कपालनीलनाशात् तदवच्छेदेन रक्तं न स्यात् समवायेन रूपं प्रति तेन रूपस्य प्रतिबन्धकत्वात्, तदवच्छिन्नरूपे तदवच्छिन्नरूपस्य प्रतिबन्धकत्वकल्पने चातिगौरवम् ।**

---

नीलप्रतिबन्धकस्य नीलेतररूपस्य सत्त्वेन तदभावरूपकारणाभावादेव नीलोत्पत्तेस्तत्रासम्भवात्, एव पीतेतररूपादेः पीत-रूपादिप्रतिबन्धकस्य तत्र सत्त्वेन तदभावरूपकारणाभावान्न पीताद्युत्पत्तिरपि, श्वेतरूपप्रतिबन्धकस्य श्वेतेतररूपस्य तत्रा-भावादेव तद्बलाच्छ्वेतरूपोत्पत्तिस्तत्र सम्भवति, तथा च नीलादौ नीलादिषट्कस्य हेतुत्वाकल्पनाच्चित्ररूपपक्षेऽपि द्वादशैव कार्यकारणभावा इति वादद्वयेऽपि कार्यकारणभावसङ्ख्यासाम्यमित्याह– **कार्यकारणभावसङ्ख्यासाम्यादिति** । ननु भवतु मतद्वयेऽपि कार्यकारणभावसङ्ख्यासाम्यम्, तथाऽपि चित्ररूप-तत्प्रागभाव-तद्ध्वंसादिकल्पनगौरवं प्राचीनमते समस्ती-त्यत आह– **अव्याप्यवृत्तीति**– यत्र प्राचामेकं चित्रं तत्प्रागभावादि तत्र नव्यानामनेकान्यव्याप्यवृत्तिरूपाणि तत्प्रागभाव-ध्वंसादयश्चेति नव्यानामेव गौरवम् । **परमित्यस्य** किन्त्वित्यर्थः । **परस्य** नव्यमतानुयायिन. । नव्यमते गौरवान्तरमप्यु-पदर्शयति– **किञ्चेति** । **तेनैव सम्बन्धेन** अवच्छेदकतासम्बन्धेनैव । ननु यदेव रूपं समवायेनावयविन्युत्पद्यते तदेव तदवयवेऽवच्छेदकतासम्बन्धेनोत्पद्यते नान्यत्, अवयविनि समवायेन रूपस्योत्पत्त्यनन्तर च न पुना रूपस्य समवायेनोत्पत्तिः, तदर्थं च समवायेन रूप प्रति समवायेन रूपस्य प्रतिबन्धकत्वं तदभावस्य च कारणत्वम्, तथा च समवायेन रूपोत्पत्ति-कारणस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावस्य समवायेन रूपोत्पत्त्यनन्तरमभावात् पुन. समवायेन रूप नोत्पद्यत इत्यत एवावच्छेदकतासम्बन्धेनाप्यवयवे रूपं पुनर्नोत्पत्तुमर्हतीति नावच्छेदकतासम्बन्धेन रूप प्रत्यवच्छेदकतासम्बन्धेन रूपस्य प्रतिबन्धकत्वं कल्प्यत इति न तत्कल्पनाप्रयुक्तगौरवमित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **तदा** रूपोत्पत्त्यनन्तरम् । समवाय-सम्बधेन रूप प्रति कारणीभूतस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावस्यावयविनिष्ठस्यैवावच्छेदकतासम्बन्धेन रूपं प्रत्यपि कारणत्वमायातम्, तथा च नानारूपवत्कपालद्वयारब्धे घटे यद् नील-पीतादि नानारूप तस्याव्याप्यवृत्तित्व तदैव स्याद् यदि नीलकपालिकावच्छेदेन घटे नीलरूपं पीतकपालिकावच्छेदेन पीतरूपमित्युपगम्येत, कपाले तूभयरूपस्यैव भावेन तदवच्छेदे-नैकैकरूपसमावेशस्य कर्तुमशक्यत्वात्, तथा च घटे जायमान नीलादि यदि अवच्छेदकतया कपालिकायामप्युपजायेत तदा स्यात् तस्य कपालिकावच्छिन्नत्वम्, तच्च न सम्भवति घटे नीलाद्युत्पत्तितः प्रागेव कपाले समवायेन नीलादेः सत्त्वेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकनीलाभावस्य कपालरूपावयविनिष्ठस्य तदानीमभावेन तद्रूपकारणाभावात् कपा-लिकायामवच्छेदकतासम्बन्धेन नीलाद्युत्पत्तेरसम्भवेन तद्घटेऽपि नीलरूपादेर्नीलकपालिकाद्यवच्छेदेनोत्पत्त्यसम्भवादिति निषेध्य-हेतुमुपदर्शयति– **एवं हीति** । '**निष्ठ**' इति स्थाने 'निष्ठ' इति पाठ । '**नीलकपालिकावच्छेदेन**' इति स्थाने 'नीलकपालिकाद्यवच्छेदेन' इति पाठो युक्त. । **तदवयविनि** नीलकपालिकाद्यवयविनि । दोषान्तरमाह– **अपि चेति** । **नील-पीतवतीति**– यत्र नील-पीतकपालद्वयारब्धे नील-पीतोभयवति घटेऽग्निसंयोगाद् नीलकपालस्य नीलनाशात् पीत-कपालावच्छेदेन विद्यमानपीतरूपवत्येव घटे विनष्टनीलकपालावच्छेदेन रक्तरूपमुपजायते तद् न स्यात्, समवायसम्बन्धेन रूप प्रति समवायसम्बन्धेन रूपं प्रतिबन्धकमिति रूपत्वेन रूपेण रक्तरूपस्यापि प्रतिबध्यतया समवायेन तत् प्रति रूपत्वेन रूपेण प्रतिबन्धकीभूतस्य नीलरूपस्य समवायेन तस्मिन् घटे सत्त्वेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावलक्षण-कारणस्य तत्राऽभावादित्यर्थ. । **तदवच्छिन्नरूप** इति– समवायेन तदवच्छिन्नरूप प्रति समवायेन तदवच्छिन्नस्य प्रति-

अथावच्छिन्ननीलादौ नीलाभावादिषट्कमवयवगतमवयविगतं च हेतुः, रक्त-नीलारब्धे रक्तनाशकपाकेन व्याप्यवृत्तिनीलोत्पत्तौ चावयविनि नीलाभावाभावान्नावच्छिन्ननीलोत्पत्तिः, केवलनीले पाकेन कचिद् रक्तोत्पत्तौ च प्राक्तननीलनाशादेवावच्छिन्ननीलोत्पत्तिरिति चेत्? न- नील-पीत-श्वेताद्यारब्धे श्वेताद्यवच्छेदेन नीलजनकपाके सति प्राक्तननीलनाशेन तत्तदवच्छिन्ननानानीलकल्पनापेक्षया, एकचित्रकल्पनाया एव लघुत्वात्। अथ व्याप्यवृत्तिरूपस्याप्यवच्छेदकतया नीलादिकं प्रत्येव समवायेन नीलादेर्हेतुत्वम्, न चैवं घटेऽपि तया नीलाद्युत्पत्तिः, अवयवनीलत्वेन द्रव्यविशिष्टनीलत्वेन

वन्धकम्, तदभावस्तदवच्छिन्नरूपं प्रति कारणम्, तथा च यस्मिन् नीलकपाले नीलरूपविनाशस्तत्कपालावच्छिन्नघटीयरूपे रक्तात्मके तत्कपालावच्छिन्नस्यैव रूपस्य समवायेन प्रतिबन्धकत्वेन तस्य तस्मिन् घटेऽभावात् तद्रूपकारणसत्त्वेन तत्कपालावच्छिन्नरक्तरूप समवायेन घटे स्यादेवेत्युपगमे चातिगौरवमित्यर्थः।

नव्यमतानुयायी शङ्कते- अथेति। अत्र समवायसम्बन्धेनावच्छिन्ननीलं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलाभावस्य कारणत्वमित्येतावताऽवयवगतस्य नीलाभावस्य कारणत्वं लभ्यते, समवायसम्बन्धेनावच्छिन्ननील प्रति विशेषणतासम्बन्धेन नीलाभावस्य कारणत्वमित्यतश्चावयविगतस्य नीलाभावस्य कारणत्वम्, एव समवायसम्बन्धेनाऽवच्छिन्नपीतादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन पीताभावादीनां विशेषणतासम्बन्धेन च पीताभावादीना कारणत्वमित्येवं द्वादश कार्यकारणभावाः, तथा च यत्रावयवद्वयगतं नीलरूपमेव तत्रावयविनि नावच्छिन्ननीलोत्पत्तिः सम्भवति, अवयवगतनीलाभावरूपकारणस्याऽभावात्, यत्र त्वेकस्मिन्नवयवे नीलमपरस्मिन् पीतम्, तदुभयारब्धे घटे पीतकपालगतनीलाभावस्य नीलकपालगतपीताभावस्य सत्त्वादवच्छिन्ननीलस्यावच्छिन्नपीतस्य चोत्पत्तिः सम्भवति, यत्र तु नील-पीतवह्निसंयोगात् कपालनीलनाशात् तत्कपालावच्छिन्नरक्तस्योत्पत्तिस्तत्रावयवगतरक्ताभावोऽपि विद्यतेऽवयविगतरक्ताभावोऽपीति। अवयविगतनीलाभावादिषट्कस्य कारणत्वाभ्युपगमस्य प्रयोजनमुपदर्शयति- रक्त-नीलारब्ध इति- यत्रैकं कपाल रक्तमपरं च नीलम्, तदुभयारब्धरक्त नीलघटे रक्तनाशकपाकेन कपालगतस्य घटगतस्य च रक्तस्य नाशतो घटे व्याप्यवृत्तिनीलस्योत्पत्तिस्तत्र तदुत्पत्तितः प्राग् रक्तनाशकाले एकस्मिन् कपाले नीलरूपस्य सत्त्वेऽप्यपरस्मिन् कपाले न किञ्चिद्रूपमिति तद्गतनीलाभावस्य स्वाश्रयसमवेतत्वसम्बन्धेन घटे सत्त्वेऽपि कपालान्तरावच्छेदेन तत्र समवायेन नीलस्यैव सत्त्वेनावयविगतनीलाभावस्याभावान्नावच्छिन्ननीलोत्पत्तिः, अवयविगतनीलाभावस्य कारणत्वाभावे त्ववयवगतनीलाभावस्य तत्र सत्त्वादवच्छिन्ननीलोत्पत्त्यापत्तेः, अतोऽवयविगतनीलाभावस्यापि कारणत्वमित्यर्थः। केवलनीलकपालाभ्यामारब्धे केवलनीलघटे एकस्मिन् कपाले पाकेन नीलनाशतो यत्र रक्तोत्पत्तिस्तत्रावयविनि रक्तमप्यव्याप्यवृत्ति नीलमप्यव्याप्यवृत्ति भवति, परं तत्रैकस्मिन् कपाले नीलनाशे तद्गतनीलाभावस्य सत्त्वेऽप्यपरस्मिन् कपाले नीलस्य सत्त्वतो घटेऽपि नीलस्य सत्तया घटगतनीलाभावस्यावच्छिन्ननीलकारणस्याऽभावेन तद्रूपकारणाभावात् कथं तत्रावच्छिन्ननीलोत्पत्तिरिति न वाच्यम्, तत्र घटगतस्य नीलस्य नाशादेवावच्छिन्नोत्पत्तिरित्यवयविगतनीलाभावस्यापि तत्र सत्त्वमस्त्येवेत्यर्थ.।

उक्ताशङ्का प्राचीनमतानुयायी प्रतिक्षिपति- नेति। नील-पीतेति- नील-पीत-श्वेतकपालैरारब्धे नील-पीत-श्वेतरूपवति घटे श्वेतावच्छेदेन नीलजनकपाके सति तदवयवावच्छेदेनापि तत्र नीलमुत्पद्यते तदर्थं पूर्वनीलस्य नाशो घटेऽप्युपेय', अन्यथाऽवयविगतनीलाभावस्याभावात् तदवयवावच्छिन्नं नील न स्यात्, एवं च यस्मिन्नवयवे नीलमस्त्येव तदवयवावच्छिन्नमपि नील घटे उत्पन्नम्, यस्मिन्नवयवे श्वेतनाशतो नीलमुत्पन्नं तदवयवावच्छिन्नमपि घटे नीलमुत्पन्नमित्येव नानानीलकल्पनापेक्षयैकचित्ररूपकल्पनाया एव लघुत्वादित्यर्थ.। ननु व्याप्यवृत्तिरूपस्याप्यवच्छेदकतयाऽवयवे सत्त्वमुपेयत एव, नीलकपालद्वयारब्धनीलघटस्यापि व्याप्यवृत्तिनीलरूपमवच्छेदकतया कपाले उत्पद्यत एव, एवं च नील-पीतकपालद्वयारब्धनील-पीतरूपद्वयवद्घटस्य यद् नीलरूप तद् नीलकपालेऽवच्छेदकतयोत्पद्यते, न पीतकपाले, पीतरूपं चावच्छेदकतया पीतकपाले, न नीलकपाले इत्यस्योपपत्तये अवच्छेदकतासम्बन्धेन नील प्रति समवायसम्बन्धेन नीलं कारणम्, एवमवच्छेदकतासम्बन्धेन पीतादिकं प्रति समवायसम्बन्धेन पीतादिकं कारणमित्येवोररीक्रियते इत्याशङ्कते- अथेति। 'व्याप्यवृत्तिरूपस्याप्यवच्छेदकतया नीलादिकं प्रत्येव' इति स्थाने 'व्याप्यवृत्तिरूपस्याप्यवच्छेदकतया सत्त्वाभ्युपगमेनावच्छेदकतया नीलादिक प्रत्येव' इति पाठो युक्तः। 'नीलादिकम्' इत्यत्रादिपदात् पीतादेरुपग्रहः, एवं 'नीलादेः' इत्यत्रापि।

वा तद्धेतुत्वात्, न च नीलमात्र-पीतमात्रकपालिकाद्वयारब्धनील-पीतकपाले तदापत्तिः, नीलकपालिकावच्छिन्नतदवच्छेदेन तदुत्पत्तेरिष्टत्वात्, अस्तु वा तया नीलादौ नीलेतररूपादेरेव विरोधित्वमिति चेत्? न– नीलादौ नीलेतररूपादिप्रतिबन्धकत्वेनैवोपपत्तौ तत्र नीलादिहेतुतायां मानाभावेन नानारूपवदवयवारब्धे चित्ररूपस्यैकस्यैव प्रामाणिकत्वात्, व्याप्यवृत्तेरवच्छेदकायोगात्, नीलेतरादौ नीलादेः प्रतिबन्धकत्वेऽविनिगमाच्च । यदि च स्वाश्रयसम्बन्धेन नीलं प्रति स्वव्यापकसमवायेन नीलरूपं हेतुरुपेयते, नील-पीताद्यारब्धस्थले च स्वाश्रयसम्बन्धेन नीलरूपस्य पीतकपालेऽपि सम्भवेन व्यभिचारादुक्तसम्बन्धेन

---

ननु घटेऽपि समवायेन नीलादिक वर्तत इति तत्राप्यवच्छेदकतया नीलादेरुत्पत्त्यापत्तिरित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **एवम्** अवच्छेदकतासम्बधेन नीलादिक प्रति समवायेन नीलादेर्हेतुत्वाभ्युपगमे । **'घटेऽपि'** इत्यत्र घटपदं रूपाधिकरणत्वमवयविमात्रस्योपलक्षणम् । **तया** अवच्छेदकतया । अवच्छेदकतासमवन्धेन नीलादिकं प्रति समवायसम्बन्धेनावयवनीलत्वादिना द्रव्यविशिष्टनीलत्वादिना वा हेतुत्वमभ्युपगम्यते, घटवृत्तिनील च नावयववृत्तिनीलं नवा द्रव्यविशिष्टनीलमतो न घटेऽप्यवच्छेदकतया नीलाद्युत्पत्त्यापत्तिरिति निषेधहेतुमुपदर्शयति– **अवयवनीलत्वेनेति** । **'द्रव्यविशिष्टनीलत्वेन'** इत्यत्र नीले द्रव्यस्य वैशिष्ट्य स्वसमवायिसमवेतत्वसम्बन्धेनेति बोध्यम् । **तद्धेतुत्वात्** अवच्छेदकतासम्बन्धेन नील प्रति हेतुत्वात् । ननु नील-पीतकपालिकाद्वयारब्ध यद् नील-पीतरूपद्वयवत्कपालं तत्रावच्छेदकतासम्बन्धेन नील-पीताद्युत्पत्ति स्यात् तत्कपालरूपस्यावयवनीलत्वादिलक्षणकारणतावच्छेदकधर्माक्रान्तत्वेन तस्य तत्र सत्त्वादित्याशङ्क्य प्रतिक्षिपति–**न चेति** । कपालिकाद्वये व्याप्यवृत्त्येव रूपमित्यावेदनाय **'नीलमात्र- पीतमात्र'** इति । **तदापत्तिः**, अवच्छेदकतासम्बन्धेन नील पीताद्युत्पत्त्यापत्तिः । कपाले यद् नीलं तद् नीलकपालिकावच्छिन्नकपालावच्छेदेनोत्पद्यते, कपाले यत् पीतरूप तत् पीतकपालिकावच्छिन्नकपालावच्छेदेनोत्पद्यत इत्यस्योपगन्तु शक्यत्वेन तदापत्तेरिष्टापत्त्या परिहर्तुं शक्यत्वादिति निषेधहेतुमाह– **नीलकपालिकावच्छिन्नेति** । **तदवच्छेदेन** कपालावच्छेदेन । **'नीलकपालिकावच्छिन्न'** इति स्थाने 'नीलकपालिकाद्यवच्छिन्न' इति पाठो युक्तः । **तदुत्पत्तेः** नील–पीताद्युत्पत्तेः, यत्र नीलाभ्यामेव कपालिकाभ्यां नीलमेव कपालमुत्पन्न ततो यदि तत्र नीलघट उत्पद्यते तदा तत्र नीलघटे उत्पद्यमानस्य नीलरूपस्यावच्छेदकतया नीलकपाले उत्पत्तिरिष्टैव, यदि च तत्र कपाले नीलघटो नोत्पद्यते तदा तत्कपालगतं नीलं द्रव्यविशिष्टं नील न भवति, तस्मिन् कपाले समवायेन द्रव्यस्याभावेन स्वसमवायिसमवेतत्वसम्बन्धेन द्रव्यविशिष्टत्वस्य तत्राऽभावात्, अत एव च द्रव्यविशिष्टनीलत्वस्य कारणतावच्छेकतयोपदर्शन कृतमिति बोध्यम् । नील– पीतकपालिकाद्वयारब्धनील–पीतकपाले यद्यवच्छेदकतया नीलोत्पत्तिर्नेष्टा तदा त्वाह– **अस्तु वेति**– एतेन यस्मिन्नवयवे नीलमात्रं तस्मिन्नेवावच्छेदकतया नीलोत्पत्तिरिति तत्र नीलमात्रकपालिकायामेवावच्छेदकतया नीलं पीतमात्रकपालिकायामेवावच्छेदकतया पीतमित्याशयः । प्राचीनमतानुयायी उक्ताशङ्का प्रतिक्षिपति– **नेति** । **तत्र** नीलादौ । व्याप्यवृत्तेरवच्छेदकमभ्युपगम्य कार्यकारणभावो य उपदर्शितः सोऽपि न युक्त, व्याप्यवृत्तेरवच्छेदकस्यैवाभावादित्याह– **व्याप्यवृत्तेरिति** । यथा च नीलादौ नीलेतररूपादेः प्रतिबन्धकत्व तथा नीलेतररूपादौ नीलादेरपि विनिगमनाविरहात् प्रतिबन्धकत्वमापद्यत इत्याह–**नीलेतरादाविति**– अत्र 'नीलेतररूपादौ' इति पाठो युक्तः, नील पीतकपालाभ्यामारब्धे घटे नीलान्नीलं पीतात् पीतमापद्यत इत्यत समवायेन नील प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलेतररूपस्य प्रतिबन्धकत्व चित्ररूपवादिनाऽवश्यमभ्युपेयम्, एवं समवायेन पीतादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन पीतेतररूपादे प्रतिबन्धकत्वमित्येवं दिशा षण्णा प्रतिबध्य-प्रतिबन्धकभावानामावश्यकत्वे प्रतिबन्धकाभावस्य कारणत्वमाश्रित्य षण्णा कार्यकारणभावानामावश्यकत्वमित्यपि नास्ति, स्वाश्रयसम्बन्धेन नीलं प्रति स्वव्यापकसमवायेन नीलरूप. कारणमित्येवं दिशैव कार्यकारणभावश्चित्ररूपवादिनाऽभ्युपेय, तथा च नील–पीतकपालाभ्यामारब्धे घटे यदि नीलरूपमुपेयते तदा तद् नीलरूप स्वं नीलरूपम्, तदाश्रयो घटो नीलकपाले वर्तते पीतकपालेऽपि च वर्तते, तदात्मकसम्बन्धेन पीतकपालेऽपि स्यात्, न च पीतकपाले नीलकपालगत नीलरूप नीलरूपव्यापकसमवायेन समस्ति, नीलरूपव्यापकसमवायस्य नीलरूपवत्येव भावादिति कारणाभावेऽपि कार्योत्पत्तौ व्यतिरेकव्यभिचार आपतेत्, अतो न तत्र नीलरूपमुत्पद्यते, उक्तदिशैव न पीतरूप किन्तु चित्ररूपमेवोत्पद्यत इत्येतावतैव निर्वाहे नीलं प्रति नीलेतररूपस्य पीतं प्रति पीतेतररूपस्य रक्तादिक प्रति रक्तेतररूपादे. प्रतिबन्धकत्व न चित्ररूपवादिना कल्पनीयमित्यतिलाघव चित्ररूपवादे इत्याह– **यदि चेति** । **उक्तसम्बन्धेन** स्वव्यापकसमवायेन । **तत्र** नील-पीताद्यारब्धघटे ।

हेत्वभावादेव न तत्र नीलोत्पत्तिरिति विभाव्यते तदा नीलं प्रति नीलेतररूपादेः प्रतिबन्धकत्वं चित्ररूपवादिना न कल्पनीयमित्यतिलाघवम्। एवं च 'सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताको नीलेतराभावः समानावच्छेदकत्वप्रत्यासत्त्या नीलहेतुः' इत्यपि निरस्तम्, सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकनीलेतराभावासत्त्वाच्चेति बहवः सम्प्रदायमादधते।

केचित् तु—"विजातीयचित्रं प्रति स्वविजातीयत्व-स्वसंवलितत्वोभयसम्बन्धेन रूपविशिष्टरूपत्वेनैव हेतुत्वम्, स्ववैजात्यं च चित्रत्वातिरिक्तं यत् स्ववृत्ति तद्भिन्नधर्मसमवायित्वम्, स्वसंवलितत्वं च स्वसमवायिसमवेतद्रव्यसमवायिवृत्तित्वम्, न च स्वत्वाननुगमः सम्बन्धमध्ये एव तत्प्रवेशात्, सम्बन्धाननुगमस्य चादोषाद्" इत्याहुः।

---

**'तदा नीलं प्रति'** इति स्थाने 'तदा नीलादिकं प्रति' इति पाठो युक्तः, आदिपदात् पीतादेरुपग्रहः। **'नीलेतररूपादेः'** इत्यत्रादिपदात् पीतेतररूपादेः परिग्रहः। **एवं च** नीलादिकं प्रति नीलेतररूपादेः प्रतिबन्धकत्वं चित्ररूपवादिना न कल्पनीयमिति व्यवस्थितौ च, नील-पीताभ्यामारब्धे नील-पीतरूपवति घटे नीलावयवावच्छेदेन नीलरूपमुत्पद्यते पीतावयवावच्छेदेन पीतरूपमुत्पद्यते, न तु पीतावयवावच्छेदेन नीलरूपस्य नीलावयवावच्छेदेन पीतस्योत्पत्तिप्रसङ्ग इत्यस्योपपत्तये अव्याप्यवृत्तिरूपवादिनेत्थं कार्यकारणभाव आश्रीयते। **'नीलेतराभावः'** इत्यस्य स्थाने 'नीलेतररूपाभावः' इति पाठो युक्तः। **समानावच्छेदकत्वप्रत्यासत्त्येति**– अवच्छेदकतासम्बन्धेन नीलं प्रति सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताको नीलेतररूपाभावोऽवच्छेदकतासम्बन्धेन हेतुरित्यर्थः, तथा च सामानाधिकरण्यसम्बन्धेन नीलेतररूपं पीतकपालावच्छेदेन तस्मिन् घटे वर्तते, सामानाधिकरण्यसम्बन्धस्य नीलेतररूपस्य पीतकपालावच्छेदेनैव भावादिति तत्सम्बन्धावच्छिन्नप्रतियोगिताको नीलेतररूपाभावो नीलकपालावच्छेदेन तत्र वर्तत इति सोऽभावोऽवच्छेदकतया नीलकपाले समस्ति, ततो नीलरूपमपि घटगतं नीलकपाल एवावच्छेदकतयोत्पद्यत इत्यपि नव्यानां कल्पनं गौरवादेव निरस्तमिति। किञ्च, सामानाधिकरण्यस्य व्याप्यवृत्तितया तस्य निरवच्छिन्नस्वरूपेणैव सत्त्वं न तु किञ्चिदवच्छेदेन, तेन सम्बन्धेन नीलेतररूपमपि तस्मिन् घटे निरवच्छिन्नतयैव वर्तत इति सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकनीलेतररूपाभावस्य तस्मिन् घटेऽसत्त्वादेव तस्यावच्छेदकतया नीलं प्रति कारणत्वासम्भवादित्याह– **सामानाधिकरण्यस्येति**। **तत्सम्बन्धेति**– सामानाधिकरण्यसम्बन्धेत्यर्थः। **इति** एवंप्रकारेण। **बहवः** बहवोऽपि विद्वांसः। **सम्प्रदायमादधते** प्राचीनमतं व्यवस्थापयन्ति।

प्राचीनमतमेव प्रकारान्तरेणोपपादयतां केषाञ्चिन्मतमुपदर्शयति– **केचित् त्विति**– अस्य 'आहुः' इत्यनेन सम्बन्धः। **विजातीयचित्रं प्रतीति**– पाकजचित्रविजातीयचित्रं प्रतीत्यर्थः। **स्वविजातीयत्वेति**– यत्र नील-पीतकपालाभ्यामारब्धे घटे चित्ररूपमुत्पद्यते तत्र, रूपं नीलरूपम्, तद्विशिष्टं पीतरूपम्, पीतरूपे नीलरूपस्य स्वविजातीयत्वसम्बन्धोऽपि परिष्कृतोऽस्ति, यतश्चित्रत्वातिरिक्तं यत् स्ववृत्ति–नीलवृत्ति नीलत्वं रूपत्वादि च, तद्भिन्नधर्मः पीतत्वम्, तत्समवायित्वं पीतत्वे वर्तते, स्वसंवलितत्वसम्बन्धोऽपि निरूप्यमाणः समस्ति, यतः स्वं नीलरूपम्, तत्समवायि कपालम्, तत्समवेतद्रव्यं घटः, तत्समवायि पीतकपालम्, तद्वृत्तित्वं पीतरूपे वर्तत इति, तथा च नीलरूपविशिष्टपीतरूपलक्षणकारणस्य स्वसमवायिसमवेतत्वसम्बन्धेन तस्मिन् घटे सत्त्वात् तत्र विजातीयचित्रमुत्पद्यत इति, नील पीतादीनां रूपत्वेन साजात्यस्य सत्त्वात् कथं नीलरूपविजातीयत्वं पीतरूपस्येत्यतः स्वविजातीयत्वं पारिभाषिकं निरुक्तम्, तत्र 'चित्रत्वातिरिक्तम्' इति यदि स्ववृत्तेर्विशेषणं नोपादीयते तदा चित्राभ्यां कपालाभ्यामारब्धे घटे यच्चित्ररूपमुत्पद्यते तत्र रूपविशिष्टरूपत्वेन चित्ररूपविशिष्टचित्ररूपमेव कारणं वाच्यम्, तत्रैककपालचित्ररूपस्य स्वविजातीयत्वसम्बन्धोऽपरकपालचित्ररूपे न स्यात्, यतः स्वमेककपालचित्ररूपम्, तद्वृत्ति चित्रत्व-रूपत्वादिकम्, तद्भिन्नधर्मसमवायित्वस्याऽपरकपालचित्ररूपे न सत्त्वमिति, तदुपादाने च चित्रत्वातिरिक्तं स्ववृत्ति न चित्रत्वं किन्तु रूपत्वाद्येव, तद्भिन्नधर्मश्चित्रत्वम्, तत्समवायित्वमपरकपालचित्ररूपे समस्तीति, स्वसंवलितत्वमपि यदि स्वसामानाधिकरण्यं तदैककपालनीलरूपस्य सामानाधिकरण्यमपरकपालपीतरूपेऽभावात् तन्न स्यादतः 'स्वसमवायि' इत्यादि तन्निर्वचनम्। स्वत्वाननुगममाशङ्क्य सम्बन्धमध्यप्रविष्टस्वत्वाननुगमदोषस्यादोषत्वोपदर्शनेन परिहरति–**न चेति**। **तत्प्रवेशात्** स्वत्वस्य प्रवेशात्।

परे तु–" नीलपीतोभयाभाव-पीतरक्तोभयाभावादीनां स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नप्रतियोगिताकानां ( समवायसम्बन्धावच्छिन्नप्रतियोगिताकानां च ) विजातीयपाकोभयाभावादीनां यावत्त्वावच्छिन्नप्रतियोगिताक एकोऽभावश्चित्रत्वावच्छिन्नं प्रति हेतुः " इत्याहुः ।

रूपत्वेनैव चित्रं प्रति हेतुत्वम्, कार्यसहभावेन चित्रेतराभावस्याहेतुत्वेनानतिप्रसङ्गादित्यन्ये ।

परे तु–" चित्रत्वावच्छिन्ने रूपत्वेनैव हेतुत्वम्, नील-पीतोभयारब्धवृत्तिचित्रत्वान्तरवैलक्षण्यावच्छिन्ने च नील-पीतोभयत्वेन हेतुता, एवं तत्त्रितयारब्धे तत्त्रितयत्वेन नील-पीतोभयादिमात्रारब्धे च नील-पीतादीतररूपत्वेन प्रतिबन्धकत्वान्न त्रितयारब्धचित्रवति द्वितयारब्धत्वप्रसङ्गः, न चैवं गौरवम्, प्रामा-

---

प्राचीनमतसमर्थन एवापरेषा मतमुपदर्शयति–**परे त्विति**– अस्य 'आहु.' इत्यनेन सम्बन्धः । '**नीलपीतोभयाभाव-पीतरक्तोभयाभावादीनाम्**' इत्यत्रादिपदात् नीलरक्तोभयाभाव-नीलश्वेतोभयाभाव रक्तश्वेतोभयाभाव-पीतश्वेतोभयाभावादीनां नील-पीत-रक्तत्रयाभावादीनां च ग्रहणम्, तेषा यावतामभावश्च नील-पीतोभयस्य पीत-रक्तोभयादेश्चैकैकस्य स्वसमवायिसमवेतत्वसम्बन्धेन सत्त्वेऽपि चित्ररूपोत्पत्तिर्निर्वहतीति । '**विजातीयपाकोभयाभावादीनामिति**– अत्रादिपदाद् विजातीयपाकत्रयाभावादीनामुपग्रहः, विजातीयपाकोभयश्च नीलजनकतेजस्संयोगपीतजनकतेजस्संयोगोभय-नीलजनकतेजस्संयोगरक्तजनकतेजस्सयोगोभय पीतजनकतेजस्संयोगरक्तजनकतेजस्संयोगोभयादिरूपः, एवं विजातीयपाकत्रय च नीलजनकतेजस्संयोग-पीतजनकतेजस्सयोग-रक्तजनकतेजस्सयोगत्रयादिरूपम्, समवायसम्बन्धावच्छिन्नप्रतियोगिताकतदभावाना च यावन्मध्ये प्रवेशाद् यावत्त्वावच्छिन्नप्रतियोगिताकतदभावश्च प्रत्येकं नीलजनकतेजस्सयोग पीतसंयोगोभयादेरेकैकस्य समवायसम्बन्धेन सत्त्वेऽपि सम्भवतीति यत्किञ्चित्पाकोभयतोऽपि चित्ररूपोत्पत्तिनिर्वाह इत्येकस्यैव निरुक्ताभावस्य चित्रत्वावच्छिन्नं प्रति कारणत्वे न कोऽपि दोष इति ।

अन्येषां मतमुपदर्शयति– **रूपत्वेनैवेति**– एवकारेण नीलेतररूपत्वादिना हेतुत्वस्य व्यवच्छेदः । नन्वेव नीलकपाल द्वयारब्धघटेऽपि चित्ररूप स्यात्, तत्रापि समवायसम्बन्धेन चित्रं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन कारणस्य रूपत्वेन नीलरूपस्य सत्त्वादित्यत आह– **कार्यसहभावेनेति** । '**चित्रेतराभावस्याहेतुत्वेन**' इति स्थाने 'चित्रेतररूपाभावस्य हेतुत्वेन' इति पाठो युक्तः, तथा च तत्कपालावच्छेदेन समवायसम्बन्धेन चित्ररूपं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकचित्रेतररूपाभावस्य स्वरूपसम्बन्धेन हेतुत्वमिति नीलकपालद्वयाभ्यामारब्धे घटे समवायसम्बन्धेन नीलरूपमुत्पद्यत इति समवायसम्बन्धेन चित्रेतररूपस्य नीलस्य तत्कपाले सत्त्वेन तदभावरूपकारणाभावान्न तत्र चित्ररूपोत्पत्त्यापत्तिः, नील-पीतकपालद्वयारब्धघटे तु चित्ररूपमेवोत्पद्यत इति तत्कपाले समवायसम्बन्धेन चित्रेतररूपस्य नीलादेस्तत्राभावात् तदभावरूपकारणस्य सत्त्वमित्याशयः ।

मतान्तरमाह– **परे त्विति**– अस्य 'आहु' इत्यनेन सम्बन्ध. । '**रूपत्वेनैव**' इत्येवकारेण नीलेतररूपत्वादिना हेतुत्वस्य व्यवच्छेदः । नन्वेवं नील-पीतकपालाभ्यामारब्धे घटे यादृश चित्रं ततो विलक्षणं चित्र नील-रक्त-कपालाभ्यामारब्धे घटे, एव नील-पीत-रक्तकपालैरारब्धे घटे, तदेतत्कार्यतावच्छेदकचित्रत्वस्य कारणतावच्छेदकरूपत्वस्याविशिष्टत्वेन नीलपीतोभयारब्धघटवृत्तिचित्ररूप-नीलपीतरक्तकपालत्रयारब्धघटवृत्तिचित्ररूपादिवैलक्षण्यस्यानिबन्धनस्यैव भावे तस्य नियमो न स्यादित्यत आह– **नील-पीतोभयेति** । '**चित्रत्वान्तर**' इति स्थाने 'चित्रत्वावान्तर' इति पाठो युक्त, तथा च नील-पीतोभयारब्धं यच्चित्ररूपम्, तद्वृत्ति यच्चित्रत्वावान्तरवैलक्षण्य चित्रत्वव्याप्यचित्रत्वविशेषलक्षणसामान्यम्, तदवच्छिन्ने नील-पीतोभयत्वेन हेतुत्वमित्यर्थः । **एवम्** उक्तप्रकारेण । **तत्त्रितयेति**– नील-पीत रक्तत्रयारब्धचित्ररूपवृत्तिचित्रत्वव्याप्यजातिविशेषावच्छिन्ने नील-पीत-रक्तत्रितयत्वेन हेतुत्वमित्यर्थः । '**तत्त्रितयत्वेन**' इत्यनन्तर 'हेतुता' इत्यनुवर्तते । ननु यत्र नील-पीत-रक्ततन्तुभिश्चित्रपट उत्पद्यते तत्र तन्तुद्वयगतनील-पीतरूपाभ्यामपि पटगतविजातीयचित्ररूप स्यादित्यत आह– **नील-पीतोभयादिमात्रारब्धे चेति**– आदिपदाद् नील-रक्तोभयादेरुपग्रहः । '**नील-पीतादि**' इत्यादिपदाद् नील रक्तादेर्ग्रहणम् '**द्वितयारब्धत्वप्रसङ्ग.**' इत्यस्य स्थाने 'द्वितयारब्धस्य प्रसङ्ग.' इति पाठो युक्त । उक्तप्रतिबध्यप्रतिबन्धकभावकल्पनगौरवस्य प्रामाणिकत्वेनाऽदोषत्वमुपदर्शयति– **न चैवमिति** । **एवम्** उक्तप्रकारेण प्रतिबध्यप्रतिबन्धकभावाभ्युपगमे । यथा चोक्तत्रितयारब्धस्थले उक्तप्रतिबध्यप्रतिबन्धकभावकल्पनमन्तरेणापि न द्वितयारब्ध-

णिकत्वात्; वस्तुतः समवायेन द्वितयजचित्रादौ स्वाधिकरणपर्याप्तवृत्तिकत्वसम्बन्धेनैव द्वितयादीनां हेतुत्वम्, नातः प्रागुक्तप्रतिबन्धकत्वकल्पनागौरवम्" इत्याहुः ।

उच्छृङ्खलास्तु–"नील-पीत-रक्ताद्यारब्धघटादौ नील-पीत-रक्तादिभ्य एव नीलपीतोभयज-पीतरक्तोभयज-तत्त्रितयजादीनामुत्पत्तिः सर्वेषां सामग्रीसत्त्वात्, किन्त्वत्र चरमं व्याप्यवृत्तिरितराणि त्वव्याप्यवृत्तिनीति विशेषः, न चैकमेव तदस्त्विति वाच्यम्, तत्तदवयवद्वयमात्रावच्छेदेनेन्द्रियसन्निकर्षे विलक्षणविलक्षणचित्रोपलम्भात्, न च नील पीतादिविशिष्टचित्रेणावान्तरचित्रप्रतीतिसम्भवः, अखण्डेऽभ्रे सामान्यचित्रत्वेनाखण्डावान्तरचित्रत्वानां सामानाधिकरण्यप्रत्ययात्, न चेदेवं तदा नीलाद्यविशेषिता ये नीलादिभेदास्तत्तदाश्रयरूपसमुदायेनानुगतचित्रप्रतीतेश्चित्रत्वं नीलादिभेदसमुदायेन नीलाद्यनुगतप्रतीति-

चित्ररूपप्रसङ्गस्तथोपदर्शनेन प्रतिबध्यप्रतिबन्धकभावगौरवमपहस्तयति– **वस्तुत** इति । **समवायेनेति**– नील पीत-रक्तकपालत्रितयारब्धघटे नीलपीतकपालद्वयगतनील-पीतोभयं नील-रक्तकपालद्वयगतनील रक्तोभयं वा स्वाधिकरणपर्याप्तवृत्तिकत्व तद्घटस्य नास्ति नील-पीत-रक्तकपालत्रितयपर्याप्तवृत्तिकत्वसम्बन्धेन न वर्तते, यतः स्वपदेन नील-पीतोभयस्य ग्रहणे तदधिकरणं नील-पीतकपालोभयम्, तत्पर्याप्तवृत्तिकत्वात्, अत एव च नील-रक्तोभयस्यापि स्वाधिकरणपर्याप्तवृत्तिकत्वसम्बन्धेन न तत्र घटे सत्त्वमिति समवायेन द्वितयजचित्ररूपकारणस्य स्वाधिकरणपर्याप्तवृत्तिकत्वसम्बन्धेन द्वितयस्य त्रितयारब्धघटेऽभावान्न द्वितयारब्धचित्ररूपविशेषप्रसङ्ग इत्यर्थः । **अत** इति–उक्तकार्यकारणभावाभ्युपगमादेवेत्यर्थः ।

उच्छृङ्खलानां मतमुपदर्शयति– **उच्छृङ्खलास्त्विति**– अस्य 'आहुः' इत्यनेन सम्बन्ध । '**रक्तादि**' इत्यादिपदाच्छुक्लादेरुपग्रहः, एवमग्रेऽपि । **तत्त्रितयजेति**– नील-पीत रक्तैतत्रितयजेत्यर्थः, आदिपदान्नीलरक्तोभयज-नीलशुक्लोभयज रक्तशुक्लोभयजादीनां नीलपीतशुक्लैतत्रितयज पीतशुक्लरक्तैतत्रितयजादीनां नील-पीत-रक्त-शुक्लैतच्चतुष्टयजादीनां च ग्रहणम् । **सर्वेषां** नील-पीतोभयजादिनिखिलानाम्, नील-पीत-रक्तादित्रितयादिसत्त्वे नील-पीतोभयादेरपि नील पीतोभयादिजचित्रकारणस्य सत्त्वादित्यर्थः । **किन्त्विति**– नील पीत-रक्तैतत्रितयस्थले नीलपीतोभयज-नीलरक्तोभयज-पीतरक्तोभयज–नील पीतरक्तैतत्रितयजाना चतुर्णां मध्ये चरमं नीलपीतरक्तैतत्रितयजं चित्रं व्याप्यवृत्तिः, सम्पूर्णेऽवयविनि तस्य सत्त्वात्, **इतराणि** तद्भिन्नानि नीलपीतोभयजादीनि त्रीणि चित्ररूपाणि अव्याप्यवृत्तीनि, यतो नील-पीतोभयजं चित्रं रक्तावयवावच्छेदेनावयविनि न वर्तते किन्तु नील-पीतावयवद्वयावच्छेदेन, एवं नील रक्तोभयजं चित्रं पीतावयवावच्छेदेन न वर्तते, किन्तु नील-रक्तावयवद्वयावच्छेदेन, पीतरक्तोभयज चित्रं नीलावयवावच्छेदेन न वर्तते किन्तु पीत रक्तावयवद्वयावच्छेदेनेत्येवमव्याप्यवृत्तीनीत्यर्थः । ननु नील पीत रक्तेभ्य एकमेव चित्रं तत्रोपजायत इत्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वयः । **तत्** चित्रम् । निषेधे हेतुमाह–**तत्तदवयवद्वयेति** –नीलपीतावयवद्वय-पीतरक्तावयवद्वय–नीलरक्तावयवद्वयेत्यर्थः । नील-पीतावयवद्वयमात्रावच्छेदेनेन्द्रियसन्निकर्षे सति यादृशं विलक्षणं चित्ररूपमनुभूयते ततो विलक्षण चित्र पीत-रक्तावयवद्वयावच्छेदेनेन्द्रियसन्निकर्षे सत्यनुभूयते, ततोऽपि विलक्षण चित्रं नील-रक्तावयवद्वयावच्छेदेनेन्द्रियसन्निकर्षे सत्यनुभूयते, एकचित्रस्यैव तत्र भावे त्वित्थं विलक्षणविलक्षणचित्रोपलम्भो न भवेदतस्तत्र नानैव चित्ररूपाण्यभ्युपेयानीत्यर्थः । ननु नील-पीतादिवैशिष्ट्यमेकस्मिन्नेव चित्रे उपादायाऽवान्तरचित्रप्रतीतिसम्भवान्नाऽनेकचित्राभ्युपगमो न्याय्यानित्याशङ्क्य प्रतिक्षिपति–**न चेति** । यद्यवयविन्येक चित्रं स्यादपराणि च नीलादीन्यपि स्युस्तदेत्थमुपपादनं स्यादपि, न चैवम्, चित्ररूपाण्येव नानाविधानि तत्र यथाऽऽकाशेऽखण्डचित्रत्वसामान्यमप्यखण्डान्यवान्तरचित्रत्वान्यपि ततोऽखण्डचित्रत्वसामान्यं चित्रमात्रे वर्तत इति तेन सहाखण्डावान्तरचित्रत्वाना सामानाधिकरण्यं प्रतीयत इति तेषामुपगमस्तथैवैकस्मिन्नवयविनि नानाचित्राणा सामानाधिकरण्येनानुभूयमानत्वाद् नानाचित्राण्युपेयानीति निषेधहेतुमुपदर्शयति– **अखण्डेऽभ्रसामान्येति**– अत्र 'अखण्डसामान्य' इति पाठो युक्तः । यद्येव न स्वीक्रियते तदा चित्रत्वं नीलत्वादिकं च किमिति स्वीकरणीयम्? नीलविशिष्टरक्तेन नील-रक्तद्वयजचित्रप्रतीतेर्नीलविशिष्टपीतेन नील–पीतद्वयजचित्रप्रतीतिरेव दिशा नील पीतद्वयजचित्रप्रतीतीना तन्नीलैतन्नीलादितत्तन्नीलादिविशेषसमुदायेन नीलानुगतप्रतीतेः, एवं पीताद्यनुगतप्रतीतीनामप्युपपत्तेरित्याह– **न चेदेवमिति** । **नीलाद्यविशेषिताः** तन्नीलैतन्नीलेत्यादिदिशा नीलाद्यविशेषिता । **नीलादिभेदाः** नीलपीतादिविशेषाः । **तत्तदाश्रयरूपेति**– नीलाश्रय पीताश्रयरूपेत्यर्थः । **चित्रप्रतीतेः**

सम्भवान्नीलत्वादिकमपि च विलीयेतेति, जातेरव्याप्यवृत्तित्वे पुनरस्त्वेकमेव तत्, किञ्चिदवच्छेदेन तत्र नीलत्व-पीतत्व-रक्तत्व-विलक्षणचित्रत्वादिसम्भवाद् " इत्याहुः ।

तदिदमखिलमशिक्षितप्रलापमात्रम्- चित्रपटादौ चित्ररूपस्यैव प्रतिपत्तेरनुभवविरुद्धत्वात्, शुक्लादि-रूपाणामपि परस्परभिन्नानां साक्षात्सम्बन्धेन निर्विगानं तत्र प्रतीतेः, प्रत्येतव्यकल्पनागौरवेण प्रतीति-बाधे रूपादेस्त्रुटिमात्रगतत्वापत्तिः, तदिदमाहुः सम्मतिटीकाकृतः-" न च चित्रपटादावपास्तशुक्लादि-विशेषरूपमात्रं तदुपलम्भान्यथानुपपत्त्याऽस्तीत्यभ्युपगन्तव्यम्, कथम् ? चित्ररूपः पट इति प्रतिभासा-ऽभावप्रसक्तेः " [ ] इति, एकाधिकरण्यावच्छिन्नशुक्लादिसमुदाय एव, न कथञ्चित्समुदा-यातिरिक्तचित्रमिति तत्र शुक्लाद्यग्रहे चित्राग्रहप्रसक्तिरित्येतत्तात्पर्यम् । किञ्च, एवं शुक्लावयवावच्छेदे-नापि चक्षुःसन्निकर्षेण चित्रोपलम्भः स्यात् ।

---

सम्भवादिति हृदयम् । ' चित्रत्वम् ' इत्यस्य ' विलीयेत ' इत्यनेन सम्बन्धः । **नीलादिभेदसमुदायेन** तत्तन्नीलादि-विशेषसमुदायेन, तत्तत्पीतादिविशेषसमुदायेनेत्येव दिशा तत्तद्विशेषसमुदायेन । ' **नीलादि** ' इत्यादिपदात् पीतादेरुपग्रहः, ' **नीलत्वादिकम्** ' इत्यादिपदात् पीतत्वादेर्ग्रहणम् । जातेर्यद्यप्यव्याप्यवृत्तित्वमुपेयते तदैकस्मिन्नेव रूपे तत्तद्भागाव-च्छेदेन नीलत्व-पीतत्वादिकं भागद्वयावच्छेदेनावान्तरचित्रत्वादिकं सम्पूर्णावच्छेदेन चित्रत्वसामान्यमित्युपगम्य नील-पीताद्यवान्तरचित्रत्वादि-चित्रत्वसामान्यप्रतीतीनामुपपत्तिसम्भवादस्त्येकमेव तत्र रूपमित्याह- **जातेरव्याप्यवृत्तित्व** इति । **तत्** रूपम् । **तत्र** एकस्मिन् रूपे ।

एतावता नैयायिकमतमुपदर्श्य ग्रन्थकारो जैनसिद्धान्तावलम्बनेन तत्खण्डनमधिकरोति- **तदिदमिति**- उक्तदिशोपद-र्शितं प्राचीननैयायिकाभिमतं नानारूपवदवयवारब्धावयविनि चित्रैकरूपसमर्थनमित्यर्थः । **अशिक्षितप्रलापमात्रम्** अशिक्षितानां प्राचीनमतानुयायिनां निर्युक्तिकवचनमात्रम् । तत्र हेतुमाह-**चित्रपटादाविति** । '**चित्ररूपस्यैव**' इत्येव-कारेण शुक्लादेर्व्यवच्छेदः । यथा तत्र चित्ररूपं प्रतीयते तथा शुक्लादिकमपि प्रतीयत इति शुक्लादिकमपि तत्राभ्युपेयमित्याह- **शुक्लादिरूपाणामपीति** । अवयवगतानामेव शुक्लादिरूपाणां स्वसमवायिसमवेतत्वसम्बन्धेन तत्रावयविनि प्रतीतिर्भवतीति यदि परो ब्रूयात् तत्प्रतिषेधार्थमाह- **साक्षात्सम्बन्धेनेति** । **निर्विगानं** विवादमन्तरेण । **तत्र** अवयविनि । ननु अवय-विनि शुक्लादिनानारूपकल्पनाया गौरवं स्यादतः साक्षात्सम्बन्धेन तत्र शुक्लादिप्रतीतिर्बाधितैवेति न तथा तत्र शुक्लादिव्यव-स्थितिरित्यत आह- **प्रत्येतव्येति**- प्रत्येतव्यं यच्छुक्लादि तत्कल्पनागौरवेण । शुक्लादिप्रतीतिबाधे चतुरणुकादावपि त्र्यणुक-गतरूपादेरेव परम्परया प्रतीतेरुपपत्तेः साक्षात्सम्बन्धेन तत्कल्पनाया चतुरणुकादिगतरूपकल्पनया गौरवं स्यादतश्चतुरणुकादौ रूपादिकं न कल्प्यत इति रूपादेस्त्रुटिमात्रगतत्वापत्तिः- त्रसरेणुमात्रगतत्वापत्तिः, यद्यपि ततोऽपि परमाणुमात्रगतत्वे लाघवम्, तथापि परमाणुमात्रगतरूपादेरयोग्यत्वात् प्रत्यक्षं न स्यादिति त्रुटिमात्रगतत्वस्यैवापादनमिति । उक्तार्थे सम्मति-टीकाकृतां वचनं संवादकतयोपदर्शयति- **तदिदमाहुरिति** । सम्मतिटीकाकृद्वचनमेवोल्लिखति-**न चेति** । '**चित्रपटादौ**' इत्यत्रादिपदाच्चित्रघटादेर्ग्रहणम्, अपास्तो निरस्तः शुक्लादिविशेषो यत्र तदपास्तशुक्लादिविशेषम्, तथाभूतं रूपमात्रं चित्रपटा-द्युपलम्भान्यथानुपपत्त्या- बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपं कारणमिति यदि चित्रपटादौ रूपं न स्यात् तत्प्रत्यक्षमेव न स्यादित्येवरूपया, चित्रपटादावस्तीत्यभ्युपगन्तव्यं न चेत्यर्थः । पृच्छति- **कथमिति**- कथं नाभ्युपगन्तव्यमित्यर्थः । उत्तर-यति- **चित्ररूप** इति यदि रूपमात्रं तत्र स्यात् तर्हि ' रूपवान् घट ' इति प्रतिभासः स्यान्न ' चित्ररूपः पटः ' इति प्रतिभासो भवेदतो रूपमात्राभ्युपगमो न युक्त इत्यर्थः । उक्तवचनतात्पर्यमुपवर्णयति- **एकाधिकरण्येति**- एकाधिकरणवृत्ति-त्वविशिष्टो यः शुक्लादिसमुदायः स एव कथञ्चित्समुदायातिरिक्तं चित्ररूपमिति तत्र चित्रपटादौ शुक्लादेः समुदायिनः प्रत्येकस्याग्रहे तत्समुदायरूपस्य चित्रस्याग्रहप्रसक्तिरिति सम्मतिटीकाकृद्वचनतात्पर्यार्थ इत्यर्थः । शुक्लादिभ्यः सर्वथा व्यति-रिक्तस्यैव चित्रमात्रस्य चित्रपटादावुपगमे तस्य चित्ररूपस्य सम्पूर्णपटवृत्तित्वेन प्रत्येकं शुक्लाद्यवयवावच्छेदेनापि सत्त्वात् शुक्लावयवमात्रावच्छेदेन चक्षुःसन्निकर्षेण तत्र चित्रप्रत्यक्षं स्यादित्याह- **किञ्चेति** । **एवं** शुक्लादिव्यतिरिक्तचित्ररूपाभ्युपगमे ।

अत्र नैयायिकः परिहारमाशङ्कते- **अथेति** । **चित्रत्वग्रह** इति- विशेष्यतासम्बन्धेन समवायसम्बन्धावच्छिन्नचित्रत्वनिष्ठ-प्रकारताकप्रत्यक्षे विशेष्यतासम्बन्धेन स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नावयवगतनीलेतररूपनिष्ठनिरूपकतानिरूपिताधिकरणत्व-

अथ चित्रत्वग्रहे परम्परयाऽवयवगतनीलेतररूप-पीतेतररूपादिमत्त्वग्रहो हेतुः, अत एव त्र्यणुकचित्रं चक्षुषा न गृह्यत इत्याचार्याः। न च, चित्रत्वनिष्ठविषयतया चित्रत्वग्रहे स्वविशेष्यसमवेतसमवेतत्वसम्बन्धेनोक्तस्य हेतुत्वे घटावयवगततद्ग्रहात् शुक्लावयवावच्छेदेन चित्रपटसन्निकर्षेऽपि तद्रूपचित्रत्वप्रत्यक्षापत्तिरिति वाच्यम्, विशेष्यतया चित्रत्वप्रकारकप्रत्यक्ष एव विनिर्युक्तसम्बन्धेन तद्धेतुत्वात्, न च, नीलेतररूपत्वाद्यवच्छिन्नप्रकारताग्रहो न हेतुः,नीलत्व-पीतत्वादिनाऽवयवगत-नील पीतादिग्रहेऽप्यवयविचित्रप्रत्यक्षोत्पादादिति वाच्यम्, विलक्षणचित्रप्रत्यक्षे तेन तेन रूपेण तत्तद्ग्रहस्यापि हेतुत्वात्, वस्तुतो नीलेतररूपत्वादिव्याप्यत्वेन नीलेतररूपत्व-पीतत्वाद्यनुगमात्र क्षतिरिति चेत् ? न–त्र्यणुकचित्ररूपाग्रहे चतुरणुक-

---

स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नावयवगतपीतेतररूपनिष्ठनिरूपकतानिरूपिताधिकरणत्वादिनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारताकप्रत्यक्षं कारणमित्यवयवगतनीलेतररूपादिमत्त्वग्रहे सत्येव चित्रप्रत्यक्ष नान्यथेत्यर्थः। उक्तकार्यकारणभावे न्यायधुरन्धरोदयनाचार्यसम्मतिमुपदर्शयति– **अत एवेति**– निरुक्तकार्यकारणभावादेवेत्यर्थ., त्र्यणुके यद्यपि स्वसमवायिसमवेतत्वसम्बन्धेन द्व्यणुकगतनीलेतररूपादिमत्त्वं वर्तते तथापि तस्याऽयोग्यत्वात् प्रत्यक्ष न भवति, ततस्तदात्मककारणाभावात् त्र्यणुकचित्र चक्षुषा न गृह्यत इत्युदयनाचार्या वदन्तीत्यर्थः। उक्तदिशा कार्यकारणभावं नैयायिकाभिमतमजानतः प्रकारान्तरेण कार्यकारणभावं नैयायिकाभिमत कल्पयत. परस्य शङ्कामुत्थाप्य नैयायिकः प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वय.। **उक्तस्य** अवयवगतनीलेतररूप–पीतेतररूपादिमत्त्वग्रहस्य, एतत्सङ्गमनं चेत्थम् - चित्रत्वप्रत्यक्षं चित्रत्वनिष्ठविषयतासम्बन्धेन चित्रत्वे समुत्पद्यते तत्रावयवगतनीलेतररूपादिमत्त्वग्रह. स्वविशेष्योऽवयवः, तत्समवेतोऽवयवी, तत्समवेतत्व चित्रत्वे समस्तीति तत्सम्बन्धेन समस्तीति तत्प्रत्यक्षं तत उत्पद्यत इति। अत्र '**घटावयव**' इत्यादिना यदापादनं कृत तदित्थसङ्गमनम्– चित्रत्वमेकमेव, तत्र शुक्लावयवावच्छेदेन चित्रपटसन्निकर्षो वर्तते, घटावयवगतनीलेतररूपादिग्रह उक्तसम्बन्धेन चित्रत्वे समस्तीति घटगतचित्रत्वापत्तिः, वस्तुतोऽत्र चित्ररूपात्मकं चित्रत्व नैकमिति तदाश्रित्य कार्यकारणभावो न, किन्तु चित्ररूपगतं यच्चित्रत्वमेकं तदाश्रित्यैव कार्यकारणभावः, तत्र परम्परासम्बन्धेन घटावयवगतनीलेतररूपादिमत्त्वग्रहो घटविशेष्यको भवति, इत्थं च यदेव चित्रत्व घटगतचित्ररूपे वर्तते तदेव चित्रत्व पटगतचित्ररूपेऽपि वर्तते इति चित्रपटमादाय यदा चक्षुष स्वसंयुक्तसमवेतत्वसमवायलक्षणसन्निकर्षश्चित्रत्वे वर्तते तदानी स्वसमवायिसमवेतत्वसम्बन्धेन घटावयवगतनीलेतररूपादिमत्त्वग्रहे स ग्रहः, स्वविशेष्यो घटः, तत्समवेतं तद्गतचित्ररूपम्, तत्समवेतत्वं चित्रत्वे समस्तीति तेन सम्बन्धेन तत्र वर्तत इति तदात्मककारणस्य सत्त्वेन चित्रपटरूपचित्रत्वप्रत्यक्षत्वापत्तिरित्यर्थः। निषेधहेतुमुपदर्शयति– **विशेष्यतयेति**। '**विनिर्युक्तसम्बन्धेन**' इति स्थाने 'निरुक्तसम्बन्धेन' इति पाठो युक्तः तस्य विशेष्यतासम्बन्धेनेत्यर्थ.। **तद्धेतुत्वात्** परम्पराऽवयवगतनीलेतररूप-पीतेतररूपादिमत्त्वग्रहस्य हेतुत्वात्। '**न च**' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। '**प्रकारताग्रह**' इत्यस्य स्थाने 'प्रकारताकग्रह' इति पाठो युक्तः। **न हेतुः** न चित्रत्वप्रकारकप्रत्यक्षे कारणम्। तादृशहेतुत्वाभावे व्यतिरेकव्यभिचार हेतुत्वेनोपदर्शयति- **नीलत्व पीतत्वादिनेति**। उक्ताशङ्कानिषेधे हेतुमाह– **विलक्षणचित्रप्रत्यक्ष** इति– यादृशचित्रप्रत्यक्षमवयवगतनील-पीतादिग्रहेणोपजायते तादृशचित्रप्रत्यक्षे नीलत्व-पीतत्वादिरूपेणावयवगतनील-पीतादिग्रहस्य हेतुत्वम्, यादृशचित्रप्रत्यक्षमवयवगतनीलेतररूप-पीतेतररूपादिग्रहेणोपजायते तादृशचित्रप्रत्यक्षे नीलेतररूपत्वाद्यवच्छिन्नप्रकारताकग्रहो हेतुरित्येवमुपगमे व्यतिरेकव्यभिचाराभावादित्यर्थः। **तेन तेन रूपेण** नीलत्व-पीतत्वादिना। **तत्तद्ग्रहस्यापि** अवयवगतनील-पीतादिग्रहस्यापि। नीलत्व-पीतत्वादीना नीलेतररूपत्व-पीतेतररूपत्वादीना च नीलेतररूपत्वादिव्याप्यत्वेनानुगमाच्च चित्रत्वप्रकारकप्रत्यक्षे नीलेतररूपत्वादिव्याप्यधर्मावच्छिन्नप्रकारताकग्रहत्वेन कारणत्वेऽपि न व्यभिचार इत्याह– **वस्तुत** इति। उक्तनैयायिकाशङ्का प्रतिक्षिपति– **नेति**। अवयवगतनील-पीतादिग्रहस्यावयवगतनीलेतररूप-पीतेतररूपादिग्रहस्य चित्रप्रत्यक्षकारणत्वे चित्रत्र्यणुकारब्धचतुरणुकस्य चित्ररूपस्य प्रत्यक्षं न स्यात्, यत. त्र्यणुकचित्रस्यैव प्रथम प्रत्यक्ष न सम्भवति, तदवयवद्व्यणुकगतनीलादेर्नीलेतररूपादेश्चायोग्यत्वेन तद्ग्रहणाभावे तद्रूपकारणाभावात्, त्र्यणुकचित्राग्रहे च भवन्मते तत्र चित्ररूपवति रूपान्तरस्याभावात्, येन त्र्यणुकगतरूपान्तरग्रहतोऽपि चतुरणुकप्रत्यक्षस्योत्पत्ति. संभाव्येत, अत उक्तदिशा कार्यकारणभावो न सभवति, चित्रावयवारब्धावयविचित्रप्रत्यक्षसाधारण्येन, किन्तु चित्रावयवारब्धचित्रग्रहेऽवयवविशेष्यकनीलेतररूपत्वादिव्याप्यचित्रत्वावच्छिन्नप्रकारकग्रहस्यैव

चित्रप्रत्यक्षानुपपत्तेश्चित्रावयवारब्धचित्रग्रहेऽवयवविषयकनीलेतररूपत्वादिव्याप्यचित्रत्वावच्छिन्नप्रकारकग्रहस्यैव हेतुत्वात्, यदि च नीलेतररूप-पीतेतररूपादिमदवयवावच्छेदेनेन्द्रियसन्निकर्षस्यावयवनीलादिगतनीलत्वादिग्रहप्रतिबन्धकदोषाभावानां च चित्रप्रत्यक्षे हेतुत्वम्, अतस्त्रसरेणुचित्रस्यापि चक्षुषा ग्रह इत्युद्भाव्यते, तदा अनन्तहेतुहेतुमद्भावकल्पनागौरवाच्चित्रत्वं व्यासज्यवृत्त्येव, तत्र च समानाधिकरणनानारूपग्रहव्यङ्ग्यत्वमित्येव कल्प्यमानं शोभते, नह्येवं गौरवम्, चित्रत्वग्रहे सामानाधिकरण्येन रूपविशिष्टरूपग्रहत्वेनैव हेतुत्वात्, उक्तहेत्वभावे चित्रत्वविनिर्मुक्तचित्रप्रत्यक्षस्य चोभयोस्तुल्यत्वात्, यदि च नानावयवावच्छिन्नपर्यायवृत्तिरेकं चित्रमप्यनुभूयते, अत एवैकावयवावच्छेदेन चित्राभावप्रतीतेरप्युपपत्तिरिति स्वीक्रियते, तदैकानेकचित्रद्रव्यस्वभावाभ्युपगमं विना न काप्युपपत्तिः, देश-स्कन्धनियतधर्माणां तद्ग्राहकसामग्रीग्राह्यत्वेनैवोक्तोपपत्तेर्देश-स्कन्धपरिमाणविशेषग्रहेऽपीयमेव गतिरिति दिक् ।

किञ्च, नीलेतररूपादिषट्कस्यैव चित्ररूपे हेतुत्वमित्येतावतैव नोपपत्तिः, अवयवगतोत्कृष्टा-ऽपकृष्टनीलाभ्यामपि चित्रसम्भवात्, ते चोत्कर्षा विचार्यमाणा अनन्ता एव, तदाहुः श्रीसिद्धसेनाः—

---

हेतुत्वमित्याह– त्र्यणुकचित्ररूपाग्रह इति । 'अवयवविषयक' इति स्थाने 'अवयवविशेष्यक' इति पाठो युक्तः, अत्र च समानविशेष्यतया कार्यकारणभावो न सम्भवति, कार्यकारणयोर्विभिन्नविशेष्यकत्वात्, किन्तु समवायलक्षणसामानाधिकरणप्रत्यासत्त्यैव कार्यकारणभाव इति बोध्यम् । ननु नीलेतररूप-पीतेतररूपादिमदवयवावच्छेदेनेन्द्रियसन्निकर्षस्य चित्रप्रत्यक्षे हेतुत्वम्, तत्रावयवनीलादिगतनीलत्वादिग्रहप्रतिवन्धकदोषाभावाना च चित्रप्रत्यक्षे हेतुत्वम्, अतस्त्रसरेणुचित्रस्यापि प्रत्यक्ष सम्भवति, यतो नीलेतररूप पीतेतररूपादिमद् यद् द्व्यणुक तद्रूपत्रसरेण्ववयवावच्छेदेनेन्द्रियसन्निकर्षोऽपि विद्यते, द्व्यणुकलक्षणावयवनीलस्याऽयोग्यत्वादेव प्रत्यक्षाभावे तद्गतनीलत्वस्यापि तत एव ग्रहणं न भवतीति न तत्प्रतिवन्धकदोषकल्पनेति तादृशदोषाभावोऽपि विद्यत इति तद्रूपकारणसद्भावादित्यत आह– यदि चेति । एव सत्यनन्तहेतुहेतुमद्भावकल्पनागौरवं स्यादित्याह– तदेति । तर्हि किमभ्युपेयमित्यपेक्षायामाह– चित्रत्वमिति । 'व्यासज्यवृत्त्येव' इति स्थाने 'व्यासज्यवृत्त्येव' इति पाठो युक्त, तस्य चावयविगतनील-पीतादिचित्रपर्याप्तवृत्त्येवेत्यर्थ । तत्र च निरुक्तचित्रत्वे च । समानाधिकरणनानारूपग्रहव्यङ्ग्यत्वम् एकाधिकरणवृत्तिनानारूपग्रहजन्यप्रत्यक्षविषयत्वम् । इत्थ कल्पने गौरवं स्यादित्याशङ्क्य प्रतिक्षिपति– नह्येवं गौरवमिति । उक्तहेत्वभावे सामानाधिकरण्यसम्बन्धेन रूपविशिष्टरूपग्रहरूपकारणाभावे । चित्रत्वेन चित्ररूपग्रह एव तस्य कारणत्वमुपेयते, न तु चित्रप्रत्यक्षमात्र इति निरुक्तकारणाभावे चित्रत्वेन चित्रप्रत्यक्ष मा नाम जायताम्, चित्रप्रत्यक्ष तु स्यादेवेत्याह– चित्रत्वविनिर्मुक्तेति– चित्रत्वाविषयकेत्यर्थ । उभयो. तव मम च । ननु चित्रावयविनि प्रत्येकावयवावच्छेदेन नीलादिकमपि विद्यते, नानावयवावच्छेदेनैक चित्रमपि विद्यत इत्यभ्युपगमस्तत्राह– यदि चेति । नानावयवावच्छिन्नपर्यायवृत्तिः नानावयवावच्छिन्नावयव्यात्मकपर्यायवृत्ति । अत एव नानावयवावच्छिन्नपर्यायवृत्त्येकचित्राभ्युपगमादेव । तथा सत्यनायासेन स्याद्वाद आपतितः, तमन्तरेणेत्थमभ्युपगमाऽसम्भवादित्याह– तदेति -एकस्वभावत्वेन चित्ररूपमपि तत्र विद्यते, नानास्वभावत्वेन नानारूपाण्यपि तत्र विद्यन्त इति स्याद्वाद. सिद्ध इत्याशय. । एकैकावयवावच्छेदेन चक्षुस्सन्निकर्ष एकैकावयवावच्छिन्नवृत्तिकशुक्लादिग्राहक, नानावयवावच्छेदेन चक्षुस्सन्निकर्षो नानावयवावच्छिन्नवृत्तिकचित्ररूपग्राहक इत्येव विभिन्नसामग्रीग्राह्यत्वेनोक्तोपपत्ति. सम्भवतीत्याह– देशेति– शुक्लादिर्देशनियतो धर्मः, चित्रं तु स्कन्धनियतो धर्म इति बोध्यम् । तद्ग्राहकेति– देशस्कन्धग्राहकेत्यर्थ । यथा च चित्रपटादौ नानारूपैकरूपग्रहयोरुक्तदिशोपपत्तिस्तथैका-ऽनेकपरिमाणविशेषग्रहाणामप्युक्तदिशैवोपपत्तिरित्याह– देश-स्कन्धपरिमाणविशेषग्रहेऽपीति । यथा च नील-पीताभ्या नील-रक्ताभ्यामित्येवं रूपद्वयवद्भ्या तथा विजातीयरूपत्रयैर्विजातीयरूपचतुष्टयादिभिरवयवैरारब्धेष्ववयविषु चित्ररूपोत्पत्ति, तथैकजातीयरूपवद्भ्या नील-नीलतरावयवाभ्यामेव पीत-पीततरावयवाभ्यां नील-नीलतर-नीलतमावयवैः पीत-पीततर-पीततमावयवैरारब्धेष्ववयविषु विलक्षणविलक्षणचित्रोत्पत्तिरनुभूयत इति तेषामपि चित्र प्रति कारणत्वमभ्युपगन्तव्यमेवेत्याह– किञ्चेति । ते चोत्कर्षाः अवयवनीलादिगता उत्कर्षा. ।

" पच्चुप्पणम्मि वि पज्जयम्मि भयणागइं पडइ दव्वं, जं एगगुणाईआ अणंतकप्पा गुणविसेसा ॥ "

—[ सम्मतितर्ककाण्ड० ३, गाथा ६ ]

व्याख्या—प्रत्युत्पन्ने(ऽपि)– वर्तमानेऽपि पर्याये, भजनागतिं–भेदाऽभेदप्रकारम्, पतति-आसादयति द्रव्यम्, यत्–यस्मादेकगुणकृष्णत्वादयोऽनन्तप्रकारास्तत्र गुणविशेषाः, कल्पशब्दः प्रकारवाची, तेषां च मध्ये केनचिदेव गुणविशेषेण युक्तं तदिति ॥

कृष्णं हि द्रव्यं द्रव्यान्तरेण तुल्यमधिकमूनं वा भवेत् प्रकारान्तराभावात्, आद्ये सर्वतुल्यत्वे तदेकतापत्तिः, उत्तरयोः सङ्ख्येयादिभागगुणवृद्धिहानिभ्यां षट्स्थानकप्रतिपत्तिरवश्यम्भाविनी, तथा च प्रतिनियतहानि-वृद्धियुक्तकृष्णादिपर्यायेण सत्त्वं नान्येनेति, इत्थं च नीलत्वाद्यवान्तरजातीनामनन्तत्वात् तरतमशब्दमात्रेण तदनुगमस्य कर्तुमशक्यत्वात्, तत् तदवान्तरजातीयनील-पीतादीनामनन्तानां चित्रहेतुत्वकल्पने गौरवमिति षट्स्थानपतितवर्णपर्यायेण चित्रद्रव्यमेव स्वसामग्रीप्रभवमभ्युपगन्तव्यम्, अर्थसमाजसिद्धधर्मस्यापि तथाभवत्वकार्यतावच्छेदकत्वस्वीकारात्, एतेन चित्रप्रत्यक्षजनकतावच्छेदकमपि चक्षुःसंयोगनिष्ठं वैजात्यं स्वीकर्तव्यमित्यपि निरस्तम्, सूक्ष्मेक्षिकयाऽनन्तावान्तरचित्रानुभवादनन्तवैजात्यकल्पनापत्तेरत्यन्ताप्रामाणिकत्वादिति द्रष्टव्यम् ।

---

तेषामुत्कर्षाणामानन्त्ये श्रीसिद्धसेनदिवाकराणां वादिप्रवराणा सम्मतिमुपदर्शयति– **तदाहुरिति**। ' पच्चुपणम्मि० ' इति–" प्रत्युत्पन्नेऽपि पर्याये भजनागति पतति द्रव्यम्। यदेकगुणादिका अनन्तकल्पा गुणविशेषाः " ॥ इति संस्कृतम्। विवृणोति– **प्रत्युपन्नेऽपीति**। तत्र वर्तमानपर्याये। **तेषां च** अनन्तप्रकाराणां गुणविशेषाणाम्। **तद्** द्रव्यम्। एतावताऽक्षरार्थो भावितः। अभिप्रेतार्थमुपदर्शयति– **कृष्णं हीति**| **प्रकारान्तराभावात्** तुल्याधिकोनप्रकारत्रयातिरिक्तप्रकाराभावात्। **आद्ये** कृष्णं द्रव्य द्रव्यान्तरेण तुल्यमिति पक्षे। ' **सर्वतुल्यत्वे** ' इति स्थाने ' सर्वथा तुल्यत्वे ' इति पाठो युक्तः। सर्वथा तुल्यत्वं तयोस्तदैव स्याद् यद्यसाधारणमप्येकस्य रूपस्यापरस्य स्यादिति **तदेकत्वापत्तिः** तयोर्द्रव्ययोरैक्यं स्यादित्यर्थः। **उत्तरयो.** कृष्ण द्रव्य द्रव्यान्तरेणाधिककृष्णमिति द्रव्यान्तरेणोनकृष्णमिति द्वितीय-तृतीयपक्षयो.। ' **सङ्ख्येयादि** ' इति– आदिपदादसङ्ख्येया–ऽनन्तयोः परिग्रहः। **षट्स्थानकप्रतिपत्तिरिति**–सङ्ख्येयभाग-गुणवृद्धिः १ असङ्ख्येयभाग-गुणवृद्धि. २ अनन्तभागगुणवृद्धिः ३ सङ्ख्येयभागगुणहानिः ४ असङ्ख्येयभागगुणहानिः ५. अनन्तभागगुणहानिः ६ इत्येवं षद्स्थानकप्रतिपत्तिरित्यर्थः। **तथा च** षद्स्थानकप्रतिपत्तेरवश्यम्भावित्वे च। **इत्थं च** प्रतिनियतहानिवृद्धियुक्तकृष्णादिपर्यायेण सत्त्वं नान्येनेति व्यवस्थितौ च। **नीलत्वाद्यवान्तरजातीनां** नीलत्वादिव्याप्यैकगुणकृष्णत्वादिजातीनाम्। यदि तासा सर्वासा जातीना केनचिद्रूपेणानुगमः स्यात् तदा तद्रूपेण चित्रं प्रति हेतुत्वकल्पने गौरवं न भवेत्, न चैवमित्याह– **तरतमशब्दमात्रेणेति**– अर्थस्यैकस्याभावे शब्दानुगमोऽकिञ्चित्कर इत्याशयः। **तदनुगमस्य** नीलत्वाद्यवान्तरजातीनामनुगमस्य। अनुगमनाभावे गौरव स्यादेवेत्याह–**तत्तदवान्तरेति**। तर्हि किमभ्युपेयमित्यपेक्षायामाह– **षट्स्थानेति**–षट्स्थानपतिता ये एकगुणकृष्णत्वादिविशिष्टा वर्णास्तदन्यतमपर्यायेण चित्रद्रव्यमेव स्वसामग्रीप्रभवमभ्युपेयम्, स्वसामग्रीत उत्पद्यमानं द्रव्य तथाभूतमेवोत्पद्यते, गुणाना सहभाविपर्यायत्वेन गुणसहितमेव द्रव्यमुत्पद्येत, न तु पूर्वं द्रव्यं ततोऽवयवगुणविशेषतस्तत्र गुणविशेषोत्पत्तिरिति। यद्यपि वर्णविशेपोत्पादकसामग्रीतो वर्णविशेष., द्रव्यविशेपोत्पादकसामग्रीत्तो द्रव्यविशेष इति तदुभयसम्मिलनेन तथाभूतद्रव्यविशेषसम्भव इत्यनेकसामग्रीसमाजप्रयोज्यत्वलक्षणार्थसमाजसिद्धत्ववदेव तथाभूतद्रव्यत्व तथापि तस्यापि तथाभवत्वस्वाभाव्यस्य कार्यतावच्छेदकत्वमुपगम्यत इति तथाभूतस्वभावबलादेव तथाभूतद्रव्योत्पत्तिरित्याह– **तथाभवत्वेति**। **एतेनेति**– अस्य ' निरस्तम् ' इत्यनेनान्वयः, एतेन– पट्स्थानपतितवर्णपर्यायेण चित्रद्रव्यस्य स्वसामग्रीप्रभवत्वस्वीकारेण। चित्रप्रत्यक्षमपि नैकविधचित्रत्वप्रकारकमेव, किन्तु विलक्षणविलक्षणचित्रत्वप्रकारकमिति तदनुरोधेन तत्कारणीभूतेषु चक्षुस्संयोगेष्वपि वहूनि वैजात्यानि तत्तच्चित्रत्वप्रकारकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतयाऽभ्युपेयानि, निरुक्तदिशैवोपपत्तौ च न तथाभूतानन्तवैजात्यकल्पना प्रामाणिकी येन प्रामाणिकत्वात् तद्गौरवं दोषानावह स्यादिति निरासहेतुमुपदर्शयति– **सूक्ष्मेक्षिकयेति**– सूक्ष्मविचारेणेत्यर्थः। एतावता चित्ररूपवादिप्राचीननैयायिकमतमपाकृतम्।

अव्याप्यवृत्तिरूपपक्षेऽप्यवयवगतोत्कृष्टाऽपकृष्टनीलाभ्यामवयविनि तयोरवच्छिन्नयोः सामान्यसामग्री-वशात् अर्थात् अनवच्छिन्नस्य नीलस्योत्पत्तिप्रसङ्गः, अवयविनीलतरत्वाद्यवच्छिन्न एवावयवनीलतर-त्वादिना हेतुत्वे नीलत्वावच्छिन्नस्याकस्मिकत्वप्रसङ्गः, किमाकस्मिकत्वमिति चेत् ? तद्धर्मावच्छिन्ना-र्थितया प्रवृत्तिविरहः, एतत्कारणसत्त्वे नीलत्वावच्छिन्नस्यावश्यमुत्पत्तिरित्यनिश्चयश्च, प्रतीयते च तत्र नीलसामान्यमवच्छिन्नम्, अवच्छिन्नाश्च तद्विशेषाः, केवलशुक्लेऽपि च स्वल्प-बह्ववयवावच्छेदेनेन्द्रिय-सन्निकर्षेऽणु-महत्त्वोपेतशुक्लविशेषास्तदनुशक्तं शुक्लसामान्यं च, इत्येकाऽनेकवर्णविशिष्टद्रव्यपरिणामाभ्युप-गमं विना न कथमपि निस्तारः। एतेन 'अव्याप्यवृत्तिनीलादिकल्पे न ग्राहकान्तरकल्पनम्, अव्याप्य-

---

अथाव्याप्यवृत्तिनानारूपवादिनवीननैयायिकमतखण्डनमधिकरोति– **अव्याप्यवृत्तिरूपपक्षेऽपी**ति। **तयोः** उत्कृष्टा-ऽपकृष्टनीलयोः। **अवच्छिन्नयोः** उत्कृष्टनीलावयवावच्छिन्नाऽपकृष्टनीलावयवावच्छिन्नयोः, अस्य 'उत्पत्तिप्रसङ्गः' इत्यने-नान्वयः। **अर्थात्** अर्थबलसिद्धात्। तद्धर्मावच्छिन्नोत्पत्तौ तद्व्यापककार्यतावच्छेदकीभूताशेषधर्मावच्छिन्नोत्पादकसामग्री तद्व्याप्ययत्किञ्चिद्धर्मावच्छिन्नोत्पादकसामग्री चापेक्षितेत्ययं नियमो यस्य धर्मस्य व्याप्यीभूतधर्मो व्यापकीभूतधर्मश्च कार्यतावच्छेदकः समस्ति तत्र, यस्य धर्मस्य तु व्यापकीभूतधर्मः कार्यतावच्छेदको नास्ति तत्र तद्धर्मावच्छिन्नोत्पत्तौ तद्धर्मव्याप्य-किञ्चिद्धर्मावच्छिन्नोत्पादकसामग्री अपेक्षितेति नियम, यस्य तु न किञ्चिद्व्याप्यधर्म कार्यतावच्छेदकः समस्ति तद्धर्माव-च्छिन्नोत्पत्तौ तद्व्यापकीभूताशेषधर्मावच्छिन्नोत्पादकसामग्री अपेक्षितेति नियम·, स्वावच्छिन्नोत्पादकसामग्री तु सर्वत्रापेक्षि-तैवेति, तथा चोत्कृष्टनीलत्वस्याऽपकृष्टनीलत्वस्य च व्यापकीभूतधर्मो नीलत्वं यत्किञ्चित्कारणतावच्छेदक समस्तीति तत्त-दवच्छिन्नोत्पत्तिस्थले नीलत्वावच्छिन्नोत्पादकसामग्र्या अवश्यम्भावात् ततोऽनवच्छिन्नस्य नीलस्योत्पत्तिप्रसङ्गोऽपि तत्र भवे-दित्यर्थः। '**नीलस्योत्पत्तिप्रसङ्गः**' इत्यस्य स्थाने 'नीलस्य चोत्पत्तिप्रसङ्गः' इति पाठो युक्तः। यदि च नील-त्वावच्छिन्न प्रति नीलत्वावच्छिन्न कारणमिति सामान्यकार्यकारणभावो नाभ्युपेयत एव, किन्त्ववयविनीलतरत्वावच्छिन्नं प्रति अवयवनीलतरत्वावच्छिन्नं कारणमित्येवाभ्युपेयते तदा नीलत्वस्य किञ्चित्कारणनिरूपितकार्यतावच्छेदकत्वाभावात् तदवच्छिन्न-स्याकस्मिकत्व प्रसज्येतेत्याह– **अवयविनीलतरत्वाद्यवच्छिन्न एवे**ति– एवकारेण अवयविनीलतरत्वावच्छिन्ने अवयव-नीलत्वेन कारणत्वस्य व्यवच्छेद.। नीलत्वाद्यवच्छिन्नस्याकस्मिकत्व यदापद्यते तत् किमिति पृच्छति– **किमिति**। नीलत्वा-वच्छिन्नस्य यदा किञ्चित्कारणनियम्यत्वं न स्यात् तर्हि त प्रति कस्यचित् कारणत्वस्याभावात् तं प्रति कारणत्वस्य किञ्चिद्धर्मिणि अग्रहात् तदर्थं तदुद्देश्यकतदुपादानविशेष्यकप्रवृत्तिर्न स्यात्, एवं यदेव किञ्चित्कारणजन्यं तत्रैव कृतिसाध्यत्वज्ञानात् तच्चि-कीर्षया प्रवृत्तिर्भवति, नीलत्वावच्छिन्नं च न किञ्चित्कारणजन्यमिति नीलत्वावच्छिन्नविशेष्यककृतिसाध्यत्वप्रकारकज्ञानाभावात् तच्चिकीर्षाया अभावे तद्गोचरा प्रवृत्तिर्न स्यादिति नीलत्वावच्छिन्नार्थितया प्रवृत्तिविरह एव नीलत्वावच्छिन्नस्याकस्मिकत्व-मित्युत्तरयति– **तद्धर्मावच्छिन्नार्थितये**ति। एवं नीलत्वावच्छिन्नं प्रति यदि कस्यचित् कारणत्व भवेत् तदा तत्कारणसत्त्वे-ऽवश्य नीलत्वावच्छिन्नमुत्पद्यत इति निश्चयः स्यात्, नीलत्वावच्छिन्न प्रति कस्यचित् कारणत्वाभावे तूक्तनिश्चयाभावः स्यात्, स एव चाकस्मिकत्वमित्याह–'**एतत्कारणसत्त्व** इति। ननु नीलत्वावच्छिन्नं प्रति कस्यचित् कारणत्वाभा-वान्नीलत्वावच्छिन्नं तत्रोत्पद्यत एव, किन्तु नीलतरत्वाद्यवच्छिन्नमव्याप्यवृत्त्येव तत्रोत्पद्यत इत्यत आह– **प्रतीयते चे**ति। **तत्र** नीलतरादिरूपवत्यवयविनि। '**नीलसामान्यमवच्छिन्नम्**' इति स्थाने 'नीलसामान्यमनवच्छिन्नम्' इति पाठो युक्तः। **तद्विशेषाः** नीलविशेषा·, तथा चानवच्छिन्ननीलसामान्य-नीलतरनीलतमादिलक्षणनीलविशेषप्रती-त्यन्यथानुपपत्त्याऽनवच्छिन्ननीलसामान्यावच्छिन्ननीलविशेषाणामेकत्र द्रव्ये स्वीकार आवश्यक इत्यर्थः। यत्र च द्रव्ये केवलशुक्लमेव रूपम्, तत्रापि स्वल्पावयवावच्छेदेनेन्द्रियसन्निकर्षेऽणुशुक्लरूप प्रतीयते बह्ववयवावच्छेदेनेन्द्रियसन्निकर्षे महच्छुक्लरूप तदुभयानुस्यूत शुक्लसामान्यं च प्रतीयत इति तादृशप्रतीत्यन्यथानुपपत्त्याऽनवच्छिन्नशुक्लसामान्यावच्छिन्नशुक्ल-विशेषाणामप्येकत्र द्रव्ये स्वीकार आवश्यकः, एवं केवलपीतादिस्थलेऽपीत्याह– **केवलशुक्लेऽपि चे**ति। '**तदनु-शक्तम्**' इति स्थाने 'तदनुषक्तम्' इति पाठो युक्तः, तस्य तदनुस्यूतमित्यर्थ·। 'शुक्लसामान्यं च' इत्यनन्तर 'प्रतीयते' इत्यनुषज्यते। उपसंहरति– **इती**ति–एतस्मात् कारणादित्यर्थः, एकाऽनेकवर्णविशिष्टद्रव्यपरि-णामो यदि स्वसामग्रीप्रभव उपेयते तदैवैकस्यापि द्रव्यस्य तत्तद्वर्णविशिष्टत्वेन प्रत्यक्ष तत्तत् प्रत्यक्षसामग्रीबलादुपपद्यते नान्यथेत्यतस्तथाऽभ्युपगम एव ज्यायानित्याशयः। 'एतेन' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः। **एतेन** अनेकवर्णविशिष्ट-

वृत्तिद्रव्यसमवेतप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुःसंयोगकावच्छेदकावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतासन्निकर्षेण संयोगादिप्रत्यक्षस्थले क्लृप्तेनैवानतिप्रसङ्गात्, नील-पीतोभयकपालारब्धघटीयनीले च नीलकपालिकैव परम्परयाऽवच्छेदिकेत्यभ्युपगमाद्, इत्यादि निस्तरम्, शाखा-मूलोभयावच्छिन्नदीर्घतन्तुतरुसंयोगवत् नील( नीले )तरोभयाद्यवयवावच्छिन्नविलक्षणरूपस्यानुभवसिद्धत्वेन तद्ग्राहकोभयादिपर्याप्तावच्छेदकताकाधिकरणतागर्भसन्निकर्षादिकल्पनाया अप्यावश्यकत्वात्, उपदर्शितसंयोगस्थलेऽपि एकैकावच्छिन्नसंयोगद्वयस्वीकारे च तद्वृत्तिकृता सर्वैश्च नीलैरारब्धेऽवयविनि नीलात् नीलं स्वस्वावच्छेदेन समुत्पद्यमानं रूपमविरोधाद् व्यापकमेवोत्पद्यते, सजातीय-विजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनमिवैकं ज्ञानमिति, तत्सर्वं विलूनशीर्णं स्यात्, यथादर्शनमंश-कार्त्स्न्याभ्यां नानैकसंयोगरूपा-

---

द्रव्यपरिणामाभ्युपगमस्योक्तदिशाऽवश्यकत्वेन। ननु व्याप्यवृत्तिनीलप्रत्यक्षं प्रत्यनवच्छिन्न एव चक्षुस्संयोगः कारणम्, अव्याप्यवृत्तिनीलप्रत्यक्ष प्रति तत्तदवच्छेदकावच्छिन्नचक्षुस्संयोगः कारणमित्येव ग्राहकान्तरकल्पनमावश्यकमेवेत्यत आह– **अव्याप्यवृत्तीति**– अव्याप्यवृत्तीनां संयोगविभागादीना यत् प्रतिनियतावच्छेदकावच्छेदेन प्रत्यक्ष तत्र यदि तत्सयोगप्रत्यक्षं प्रति तत्संयोगावच्छेदकावच्छिन्नचक्षु संयोगस्य कारणत्वम्, एतत्सयोगप्रत्यक्ष प्रत्येतत्संयोगावच्छेदकावच्छिन्नचक्षुस्संयोगस्य कारणत्वम्, एव विभागादिप्रत्यक्षं प्रतीत्येव कार्यकारणभावाभ्युपगमे व्यक्तिभेदेनाऽनन्तकार्यकारणभावकल्पन स्यात् तद्वयाद्व्याप्यवृत्तिद्रव्यसमवेतप्रत्यक्षत्व यत् सयोगविभागादिप्रत्यक्षसाधारणं तदवच्छिन्नं प्रति चक्षुस्सयोगस्य तत्तदव्याप्यवृत्तिद्रव्यसमवेतावच्छेदकावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतासन्निकर्षेण हेतुत्वम्, तेन यदवयवावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतासन्निकर्षेण चक्षुस्संयोगस्तदवयवावच्छेदेनाव्याप्यवृत्तिद्रव्यसमवेतस्य संयोगादेः प्रत्यक्षं भवतीत्येकेनैव कार्यकारणभावेन यथा संयोगादिप्रत्यक्षाणामुपपत्तिस्तथाऽव्याप्यवृत्तिनीलादिप्रत्यक्षमप्यव्याप्यवृत्तिद्रव्यसमवेतप्रत्यक्ष भवतीति तस्यापि निरुक्तप्रत्यक्षत्वलक्षणकार्यतावच्छेदकाक्रान्तत्वेन तेनैव निर्वाहो यदवच्छेदेनाव्याप्यवृत्तिनीलादि तदवच्छेदेन चक्षुस्संयोगस्य समवायसम्बन्धावच्छिन्नाधारतासन्निकर्षत एव तत्प्रत्यक्षम्, नान्यावयवावच्छिन्नचक्षुस्संयोगत इत्येवमनतिप्रसङ्गादित्यर्थः। '**चक्षुस्संयोगकावच्छेदक**' इति स्थाने 'चक्षुस्संयोगस्यैकावच्छेदक' इति पाठो युक्तः, संयोगादिप्रत्यक्षस्थले अव्याप्यवृत्तिद्रव्यसमवेतप्रत्यक्षत्वावच्छिन्न प्रति चक्षुस्सयोगस्य क्लृप्तेनैवैकावच्छेदकावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतासन्निकर्षेणाऽनतिप्रसङ्गादित्यन्वय । यत्र नील-पीतोभयरूपवदेवैकं कपालमपरमपि कपाल तथा, ताभ्यामारब्धे घटे यदव्याप्यवृत्तिनीलरूपं तस्य कपालं नावच्छेदकं कपाले नीलरूपवत् पीतरूपस्यापि सत्त्वेन पीतकपालावच्छेदेन चक्षुस्सन्निकर्षेऽपि घटीयाव्याप्यवृत्तिनीलरूपप्रत्यक्ष प्रसज्येतेत्यत आह– **नील-पीतोभयकपालारब्धेति**– नील-पीतोभयरूपवत्कपालारब्धेत्यर्थः, तेन नीलकपाल-पीतकपालोभयारब्धघटीयनीलरूपप्रत्यक्षस्य नीलकपालावच्छेदेन चक्षुस्सन्निकर्षात् सभवेन नीलकपालिकायास्तत्रावच्छेदकत्वाकल्पनेऽपि न क्षतिः । '**नीलकपालिकैव**' इत्येवकारेण कपालस्यावच्छेदकत्वव्यवच्छेदः। **परम्परयेति**– नीलकपालिका कपालनीलस्यावच्छेदिकेति तज्जन्यघटनीलस्याप्यवच्छेदिकेत्यर्थः। 'एतेन' इत्यतिदिष्टनिरासहेत्वन्तरमुपदर्शयति– **शाखेति**– शाखामूलोभयावच्छिन्नो यो दीर्घतन्तुना सह तरो. संयोगस्तस्येव नील-नीलतरोभयाद्यवयवावच्छिन्नं विलक्षणं रूप तस्यानुभवसिद्धत्वेन तथाभूतविलक्षणरूपग्राहकस्य नील नीलतरावयवद्वयादिपर्याप्तायाऽवच्छेदकता तन्निरूपिताधिकरणतागर्भसन्निकर्षादे. कल्पनाया अप्यावश्यकत्वादित्यर्थ. । यदि च शाखा-मूलोभयावच्छिन्नदीर्घतन्तुतरुसंयोगस्थले शाखावच्छिन्नतन्तुतरुसंयोगोऽन्यस्तदन्यश्च मूलावच्छिन्नतन्तुतरुसंयोगश्चान्य इत्येवं संयोगद्वयम्, तर्हि नीलैरारब्धेऽवयविन्यपि तत्तदवयवावच्छिन्नानि नानैव नीलानीति तत्र समूहालम्बनैकज्ञानदृष्टान्तेन तत्तदवयवनीलैः स्वस्वाश्रयावयवावच्छेदेन जायमाननीलं व्यापकमेकमेवेत्यभ्युपगमनमपि परस्य विलीन स्यादित्याह– **उपदर्शितसंयोगस्थलेऽपीति**। '**तद्वृत्तिकृता**' इति स्थाने 'तद्वन्नानानीलस्वीकृतौ यत्' इति पाठ. '**समुत्पद्यमानं रूपमविरोधाद्**' इति स्थाने 'समुत्पद्यमानमविरोधाद्' इति पाठश्च युक्तः, समूहालम्बनज्ञानमप्येक न भवेत् तत्रापि विषयभेदेन भिन्नमेव भवेदिति दृष्टान्तस्याप्यसङ्गतत्व स्यादित्याशय । यदि चोपदर्शितसयोगस्थले शाखावच्छिन्नसंयोगो मूलावच्छिन्नसंयोगः शाखा-मूलोभयावच्छिन्नसंयोग इत्येवं सयोगत्रयम्, तर्हि तद्वदेव प्रत्येकावयवावच्छेदेन विभिन्नं नीलम्, सम्पूर्णे चैकं नीलमित्यपि स्याद्, एवं च स्याद्वादिनामेव जय इत्याह– **यथादर्शनमिति**– प्रतीत्यनुसारेणेत्यर्थः।

भ्युपगमे च जितं स्याद्वादिनैव; एतेन 'नानारूपवदवयवारब्धे व्याप्यवृत्तीन्येव नील-पीतादीन्युत्पद्यन्ते, नीलादिकं प्रति नीलेतरादिप्रतिबन्धकत्व नीलादिकारणत्वकल्पनापेक्षया व्याप्यवृत्तिनीलपीतादिकल्पनाया एव न्याय्यत्वात्, इत्यपि परेषां मतं निरस्तम्, नीलकपालावच्छेदेन चक्षुःसन्निकर्षे पीताद्युपलम्भापत्तेरपि तत्र दोषत्वात्, तदाहुः सम्मतिटीकाकृतः–"आश्रयव्यापित्वेऽप्येकावयवसहितेऽप्यवयविन्युपलभ्यमानेऽपरावयवानुपलब्धावप्यनेकरूपप्रतिपत्तिः स्यात् सर्वरूपाणामाश्रयव्यापित्वाद्" इति। न च नीलाद्यवयवावच्छिन्नसन्निकर्षस्य नीलादिग्राहकत्वकल्पनया न दोषः, पीतकपालिकावच्छिन्ननील-पीतोभयकपालावच्छेदेन सन्निकर्षेऽपि नीलग्रहप्रसङ्गात्, न च केवलनीलावयवावच्छिन्नसन्निकर्ष एव ग्राहक इति वाच्यम्, नील-पीतोभयद्व्यणुकारब्धत्रसरेणुनीलाप्रत्यक्षापत्तेः, परमाणुसन्निकर्षस्येव परमाण्ववच्छिन्नसन्निकर्षस्यापि द्रव्याग्राहकत्वेन तद्गतरूपाग्राहकत्वादिति दिक् ।

तदेवमेकानेकतया रूपस्य चित्रत्वं व्यवस्थापितम्, एवं वस्तुमात्र एव तदुपपादनीयम् । यथा च ग्राह्ये एकानेकतया चित्रस्वभावत्वमानुभविकं, तथा ग्राहके ज्ञानेऽपि, तत्राखण्डाया एकाकारतायाः

---

'अंशकार्तयाभ्याम्' इत्यस्य स्थाने 'अंशकार्त्स्न्याभ्याम्' इति पाठो युक्त, 'नानैक' इत्यस्य संयोगे रूपे चान्वय, तथा च नानैकसयोगाभ्युपगमे नानैकरूपाभ्युपगमे चेत्यर्थः । '**एतेन**' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः । '**व्याप्यवृत्तीन्येव**' इत्येवकारेणाव्याप्यवृत्तिनीलाद्युत्पत्तिव्यवच्छेदः । लाघवादित्यभुपगम इत्याह– **नीलादिकं प्रतीति** । निरासे हेत्वन्तरमाह– **नीलकपालावच्छेदेनेति** । **तत्र** व्याप्यवृत्तिनीलाद्युपगमपक्षे ।

उक्तार्थे सम्मतिटीकाकृद्वचनसवादमाह– **तदाहुरिति** । तद्वचनमुल्लिखति– **आश्रयव्यापित्वेऽपीति**– नीलादेराश्रयव्यापित्वाभ्युपगमेऽपीत्यर्थ । अपरावयवोपलब्धावनेकरूपप्रतिपत्तिर्भवत्येवेत्यत उक्तम् **अपरावयवानुपलब्धावपीति** । उक्तापत्तिपरिहारमाशङ्क्य प्रतिक्षिपति– **न चेति**– नीलावयवावच्छिन्नेन्द्रियसन्निकर्षो नीलप्रत्यक्षं प्रति कारणम्, एवं पीतावयवावच्छिन्नेन्द्रियसन्निकर्ष पीतप्रत्यक्ष प्रति कारणमिति यदवयवस्य नोपलब्धिस्तदवयवावच्छिन्नेन्द्रियसन्निकर्षोऽपि नास्तीति तदवयवावच्छेदेन विद्यमानस्यावयविनि नीलादेर्न ग्रहणमिति नापरावयवानुपलब्धावप्यनेकरूपप्रतिपत्तिरिति शङ्कितुरभिप्राय । निषेधे हेतुमाह– **पीतकपालिकेति**– यत्र नील-पीतोभयरूपवत् प्रत्येकं कपालद्वय तदारब्धे घटे नीलरूपं परम्परया नीलकपालिकावच्छेदेन, पीतरूप परम्परया पीतकपालिकावच्छेदेन, तत्र यदा न नीलकपालिकावच्छिन्ननील-पीतोभयरूपवत्कपालावच्छेदेनेन्द्रियसन्निकर्षस्तदानी घटगतनीलरूपस्य प्रत्यक्ष न भवति, तदपीदानीमुक्तकार्यकारणभावबलात् स्यात्, पीतकपालिकावच्छिन्ननील पीतोभयरूपवत्कपालावच्छेदेनेन्द्रियसन्निकर्षस्यापि नीलावयवावच्छिन्नसन्निकर्षत्वेन नीलरूपप्रत्यक्षकारणस्य तत्र सत्त्वादित्यर्थः । ननु केवलनीलावयवावच्छिन्नेन्द्रिसन्निकर्षो नीलप्रत्यक्ष प्रति कारणम्, एवं केवलपीतावयवावच्छिन्नेन्द्रियसन्निकर्षः पीतप्रत्यक्ष प्रति कारणमित्येवदिशा कार्यकारणभावाभ्युपगमे पीतकपालिकावच्छिन्ननीलपीतोभयवत्कपालस्य केवलनीलत्वाभावेन तदवच्छेदेनेन्द्रियसन्निकर्षस्य निरुक्तकारणतावच्छेदकधर्मानाक्रान्तत्वान्न ततो घटनीलरूपप्रत्यक्षापत्तिरित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वय. । निषेधे हेतुमाह– **नील-पीतोभयद्व्यणुकेति**– नील पीतोभयरूपवद्द्व्यणुकेत्यर्थ । ननु द्व्यणुकस्य नील पीतोभयवत्तया केवलनीलत्वस्याभावेऽपि परमाणौ केवलनीलत्वं समस्तीति केवलनीलपरमाणुरपि परम्परया त्रसरेणुनीलस्यावच्छेदक इति तदवच्छेदेन चक्षुस्सन्निकर्षात् त्रसरेणुनीलप्रत्यक्ष भविष्यतीत्यत आह– **परमाणुसन्निकर्षस्येवेति**–परमाणुना सहेन्द्रियसन्निकर्षस्य द्रव्याग्राहकत्वेन यथा न द्रव्यगतरूपग्राहकत्व तथैव परमाण्ववच्छिन्नेन्द्रियसन्निकर्षस्यापि द्रव्याग्राहकत्वेन द्रव्यगतरूपाग्राहकतया न नीलपरमाण्ववच्छिन्नेन्द्रियसन्निकर्षतस्त्रसरेणुनीलप्रत्यक्षसम्भव इत्यर्थः । यथा चोक्तदिशा रूपस्यैकानेकरूपत्वेन चित्रत्व तथा वस्तुमात्र एवैकानेकस्वरूपत्वेन चित्रत्व स्वीकरणीयमित्युपसंहरति– **तदेवमिति** । **तत्** चित्रत्वम् । उक्तदिशा विषयस्यैका-ऽनेकत्वेन चित्रत्वे सिद्धे तद्ग्राहकस्य ज्ञानस्याप्येका-ऽनेकाकारस्वभावत्वेन चित्रत्व स्वीकरणीयमित्याह– **यथा चेति** ग्राहकज्ञाने चित्रस्वभावत्व भावयति– **तत्रेति**– ज्ञाने इत्यर्थ । **अखण्डाया इति**– सर्वं ज्ञान स्वरूपत एकाकारमेवेति ज्ञाने एकाकारताऽखण्डेत्याशय. '**एकाकारतायाः**' इत्यस्य 'अनुभवाद्' इत्यनेनान्वय, विशेषणे विषयता प्रकारतापदवाच्या, विशेष्ये विषयता विशेष्यतापदवाच्या, विशेषण-

सखण्डानां च नानाप्रकारता-विशेष्यता-सांसर्गिकविषयतानां परनिरूपितानां शुद्धानां चानुलोमप्रतिलोमभावेन समानसंवित्संवेद्यतानियामकवैचित्र्यशालिनीनां च बह्वीनामनुभावात्, अत एव—

"सावज्जजोगविरओ तिगुत्तो छसु संजओ। उवउत्तो जयमाणो आया सामाइयं होइ"॥

[ ]त्ति।

सप्तनयात्मकमहावाक्यार्थजज्ञाने एकाविशिष्टा प्रमाणाकारता, अनेकाश्चांशिक्यो नयविषयताः परस्परसंयोगजाश्च बह्व्योऽनुभूयन्ते।

नैयायिकास्तु–विशेष्ये विशेषणं तत्र च विशेषणान्तरम् १, विशिष्टस्य वैशिष्ट्यम् २, एकविशिष्टेऽपरवैशिष्ट्यम् ३, एकत्र द्वयम् ४ इत्येवं चतुर्धा विशिष्टवैशिष्ट्यबुद्धिः, तत्र मध्यमद्वये विशेषण-विशेष्यता-

---

विशेष्ययोः सम्बन्धे विषयता संसर्गतापदवाच्या, प्रकारत्वादिक प्रकारतादिनिरूपितावच्छेदकत्वाख्यविषयताया अप्युपलक्षणम्, प्रकारता-विशेष्यत्व-संसर्गत्वानां परस्परनिरूपकभावाङ्गीकारात् परनिरूपितत्वं यद्यप्यस्ति तथापि यत्र यत्र निरूपितत्वं तत्र तत्र स्वनिरूपितत्वं न भवत्येव किन्तु, परनिरूपितत्वमेवेत्यन्यावर्तकत्वात् 'पर' इति नोपादेयमेव स्यात्, परस्परनिरूपितानामिति तु स्यादपि, यतो निरूपितत्वमेकस्य निरूपकत्वमपरस्य निरूप्यत्वमिति कृत्वाऽपि भवति, तत्र यदपेक्षया निरूपितत्वं यस्य तदपेक्षया निरूपकत्वमपि तस्येति निरूपितत्वमात्रोक्त्या न लभ्यते परस्परनिरूपितानामित्युक्त्या च लभ्यत इति, तथापि **शुद्धानां चे**त्यत्रापि चकारान्नानाप्रकारता-विशेष्यता सासर्गिकविषयतानामेवानुकर्षः स्यात्, न च तासां शुद्धत्वं परस्परनिरूप्यनिरूपकभावरहितस्वरूपं सम्भवति, परस्परनिरूपितानामित्यनन्तरमुक्तस्य शुद्धानामित्यस्य परस्परनिरूपितत्वविरोधिस्वरूपस्यैव शुद्धत्वस्यार्थत्वं भवितुमर्हतीत्यन्यादृशस्य शुद्धत्वस्य वक्तुमशक्यत्वमेव, तत. परनिरूपितानामित्येव पाठो युक्तः, 'परनिरूपितानाम्' इत्यनेन पारतन्त्रीयाणा प्रकारतादीनां ग्रहणम्, यथा तद्धर्मविशिष्टे भासमानं सत् तत्रापि सामानाधिकरण्येन भासत इति नियमात् पर्वतत्वविशिष्टे भासमानो वह्निः पर्वतत्वेऽपि सामानाधिकरण्येन भासत इति पारतन्त्रीया या वह्निनिष्ठप्रकारता पर्वतत्वनिष्ठविशेष्यता सामानाधिकरण्यनिष्ठसासर्गिकविषयता सा सर्वा पर्वते वह्निभानप्रयुक्त पर्वतत्वे वह्निमानसापेक्षत्वात् परनिरूपिता, स्वातन्त्रीया तु या प्रकारतादिका विषयता सा निरुक्तसापेक्षत्वाभावाच्छुद्धेति। **अनुलोमे**ति– अनुलोम-प्रतिलोमभावेन या समानसंवेद्यता तन्नियामकं यद् वैचित्र्यं तच्छालिनीनामित्यर्थः, तत्रानुलोमभावेन समानसवेद्यत्वम्, यथा वह्नित्वविशिष्टस्य पर्वते भाने वह्नित्वस्यापि तत्र स्वाश्रयसंयोगेन भानमित्येवं वह्निवैशिष्ट्य–वह्नित्ववैशिष्ट्ययोः समानसवित्सवेद्यत्वम्, प्रतिलोमभावेन समानसवेद्यत्वम्, यथा– पर्वते संयोगेन वह्निः प्रकारतया भासत इति वह्नावपि पर्वतः संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन भासते, एवं वह्नित्व स्वाश्रयसंयोगसम्बन्धेन पर्वते भासत इति वह्नित्वेऽपि पर्वतः स्वाश्रयसंयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन भासते, एवं वह्नि. पर्वतत्वे सामानाधिकरण्यसम्बन्धेन भासत इति सामानाधिकरण्यसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतत्वं वह्नौ भासत इत्येव प्रतिलोमभावेन समानसवित्संवेद्यत्वम्, तन्नियामकं यत् स्वातन्त्र्य-पारतन्त्र्यलक्षणवैचित्र्यम्, तच्छालिनीनां बह्वीना विषयतानामनुभवाज्ज्ञानेऽपि चित्रस्वभावत्वमित्यर्थः। **अत एव** ज्ञाने एकाकारताया अनेकविषयत्वानां च भावतश्चित्रस्वभावत्वस्यानुभवसिद्धत्वादेव। **सावज्ज०** इति– "सावद्ययोगविरतस्त्रिगुप्तः षट्सु संयतः। उपयुक्तो यतमान आत्मा सामायिकं भवति"॥ इति संस्कृतम्। **इति** एवस्वरूपसप्तनयात्मकमहावाक्यार्थजज्ञाने, एका **अविशिष्टा** अखण्डस्वरूपा प्रमाणाकारता **अनेकाश्चांशिक्यो**ऽशेषु वर्तमाना नयविषयताः, **परस्परसंयोगजाश्च** नयद्वय-नयत्रयादिसंयोगजाश्च बह्व्यो विषयता अनुभूयन्त इत्यर्थः।

प्रसङ्गाद् विशिष्टवैशिष्ट्यबोधविचारमधिकृत्य तत्र नैयायिकाना मतमुपदर्शयति– **नैयायिकास्त्वि**ति। **तत्र** निरुक्तेषु विशिष्टवैशिष्ट्यबोधस्य चतुष्प्रकारेषु मध्ये। **मध्यमद्वये** विशिष्टस्य वैशिष्ट्यमित्येवं विशिष्टवैशिष्ट्यबोधे एकविशिष्टेऽपरस्य वैशिष्ट्यमित्येव विशिष्टवैशिष्ट्यबोधे च। **विशेषणे**ति– विशिष्टस्य वैशिष्ट्यमित्येवं विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वम्, एकविशिष्टेऽपरवैशिष्ट्यमित्येवं विशिष्टवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वमित्यर्थः। **इतरद्वये तु** विशेष्ये विशेषणं तत्र च विशेषणान्तरमित्येवं विशिष्टवैशिष्ट्यबोधे, एकत्र द्वयमित्येवं विशिष्टवैशिष्ट्यबोधे पुनः। **विशेषणे**ति एकत्र द्वयमित्येव विशिष्टवैशिष्ट्यबुद्धिपक्षे किं कार्यतावच्छेदक किं च तत्कारणमिति विचारोऽग्रे उपदर्शयिष्यते, इदानीं विशेष्ये विशेषण तत्र च विशेषणान्तरमित्येव विशिष्टवैशिष्ट्यबुद्धिपक्षे कारणं कार्यतावच्छेदकं चावेदयति, विशेषणज्ञानमससर्गाग्रहश्च तत्र कारणम्, तयोः कार्यतावच्छेदकं विशेष्ये विशेषणमिति रीत्या

वच्छेदकप्रकारकनिश्चयत्वाभ्यां हेतुता, इतरद्वये तु विशेषणज्ञानाऽसंसर्गग्रहयोर्विशेष्ये विशेषणमितिरीत्या बुद्धित्वं रक्तत्वाद्यवच्छिन्नप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नप्रकारताकबुद्धित्वम्, तेन 'दण्डो रक्तो दण्डवान् पुरुषः' इति समूहालम्बने नातिप्रसङ्गः, तत्र दण्डत्वावच्छिन्नप्रकारताया रक्तत्वावच्छिन्नप्रकारताऽनिरूपितत्वात् न च विशिष्टवैशिष्ट्यविपयतास्वीकारे 'रक्तदण्डवान्' इत्यत्र 'विशेष्ये विशेषणम्' इति विषयतायां 'दण्डो रक्तो दण्डवान् पुरुषः' इतिसमूहालम्बनव्यावृत्तायां मानाभावः, रक्तरूप दण्डत्वो-

---

बुद्धित्वम् । '**विशेषणज्ञानासंसर्गग्रहयोः**' इत्यस्य स्थाने 'विशेषणज्ञाना ऽससर्गाग्रहयो' इति पाठो युक्तः । विशेष्ये विशेषणमिति रीत्या बुद्धित्व विशेषतः परिष्कृत्य दर्शयति– **रक्तत्वाद्यवच्छिन्नेति**– विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या जायमानाया 'रक्तदण्डवान् पुरुषः' इति बुद्धौ पुरुषत्वावच्छिन्नविशेष्यता दण्डत्वावच्छिन्नप्रकारतानिरूपिता, दण्डत्वावच्छिन्नप्रकारता च रक्तत्वावच्छिन्नप्रकारतानिरूपितेति रक्तत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नप्रकारताकबुद्धित्व तत्र वर्तते इति, यद्यपि प्रकारतात्वेन विशेष्यतात्वेनैव च निरूप्यनिरूपकभावो न तु प्रकारतात्वेन निरूप्यनिरूपकभाव इति रक्तत्वावच्छिन्नप्रकारतानिरूपिता दण्डत्वावच्छिन्नविशेष्यतैव स्यात्, न तु दण्डत्वावच्छिन्नप्रकारतेति नोक्तबुद्धित्वं कुत्रापि सङ्गतिमङ्गति, तथापि अनन्तराभासमानसमानाधिकरणैकज्ञानीयविषयत्वयोर्गदाधरमतेऽवच्छेद्यावच्छेदकभावो जगदीशमते च तयोरभेद इति तत्र जगदीशमते पुरुषत्वावच्छिन्नविशेष्यतानिरूपिता या दण्डत्वाावच्छिन्नप्रकारता, या च रक्तत्वावच्छिन्नप्रकारतानिरूपिता दण्डत्वावच्छिन्नविशेष्यता तयोरैक्याद् दण्डत्वावच्छिन्नविशेष्यताया रक्तत्वावच्छिन्नप्रकारतानिरूपितत्वे तदभिन्नाया दण्डत्वावच्छिन्नप्रकारताया अपि रक्तत्वावच्छिन्नप्रकारतानिरूपितत्वमिति भवत्युक्तबुद्धित्वस्य तत्र सङ्गति, यदि च रक्तत्वावच्छिन्नप्रकारतानिरूपितत्वस्य दण्डत्वावच्छिन्नप्रकारतायामन्वयेऽन्वयितावच्छेदकस्य दण्डत्वावच्छिन्नप्रकारतात्वस्यैव तन्निरूप्यताया अवच्छेदकत्व प्रतीयेत न च प्रकारतात्वं प्रकारतानिरूप्यतावच्छेदकं प्रकारत्व-विशेष्यत्वयोरभेदेऽपि विशेष्यतात्वेनैव प्रकारत्वस्य प्रकारतानिरूपितत्वेन विशेष्यतात्वस्यैव प्रकारतानिरूप्यतावच्छेदकत्वादिति विभाव्यते तदा रक्तत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाऽभिन्नदण्डत्वावच्छिन्नप्रकारताकबुद्धित्वमेव विशेष्ये विशेषणमिति रीत्या बुद्धित्वमिति बोध्यम् । **तेन** उक्तप्रकारेण विशेष्ये विशेषणमिति रीत्या बुद्धित्वस्य निर्वचनेन, अस्य 'नातिप्रसङ्गः' इत्यनेनान्वय, यथाश्रुते 'दण्डो रक्तो दण्डवान् पुरुषः' इति समूहालम्बनज्ञानेऽपि विशेष्यपुरुषे दण्डो भासते, दण्डे च रक्तत्वं भासत इति तस्यापि । 'विशेष्ये विशेषणम्' इति रीत्या बुद्धित्व प्रसज्यत इत्यर्थ । **तत्र** 'दण्डो रक्तो दण्डवान् पुरुष.' इति समूहालम्बनज्ञाने । **दण्डत्वावच्छिन्नप्रकारताया** इति– 'रक्तदण्डवान् पुरुष' इति ज्ञाने यथादण्ड पुरुषे प्रकारो दण्डे च रक्तरूपवत्त्वं प्रकार इति दण्डगतप्रकारत्वविशेष्यत्वयोरभेदाद् विशेष्यतात्वेन रूपेण दण्डनिष्ठप्रकारताया रक्तरूपवत्त्वनिष्ठप्रकारतानिरूपितत्वमिति रक्तरूपवत्त्वाद्यवच्छिन्नप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नप्रकारताकबुद्धित्वलक्षणं 'विशेष्ये विशेषणम्' इति रीत्या बुद्धित्व समस्ति, न तथा 'दण्डो रक्तो दण्डवान् पुरुष.' इति समूहालम्बनज्ञाने, तदीयदण्डनिष्ठप्रकारत्व विशेष्यत्वयोरनन्तराभासमानत्वाभावेनाभेदाभावाद् दण्डनिष्ठविशेष्यत्वस्यैव रक्तत्वनिष्ठप्रकारतानिरूपितत्व न तु पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारतायास्तत्त्वमिति नोक्तलक्षणस्य 'विशेष्ये विशेषणम्' इति रीत्या बुद्धित्वस्य तत्र प्रसङ्ग इत्यर्थः । ननु रक्तत्वविशिष्टदण्डस्य पुरुषे यद् वैशिष्ट्य तद्विषयकत्वेनैव 'रक्तदण्डवान् पुरुष.' इति ज्ञानमनुभूयते, तत्र यदि विशिष्टस्य यद् वैशिष्ट्य तद्विषयकत्व नाभ्युपेयते तदा 'विशेष्ये विशेषणम्' इति रीत्या विषयताया मानाभावात् तज्ज्ञानस्य समूहालम्बनज्ञानव्यावृत्तविषयताकत्वाभावात् ततोऽवैलक्षण्यप्रसङ्ग इत्याशङ्क्य प्रतिक्षिपति **न चेति** । '**विषयतास्वीकारे**' इत्यत्र 'विषयताऽस्वीकारे' इत्याकारप्रश्लेषः । रक्तरूपविशिष्टदण्डस्य वैशिष्ट्यावगाहिनि 'रक्तदण्डवान् पुरुषः' इति ज्ञाने रक्तरूपदण्डत्वोभयावच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताकत्वमनुभूयते, पुरुषे दण्डो दण्डे च रक्तत्वमित्येत्र 'विशेष्ये विशेषणं तत्र च विशेषणान्तरम्' इति रीत्या जायमाने 'रक्तदण्डवान् पुरुष.' इति ज्ञाने तु रक्तत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकत्वमनुभूयते, न च तादृशविशेष्यताकत्वं समूहालम्बने इत्येवमनुभववैलक्षण्यस्यैवात्र प्रमाणस्य सद्भावादिति निषेधहेतुमुपदर्शयति– **रक्तरूपेति** । तथा च रक्तत्वविशिष्टदण्डस्य पुरुषे वैशिष्ट्यभाने पुरुषनिष्ठविशेष्यतानिरूपिता या दण्डनिष्ठप्रकारता सा रक्तत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वाभिन्ना दण्डत्वनिष्ठप्रकारतानिरूपित-निरवच्छिन्नदण्डनिष्ठविशेष्यत्वाभिन्ना रक्तत्व-दण्डत्वोभयनिष्ठावच्छेदकतानिरूपिता च भवति, 'विशेष्ये विशेषणम्' इति रीत्या जायमाने तु यद्यपि दण्डनिष्ठप्रकारता निरुक्तविशेष्यताद्वयाभिन्ना तथापि सा

भयावच्छिन्नदण्डनिष्ठप्रकारताभिन्नाया रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारताया आनुभविकत्वात्। किञ्च, 'रक्तदण्डवान्' इत्यादिवाक्यादयुगपदुपस्थितस्वघटकाखिलपदार्थाज्जायमानाया अनन्वितान्वयबुद्धेः 'रक्तो दण्डो दण्डवान् पुरुषः' इति वाक्यजसमूहालम्बनावैलक्षण्ये 'रक्तदण्डाभाववान्' इत्यादिबाधधीकालेऽप्युत्पत्त्यापत्तिरिति तत्प्रतिबध्यतावच्छेदकतयैव तत्सिद्धिः, उक्तबाधधियो रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकधियैव प्रतिबध्यत्वात्, विशिष्टवैशिष्ट्यविषयताया बाधप्रतिबध्यतावच्छेदकत्वे उक्तस्थल एव अनुपपत्तेः। अपि

---

केवलदण्डत्वावच्छिन्नैव न तु रक्तरूपावच्छिन्नाऽपि, उपलक्षणधर्मस्य प्रकारत्वमेव स्वीक्रियते, 'विशेष्ये विशेषण तत्र च विशेषणान्तरम्' इति ज्ञाने च विशेषणान्तरस्योपलक्षणत्वमेवेत्येव विशिष्टवैशिष्ट्यावगाहिज्ञानीयप्रकारतालक्षणविषयतातो 'विशेष्ये विशेषणम्' इति ज्ञानीयप्रकारतालक्षणविषयताया भेदः, समूहालम्बने तु पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारता रक्तरूपावच्छिन्नप्रकारतानिरूपिताऽपि न भवतीति तस्या निरुक्तज्ञानद्वयनिरूपितप्रकारताभ्यामत्यन्तमेव वैलक्षण्यम्, तादृशी च प्रकारताऽनुभूयमाना नापलपितु शक्येत्यावेदनाय '**आनुभविकत्वाद्**' इत्युक्तमिति। अपि च "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वित. स्वार्थः पदैरेवावगम्यते" ॥ १ ॥ [ ] इति वचनात् खण्डवाक्यार्थबोधानन्तर महावाक्यार्थबोध इत्येकेषा मतम्. तन्मते प्रथमं 'रक्तो दण्डः' इत्याकारको बोधः, तद्रूपविशेषणतावच्छेदकप्रकारज्ञानबलात् तदनन्तर जायमाने 'रक्तदण्डवान् पुरुष' इति ज्ञाने रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यं पुरुषे भासत इति युज्यते पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारताया रक्तत्व दण्डत्वोभयावच्छिन्नत्वम्। यदा तु–"वृद्धा युवान. शिशव. कपोता खले यथाऽमी युगपत् पतन्ति। तथैव सर्वे युगपत् पदार्था. परस्परेणान्वयिनो भवन्ति" ॥ १ ॥ [ ] इति वचनात् 'रक्तदण्डवान् पुरुष.' इति वाक्याद् युगपदुपस्थितस्वघटकाखिलपदार्थाज्जायते 'रक्तदण्डवान् पुरुषः' इति शाब्दबोध इति मतमाश्रीयते, तन्मते न खण्डवाक्यार्थबोधानन्तरं महावाक्यार्थबोधः, किन्तु प्रथमत एव महावाक्यार्थबोध आविरस्ति, तदा विशिष्टवैशिष्ट्यावगाहिबोधकारणस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य पूर्वमभावात् तस्मिन् बोधे रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यं पुरुषे न भासते, किन्तु उपस्थित्यात्मकविशेषणज्ञानरूपकारणबलाद् 'विशेष्ये विशेषणम्' इति रीत्यैव बुद्धिरुपजायते, तस्या च दण्डत्वावच्छिन्नप्रकारता रक्तरूपत्वावच्छिन्नप्रकारतानिरूपिता भवति, न तु रक्तरूपत्वावच्छिन्नावच्छेदकतानिरूपिता, तस्याश्च बुद्धे रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबुद्धित्वरूपस्य 'रक्तदण्डाभाववान् पुरुषः' इत्यादिबाधनिश्चयप्रतिबध्यतावच्छेदकधर्मस्यास्पदत्वेन निरुक्तबाधकालेऽनुत्पत्तिर्निर्वहति, यदि चोक्तबुद्धेः 'रक्तो दण्डो दण्डवान् पुरुष.' इति वाक्यजन्यसमूहालम्बनबुद्धितो वैलक्षण्यं न भवेत् न तदा निरुक्तबाधबुद्धिप्रतिबध्यतावच्छेदकोक्तधर्माक्रान्ततेत्युक्तबाधबुद्धिकालेऽप्युत्पत्तिरापद्येत, अत एव चोक्तबाधबुद्धेर्न रक्तरूप-दण्डत्वोभयावच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबुद्धित्वं विशिष्टवैशिष्ट्यबोधमात्रगत प्रतिबध्यतावच्छेदकमित्याह– **किञ्चेति**। '**वाक्याद-युगपदुपस्थिता**' इति स्थाने 'वाक्याद् युगपदुपस्थिता' इति पाठो युक्तः। **अनन्वितान्वयबुद्धेरिति**– पूर्वमनन्विततयोपस्थितानां पदार्थानामन्वयबुद्धेरित्यर्थः, एतेन विशिष्टवैशिष्ट्यबोधकारणस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य पूर्वमभावान्नास्या विशिष्टवैशिष्ट्यबुद्धित्वमित्यावेदितम्, अस्या. 'समूहालम्बनावैलक्षण्ये' इत्यत्र 'उत्पत्त्यापत्तिः' इत्यत्र चान्वय.। **तत्प्रतिबध्यतावच्छेदकतयैव** 'रक्तदण्डाभाववान्' इत्यादिबाधधीप्रतिबध्यतावच्छेकतयैव। **तत्सिद्धिः** रक्तत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नदण्डनिष्ठप्रकारतायाः सिद्धि, तथातत्सिद्धिमेद भावयति– **उक्तबाधधिय** इति– 'रक्तदण्डाभाववान्' इत्यादिबाधधिय इत्यर्थः, अस्य 'प्रतिबध्यत्वाद्' इत्यनेनान्वयः, अस्य प्रतिबध्यप्रतिबन्धकभावादित्यर्थः। '**धियैव**' इत्यस्य धिया सहैवेत्यर्थः, 'प्रतिबध्यत्वाद् इत्यस्य यथाश्रुतार्थपरत्वे तु 'धियैव' इति स्थाने 'धीत्वेनैव' इति पाठो युक्त.। **विशिष्टवैशिष्ट्यविषयतायाः** रक्तरूपदण्डत्वोभयावच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताया। **उक्तस्थल एव** 'रक्तदण्डवान्' इत्यादिवाक्याद्युगपदुपस्थितस्वघटकाखिलपदार्थाज्जायमानाया 'विशेष्ये विशेषणम्' इत्यादिरीत्या बुद्धावेव। **अनुपपत्ते.** 'रक्तदण्डाभाववान्' इत्यादिबाधबुद्धिप्रतिबध्यत्वानुपपत्तेः। यदि च प्रथमं 'विशेष्ये विशेषणम्' इति रीत्योक्तवाक्यादन्वयबोध.' अनन्तर विशिष्टवैशिष्ट्यावगाहिमानसबोध उपजायते, तद्विषयताया रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्न-

च विशकलितज्ञानाद् व्यापकविषयताशालिमानसस्वीकारेण तत्साधारण्येनैव प्रतिबध्यत्वं युक्तिमत्। अथैवं 'दण्डो रक्तो नवा ?' इति संशयकाले उक्तवाक्याद् 'विशेष्ये विशेषणम्' इति रीत्याऽन्वयबोधापत्तिरिति चेत् ? न-प्रथममिष्टत्वात्, अनन्तरं च 'विशिष्टस्य वैशिष्ट्यम्' इति रीत्याऽन्वयधियः सम्भवात् तदनुभवोऽप्यविरुद्धः, प्रात्यक्षिकी बुद्धिरप्युक्तसंशयकाले रक्तत्वांशे संशयाकारा इष्टैव। यत् तु 'घट-घटत्वादिनिर्विकल्पोत्तरं 'घटवद्' इत्यादिधीः 'विशेष्ये विशेषणम्' इति रीत्या जायते, इति,

---

विशेष्यतात्वाभावेन निरुक्तप्रतिबध्यतावच्छेदकत्वाभावान्न तादृशमानसस्योक्तबाधबुद्धिप्रतिबध्यत्वं स्यादिति निरुक्तबाधधीकालेऽपि तादृशमानसबुद्ध्यापत्तिरिति विभाव्यते, तदोक्तप्रतिबध्यतावच्छेदकप्रविष्टशुद्धदण्डत्वावच्छिन्नप्रकारतास्थाने दण्डत्वावच्छिन्नप्रकारतेत्येव वाच्यम्, दण्डत्व-रक्तरूपोभयावच्छिन्नप्रकारताऽपि दण्डत्वावच्छिन्नप्रकारता भवत्येव, अवच्छेदकीभूतस्यापि रक्तत्वस्य प्रकारत्वं भवत्येवेति तस्यां रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितत्वमपीत्येकेनैव तेन रूपेण 'विशेष्ये विशेषणम्' इति रीत्या ज्ञानस्य विशिष्टवैशिष्ट्यावगाहिनश्चोक्तबाधबुद्धिप्रतिबध्यत्वं सुसङ्गतमेवेत्याशयेनाह- **अपि चेति**। **विशकलितज्ञानात्** 'विशेष्ये विशेषणम्' इति रीत्या ज्ञानात्। **व्यापकविषयेति**- विशिष्टवैशिष्ट्यविषयतेत्यर्थः, विशिष्टवैशिष्ट्य सर्वमपि विशकलित स्वघटकत्वेन व्याप्नोतीति तद्विषयताया व्यापकविषयतात्व बोध्यम्। **तत्साधारण्येनैव** विशिष्टवैशिष्ट्यविषयताशालिमानसबोधसाधारण्येनैव। **प्रतिबध्यत्वं** बाधबुद्धिप्रतिबध्यत्वम्, एतेनानुमितेरपि विशिष्टवैशिष्ट्यबोधरूपाया उक्तबाधबुद्धिप्रतिबध्यत्वं निर्वहतीति बोध्यम्। ननु 'रक्तदण्डवान् पुरुषः' इत्यादिवाक्याद् 'विशेष्ये विशेषणम्' इति रीत्या बोधस्याभ्युपगमे त प्रति विशेषणज्ञानस्यैव कारणत्वम्, न तु विशेषणतावच्छेकप्रकारकनिश्चयस्य तत्त्वमिति 'दण्डो रक्तो नवा ?' इति संशयानन्तरमप्युक्तवाक्यात् तथाबोधापत्तिः सशयरूपस्य विशेषणज्ञानस्य सत्त्वात्, रक्तत्वप्रकारकदण्डविशेष्यकनिश्चयलक्षणविशेषणतावच्छेदकप्रकारकनिश्चयस्यानपेक्षणादिति शङ्कते- **अथेति**। **एवम्** उक्तदिशा 'विशेष्ये विशेषणम्' इति रीत्या ज्ञानस्य समर्थने। **संशयकाले** सशयोत्पत्तिद्वितीयक्षणे, विशेषणतावच्छेदकप्रकारकनिश्चयाभावे उक्तवाक्याद् 'दण्डो रक्तो नवा ?' इति संशयद्वितीयक्षणे 'विशेष्ये विशेषणम्' इति रीत्या बोधो जायत एव, तादृशबोधलक्षणविशेषणतावच्छेदकप्रकारकनिश्चयतश्च 'विशिष्टस्य वैशिष्ट्यम्' इति रीत्याऽन्वयबोधोऽप्युपजायते, अत एव तथाविधान्वयबोधानुभवोऽपि न विरोधमधिवसतीति समाधत्ते- **नेति**। **प्रथमं** 'विशिष्टस्य वैशिष्ट्यम्' इति रीत्याऽन्वयबोधोत्पत्ते. प्राक्क्षणे। **इष्टत्वात्** 'विशेष्ये विशेषणम्' इति रीत्या बोधस्याभ्युपगतत्वात्, तथा च 'दण्डो रक्तो नवा ?' इति संशयानन्तरमुक्तवाक्याद् 'विशेष्ये विशेषणम्' इति रीत्या बोधापादनमिष्टापत्तिरूपत्वान्न दोषावहमिति भावः। **अनन्तरं च** 'विशेष्ये विशेषणम्' इति रीत्या बोधानन्तर पुनः। **तदनुभवोऽपि** विशिष्टवैशिष्ट्यबोधानुभवोऽपि, यथा च 'दण्डो रक्तो नवा ?' इति सशयानन्तरं 'रक्तदण्डवान् पुरुषः' इत्यादिवाक्याद् 'विशेष्ये विशेषणम्' इति रीत्याऽन्वयबोधो भवति, तथोक्तसशयानन्तर 'रक्तदण्डवान् पुरुष.' इति प्रत्यक्षबोधोऽप्युपजायते, स च रक्तत्वांशे सशयरूप इत्याह- **प्रात्यक्षिकी बुद्धिरपीति**। घट घटत्वयोर्निर्विकल्पकज्ञानानन्तरं 'घट.' इति ज्ञानम्, तदनन्तरं घटत्वविशिष्टघटस्य वैशिष्ट्यावगाहि 'घटवद्' इत्यादि ज्ञानं भवतीति वस्तुस्थितिः, तत्र केचिद् घट-घटत्वयोर्निर्विकल्पकज्ञानानन्तरमेव 'घटवद्' इति ज्ञान भूतले घटस्तत्र घटत्वमित्येव रीत्याऽभ्युपगच्छन्ति, तन्मतं दूषयितुमुपन्यस्यति- **यत् त्विति**। भूतलादिनिष्ठविशेष्यतानिरूपिता या घटनिष्ठप्रकारता सा किं सावच्छिन्नाऽभ्युपेयते ? निरवच्छिन्ना ?, तत्रान्त्यविकल्पो न सम्भवति, 'जात्यखण्डोपाध्यतिरिक्तस्य किञ्चिद्रूपेणैव भानम्' इति नियमेन जात्यखण्डोपाध्यतिरिक्तघटनिष्ठप्रकारताया निरवच्छिन्नत्वासम्भवात्, उक्तनियममनादृत्य घटनिष्ठप्रकारताया निरवच्छिन्नत्वोपगमस्त्वपसिद्धान्तकवलितत्वादेव परीक्षकाणामनादेय., 'विशेष्ये विशेषणम्' इति रीत्या ज्ञाने चासंसर्गग्रहस्य प्रतिबन्धकत्वं तदभावस्य च प्रतिबन्धकाभावविधया तत्र कारणत्वम्, न च निरवच्छिन्नघटनिष्ठप्रकारताकज्ञानस्य कस्यचित् प्रतिबध्यत्वमिति तादृशज्ञानविरोधी नासंसर्गग्रह. सम्भवतीति तदभावरूपकारणाभावादपि तथाबोधो न सम्भवति, निर्विकल्पकज्ञानरूपविशेषणज्ञानाच्च घटत्वादिनिष्ठप्रकारताकघटनिष्ठनिरवच्छिन्नविशेष्यताकज्ञानस्वरूप 'घट.' इत्येव ज्ञानमुपजायते न तु निर्विकल्पात्मकं ज्ञान 'विशेष्ये विशेषणम्' इति रीत्या जायमानज्ञाने विशेषणज्ञानविधया कारणम्, किन्तु तत्र सप्रकारकमेव विशेषणज्ञान कारणमिति निर्विकल्पात्मकविशेषणधियो 'विशेष्ये विशेषणम्,' इति रीत्या ज्ञानेऽहेतुत्वाच्च न ततो निरवच्छिन्नघटनिष्ठप्रकारताकबोधसम्भवः; घटनिष्ठप्रकारता सावच्छिन्नेति प्रथमपक्षाभ्युपगमे तु

तत्र घटाद्यंशे तद्धिप्रकारताया निरवच्छिन्नत्वेऽपसिद्धान्तः, जात्यतिरिक्तस्य किञ्चित्प्रकारेणैव भानात्, तादृशधीविरोधिनोऽसंसर्गग्रहस्यासम्भवात् तथाविशेषणधियोऽहेतुत्वाच्च, तस्या घटत्वाद्यवच्छिन्नत्वे तु तद्धियः 'घटो नास्ति' इत्यादिबुद्धिवद् विशिष्टवैशिष्ट्यधीत्वस्यैव सिद्धेः, तेन 'प्रकारकज्ञानमेवोपनायकम्, तस्य च कार्यतावच्छेदकं लौकिकविषयताशून्यतद्विषयकज्ञानत्वापेक्षया लाघवाद् विशिष्टवैशिष्ट्याख्यविषयताशालिप्रत्यक्षत्वमेवेति घटत्वप्रकारकज्ञानोत्तरं जायमानायां 'घटवद्' इति बुद्धौ विशिष्टवैशिष्ट्यधीत्वमेव, निर्विकल्पकोत्तरं तु 'विशेष्ये विशेषणम्' इति रीत्या लौकिकविषयताशालिज्ञानस्यैव स्वीकारः, न च 'दण्डः' इत्याद्यात्मकमानसबोधासङ्ग्रहः, तत्र ज्ञानांशे दण्डस्य प्रकारत्वात्, न कामिन्यु-

---

तत्र धर्मान्तरस्यावच्छेदकस्याभावाद् घटत्वावच्छिन्नैव सेति घटत्वावच्छिन्नघटनिष्ठप्रकारतानिरूपितभूतलत्वाद्यवच्छिन्नविशेष्यताकबोध एव 'घटवद् भूतलम्' इत्याकारक इति तस्य विशिष्टवैशिष्ट्यधीत्वमेव 'भूतले घटो नास्ति' इत्यादिबुद्धेरिव घटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यतानिरूपिकाया इव, न तु 'विशेष्ये विशेषणम्' इति रीत्या बुद्धिरित्याशयवान् तन्मत दूषयति– **तत्रेति**– तथाऽभ्युपगम इत्यर्थः । '**तद्धिप्रकारतायाः**' इति स्थाने 'तद्धीप्रकारतायाः' इति पाठो युक्तः, 'घटवद्' इति बुद्धिप्रकारताया इति तदर्थः । घटनिष्ठप्रकारताया निरवच्छिन्नत्वाभ्युगमेऽपसिद्धान्तापत्तिः कथमित्यपेक्षायामाह– **जात्यतिरिक्तस्येति** । यस्याः 'विशेष्ये विशेषणम्' इति रीत्या विरोधी असंसर्गग्रहः समस्ति सैवासंसर्गाग्रहतो भवितुमर्हति, निरवच्छिन्नघटनिष्ठप्रकारताकबुद्धेश्चाप्रतिबध्यतया तद्विरोधिनोऽसंसर्गग्रहस्यासम्भवेन तदभावरूपकारणस्याप्यप्रसिद्ध्याभावेन न ततस्तदुत्पत्तिसम्भव इत्याह– **तादृशधीविरोधिन** इति– निरवच्छिन्नघटनिष्ठप्रकारताकधीविरोधिन इत्यर्थः, विशेष्ये विशेषणमिति रीत्या ज्ञानं प्रति निर्विकल्पकभिन्नमेव विशेषणज्ञानं कारणमिति निर्विकल्पकविशेषणज्ञानात् तदुत्पत्त्यसंभव इत्याह– **तथाविशेषणधिय** इति– निर्विकल्पकविशेषणबुद्धेरित्यर्थः । **अहेतुत्वात्** विशेष्ये विशेषणमिति रीत्या ज्ञान प्रत्यकारणत्वात् । **तस्या** घटाद्यंशे 'घटवद्' इत्यादिधीप्रकारतायाः । **तद्धियः** 'घटवद्' इत्यादिबुद्धेः । 'विशिष्टवैशिष्ट्यधीत्वस्यैव' इत्येवकारेण विशेष्ये विशेषणमिति रीत्या धीत्वस्य व्यवच्छेदः, '**तेन**' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः, **तेन**– उक्तदिशा 'घटवद्' इति ज्ञानस्य विशेष्ये विशेषणमिति रीत्या धीत्वस्य व्यवच्छेदेन, '**प्रकारक**' इति स्थाने 'सप्रकारक' इति पाठो युक्तः, अयमत्रार्थः– सप्रकारकमेव ज्ञानं ज्ञानलक्षणप्रत्यासत्तिविधया स्वविषयीभूतार्थस्योत्तरज्ञानेऽवभासकम्, ज्ञानलक्षणप्रत्यासत्तिरूपस्य च सप्रकारकज्ञानस्य कार्यतावच्छेदक न लौकिकविषयताशून्यस्वविषयविषयकज्ञानत्व गौरवात्, किन्तु तदपेक्षया लाघवाद् विशिष्टवैशिष्ट्याख्यविषयताशालिप्रत्यक्षत्वमेव कार्यतावच्छेदकम्, तथा च ज्ञानलक्षणप्रत्यासत्तिरूपस्य घटत्वप्रकारकज्ञानस्योत्तरं जायमानायां 'घटवद्' इति बुद्धौ घटत्वविशिष्टघटवैशिष्ट्यधीत्वमेव, तथा सत्येव तस्या घटत्वप्रकारकज्ञानकार्यतावच्छेदकाक्रान्तत्वेन तदनन्तरं प्रादुर्भावसम्भवः, घट-घटत्वयोर्निर्विकल्पकं तु न सप्रकारकमतो न तस्य ज्ञावलक्षणविधया कारणत्व तेन तत्प्रभवे 'घटवद्' इति ज्ञाने नालौकिकविषयतायाः सम्भव, अलौकिकप्रत्यासत्तिप्रभव एव ज्ञानेऽलौकिकविषयताया अभ्युपगमात्, किन्तु तन्निर्विकल्पकं विशेषणज्ञानविधया 'घटवद्' इति ज्ञाने कारणम्, तस्य च ज्ञानस्य सप्रकारकज्ञानकार्यत्वाभावादेव न विशिष्टवैशिष्टधीत्वम्, किन्तु विशेष्ये विशेषणमिति रीत्या धीत्वमेवेति । ननु दण्डादेर्यो मानसो वोधो न स लौकिकसन्निकर्षप्रभवः, दण्डदीनां वाह्याना मनोजन्यलौकिकप्रत्यक्षविषयत्वाभावात्, किन्त्वलौकिकसन्निकर्षप्रभव एव स इति, सप्रकारकज्ञानलक्षणोपनायकज्ञानस्य कार्यतावदच्छेदक विशिष्टवैशिष्ट्याख्यविषयताशालिप्रत्यक्षत्वमेवोपेयते, न च तद् 'दण्डः' इत्यादिमानसज्ञाने, दण्डत्वविशिष्टस्य दण्डस्य कुत्रापि वैशिष्ट्यस्याभानादिति तज्ज्ञानासङ्ग्रहो न स्यादित्याशङ्क्य प्रतिक्षिपति–**न चेति** । तादृशमानसे दण्डत्वविशिष्टदण्डस्य वैशिष्ट्य ज्ञान एव भासत इति तस्य विशिष्टवैशिष्ट्याख्यविषयताशालिप्रत्यक्षत्वं समस्त्येवेति न तदसङ्ग्रह इति निषेधे हेतुमुपदर्शयति– **तत्रेति**– उक्तमानस इत्यर्थः । ननूपनायकं ज्ञानमेव भवतीति न नियमः, यत्र ज्ञान नास्ति तत्रापि कामाद्युपनीतं वस्तु मानसे भासत एवेति तादृशमानसे न दण्डादेर्ज्ञानांशे प्रकारता ज्ञानस्यैवाभावेन तत्र तस्य प्रकारत्वासम्भवात्, न च येनोपनीयते तत्रैव प्रकारत्वं सप्रकारकसंस्कारस्याप्युपनायकत्वेन संस्कारस्य च मानसलौकिकप्रत्यक्षाविषयत्वेन तद्विशेषणतया वाह्यस्य दण्डादेर्भानाऽसम्भवान्मानसे संस्कारदेरनुल्लिख्यमानत्वाच्चेत्यगत्या तत्र लौकिकविषयताशून्यतद्विषयकज्ञानत्वमेवोपनायकस्य कार्यतावच्छेदकमुपेयमित्याशङ्क्य प्रतिक्षिपति– **नेति**– अस्य 'निवेशनीयम्' इत्यनन्तरं सम्बन्धः । '**कामिन्युपनीत**' इति स्थाने 'कामाद्युपनीत' इति पाठो

पनीतभानभावे च ज्ञानाभावेऽपि तत्रागत्या लौकिकविषयताशून्यत्वं निवेशनीयम्, तादात्म्येन स्वस्मिन् स्वप्रकारत्वाभ्युगाद्' इत्यादि निरस्तम्, नव्यनये निर्विकल्पकसाधारणप्रत्यासत्तिस्वीकारेणोपनयकार्यताव-च्छेदके लौकिकविषयताशून्यत्वस्यैव निवेशात् 'घटवद्' इत्यादौ सर्वत्र 'विशेष्ये विशेषणम्' इति रीत्या विपयतायां प्रागस्मदुक्तबाधकस्यैव साम्राज्यात् । अथैवम् 'अभावो दण्डीयो नवा ?' इति संशय-काले 'दण्डाभाववद्' इति धीः 'विशेष्ये विशेषणम्' इति रीत्या स्यात्, तथाऽभावे प्रतियोगितावच्छेदक-विशिष्टप्रतियोगिनो बुद्धेरप्रसिद्ध्या तत्प्रतिबन्धकत्वस्याप्ययोगादिति चेत्? न-तादृशबुद्धेरप्रसिद्धत्वे दण्डा-भावासंसर्गाग्रहादिसामान्यसामग्र्या विशिष्टवैशिष्ट्यविपयिताकबोधहेतुत्वात् तादृशबुद्धेरापादकाभावात् 'विशेष्ये विशेषणम्' इति विषयिताया विशिष्टवैशिष्ट्यविषयिताकबोध एव हेतुत्वात् तादृशबुद्धेरापादका-

---

युक्तः, ज्ञानाभावेऽपि कामाद्युपनीतभानभावे चेति सम्बन्धः । **तत्र** निरुक्तमानसानुरोधेनोपनायककार्यतावच्छेदककोटौ । न निवेशनीयमित्यत्र हेतुमाह- **तादात्म्येनेति**- 'दण्डः' इत्याद्यात्मकमानसज्ञाने दण्डत्वविशिष्टदण्डस्य तादात्म्यलक्षण वैशिष्ट्यं दण्डे भासत इति विशिष्टवैशिष्ट्याख्यविषयताशालिप्रत्यक्षत्वमुपनायककार्यतावच्छेदक तत्रापि समस्त्येवेति तादृशमानसबोधस्यापि सङ्ग्रह इत्यर्थः । 'तेन' इत्यतिदिष्ट निरासहेतुमुपदर्शयति- **नव्यनय** इति- पूर्वं घट-घटत्वयोर्निर्विकल्पकम्, ततो 'घटः' इति विशिष्टबुद्धिः, तद्रूपसप्रकारकज्ञानलक्षणोपनयप्रत्यासत्त्योपनीतभानाभ्युपगमापेक्षया विशेषणविषयकज्ञानत्वस्यैव निर्विकल्पक-सविकल्पकसाधारणस्यैवोपनायकतावच्छेदकत्वौचित्यात्, तथा च निर्विकल्पकज्ञानादप्युपनयादुपनीतभानस्येष्टत्वेन तस्य विशेपण-तावच्छेदकप्रकारकज्ञानाभावेऽपि जायमानस्य विशिष्टवैशिष्ट्यप्रत्यक्षत्वासम्भवाल्लौकिकसन्निकर्षप्रयोज्यपुरोवर्तिघटनिष्ठविपयताया लौकिक्या उपनयाप्रयोज्यत्वेन तद्व्यावृत्तये लौकिकविषयताशून्यतद्विषयकज्ञानत्वस्यैवोपनायककार्यतावच्छेदकत्वादिति तदा-लिङ्गितस्य विशिष्टबुद्धित्वमेवेत्याशयः । घट-घटत्वयोर्निर्विकल्पकाद् भूतले घटस्तत्र घटत्वमिति रीत्या 'घटवद् इति ज्ञानं न सम्भवति, तत्र घटनिष्ठप्रकारताया निरवच्छिन्नत्वासम्भवात् सावच्छिन्नघटनिष्ठप्रकारताकज्ञानस्य विशिष्टवैशिष्ट्यबुद्धित्व-स्यैव न्याय्यत्वादित्यभिप्रायकस्यास्मदुक्तबाधकस्यैव भावादित्याह- **'घटवद्' इत्यादावि**ति । ननु 'रक्तो दण्डो नवा ?' इति संशयानन्तर 'रक्तदण्डवान् पुरुषः' इति विशिष्टवैशिष्ट्यावगाहिबोधस्य विशेषणतावच्छेदकप्रकारकनिश्चयकार्यस्य विशेषणतावच्छेदकनिश्चयाभावादभावेऽपि यथा विशेष्ये विशेषणमिति रीत्या बोधस्तत्रोपेयते तथाऽभावः प्रतियोगिता-सम्बन्धेन 'दण्डवान्नवा ?' इति संशयानन्तर विशेषणतावच्छेदकप्रकारकनिश्चयरूपकारणाभावात् प्रतियोगितासम्बन्धेन दण्डविशिष्टाभाववैशिष्ट्यावगाहिबोधानुत्पत्तावपि धर्मिण्यभावस्तत्र प्रतियोगितासम्बन्धेन दण्ड इत्येव विशेष्ये विशेपणमिति रीत्या 'दण्डाभाववद्' इति ज्ञानं स्यात्, अभावबोधो विशिष्टवैशिष्ट्यावगाहिबोधमर्यादा नातिशेत इति नियमेन तत्रे-ष्टापत्तेः कर्तुमशक्यत्वादिति शङ्कते- **अथेति** । **एवम्** उक्तदिशा विशेष्ये विशेषणमिति रीत्या 'दण्डरक्तवान्' इति बोधस्य 'दण्डो रक्तो नवा ?' इति संशयानन्तरमुपगमे । **अभावः** 'प्रतियोगित्वसम्बन्धावच्छिन्नदण्डनिष्ठप्रतियोगिताका-भाववान्, इत्येवंस्वरूपपर्यवसितोऽभावः, 'दण्डाभाववान्' इति बाधधीर्यदि तत्र स्यात् तदा तया प्रतिबन्धाद् विशेष्ये विशेपण-मिति रीत्याऽपि ज्ञानं न स्यात्, न चोक्तसंशयकाले तादृशबाधबुद्धेरपि सम्भवः, तस्या अपि अभावे प्रतियोगितावच्छेदक-विशिष्टप्रतियोगिनो वैशिष्ट्यावगाहित्वेन विशेषणतावच्छेदकप्रकारकनिश्चयकार्यत्वेन विशेषणतावच्छेदकप्रकारकनिश्चयाभावेऽ-भावादित्याह- **तयेति**- अत्र 'तदा' इति पाठो युक्तः, तस्य संशयकाले इत्यर्थः । **तत्प्रतिबन्धकत्वस्य** बाधबुद्धिप्रति-बन्धकत्वस्य । समाधत्ते-**नेति** । **तादृशबुद्धेः** अभावे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनो बुद्धेः । **'दण्डाभावा-संसर्गाग्रहादि'** इत्यादिपदाद् विशेषणबुद्धेरुपग्रहः । **'विशिष्टवैशिष्ट्यविषयताकबोधहेतुत्वात्'** इति स्थाने 'विशिष्ट-वैशिष्ट्यविषयताकबोध एव हेतुत्वाद्' इति पाठो युक्तः, एवकारेण विशेष्ये विशेषणमिति रीत्या बोधहेतुत्वस्य व्यवच्छेदः, तथा च 'अभावो दण्डीयो नवा ?' इति संशयकाले विशेष्ये विशेषणमिति रीत्या बोधस्य 'दण्डाभाववद् इत्याकारकस्यापादकाभावादेव नापत्तिसम्भव इत्याह- **तादृशबुद्धेरिति**- विशेष्ये विशेषणमिति रीत्या बुद्धेरित्यर्थ. । 'तादृशबुद्धेरापादकाभावाद्' इत्यनन्तर "विशेष्ये विशेषणमितिविषयताया विशिष्टवैशिष्ट्यविषयताकबोध एव हेतुत्वात् तादृशबुद्धेरापादकाभावात्" इत्यधिकः पाठोऽ-नुपादेयः । किञ्च, विशेष्ये विशेषणमितिबुद्धिविषयताया विशिष्टवैशिष्ट्यबुद्धिविषयताव्यापकत्वपक्षे विशेष्ये विशेपणमिति रीत्या बुद्धिविषयताकज्ञानत्वाविच्छिन्नं प्रत्येव 'दण्डो रक्तो नवा ? इति संशयादेः प्रतिबन्धकत्वं कल्प्यत इति निरुक्तसंशयसत्त्वे यथा न रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिज्ञानं तथा विशेष्ये विशेपणमिति रीत्या ज्ञानमपि न भवत्येव, एवं च 'अभावो

भावाद् 'विशेष्ये विशेषणम्' इति विषयिताया विशिष्टवैशिष्ट्यविषयिताव्यापकत्वे 'दण्डाभाववद्' इति ज्ञानेऽपि तस्याः सत्त्वेन तदवच्छिन्नं प्रति प्रतिबन्धकत्वसम्भवाच्च, अत एव 'दण्डो रक्तो नवा ?' इति संशयकाले यदि 'विशेष्ये विशेषणम्' इति रीत्यापि 'रक्तदण्डवान्' इति धियो नोत्पत्तिः, तदा तत्र 'दण्डो रक्तः' इत्यादि निश्चयाभावविशिष्टो 'दण्डो रक्तो नवा ?' इत्यादिसंशयप्रतिबोधकः स्वीक्रियते, इत्थं च व्यापकत्वाद् 'विशेष्ये विशेषणम्' इति रीत्या विषयितैवानुमितिप्रवृत्त्यादिजनकतावच्छेदिका, विशिष्टवैशिष्ट्यबुद्धित्वं तु रक्तदण्डत्वादिविशिष्टपर्याप्तिप्रकारताकबुद्धित्वं 'रक्तं दण्डेन जानामि' इति प्रतीतेः, इति सम्प्रदायविदः, तदसत्–अस्या एवानुमित्यादिजनकतावच्छेदकत्वे विशिष्ट-

दण्डीयो नवा ?' इति संशयानन्तरं 'दण्डाभाववद्' इति ज्ञानं विशेष्ये विशेषणमिति रीत्याऽपि न स्यादेवेत्याह– **विशेष्ये विशेषणमिति विषयताया** इति । **'दण्डाभाववद्, इति ज्ञानेऽपी**ति– अभावे दण्डत्वविशिष्टदण्डवैशिष्ट्यावगाहिज्ञानेऽपीत्यर्थः, अपिना विशेष्ये विशेषणमिति रीत्या ज्ञानस्य समुच्चयः । **तस्याः** विशेष्ये विशेषणमिति विषयतायाः । **तदवच्छिन्नं प्रति** विशेष्ये विशेषणमितिविषयताकबुद्धित्वावच्छिन्नं प्रति । **प्रतिबन्धकत्वसम्भवाच्च** 'अभावो दण्डीयो नवा ?' इति संशयस्य प्रतिबन्धकत्वाच्च, तथा चोक्तप्रतिबन्धकसद्भावादेव यथा न 'दण्डाभाववद्' इति विशिष्टवैशिष्ट्यावगाहिज्ञानं तथा विशेष्ये विशेषणमिति रीत्या ज्ञानमपि नेत्याशयः । **अत एवे**ति– विशिष्टवैशिष्ट्यविषयिताव्यापिकाया विशेष्ये विशेषणमितिरीत्या विषयिताया निरुक्तसंशयप्रतिबध्यतावच्छेदकत्वादेव, **तदा** 'दण्डो रक्तो नवा ?' इति संशयकाले विशेष्ये विशेषणमिति रीत्याऽपि 'रक्तदण्डवान्' इति धियो नोत्पत्तिरित्यस्योपपादनार्थम् । **तत्र** विशेष्ये विशेषणमिति रीत्या 'रक्तदण्डवान्' इति बुद्धौ । **'नवेत्यादिसंशयप्रतिबोधकः'** इत्यस्य स्थाने 'नवेत्यादिसंशयः प्रतिबन्धकः' इति पाठो युक्तः, 'दण्डो रक्तो नवा' इति संशयद्वितीयक्षणे 'दण्डो रक्तः' इत्याकारकविशेषणतावच्छेदकप्रकारकनिश्चये तदानीमुक्तसंशयसत्त्वेऽपि रक्तदण्डवानिति बुद्धिर्विशिष्टवैशिष्ट्यविषयिताशालिनी तद्व्यापकविशेष्ये विशेषणमितिविषयिताशालिनी चोत्पद्यत एवेत्यतो 'दण्डो रक्तः' इत्यादिनिश्चयाभाववैशिष्ट्यं निरुक्तसंशये विशेषणम् । **इत्थं च** 'दण्डो रक्तः' इत्यादिनिश्चयाभावविशिष्टस्य 'दण्डो रक्तो नवा ?' इत्यादिसंशयस्य विशिष्टवैशिष्ट्यविषयिताव्यापकविशेष्ये विशेषणमितिविषयित्वावच्छिन्नप्रतिबन्धकत्वव्यवस्थितौ च । **विषयितैवे**त्येवकारेण विशिष्टवैशिष्ट्यविषयिताया अनुमितिप्रवृत्त्यादिजनकतावच्छेदकत्वव्यवच्छेदः, अयमभिप्रायः– पर्वते धूमो धूमे च वह्निव्याप्यत्वमिति रीत्या यद् 'वह्निव्याप्यधूमवान् पर्वतः' इति ज्ञानम्, यच्च वह्निव्याप्यत्वविशिष्टधूमस्य पर्वते वैशिष्ट्यावगाहिज्ञानम्, तदुभयत्र विशेष्ये विशेषणमिति रीत्या विषयितायाः सत्त्वादुक्तपरामर्शद्वयस्यापि निरुक्तविषयितालक्षणानुमितिकारणतावच्छेदकधर्माक्रान्तत्वाद् द्विविधादपि परामर्शादनुमित्युत्पत्तिः सम्भवति, तथा 'इदमेतद्धर्मवद्, अयं धर्म इष्टसाधनतावच्छेदकः' इत्येवंरीत्या यज्ज्ञानम्, यच्च 'इष्टसाधनतावच्छेदकधर्मवद्' इति ज्ञानम्, विशेष्ये विशेषणमिति रीत्या विषयितायाः प्रवृत्तिजनकतावच्छेदिकायाः सत्त्वादुभयस्मादुक्तज्ञानात् प्रवृत्तिनिर्वाह इति । रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यतानिरूपितविषयिताया विशेष्ये विशेषणमिति रीत्या विषयितारूपाया विशिष्टवैशिष्ट्यविषयिताव्यापकत्वेऽवधृते विशिष्टवैशिष्ट्यबुद्धित्व किमित्यपेक्षायामाह– **विशिष्टवैशिष्ट्यबुद्धित्वं त्वि**ति । **रक्ते**ति– रक्तदण्डत्वादिविशिष्टे न तु रक्तत्वविनिर्मुक्तदण्डत्वादिविशिष्टे पर्याप्तिर्यस्या. प्रकारताया. सा रक्तदण्डत्वादिविशिष्टपर्याप्तिप्रकारता, रक्तत्वदण्डत्वोभयपर्याप्तावच्छेदकताकप्रकारता न तु केवलदण्डत्वनिष्ठावच्छेदकताकप्रकारता, तन्निरूपकबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वमित्यर्थ. । निरुक्तबुद्धित्वस्य विशिष्टवैशिष्ट्यबुद्धिरूपत्वेऽनुव्यवसायं प्रमाणमुपदर्शयति– **रक्तमि**ति– 'रक्त दण्डेन जानामीति प्रतीतेः' इति स्थाने 'रक्तदण्डेन पुरुषं जानामीति प्रतीतेः' इति पाठो युक्त, तस्य रक्तदण्डनिष्ठप्रकारताकपुरुषनिष्ठविशेष्यताकज्ञानवानहमिति प्रतीतेरित्यर्थः, अत्र तृतीयार्थे प्रकारत्वे रक्तदण्डस्याधेयतयाऽन्वये रक्तदण्डत्वावच्छिन्नत्वमपि तत्रान्वेतीति । विशेष्ये विशेषणमिति रीत्या विषयिताया अनुमितिप्रवृत्त्यादिजनकतावच्छेदकत्वमभ्युपगच्छतां प्राचां मतमपहस्तयति– **तदसदि**ति । **अस्या एव** विशेष्ये विशेषणमिति रीत्या विषयिताया एव, एवकारेण विशिष्टवैशिष्ट्यविषयिताया अनुमित्यादिजनकतावच्छेदकत्वव्यवच्छेद., विशिष्टवैशिष्ट्यबुद्धावपि रक्तत्व दण्ड एव प्रकारो दण्डश्च पुरुषे प्रकार इत्येवानुभूयत इति रक्तत्वनिष्ठप्रकारतानिरूपितैव दण्डनिष्ठविशेष्यता न तु रक्तत्वनिष्ठावच्छेदकतानिरूपिता दण्डनिष्ठप्रकारतेति । अत्र प्रतीतिं

वैशिष्ट्यविषयतायां मानस्य दूरापास्तत्वात्, 'रक्तदण्डवान्' इत्यादिज्ञानेऽपि रक्तत्वादिप्रकारतानिरूपित-दण्डादिनिष्ठविशेष्यताया एवानुभावात्, रक्तादेर्दण्डादिविशेष्य इत्येव प्रतीतेः, तस्माद् विशिष्टवैशिष्ट्य-विषयताकबुद्धित्वमेवानुमित्यादिजनकतावच्छेदकम्, 'विशेष्ये विशेषणम्' इति बुद्धित्वं तु विशेषणता-वच्छेदकसंशयकालीनज्ञानसाधारणमेवेत्यलं संशयप्रतिबन्धकत्वेन । विशिष्टपर्याप्तप्रकारकवाक्यबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वमित्यपि न युक्तम्, 'वह्निव्याप्येन्धनवान्' इत्यादौ विशिष्टव्याप्तेरसिद्धत्वेन प्रकार-त्वासंभवभिया परामर्शदीधितौ खण्डशो निरुक्तेरानर्थक्यापातात् । एतेन, वैशिष्ट्यं च वैज्ञानिकम्, तेन 'लोहितवह्निमान्' इत्यादौ न विशिष्टवैशिष्ट्यबोधानुपपत्तिरिति मथुरानाथाद्युक्तमपास्तम्, विशिष्टवैशिष्ट्य-विषयता विशेषणतावच्छेदकसम्बन्धभेदेन भिन्नेति सर्वैः स्वीकारेण समवायादिघटिततदसम्भवस्य

प्रमाणयति- **रक्तादेरिति** । 'दण्डादिविशेष्य' इति स्थाने 'दण्डादिर्विशेष्यः' इति पाठो युक्तः, रक्तत्वविशिष्टदण्डस्य पुरुषविशेषणत्वे दण्डद्वारा पुरुषोऽपि रक्तस्य विशेष्य इति पुरुषोऽपि रक्तादेर्विशेष्य इति सम्प्रत्ययः स्यात्, न चैवमित्यावे-दनायैवकारोपादानम् । **तस्मादिति**- यस्माद् विशेष्ये विशेषणमिति बुद्धिविषयताया अनुमितिप्रवृत्त्यादिजनकतावच्छेदक-त्वाभ्युपगमे प्रमाणाभावाद् विशिष्टवैशिष्ट्यविषयताया असिद्धिप्रसङ्ग इत्येतस्माद् हेतोः । विशेष्ये विशेषणमिति रीत्या बोधश्च विशेषणतावच्छेदकप्रकारकसंशयकाले भवत्येवेति न तस्या संशयप्रतिबध्यतावच्छेदकत्वमिति सशयकालीनज्ञानेऽपि विशेष्ये विशेषणमिति रीत्या विषयता समस्त्येवेत्याह- **विशेष्ये विशेषणमिति बुद्धित्वं त्विति** । विशिष्टवैशिष्ट्यबुद्धि-त्वस्य लक्षणान्तरं परामिप्रेतमुत्प्रेक्ष्य दूषयति- **विशिष्टपर्याप्तेति**-विशिष्टे पर्याप्ता या प्रकारता तन्निरूपिका या वाक्य-जन्या बुद्धिस्तत्त्वं विशिष्टवैशिष्ट्यबुद्धित्वमित्यर्थः, अत्र वाक्यजन्यत्व किमिति निवेशितमिति न विद्म', प्रत्युत तन्निवेशे प्रमाणा-न्तरोपजातबुद्धेर्विशिष्टवैशिष्ट्यबुद्धित्वमेवापहस्तितं स्यादिति। अयुक्तत्वे हेतुमुपदर्शयति- **वह्निव्याप्येन्धनेति** । **'विशिष्टव्याप्ते-रसिद्धत्वेन'** इत्युक्तिर्हेतुव्यापकसाध्यसामानाधिकरण्यलक्षणव्याप्तिमवलम्ब्य, अन्यथा साध्याभाववदवृत्तित्वलक्षणव्याप्तेः प्रकृते वह्न्यभाववदवृत्तित्वरूपतया तस्या अप्रसिद्ध्यभावात्, इन्धनसमानाधिकरणस्य वह्न्यभावस्य प्रतियोगित्वेन वह्नेस्तादृगभावाप्रति-योगिवह्निसामानाधिकरण्यव्याप्तेरप्रसिद्धिर्युज्यत इति । **खण्डशो निरुक्तेरिति**- हेतुविषयतानिरूपिताधिकरणविषयतानिरूपित-वृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितसाध्यविषयतानिरूपिताधिकरणविष-यतानिरूपितवृत्तित्वविषयतेत्येवं दिशा निर्वचनस्येत्यर्थः । **आनर्थक्यापत्तेरिति**-'वह्निव्याप्येन्धनवान्' इतिवाक्यजबुद्धे-र्विशिष्टवैशिष्ट्यबुद्धित्वस्योपपत्त्यर्थमेव तथा निर्वचनम्, पर तथा निर्वचनेऽपि विशिष्टपर्याप्तप्रकारताकबुद्धित्वस्य विशिष्टा-प्रसिद्ध्या तत्र सङ्घटन न स्यादेवेत्याशयः । **'एतेन'** इत्यस्य 'अपास्तम्' इत्यनेनान्वय. । **एतेन** खण्डशो निरुक्तेरानर्थक्या-पातेन, इन्धनसमानाधिकरणाभावप्रतियोगिनि वह्नौ तादृशप्रतियोगित्वाभावस्य स्वरूपसम्बन्धेन वैशिष्ट्यासम्भवेऽपि वैज्ञानिक-सम्बन्धेन तद्वैशिष्ट्यस्य तत्र सम्भवेन विशिष्टव्याप्तेरसिद्धत्वाभावेन निरूप्यनिरूपकभावापन्नविषयताकज्ञानत्वेन व्याप्तिज्ञान-निर्वचनस्यानर्थक्यादित्याशय । **तेन** वैशिष्ट्यस्य वैज्ञानिकस्याभ्युपगमेन । **लोहितेति**- वह्नेस्तेजस्स्वरूपस्य भास्वरशुक्ल-रूपवत्त्वेन लोहितत्वस्य रक्तरूपलक्षणस्य समवायरूपवैशिष्ट्यस्याभावेऽपि स्वप्रकारकज्ञानविषयत्वलक्षणस्य लोहितत्वप्रतियोगिक-वैज्ञानिकसम्बन्धस्य तत्र सत्त्वेन तेन सम्बन्धेन लोहितत्वविशिष्टवह्नेर्वैशिष्ट्यविषयता 'लोहितवह्निमान्' इत्यादौ सम्भवेन तादृशविषयताको 'लोहितवह्निमान्' इत्याकारको विशिष्टवैशिष्ट्यबोध उपपद्यत इति मथुरानाथोक्तत्यर्थ । मथुरानाथोक्तापासने हेत्वन्तरमप्युपदर्शयति- **विशिष्टेति**-'लोहितवह्निमान्' इत्यादौ स्वरसतो लोहितत्वस्य रक्तरूपस्य वह्नौ समवायेन वैशिष्ट्यस्यैव भासमानत्वेन तस्यासम्भवादेव लोहितत्वविशिष्टवह्नेर्वैशिष्ट्यविषयता न संभवतीति तथाविधबोधस्य न विशिष्टवैशिष्ट्यबोधत्व-मित्याक्षेपस्य वैज्ञानिकसम्बन्धेन लोहितत्ववैशिष्ट्यस्य वह्न्याद्युपदर्शनमात्रेण प्रतिविधानस्य कर्तुमशक्यत्वादित्यभिसन्धि । **तद-सम्भवस्य** विशिष्टवैशिष्ट्यविषयताऽसम्भवस्य । येन येन सम्बन्धेन विशेषणे यस्य यस्य विशेषणत्वेन विशेषणताव-च्छेदकत्वमभिमत तत्तत्सम्बन्धनिरूपितो यो वैज्ञानिकसम्बन्धस्तत्तत्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वलक्षण-स्तेन सम्बन्धेन विशिष्टविशिष्टबुद्धित्वावच्छिन्नं प्रति तत्तत्सम्बन्धेन विशेष्यतावच्छेदकप्रकारकनिश्चयस्य कारणत्वमिति धर्मिणि मतुबर्थे विशेषणे वह्नौ समवायेन विशेषणतया विशेषणतावच्छेदक यल्लोहितत्वं समवायेन तत्प्रकारकनिश्चयेन निरुक्तवैज्ञानिकसम्बन्धेन लोहितत्वविशिष्टवह्निवैशिष्ट्यबोधस्य 'लोहितवह्निमान्' इत्याकारकस्योपपत्तिरित्येव समाधानं कर्तुं

वैज्ञानिकसम्बन्धेन समाधातुमशक्यत्वाच्च, तत्तत्सम्बन्धेन विशेषणतावच्छेदकप्रकारकनिश्चयस्य तत्तत्सम्बन्धनिरूपितवैज्ञानिकसम्बन्धेनैव विशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति हेतुत्वकल्पने त्वतिगौरवम्, संशयदशायामपि शुद्धसम्बन्धेन कार्यापत्तिश्च, न चेष्टापत्तिः, अनुभवविरोधात्, अन्यथा विशिष्टवैशिष्ट्यं न कार्यतावच्छेदकमर्थसमाजसिद्धत्वात्, विशेषणज्ञानद्वयादेव तादृशबोधोपपत्तिरिति मिश्रमतसाम्राज्यापत्तेः, 'दण्डो रक्तो नवा ?' इति संशयानन्तरमजायमानस्य दण्डो रक्त इति निश्चयानन्तरं च जायमानस्य बोधस्यानुभवसिद्धत्वादेव हि तत्रोक्तकार्यकारणभावेन तन्मतं निराक्रियते, नियतसम्बन्धगर्भत्वेऽपीयमेव युक्तिरिति। इदं तु स्याद् 'रक्तदण्डवान्' इत्यत्र दण्डाश्रितैव प्रकारता, तदवच्छेदकता च

---

शक्यमित्यत आह– **तत्तत्सम्बन्धेनेति**– तत्तत्सम्बन्धनिरूपितवैज्ञानिकसम्बन्धस्य गुरूभूतस्य निरूपकीभूततत्तत्सम्बन्धभेदभिन्नस्य कार्यतावच्छेदकसम्बन्धतयाऽभिमतत्वेऽतिगौरवं स्यादित्यर्थः। तथा गौरवस्य सह्यतायां दोषान्तरमाह– **संशयदशायामपीति**– 'दण्डो रक्तो नवा ?' इति विशेषणतावच्छेदकप्रकारकसंशयदशायामपीत्यर्थः। तदानीं विशेषणतावच्छेदकप्रकारकनिश्चयाभावे विशेषणतावच्छेदकप्रकारकनिश्चयकार्यं तत्तत्सम्बन्धनिरूपितवैज्ञानिकसम्बन्धेन विशिष्टवैशिष्ट्यज्ञानं मा भूत्, शुद्धसम्बन्धेन वैज्ञानिकादिलक्षणेन विशिष्टवैशिष्ट्यज्ञानं च न तत्कार्यमिति तत् स्यादित्यर्थः। 'रक्तो दण्डो नवा ?' इति संशयदशाया 'रक्तदण्डवान्' इति विशिष्टवैशिष्ट्यावगाहिनिश्चयस्याननुभूयमानत्वेनेष्टापत्त्या तदापादनस्यादोषत्वमुररीकर्तुमशक्यमित्याह– **न चेष्टापत्तिरिति**। **अन्यथा** अननुभूयमानस्यापि विशेषणतावच्छेदकप्रकारकसंशयदशायां विशिष्टवैशिष्ट्यबोधस्याभ्युपगमे। **अर्थसमाजसिद्धत्वात्** रक्तत्वरूपविशेषणज्ञानाद् रक्तत्वविशिष्टदण्डस्य भानं दण्डरूपविशेषणज्ञानाद् दण्डवैशिष्ट्यस्य भानमित्येवं तद्घटकप्रत्येकधर्मावच्छिन्नभानसमाजसिद्धत्वात्। एतदेव स्पष्टयति– **विशेषणज्ञानद्वयादेवेति**– रक्तत्वज्ञान-दण्डज्ञानद्वयादेवेत्यर्थः। **तादृशबोधोपपत्तिः** रक्तत्वविशिष्टदण्डवैशिष्ट्यबोधोपपत्तिः। **इति मिश्रमतसाम्राज्यापत्तेः** इत्येवंस्वरूपं यत् पक्षधरमिश्रस्य मतं तत्साम्राज्यापत्तेः। विशेषणज्ञानद्वयादेव विशिष्टवैशिष्ट्यबोध इति पक्षधरमिश्रमतस्य निराकरणं तेन सम्बन्धेन तद्धर्मविशिष्टवैशिष्ट्यबुद्धिं प्रति तेन सम्बन्धेन तद्धर्मलक्षणविशेषणतावच्छेदकप्रकारकनिश्चय. कारणमित्येवं कार्यकारणभावबलादेव क्रियते, तदुक्तवैज्ञानिकसम्बन्धेन कार्यकारणभावपक्षे संशयदशायामपि विशिष्टवैशिष्ट्यबोधस्याभ्युपगतौ न सम्भवतीत्यावेदनायाह– **'दण्डो रक्तो नवा ?' इति संशयानन्तरमिति**। **'अजायमानस्य'** इत्यस्य 'बोधस्य' इत्यनेनान्वय., 'बोधस्य' इत्यस्य विशिष्टवैशिष्ट्यबोधस्येत्यर्थः। **तत्र** विशिष्टवैशिष्ट्यबोधे। **उक्तकार्यकारणभावेन** तेन सम्बन्धेन तद्विशिष्टवैशिष्ट्यबोधं प्रति तेन सम्बन्धेन तद्धर्मप्रकारकनिश्चयः कारणमित्येवकार्यकारणभावेन। **तन्मतं** विशेषणज्ञानद्वयादेव विशिष्टवैशिष्ट्यज्ञानमिति पक्षधरमिश्रमतम्, यदि च संशयानन्तरमजायमानत्वमुक्तबोधस्य न स्यात् किन्तुसंशयानन्तरमप्युक्तबोधो जायेत तदा व्यभिचारेण विशेषणतावच्छेदकप्रकारकनिश्चयस्य तं प्रति कारणत्वमेव न स्याद्, यदि वा विशेषणतावच्छेदकप्रकारकनिश्चयानन्तरमप्युक्तबोधो न जायेत तदाऽप्यन्वयव्यभिचारेण विशेषणतावच्छेदकप्रकारकनिश्चयस्य तं प्रति कारणत्वं न भवेत्, न चैवं किन्तु विशेषणतावच्छेदकप्रकारकनिश्चयेन सहोक्तबोधस्य कार्यकारणभावग्राहकावन्वयव्यतिरेकौ विद्येते इत्यावेदनाय 'संशयानन्तरमजायमानस्य' इति निश्चयानन्तरं जायमानस्य, इति च 'बोधस्य' इत्यस्य विशेषणमिति बोध्यम्। विशेषणज्ञानस्य सम्बन्धविशेषविषयकत्वापुरस्कारेणैव विशिष्टबुद्धिं प्रति कारणत्वस्याभ्युपगततया विशेषणज्ञानद्वयादेव विशिष्टवैशिष्ट्यावगाहिज्ञानस्याभ्युपगमे तत्र नियतसम्बन्धभानं न स्यात्, तेन सम्बन्धेन विशेषणतावच्छेदकीभूततद्धर्मप्रकारकनिश्चयस्य तेन सम्बन्धेन तद्धर्मविशिष्टवैशिष्ट्यबुद्धिं प्रति कारणत्वे तु नियतसम्बन्धविशेषभानमपि तत्रोपपद्यते इत्येतदर्थमेव निरुक्तकार्यकारणभावस्य नियतसम्बन्धगर्भत्वमित्याह– **नियतसम्बन्धगर्भत्वेऽपीति**। 'रक्तदण्डवान्' इति विशिष्टवैशिष्ट्यावगाहिबोधे प्रकारत्वं दण्डमात्रस्य तदवच्छेदकत्वं रक्तत्व-दण्डत्वयो. पर्याप्तम्, विशिष्टवैशिष्ट्यबोधीयप्रकारत्वस्यावच्छेदकत्व, तदवच्छेदकत्व वा यथा समानाधिकरणधर्मे तथा व्यधिकरणधर्मेऽपि, तेन 'लोहितवह्निमान्' इति ज्ञानं लोहितत्वात्मकव्यधिकरणधर्मनिष्ठावच्छेदकतानिरूपितवह्नित्वात्मकसमानाधिकरणधर्मनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठप्रकारतानिरूपकं ज्ञानम्, 'रक्तदण्डवान्' इति च ज्ञानं रक्तत्व दण्डत्वोभयपर्याप्तावच्छेदकतानिरूपितदण्डनिष्ठप्रकारतानिरूपकम्, लोहितवह्निमत्वान्' इति च ज्ञानं लोहितत्वात्मकव्यधिकरणधर्मनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठावच्छेदकतानिरूपितवह्निमन्निष्ठप्रकारतानिरूपकमित्येवं दिशा तत्तन्निष्ठावच्छेदकतानिरूपितप्रकारताकबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वमवसेयमिति ग्रन्थकारः स्वाभिप्रायं प्रकटयति– **इदं तु स्यादिति**। 'दण्डा-

रक्ते दण्डत्वे च पर्याप्ता, 'रक्तेन दण्डत्वेन चामुमत्र जानामि' इति प्रतीतेः, व्यधिकरणस्याप्यवच्छेदकता-वच्छेदकत्वादिकं 'रजतम्' इत्यादि 'पीतशङ्खवद्' इत्यादिभ्रमवदविरुद्धम्, साऽवच्छेदकता तत्तद्धर्मांशे समानाधिकरण-व्यधिकरणतत्तत्सम्बन्धावच्छिन्ना, तत्तन्निरूपितबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वम्, 'वह्नि-

श्रितैव' इत्येवकारेण प्रकारताया रक्तत्वविशिष्टदण्डाश्रितत्वस्य व्यवच्छेदः, तेन विशिष्टपर्याप्तप्रकारताकबुद्धित्वं विशिष्टवैशिष्ट्य-बुद्धित्वमिति नाभ्युपगम्यते किन्तु विशेषणतावच्छेदकतयाऽभिमतधर्मपर्याप्तावच्छेदकताकप्रकारकताकबुद्धित्वमेव विशिष्टवैशिष्ट्य-बुद्धित्वम्, 'विशेष्ये विशेषणं तत्र च विशेषणम्' इति रीत्या बोधं च विशेषणविशेषणे प्रकारत्वमेव न तु साक्षाद्विशेषण-निष्ठप्रकारताया अवच्छेदकत्वमिति ततो विशिष्टवैशिष्ट्यबोधस्य भेदः। रक्तदण्डवानिति ज्ञानानन्तरं तदनुव्यवसायस्य 'रक्तत्वेन दण्डत्वेन चामुमत्र जानामि' इत्येवं रूपेणोपजायमानत्ववतो रक्तत्वे दण्डत्वे च दण्डनिष्ठप्रकारतानिरूपितावच्छेदकता स्वीक्रियत इत्याह-**रक्तेनेति**-अत्र रक्तपद रक्तरूपपरम्, तेन रक्तरूपवत्त्वेनेति तदर्थः, अत्र तृतीयार्थोऽवच्छेदकत्व तस्य 'अमुम्' इति द्वितीयार्थे कर्मत्वे प्रकारतारूपेऽन्वयः, सविषयकार्थकधातुसमभिव्याहृतद्वितीयार्थस्य कर्मत्वस्य विषयतारूपतयैवाङ्गीकारात्, यद्यपि कारकविभक्त्यर्थस्य धात्वर्थक्रियायामेवान्वयो व्युत्पन्नस्तथाऽपि द्वितीयार्थप्रकारतानिरूपकत्वविशिष्टे धात्वर्थज्ञाने तृतीया-र्थावच्छेदकतात्मकविषयताया निरूपकत्वेनान्वये द्वितीयार्थेऽपि तस्यान्वयो व्युत्पत्तिवैचित्र्यादाश्रीयते, द्वितीयाप्रकृतीदम्पदा-र्थदण्डस्याधेयतया प्रत्ययार्थप्रकारतायामन्वयः, **अत्रे**ति त्रल्प्रत्ययार्थो विशेष्यत्वम्, तस्यापि निरूपकतया धात्वर्थज्ञानेऽन्वयः, विशेष्यत्वे चेदमर्थस्य पुस आधेयतयाऽन्वयः, एव च 'रक्तदण्डवान्' इति ज्ञानानुव्यवसायाभिलापकाद् 'रक्तेन दण्डत्वेन चामुमत्र जानामि' इति वाक्याद् 'रक्तरूपवत्त्वनिष्ठावच्छेदकतानिरूपितदण्डत्वनिष्ठावच्छेदकतानिरूपितेदमर्थदण्डनिष्ठप्रकारता-निरूपकेदमर्थपुरुषनिष्ठविशेष्यतानिरूपकज्ञानवान्' इति प्रतीतेर्दण्डनिष्ठप्रकारतानिरूपितावच्छेदकत्वस्य रक्तत्व-दण्डत्वोभयपर्याप्तस्य सिद्धेः, यद्यपि दण्डत्वनिष्ठावच्छेदकता दण्डत्वमात्रवर्तिनी न रक्तत्वे वर्तते, रक्तत्वनिष्ठावच्छेदकता च रक्तत्वमात्रवर्तिनी न दण्डत्वे वर्तत इति नैकस्या अवच्छेदकताया रक्तत्व-दण्डत्वोभयपर्याप्तत्वम्, तथापि प्रत्येक भिन्नाऽपि सा दण्डनिष्ठप्रकारता-निरूपितावच्छेदकतात्वेनैका भवतीति तद्रूपेणोभयपर्याप्तिरिति स्याद्वादमतेऽनेकस्यापि कथञ्चिदेकत्वमविरुद्धमिति बोध्यम्। यद्यपि वह्निव्याप्यत्व वह्न्यभाववदवृत्तित्व स्वव्यापकवह्निसामानाधिकरण्यलक्षण वा नेन्धने समस्ति तथापि व्यधिकरणधर्म-विधयैव वह्निव्याप्तिरिन्धननिष्ठप्रकारताया अवच्छेदकत्वम्, धर्मिणि प्रकारीभूते वेन्धने सामानधिकरण्यद्वारा विशेषणीभूते वह्नित्वे याऽवच्छेदकता तस्या व्यधिकरणधर्मविधयेन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्यावच्छेदकत्व भविष्यतीत्यतो 'वह्निव्याप्येन्धनवान्' इति विशिष्टवैशिष्ट्यबोधस्याप्युपपत्तिरित्याह- **व्यधिकरणस्यापी**ति। **'अवच्छेद-कतावच्छेदकतादिकम्'** इति स्थाने 'अवच्छेदकत्व-तदवच्छेदकत्वादिकम्' इति पाठो युक्तः, तदवच्छेदकत्वम्-अवच्छेदकतावच्छेदकत्वम्, आदिपदादवच्छेदकतावच्छेदकतावच्छेदकत्वादेरुपग्रहः। **'रजतम्' इत्यादी**ति- 'इदं रजतम्' इति भ्रमे पुरोवर्तिन्या शुक्तौ तादात्म्येन रजतस्य प्रकारत्वे व्यधिकरणस्य रजतस्य प्रकारत्वमेव, तदवच्छेदकं च रजतत्वं समानाधिकरणमेव, रजतत्वस्य समवायेन प्रकारत्वे तस्यापि व्यधिकरणस्य प्रकारत्वमेव, तच्च प्रकारत्वं निरवच्छिन्न-मेवेति तन्निरूपितावच्छेदकतैव नास्तीति तत्र व्यधिकरणस्यावच्छेदकत्वचर्चैव न सम्भवति, परन्तु व्यधिकरणस्य यथा प्रकारत्व तथा प्रकारतावच्छेदकत्वमपि व्यधिकरणस्य सम्भवतीत्येतावन्मात्रेण तस्य दृष्टान्तता, 'पीतशङ्खवद्' इति भ्रमे च शङ्खत्वांशेऽभ्रमरूपे पीतत्वांशे भ्रमात्मनि शङ्खांशे पीतत्वस्य भाने शङ्खनिष्ठप्रकारताया अवच्छेदकत्वं यथा व्यधिकरणस्य पीतत्वस्य तथाऽन्यत्रापि व्यधिकरणस्य प्रकारतावच्छेदकत्वम्, यदि च सामानाधिकरण्यसम्बन्धेन पीतत्वविशिष्टशङ्खत्व-स्यैव शङ्खनिष्ठप्रकारताया अवच्छेदकत्व तदा शङ्खनिष्ठप्रकारतानिरूपितशङ्खत्वनिष्ठावच्छेदकताया व्यधिकरणस्य पीतत्वस्य यथाऽवच्छेदकत्व तथाऽन्यत्रापि प्रकारतावच्छेदकत्व व्यधिकरणस्य सम्भवतीति बोध्यम्। **साऽवच्छेदकता** प्रकारतानिरूपिता-वच्छेदकता। **तत्तद्धर्मांश** इति- यत्र समवायेन रक्तरूपवद्दण्डवानिति बोधस्तत्र समवायसम्बन्धावच्छिन्ना दण्डनिष्ठप्रकारता-निरूपिता रक्तरूपनिष्ठावच्छेदकता समानाधिकरणसम्बन्धावच्छिन्ना, यत्र तु सयोगेन स्वरूपेण वा रक्तरूपवद्दण्डवानिति ज्ञानं तत्र तादृशी रक्तरूपनिष्ठाऽवच्छेदकता व्यधिकरणसयोग-स्वरूपादिसम्बन्धावच्छिन्नेति। **'तत्तन्निरूपितबुद्धित्वम्'** इति स्थाने 'तत्तन्निरूपितप्रकारताकबुद्धित्वम्' इति पाठो युक्तः, तस्य च समानाधिकरणसम्बन्धावच्छिन्ना व्यधिकरणसम्बन्धावच्छिन्ना वा समानाधिकरणधर्मनिष्ठा व्यधिकरणधर्मनिष्ठा वा याऽवच्छेदकता तन्निरूपितप्रकारतानिरूपकबुद्धित्वमित्यर्थः। **विशिष्ट-**

व्याप्येन्धनवान्' इत्यादावपि सम्भवतीत्यलं दीधितिकृतः खण्डशो निरुक्त्या, इयमेवानुमित्यादिजनकतावच्छेदिका, नानाप्रकारतादिघटितधर्मस्य जनकताद्यवच्छेदकत्वे गौरवादिति । अथ 'दण्डो रक्तः' इति निर्णयस्य रक्तत्व-दण्डत्वोभयधर्मावच्छिन्नप्रकारताकत्वं जन्यतावच्छेदकमित्यभ्युपगमेऽपि रक्तत्वधर्मितावच्छेदकदण्डत्वप्रकारकनिर्णयजन्ये 'दण्डरत्नवान्' इति विशिष्टवैशिष्ट्यबोधे व्यभिचार इति चेत् ? न– रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालित्वस्यापि तादृशनिर्णयजन्यतावच्छेदके प्रवेशात्, उक्तस्थले दण्डत्वप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताया एव सत्त्वात्, उभयधर्मावच्छिन्नप्रकारतां

वैशिष्ट्यबुद्धित्वमिति– अस्य 'सम्भवति' इत्यनेनान्वयः, उक्तलक्षणं यद् विशिष्टबुद्धित्वं तद् वह्निव्याप्येन्धनवानित्यादावपि सम्भवति,यतोव ह्निव्याप्तिस्तदभाववदवृत्तित्वरूपा प्रसिद्धैव,इन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपायामपि तत्रानवच्छेदकत्वान्तमन्यत्र प्रसिद्धमिति तदात्मकव्यधिकरणधर्मनिष्ठावच्छेदकतानिरूपितवह्नित्वनिष्ठावच्छेदकतानिरूपितेत्यादिक्रमेण तत्तद्धर्मनिष्ठावच्छेदकतानिरूपितेन्धननिष्ठप्रकारतानिरूपकज्ञानत्वं 'वह्निव्याप्येन्धनवान्' इति ज्ञानेऽपि सम्भवतीति तद्रूपेण तस्य कारणत्वं वह्न्यनुमितौ भ्रमदशायां सम्भवतीति 'वह्निव्याप्येन्धनवान्' इति भ्रमात्मकपरामर्शस्योक्तानुमितिं प्रति कारणत्वोपपत्तये प्रकृतहेतुतावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यप्रकृतहेतुनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्याधिकरणनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यवृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्याभावनिष्ठप्रकारतानिरुपितविशेष्यत्वावच्छेद्यप्रतियोगित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाच्छेद्यप्रतियोगित्वसम्बन्धावाच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्याभावनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्याधेयत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठप्रकारतानिरुपितविशेष्यत्वावच्छेद्यनिरूपित्वसम्बन्धावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यनिरूपितत्वसम्बन्धावच्छिन्ननिरूपकत्वनिष्ठप्रकारता निरूपितविशेष्यत्वानच्छेद्याधिकरणत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यनिरूपितत्वसम्बन्धावच्छिन्नाधिकरणनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यवृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्यहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकधर्मावच्छिन्नहेतुनिष्ठप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यताकनिश्चयत्वेन खण्डशः प्रसिद्ध्या परामर्शस्यानुमितिं प्रति कारणत्वमित्यभिप्रायेण दीधितिकृत. खण्डशो निरुक्त्या, **अलं** पर्याप्तम्, तथा निर्वचनस्य न किञ्चित्प्रयोजनमित्यर्थः । **इयमेव** अनन्तरोपवर्णिता तत्तन्निष्ठावच्छेदकतानिरूपितप्रकारताकबुद्धित्वलक्षणा विशिष्टवैशिष्ट्यबुद्धितैव । दीधितिकृदभिमतधर्मस्य नानाप्रकारतादिघटितधर्मस्य गुरुभूतत्वेनानुमितिजनकतावच्छेदकत्वाभावादित्याह–**नानेति** । '**प्रकारतादि**' इत्यादिपदान्नानाविशेष्यत्वानामुपग्रहः, अनेन च 'विशेष्ये विशेषणम्' इति रीत्या विषयितैवानुमितिप्रवृत्त्यादिजनकतावच्छेदिकेति साम्प्रदायिकमतमपि निरस्त भवति, तत्र रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वावच्छेद्यदण्डत्वनिष्ठावच्छेदकतानिरूपितदण्डनिष्ठप्रकारताकबुद्धेरेव 'विशेष्य विशेषणम्' इति रीत्या बुद्धित्वेन तेन रूपेणानुमितिप्रवृत्त्यादिजनकत्वे नानाप्रकारताविशेष्यत्वादिघटितधर्मस्य तदवच्छेकत्वे गौरव स्याद् उक्तदिशा निरुक्तेन तत्तधर्मनिष्ठावच्छेदकतानिरूपितप्रकारताकबुद्धित्वलक्षणविशिष्टवैशिष्ट्यबुद्धित्वेनानुमितिप्रवृत्त्यादिजनकत्वे नानाप्रकारत्व-विशेष्यत्वादीना कारणत्वावच्छेदकघटकत्वाभावाल्लाघवमित्याशयः । ननु रक्तत्वस्वरूपविशेषणतावच्छेदकधर्मप्रकारकदण्डविशेष्यकनिर्णयस्य 'दण्डो रक्तः' इत्याकारकस्य जन्यतावच्छेदक भवन्मते रक्तत्व-दण्डत्वोभयपर्याप्तावच्छेदकताकदण्डनिष्ठप्रकारताकबुद्धित्वलक्षण रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिबुद्धित्वम्, तद् यथा 'रक्तदण्डवान्' इति बुद्धौ वर्तते तथा रक्तत्वावच्छिन्नविशेष्यकदण्डत्वप्रकारकनिर्णयस्वरूपस्य 'रक्तो दण्डः' इति निर्णयस्य जन्ये 'दण्डरक्तवान्' इति विशिष्टवैशिष्ट्यबोधेऽपि वर्तत इति सोऽपि 'दण्डो रक्तः' इति रक्तत्वप्रकारकदण्डविशेष्यकनिर्णयजन्यतावच्छेदकाक्रान्तः, स तु रक्तत्वप्रकारकदण्डविशेष्यकनिर्णयमन्तरेणैव रक्तत्वावच्छिन्नविशेष्यकदण्डत्वप्रकारकनिर्णयादुपजायत इति व्यतिरेकव्यभिचारेणोक्तरीत्या विशेषणतावच्छेदकप्रकारकनिर्णय-विशिष्टवैशिष्ट्यबोधयोः कार्यकारणभावे न सम्भवतीति शङ्कते– **अथेति** । '**दण्डरत्नवान्**' इत्यस्य स्थाने 'दण्डरक्तवान्' इति पाठो युक्तः । दण्डत्व-रक्तत्वोभयपर्याप्तावच्छेदकताकदण्डनिष्ठप्रकारतानिरूपकत्वे सति रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिबुद्धित्वस्यैव रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिनिर्णयजन्यतावच्छेदकतया स्वीकारेण 'दण्डरक्तवान्' इति बोधे दण्डत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यतानिरूपके रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यता-

परित्यज्योभयपर्याप्तप्रकारतानिवेशेन हेतुत्वस्वीकारे तु 'पर्वतो लौहित्याभाववान्' इति ज्ञानकाले 'लोहितवह्निमान्' इति विशिष्टवैशिष्ट्यबुद्ध्यनापत्तिः, 'पर्वतो न लोहितः' इति ज्ञानस्य लौहित्यप्रकारकपर्वतविशेष्यकज्ञान एव प्रतिबन्धकत्वात्, न च रक्तत्वावच्छिन्नविशेष्यताकरक्तप्रकारकस्य 'रक्तो रक्तः' इति स्मरणस्य प्रसङ्गस्तत्र तथानिर्णयस्य हेतुत्वादिति वाच्यम्, रक्तत्वावच्छिन्नविशेष्यतायास्तत्र रक्तत्वप्रकारतानिरूपितत्वेऽपि रक्तत्वावच्छिन्नविशेष्यतात्वेन तस्यास्तादृशप्रकारतानिरूपितत्वानभ्युपगमात्, तेन रूपेण रक्तत्वप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताशालिज्ञानस्यैव 'रक्तो रक्तः' इत्याकारकस्मृतिजन-

कत्वस्याभावेन 'दण्डो रक्तः' इति निर्णयजन्तावच्छेदकोक्तधर्मानाक्रान्तत्वेनोक्तनिर्णयाभावे जायमाने तस्मिन् व्यभिचाराभावादिति समाधत्ते—**नेति**। **तादृशनिर्णयेति**—रक्तत्वनिष्ठप्रकारताकदण्डत्वावच्छिन्नविशेष्यताकनिर्णयेत्यर्थः। **उक्तस्थले** 'दण्डरक्तवान्' इति बोधे। **एवकारेण** रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताया व्यवच्छेदः। ननु रक्तत्वदण्डत्वोभयपर्याप्तावच्छेदकताकप्रकारताकज्ञानत्वस्य रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिबुद्धित्वस्वरूपत्वं यदुपेयते तत्र रक्तत्व-दण्डत्वोभयवत्पर्याप्तप्रकारताकबुद्धित्वस्वरूपत्वमेव तस्य किमिति नोपेयत इत्यपेक्षायामाह—**उभयधर्मावच्छिन्नप्रकारतामिति**—**'उभयपर्याप्तप्रकारताम्'** इति स्थाने 'उभयधर्मवत्पर्याप्तप्रकारताम्' इति पाठो युक्तः, तथा च रक्तत्व-दण्डत्वोभयवत्पर्याप्तप्रकारताकबुद्धित्वावच्छिन्नं प्रति रक्तत्वप्रकारकनिश्चयः कारणमित्येव कार्यकारणभावोऽभ्युपगतः स्यात्, तथा च सति वह्नौ वह्नित्वस्य सत्त्वेऽपि लौहित्याभावेन लौहित्य-वह्नित्वोभयवान् वह्निर्न भवतीति 'लोहितवह्निमान्' इति ज्ञानं व्यधिकरणीभूतलौहित्यनिष्ठावच्छेदकतानिरूपितवह्नित्वावच्छिन्नवह्निनिष्ठप्रकारतानिरूपकमपि लौहित्य-वह्नित्वोभयवत्पर्याप्तप्रकारतानिरूपकं न भवतीति न 'लोहितो वह्निः' इत्याकारकलौहित्यलक्षणविशेषणतावच्छेदकप्रकारकवह्निविशेष्यकज्ञानकार्यमिति 'लोहितो वह्निः' इति ज्ञानासत्त्वेऽपि 'लोहितवह्निमान्' इति ज्ञानमापद्येत, तदपि ज्ञानं लौहित्यस्य विशिष्टबुद्ध्यात्मकमिति तत्र विशेषणज्ञानविधया लौहित्यज्ञानमपेक्षितमिति तत् पर्वते लौहित्याभावज्ञानार्थं प्रतियोगिज्ञानतयाऽपेक्षितं समस्त्येवेत्याह—**पर्वतो लौहित्याभाववान्' इति ज्ञानकाल** इति—पर्वते यदि लौहित्यं स्यात् तर्हि सामानाधिकरण्यसम्बन्धेन तदेव वह्नौ विशेषणीभूय भासेतेत्यौपाधिकस्य लौहित्यस्य तत्र सम्भवे लौहित्य-वह्नित्वोभयवत्त्वमपि तत्र स्यादित्युभयधर्मवत्पर्याप्तप्रकारता सम्भाव्येतापि, न चैवमित्यावेदनायेत्थमुपन्यासः, **'विशिष्टवैशिष्ट्यबुद्ध्यनापत्तिः'** इति स्थाने 'विशिष्टवैशिष्ट्यबुद्ध्यापत्तिः' इति पाठो युक्तः, उभयधर्मावच्छिन्नप्रकारताकबुद्धित्वलक्षणविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वे तु व्यधिकरणधर्मस्यापि प्रकारतावच्छेदकत्वस्य स्वीकृतत्वेन 'लोहितवह्निमान्' इति ज्ञानस्य लौहित्यवह्नित्वोभयपर्याप्तावच्छेदकताकप्रकारताकज्ञानत्ववत्तया कार्यतावच्छेदकधर्माक्रान्तत्वेन 'लोहितो वह्निः' इति ज्ञानलक्षणविशेषणतावच्छेदकप्रकारकनिर्णयरूपकारणाभावे नापत्तिसम्भव इत्याशयः। ननु 'लोहितवह्निमान्' इति ज्ञानस्य विशेषणतावच्छेदकप्रकारकनिश्चयकार्यत्वाभावेऽपि 'पर्वतो लौहित्याभाववान्' इति ज्ञानप्रतिबध्यतया न तज्ज्ञानरूपप्रतिबन्धककाले तदुत्पत्त्यापत्तिसम्भव इत्याह—**'पर्वतो न लोहितः' इति ज्ञानस्येति**। **'ज्ञान एव'** इत्येवकारेण 'लोहितवह्निमान्' इति ज्ञानस्य व्यवच्छेदः। ननु 'रक्तो दण्डः' इति ज्ञानं यथा रक्तत्वनिष्ठप्रकारतानिरूपकं तथा रक्तत्वावच्छिन्नविशेष्यतानिरूपकमपि, विशेष्यताया प्रकारावच्छिन्नत्वस्य स्वीकारेण दण्डत्वावच्छिन्नविशेष्यताया अपि रक्तत्वावच्छिन्नत्वात्, तथा च 'रक्तो दण्डः' इति ज्ञानं रक्तत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकानुभवरूपमिति तेन 'रक्तो रक्तः' इत्याकारकस्य रक्तत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकस्मरणस्यापत्तिः स्यादित्याशङ्क्य प्रतिक्षिपति—**न चेति**—अस्य 'वाच्यम्' इत्यनेनान्वयः। **तत्र** 'रक्तो रक्तः' इति स्मरणे। **तथा निर्णयस्य** रक्तत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकनिर्णयरूपानुभवस्य, कामं दण्डत्वावच्छिन्नविशेष्यता रक्तत्वरूपप्रकारावच्छिन्ना भवति, परन्तु दण्डत्वावच्छिन्नविशेष्यतात्वेन रक्तत्वनिष्ठप्रकारतात्वेनैव निरूप्यनिरूपकभावस्तत्रोपेयते, न तु रक्तत्वनिष्ठप्रकारतात्वेन रक्तत्वावच्छिन्नविशेष्यतात्वेन निरूप्यनिरूपकभाव इति रक्तत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकस्मरणं प्रति रक्तत्वनिष्ठप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितरक्तत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूप्यतावद्विशेष्यताकनिर्णयत्वेनैवोक्तनिर्णयरूपानुभवस्य कारणत्वमिति न 'रक्तो दण्डः' इत्यनुभवाद् 'रक्तो रक्तः' इति स्मरणस्यापत्तिरिति निषेधहेतुमुपदर्शयति—**रक्तत्वावच्छिन्नविशेष्यताया** इति—रक्तत्वरूपप्रकारावच्छिन्नत्वेन रक्तत्वावच्छिन्नविशेष्यतात्मिकाया दण्डत्वावच्छिन्नविशेष्यताया इत्यर्थः। तत्र 'रक्तो दण्डः' इति

कतया तादृशस्मरणापत्त्यसम्भवात्, 'दण्डो रक्तो नवा ?' इति संशयानुव्यवसायस्तु न रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाही 'रक्तदण्डेन सन्देह्मि' इत्यप्रत्ययात्, किन्तु रक्तत्व-तदभावप्रकारकत्व दण्डविशेष्यकत्वावगाही, 'रक्तत्वेन तदभावेन च दण्डं सन्देह्मि' इति प्रत्ययादिति न तत्र व्यभिचार इति केचित्, तच्चिन्त्यम्, समुच्चयानुव्यवसायवत् तत्तद्विशेषणद्वयनिरूपितवैशिष्ट्यविषयताशालित्वस्यैव वक्तुं शक्यत्वात्, 'रक्तदण्डेन सन्देह्मि' इत्यनभिलापस्य च 'दण्डिनं न जानामि' इत्यनभिलापवदेवोपपत्तेर्ज्ञानत्वेन सन्देहानुव्यवसाये चोक्तप्रकाराभावात्, विशेषणोपर्युल्लेख्यमानस्य विशेषणतावच्छेदकस्य विशेष्यनिष्ठ-

---

ज्ञाने । **तस्या** दण्डत्वावच्छिन्नविशेष्यतास्वरूपाया रक्तत्वावच्छिन्नविशेष्यतायाः । **तादृशप्रकारतेति**– रक्तत्वनिष्ठप्रकारतेत्यर्थः । **तेन रूपेण** रक्तत्वावच्छिन्नविशेष्यतात्वेन रूपेण । **तादृशस्मरणेति**– 'रक्तो रक्तः' इति स्मरणेत्यर्थः, तथा च तेन रूपेण रक्तत्वप्रकारतानिरूपित' इत्यस्य रक्तत्वनिष्ठप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितरक्तत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूप्यतावदित्यर्थः । **तादृशस्मरणेति**– 'रक्तो रक्त.' इत्याकारकस्मरणेत्यर्थः । ननु 'दण्डो रक्तो नवा' इति संशयानन्तर तत्संशयानुव्यवसाश्च रक्तत्वविशिष्टदण्डस्य संशये विषयितारूपवैशिष्ट्यावगाहीति विशिष्टवैशिष्ट्यबुद्धित्वरूपकार्यतावच्छेदकधर्माक्रान्तस्य तस्य रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकनिर्णयात्मकविशेषणतावच्छेदकनिर्णयं विनैव भावेन व्यभिचारेण निरुक्तवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयस्य कारणत्व न संभवतीत्यत आह– **'दण्डो रक्तो नवा' इति संशयानुव्यवसायस्त्वति**– 'रक्तदण्डेन' इति तृतीयान्तार्थस्य रक्तदण्डवैशिष्ट्यस्य सन्देहविशेषणतयोक्तानुव्यवसाये भाने तस्य रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहित्व स्यात्, न चैवम्, किन्तु 'रक्तत्वेन तदभावेन च दण्ड सन्देह्मि' इत्युल्लेखशेखर एव 'दण्डो रक्तो नवा' इति संशयानुव्यवसायः, तत्र 'रक्तत्वेन तदभावेन च' इत्युभयत्र तृतीयार्थः प्रकारत्वम्, 'दण्डम्' इति द्वितीयार्थश्च विशेष्यत्वम्, तृतीयार्थप्रकारताद्वयस्य द्वितीयार्थस्य विशेष्यत्वस्य च निरूपकतया धात्वर्थसन्देह एव विशेषणत्वम्, तथा च नथोल्लिख्यमानोऽनुव्यवसायो 'रक्तत्वनिष्ठप्रकारताकरक्तत्वाभावनिष्ठप्रकारताक- दण्डनिष्ठविशेष्यताकसंशयवान्' इत्येवंस्वरूप एव पर्यवसित इति तस्य रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहित्वाभावाद्रक्तत्वप्रकारकनिश्चय विना भावेऽपि न व्यभिचार इति केचित् प्रतिपन्ना इत्यर्थः । 'पर्वतो वह्निमान् धूमवाँश्च' इति समूहालम्बनस्य 'पर्वतं वह्निना धूमेन च जानामि' इत्यनुव्यवसायस्य यथा वह्निधूमात्मकविशेषणद्वयनिरूपितवैशिष्ट्यविषयताशालित्व तथा 'दण्डो रक्तो नवा' इति संशयानुव्यवसायस्यापि रक्तत्व तदभावात्मकविशेषणद्वयनिरूपितवैशिष्ट्यविषयताशालित्वस्य वक्तु शक्यत्वेन रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहित्वस्य सम्भावनापथावतीर्णत्वतो 'दण्डो रक्तो नवा' इति संशयानुव्यवसायो 'रक्तदण्डेन सन्देह्मि' इत्येवं नाभिलप्यत इत्येतावता न 'स रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाही' इत्येवमभिधान न युक्तमिति चिन्तावीजोपदर्शनपूर्वकमृजुमार्गसमाश्रितानां विदुषां प्रकारान्तराश्रयणेन संशयानुव्यवसायस्य विशिष्टवैशिष्ट्यावगाहित्वरूपविशेषणतावच्छेदकधर्मप्रकारकनिश्चयजन्यतावच्छेदकधर्मानाक्रान्तत्वतो व्यभिचारवारणमुपदर्शयति– **समुच्चयानुव्यवसायवदिति** । ननु रक्तत्वविशिष्टदण्डस्य विषयत्वात्मकवैशिष्ट्य संशयगतं यदि संशयानुव्यवसायोऽवगाहेत तदा 'रक्तदण्डेन सन्देह्मि' इत्येवं तदभिलापोऽपि भवेत्, न च तथा तदभिलप्य इति न स रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यं संशयेऽवगाहत इत्यत आह– **रक्तदण्डेनेति** । ज्ञाने यस्य विषयतात्मकवैशिष्ट्यं तदनुव्यवसायस्याभिलापस्तद्वाचकपदोत्तरवैशिष्ट्यार्थकतृतीयाविभक्तिमुपादाय भवत्येवेति नास्ति नियमस्तथा सति दण्डात्मकविषयस्य विषयतात्मकवैशिष्ट्यं संशयादिज्ञाने समस्तीति तस्य तथाऽनुव्यवसायोऽपि 'दण्डेन जानामि' इत्येवमभिलप्येत, न चैवमभिलप्यते इति यथा तस्य न तथाऽभिलापस्तथैव प्रकृतेऽप्युक्तनियमाभावादुपपद्यत इत्याह– **दण्डेनेति**– 'दण्डिनं न जानामि' इत्यस्य स्थाने 'दण्डेन जानामि' इति पाठो युक्तः । यथा च संशये संशयत्वं समस्ति तथा ज्ञानत्वमपि समस्ति, तथा च संशयत्वस्यैकधर्मिकविरुद्धोभयप्रकारकज्ञानत्वरूपत्वात् तद्रूपेण तदनुव्यवसायस्य रक्तत्व तदभावप्रकारत्वदण्डविशेष्यकत्वावगाहित्वेऽपि ज्ञानत्वेन तदनुव्यवसायस्य न तथात्वमिति ज्ञानत्वेन तदनुव्यवसाये रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिनि व्यभिचारणस्य वारणं नोक्तप्रकारेण सम्भवतीत्याह– **ज्ञानत्वेनेति** । ननु 'रक्तत्वेन दण्ड सदेह्मि' इति संशयानुव्यवसाये संदेहे विशेषणीभूते दण्डे विशेषणतया विशेषणतावच्छेदकस्य रक्तत्वस्य संशयात्मकविशेष्यनिष्ठो यो निरूपकतया प्रकारत्वसम्बन्धस्तदवगाहित्वमेव, न तु रक्तत्वविशिष्टदण्डस्य संशयगतवैशिष्ट्यावगाहित्वमिति संशयानुव्यवसाये विशिष्टवैशिष्ट्यावगाहित्वाभावात् तत्र विशेषणतावच्छेदकधर्मप्रकारकनिश्चयजन्यत्वाभावेऽपि न व्यभिचार इत्यत

सम्बन्धावगाहिताया एवोक्तज्ञाने समर्थने चान्यत्राप्यतिप्रसङ्गात्, तस्माद् 'विशेष्ये विशेषणम्' इति रीत्यैव संशयानुव्यवसाय इति न व्यभिचार इति बहवः । न च 'सन्देह्मि' इत्यनुव्यवसायस्य 'विशेष्ये विशेषणम्' इति रीत्याऽभ्युपगमे 'रक्तदण्डो द्रव्यम्' इति व्यवसायानन्तरमपि 'रक्तदण्डं जानामि' इत्यनुव्यवसायप्रसङ्ग इति वाच्यम्, रक्तविशिष्टदण्डप्रकारतानिरूपितविषयित्वसांसर्गिकविषयतानिरूपितविशेष्यतासम्बन्धेनानुव्यवसायं प्रति रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकत्वेन व्यवसायहेतुताया आवश्यकत्वात्, अन्यथा 'रक्तो दण्डः' इति प्रत्यक्षानन्तरं 'रक्तवान् दण्डश्च' इति समूहालम्बनस्मरणादिस्थले 'रक्तदण्डं स्मरामि' इत्यनुव्यवसायापत्तेः, न च 'दण्डो रक्तः' इति ज्ञानोपरमेऽपि 'रक्तदण्डं

---

आह– **विशेषणोपर्युल्लिख्यमानस्येति**– विशेषणविशेषणतयोल्लिख्यमानस्येत्यर्थः । **उक्तज्ञाने** संशयानुव्यवसाये । **अन्यत्रापि** निश्चयात्मकव्यवसायानुव्यवसायेऽपि । **अतिप्रसङ्गात्** विशेषणतावच्छेदकस्य विशेष्यनिष्ठसम्बन्धावगाहिताया: प्रसङ्गात्, तथा चानुव्यवसायमात्रस्य विशिष्टवैशिष्ट्यावगाहित्वमुच्छिद्येतेत्यर्थः । संशयानुव्यवसायः संशये विषयतया दण्डं तत्र च रक्तत्वं तदभावं चावगाहत इति 'विशेष्ये विशेषणं तत्र च विशेषणम्' इति रीत्यैव जायत इति विशिष्टवैशिष्ट्यावगाहिबोधत्वलक्षणविशेषणतावच्छेदकधर्मप्रकारकनिश्चयकार्यतावच्छेदकधर्मानाक्रान्तत्वान्न तत्र व्यभिचार इत्युपसंहरति— **तस्मादिति** । ननु संदेहानुव्यवसायस्य 'विशेष्ये विशेषणम्' इति रीत्याऽभ्युपगमेऽनुव्यवसायो विशिष्टवैशिष्ट्यावगाह्येव भवतीति नियमो नाभ्युपेयत एव, एवं च रक्तत्वं दण्डविशेषणतयैवावगाहमानो रक्तत्वावच्छिन्ने वा प्रकारतया दण्डावगाही वा 'रक्तो दण्डो द्रव्यम्' इति यो व्यवसायस्तदनन्तरमपि ज्ञाने विषयितया दण्डं तत्र च रक्तत्वमवगाहमानस्य 'रक्तदण्डं जानामि' इत्यनुव्यवसायस्य प्रसङ्गः, तस्य विशिष्टवैशिष्ट्यानवगाहित्वेन रक्तत्वप्रकारकदण्डविशेष्यकनिश्चयमन्तराऽप्युत्पत्तिसम्भवादित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वयः । 'रक्तदण्डेति' इत्यस्य स्थाने 'रक्तो दण्डो द्रव्यम्' इतीति पाठो युक्तः, अयं च व्यवसायः समूहालम्बनात्मको बोध्यः, 'दण्डो रक्तो द्रव्यम्' इत्येवमुल्लेखेऽपि समूहालम्बनात्मकत्वं सम्भवति, परं तथोल्लेखे दण्डविशेष्यकरक्तत्वप्रकारकत्वमप्यस्य बुद्धावारोहेत्, तदव्युदासार्थं 'रक्तो दण्डः' इत्येवमुल्लेखः, एवं च 'उद्देश्यवचनं पूर्वं विधेयवचनं ततः,' इति वचनाद् यदि प्रकारविशेष्यभावेनाप्यवगाहनं तत्र भवेत् तदाऽपि रक्तस्यैव विशेष्यत्वं दण्डस्य प्रकारत्वं न तु दण्डे रक्तत्वस्य प्रकारत्वमिति, 'विशेष्ये विशेषणम्' इति रीत्याऽनुव्यवसायस्य तु विशिष्टबुद्धित्वेन तत्र विशेषणज्ञानविधया कारणं 'रक्तो दण्डो द्रव्यम्' इति ज्ञानं समस्त्येवेति तथाऽनुव्यवसायस्य कारणसम्पत्तिः । निषेधे हेतुमाह– **रक्तविशिष्टेति**– रक्तत्वविशिष्टेत्यर्थः, तथा च रक्तत्वविशिष्टदण्डनिष्ठप्रकारतानिरूपितविषयित्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यतासम्बन्धेनानुव्यवसायं प्रति रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकत्वेन रूपेण व्यवसायस्य तादात्म्यसम्बन्धेन कारणत्वम्, 'विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयस्य कारणत्वम्' इति सामान्यकार्यकारणभावे सति प्रत्यक्षविशेषं प्रति विषयविशेषस्य कारणत्वस्यावश्यकत्वेनोक्तसम्बन्धेन 'रक्तदण्डं जानामि' इत्यनुव्यवसायस्य रक्तत्वप्रकारकदण्डविशेष्यकव्यवसाय एव सत्त्वेन तत्र कारणीभूतस्य रक्तत्वप्रकारकदण्डविशेष्यकव्यवसायस्य तदानीमभावेन 'रक्तो दण्डो द्रव्यम्' इति व्यवसायानन्तरं 'रक्तदण्डं जानामि' इत्यनुव्यवसायस्यापत्त्यसम्भवादित्यर्थः । **अन्यथा** उक्तरीत्याऽनुव्यवसायं प्रति व्यवसायस्य विशिष्यकार्यकारणभावस्यानुपगमे । **'रक्तो दण्डः' इति प्रत्यक्षानन्तरं** रक्तत्वावच्छिन्नविशेष्यताकदण्डत्वनिष्ठप्रकारताकप्रत्यक्षानन्तरम्, निरुक्तप्रत्यक्षस्योद्बोधकविधया 'रक्तवान् दण्डश्च' इति समूहालम्बनस्मरणे प्रयोजकत्वम्, 'रक्तवान् दण्डश्च' इति समूहालम्बनस्मरणलक्षणव्यवसायस्य रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकत्वरूपकारणतावच्छेदकधर्मानाक्रान्तत्वादुक्तविशिष्यकार्यकारणभावाभ्युपगमे कारणाभावान्न 'रक्तदण्डं स्मरामि' इत्यनुव्यवसायापत्तिरिति भावः । ननु प्रथमक्षणे 'इदं मदिष्टसाधनं मत्कृतिसाध्यं च' इति ज्ञानम्, ततो द्वितीयक्षणे चिकीर्षा, ततस्तृतीयक्षणे कृतिः ततश्चतुर्थक्षणे कृतिसाक्षात्कार इति वस्तुस्थितौ 'रक्तदण्डं करोमि' इत्यनुव्यवसायस्य रक्तत्वविशिष्टदण्डनिष्ठप्रकारतानिरूपितविषयित्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यतासम्बन्धेन रक्तदण्डविषयककृतावुत्पद्यमानत्वेन तत्र रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकव्यवसायस्तादात्म्येन नास्ति, तथाव्यवसायस्य 'दण्डो रक्त' इत्येवंरूपस्य 'रक्तदण्डो मदिष्टसाधनम्' इत्येवंरूपस्य वा पूर्वमेव विनष्टत्वात्, यदि च कारणतावच्छेदककोटौ ज्ञानत्वं न निवेश्यत इति रक्तत्वप्रकारकदण्डत्वावच्छिन्नविशेष्यककृतिरपि निरुक्तकारणतावच्छेदकधर्माक्रान्तत्वात् कारणमिति न तत्र व्यभिचार इति

करोमि' इत्याकारककृतिसाक्षात्कारोत्पत्त्या व्यभिचारः, हेतुतावच्छेदके ज्ञानत्वानिवेशे च 'रक्तदण्डः' इत्यनुद्बुद्धसंस्काराद् रक्तत्वनिर्विकल्पकदशायां विशिष्टवैशिष्ट्यबोधापत्तिः, उद्बोधकानां संस्कारजविशिष्ट-वैशिष्ट्यबोधहेतुत्वेऽपि तदभावे सामान्यसामग्र्या फलजनने बाधकाभावादिति वाच्यम्, कृतिसाक्षात्कार-पूर्वं नियमतो 'दण्डो रक्तः' इति स्मरणानभ्युपगमात्, वस्तुतः संस्कारव्यावृत्तज्ञानेच्छाकृतिवृत्तिजाति-विशेषं कल्पयित्वा विशेषणतावच्छेदकप्रकारकविजातीयगुणत्वेनैव हेतुत्वं स्वीक्रियते, अनन्तस्मृतिव्यक्ति-तद्धेतुकल्पनापेक्षया तादृशजातिकल्पनाया एवोचितत्वात्, न च कृतिसाक्षात्कारपूर्वं विषयस्मृतिकल्पन-मावश्यकमन्यथोपनायकज्ञानविरहेण विषयभानासम्भवेन कृतिसाक्षात्कारानुदयप्रसङ्गादिति वाच्यम्, ज्ञानलक्षणप्रत्यासत्तीतरमपीच्छाकृतिसाधारणतद्विषयकविजातीयगुणत्वेनैव हेतुत्वोपगमात्, अवश्यं च गुणमानसजनकतावच्छेदकतया संस्कारादिव्यावृत्तजातिविशेषकल्पनम्, अन्यथा संस्कारादीनां मानस-

---

विभाव्यते तदा रक्तदण्डविषयकानुद्बुद्धसंस्कारतो रक्तत्वस्य निर्विकल्पकोत्पत्त्यनन्तरकाल एव रक्तदण्डं जानामि' इत्यनुव्यव-सायापत्तिः, तत्र संस्कारे निरुक्तानुव्यवसायोऽप्युक्तसम्बन्धेन वर्तते कारणतावच्छेदकधर्माक्रान्त उक्तसंस्कारोऽपि, यदि च संस्कारजवैशिष्ट्यबोधे स्वातन्त्र्येणोद्बोधकानामपि कारणत्वमिति तदभावादेव न सस्कारजविशिष्टवैशिष्ट्यबोधापत्तिः, एवमपि विशिष्ट-वैशिष्ट्यबुद्धित्वलक्षणसामान्यधर्मावच्छिन्नस्य कारणसद्भावात् तदापत्तिः स्यादेवेत्याशङ्क्य प्रतिक्षिपति—**न चेति**—अस्य 'वाच्यम्' इत्यनेनान्वयः। '**रक्तत्वनिर्विकल्पकदशायाम्**' इत्यस्य 'रक्तत्वनिर्विकल्पकोत्पत्तिद्वितीयक्षणे' इत्यर्थः, 'निर्विकल्पकोत्पत्तिक्षणे' इत्यर्थस्तु यदि विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य यत् कारणत्वं तत्रापि ज्ञानत्वमनिवेश्य विशेषणविषयकत्वेनैव कारणत्वमा-स्थीयते तदा सम्भवति, अन्यथाऽनुव्यवसायस्य विशिष्टबुद्धित्वस्यापि सम्भवात् तत्र कारणीभूतस्य रक्तत्वलक्षणविशेषण-ज्ञानस्योक्तनिर्विकल्पकात् पूर्वमभावेन न तदानीमापत्तिसम्भव इति बोध्यम्। **तदभावे** उद्बोधकाभावे। **सामान्यसमग्र्या** विशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नसामान्योत्पादकसामग्र्या, अत्रेदं बोध्यम्—सशयानुव्यवसायस्य 'विशेष्ये विशेषणम्' इति रीत्या जायमानत्वेऽपि कृत्याद्यनुव्यवसायस्य विशिष्टवैशिष्ट्यावगाहित्वेन तत्र विशेणतावच्छेदकप्रकारकज्ञानस्य कारणत्वेन तत्रैव व्यभि-चाराशङ्कनमिदम्, तत्र कार्यतावच्छेदकः कारणतावच्छदेकश्च सम्बन्धः समवाय एव, तत एव च कारणतावच्छेदककोटौ ज्ञानत्वानिवेशेऽनुद्बुद्धसंस्काराद् विशिष्टवैशिष्ट्यबोधापादनं सङ्गतिमङ्गति, अन्तरा व्यवसायहेतुत्वाभिधानं तु अनुव्यवसायं प्रत्येवेति। विशिष्टवैशिष्ट्यबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य यत् कारणत्व तत्र कारणतावच्छेदककोटौ ज्ञानत्वं निवेश्यत एव, तेन नानुद्बुद्धसंस्काराद् विशिष्टवैशिष्ट्यबोधापत्तिः, 'रक्तदण्डं करोमि' इति कृतिसाक्षात्कारात् पूर्वं नियमतो 'दण्डो रक्तः' इति स्मरणमुपेयते, तद्रूपविशेषणतावच्छेदकप्रकारकज्ञानत एव विशिष्टवैशिष्ट्यबोधात्मा कृतिसाक्षा-त्कार इति न तत्र व्यभिचारोऽपीति निषेधहेतुमुपदर्शयति—**कृतिसाक्षात्कारपूर्वमिति**। '**स्मरणानभ्युपगमाद्**' इति स्थाने 'स्मरणाभ्युपगमाद्' इति पाठो युक्तः। लाघवादाह—**वस्तुत** इति। **हेतुत्वं** विशिष्टवैशिष्ट्यावगाहिबुद्धित्वाव-च्छिन्नं प्रति कारणत्वम्, विशेषणतावच्छेदकप्रकारकविजातीयगुणो रक्तत्वप्रकारकदण्डविशेष्यककृतिरपि भवति, ततो 'रक्त-दण्डं करोमि' इत्याकारकस्य रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिनोऽनुव्यवसायस्य सम्भवान्न तत्र व्यभिचार इत्याशयः। कृतिसाक्षाकारात् पूर्वं नियमतो विशेषणतावच्छेदकस्मरणस्य कल्पने यदा यदा कृतिसाक्षात्कारात्मकविशिष्टवैशिष्ट्यबुद्धि-र्भवति तदा तदा तत्स्मरणं कल्पनीयमिति गौरवमतः संस्कारव्यावृत्तस्य ज्ञानेच्छाकृतिवर्तिनो जातिविशेषस्य निरुक्तकारण-तावच्छेदकतया कल्पनमेवोचितमित्याह—**अनन्तेति**। **तद्धेत्विति**—अनन्तस्मृतिहेत्वित्यर्थः। **तादृशजातीति**—ज्ञाने-च्छाकृतिवृत्तिजातीत्यर्थ.। ननु मनोजन्यप्रत्यक्षं ज्ञानादिषु तदाश्रयीभूतात्मनि च लौकिकमिति तत्र लौकिकसन्निकर्षस्या-धिपत्येऽपि ज्ञानादिविषयीभूतस्य वाह्यपदार्थस्य यत् तत्र भानं तत्र न मनसो लौकिकसन्निकर्षः किन्तु ज्ञानलक्षणालौकिक-सन्निकर्ष इति तद्बलादेव मानसे ज्ञानादिविशेषणतया वाह्यो भासत इति यदि कृतिसाक्षात्कारपूर्वं नियमतो निरुक्तस्मरणं न कल्प्येत तदा कृत्यंशे रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाह्यनुव्यवसाय एव न स्यादिति ज्ञानलक्षणप्रत्यासत्तिसम्पत्तये स्मरण-कल्पनमावश्यकमित्याशङ्क्य प्रतिक्षिपति—**न चेति**—अस्य 'वाच्यम्' इत्यनेन सम्बन्धः। **अन्यथा** कृतिसाक्षात्कारपूर्वं विषय-स्मृतेरकल्पने। **उपनायकज्ञानविरहेण** कृतौ विशेषणतया विषयभानप्रयोजकस्य ज्ञानलक्षणालौकिकसन्निकर्षस्याभावेन। **कृतिसाक्षात्कारानुदयप्रसङ्गात्** स्वविषयविशिष्टकृतिसाक्षात्कारलक्षणकृत्यनुव्यवसायानुत्पत्तिप्रसङ्गात्। तद्विषयकालौकिक-प्रत्यक्षं प्रति ज्ञानलक्षणप्रत्यासत्तेस्तद्विषयकविजातीयगुणत्वेन हेतुत्वमिति कृतिसाक्षात्कारे कृत्यंशे विशेषणतया विषयस्य भानं तद्विषयककृतिरूपप्रत्यासत्तित एवेति निषेधहेतुमुपदर्शयति—**ज्ञानलक्षणेति**—'ज्ञानलक्षणप्रत्यासत्तीतरमपीच्छाकृतिसाधारण'

तापत्तेरिति विशिष्टवैशिष्ट्यानुभवत्वमेव च जन्यतावच्छेदकमास्थीयते, स्मरणे च तादृशविषयतानियामकः, इति बहवः ।

केचित् तु—" अनुभवत्वजातौ मानाभावेन ज्ञानत्वस्यापि नित्यसाधारणतया जन्यतानवच्छेदकत्वाजन्यप्रत्यक्षवृत्तिजातिविशेष एव विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकः, अनुमित्यादौ च परामर्शादिरेव तादृशविषयतानियामकः, एवं शाब्दबोधेऽवान्तरवाक्यार्थबोध एव तथा । अथ विजा-

इति स्थाने 'ज्ञानलक्षणप्रत्यासत्तेरपि ज्ञानेच्छाकृतिसाधारण' इति पाठो युक्तः । ज्ञानेच्छाकृतिसुख-दुःखद्वेषाणां मानसप्रत्यक्षं भवति धर्मा-ऽधर्मभावनानां तन्न भवत्यात्मविशेषगुणत्वाविशेषेऽपीत्यतो ज्ञानेच्छादिषु षट्सु विषयविधया मानसकारणेषु जातिविशेषस्तत्कारणतावच्छेदक·, तदभावान्न धर्मादीनां त्रयाणां मानसमित्यात्मविशेषगुणमानसजनकतावच्छेदकतया सिद्धो निरुक्तजातिविशेषो नाप्रामाणिक इति तस्य विशिष्टवैशिष्ट्यबुद्धिजनकतावच्छेदककोटौ ज्ञानलक्षणप्रत्यासत्तिनिष्ठकारणतावच्छेदककोटौ प्रवेशो न कल्पनागौरवप्रसङ्गावह इत्याह— **अवश्यं** चेति । **अन्यथा** आत्मविशेषगुणमानसजनकतावच्छेदकतया संस्कारादिव्यावृत्तजातिविशेषाकल्पने । उक्तदिशा विशेषणतावच्छेदकप्रकारकविजातीयगुणत्वस्य कारणतावच्छेदकत्वव्यवस्थितौ तदवच्छिन्नकारणतानिरूपितकार्यतावच्छेदककोटावनुभवत्वमेव निवेशनीयम्, स्मृत्यनुभवयोस्तु समानप्रकारताप्रत्यासत्त्या कार्यकारणभाव इति विशिष्टवैशिष्ट्यावगाह्यनुभवजन्ये विशिष्टवैशिष्ट्यावगाहिस्मरणे विशिष्टवैशिष्ट्यविषयता तादृशानुभवविषयताप्रयुक्ता एवेति बहूनां विदुषां मतमुपदर्शयति— **विशिष्टवैशिष्ट्यानुभवत्वमेवेति** । **जन्यतावच्छेदकं** विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकम् । स्मरणस्योक्तजन्यतावच्छेदकधर्मानाक्रान्तत्वेन तत्र विशिष्टवैशिष्ट्यविषयतानियामकं न विशेषणतावच्छेदकमतस्तस्य नियामक वाच्यमित्यपेक्षायामाह— **स्मरणे चेति**— अत्र 'स्मरणे च तादृशविषयतानियामक.' इति स्थाने 'स्मरणे च तादृशानुभव एव तादृशविषयतानियामकः' इति पाठो युक्त. । **तादृशानुभवः** विशिष्टवैशिष्ट्यावगाह्यनुभवः । **तादृशविषयतेति**— विशिष्टवैशिष्ट्यविषयतेत्यर्थ. । 'अनुभवामि' इत्यनुव्यवसायः प्रत्यक्षात्मकज्ञानस्यैव, अनुमित्यादीनामनुव्यवसायस्तु सामान्यतो 'जानामि' इत्याकारक., विशेषतस्तु 'अनुमिनोमि' इत्याकारक एवेत्यनुभवत्वजातौ मानाभावान्न तस्य कार्यतावच्छेदककोटिसन्निविष्टत्वम्, ज्ञानत्वं तु नित्यानित्यसाधारणतया न जन्यतावच्छेदक किन्तु जन्यप्रत्यक्षवृत्तिजातिविशेष एव तत्कार्यतावच्छेदककोटिनिविष्ट इति केषाञ्चिन्मतमुपदर्शयति— **केचित्** त्विति । **जन्यप्रत्यक्षवृत्तिजातिविशेष एवेति**— प्रत्यक्षत्वसामान्यस्यापि नित्येश्वरप्रत्यक्षसाधारण्येन जन्यतानवच्छेदकत्वाद् विशिष्टवैशिष्ट्यावगाहित्वे सति जन्यप्रत्यक्षमात्रवृत्तिजातिविशेषस्येन्द्रियसन्निकर्षजन्यतावच्छेदकतया सिद्धस्य विशेणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेकत्वमिति । नन्वेवं विशेषणतावच्छेदकप्रकारकनिर्णयाजन्यप्रत्यक्षविशेषे विशिष्टवैशिष्ट्यविषयत्वस्य सम्भवेऽप्यनुमित्यादौ नियामकाभावाद् विशिष्टवैशिष्ट्यविषयत्व न स्यादित्यत आह— **अनुमित्यादाविति** । **तादृशविषयतानियामकः** विशिष्टवैशिष्ट्यविषयतानियामकः । **तथा** विशिष्टवैशिष्ट्यविषयतानियामक· । ननु यद्यनुमितौ विशिष्टवैशिष्ट्यविषयत्वे परामर्श एव नियामको न तु विशेषणतावच्छेदकप्रकारकनिर्णयस्तज्जन्यतावच्छेदकस्य विजातीयप्रत्यक्षत्वस्यानुमिताव·भावात्, तथा सति 'पृथिवी इतरेभ्यो भिद्यते' इत्यत्र 'इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवी' इत्याकारकव्यतिरेकपरामर्शात् 'पृथिवीतरभिन्ना' इत्यनुमितिः पृथिवीतरभेदत्वाविशिष्टवैशिष्ट्यावगाहिनी पृथिवीतरभेदत्वरूपविशेषणतावच्छेदकप्रकारकनिर्णयशून्यकालेऽपि स्यात्, यदि चान्वयसहचारेणेव व्यतिरेकसहचारेणाप्यन्वयव्याप्तिग्रहणे सत्येव 'पृथिवी पृथिवीतरभिन्ना' इत्यनुमितिरिति न व्यतिरेकपरामर्शादुक्तानुमितिः, अन्वयपरामर्शसत्त्वे तु इतरभेदत्वप्रकारकज्ञानमवश्यं समस्तीति नोक्तविशेषणतावच्छेदकप्रकारकज्ञानाभावकाल उक्तानुमित्यापत्ति. सम्भवतीति विभाव्यते, तदा यत्र व्यतिरेकपरामर्शो विद्यते स्वातन्त्र्येणेतरभेदत्वप्रकारकज्ञान च समस्ति तत्र पृथिवीतरभेदानुमित्युत्पत्तिरनुभूयते, साऽपि न स्यादन्वयव्याप्तिज्ञानाभावात्, इतरभेदलक्षणसाध्यविशेष्यकपृथिवीरूपपक्षप्रकारिकैव 'पृथिव्यामितरभेदः' इत्याकारकानुमितिस्तदानीमुत्पद्यत इति च वक्तुमशक्यम्, साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेर्विरोधित्वेन स्वातन्त्र्येणेतरभेदत्वप्रकारकज्ञानस्य साध्यप्रसिद्धिरूपतया तद्रूपप्रतिबन्धकसत्त्वे तादृशानुमित्युत्पादासम्भवात्, व्यतिरेकपरामर्शतो 'विशेष्ये विशेषणम्' इति रीत्या 'पृथिवी पृथिवीतरभिन्ना' इति रीत्याऽनुमितिर्जायत एवेत्यपि न वाच्यम्, तथा सति साध्यज्ञान नास्ति साध्यप्रसिद्धिरूप-

**तीयप्रत्यक्षत्वस्य तज्जन्यतावच्छेदकत्वे 'इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवी' इत्याकारकपरामर्शाद् इतरभेदत्वप्रकारकज्ञानदशायामिव तच्छून्यदशायामपि 'पृथिवी इतरभेदवती' इत्याकारकविशिष्टवैशिष्ट्यविषयताशालिन्या अनुमितेरापत्तिः, सादृशानुमितावन्वयव्याप्तिज्ञानस्यैव हेतुत्वाज्ञापत्तिरित्युक्तौ च स्वातन्त्र्येणेतरभेदत्वप्रकारकज्ञानस्य सत्त्वे सादृशानुमित्यनुदयापत्तिः, न च पृथिव्यामितरभेदविशेष्यकानुमितेरेव स्वीकारान्नेयमापत्तिः, साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेर्विरोधितया तत्र**

प्रवन्धकाभावाद् व्यतिरेकपरामर्शतः साध्यविशेष्यिका 'पृथिव्यामितरभेदः' इत्याकारिका 'पृथिवी पृथिवीतरभिन्ना' इत्याकारिका च साध्यप्रकारिका 'विशेष्ये विशेषणम्' इति रीत्याऽनुमितिः स्यात्, साध्यरूपविशेषणज्ञानमपि विशिष्टबुद्धिकारणं यद्यपेक्षितं तदपि प्रमेयत्वेनेतरभेदज्ञानकाले समस्त्येव, साध्यतावच्छेदकप्रकारकसिद्धेरेव साध्यप्रसिद्धिविधया साध्यविशेष्यकानुमितिविरोधितया तस्याः प्रमेयत्वेन रूपेण साध्यज्ञानकालेऽभावात्, यदि च साध्यज्ञानमेव साध्यसिद्धिरिति प्रमेयत्वेन तज्ज्ञानमपि साध्यसिद्धिर्भवत्येव, तर्हि इतरभेदत्वलक्षणसाध्यतावच्छेदकप्रकारकं यद् भेदान्तरविशेष्यकज्ञानं तन्न साध्यसिद्धिरिति तत्काले साध्यविशेष्यकानुमितिरिष्टैव स्यात् तदर्थं प्रतिवन्धककोटौ विशिष्य साध्यविशेष्यकत्वं निवेशनीयं भवेदिति गौरवं स्यात्, अत इतरभेदत्वप्रकारकज्ञानकाले व्यतिरेकपरामर्शादपि विशिष्टवैशिष्ट्यावगाह्यनुमितिरेव भवति न तु 'विशेष्ये विशेषणम्' इति रीत्या, एवं च तस्या विशेषणतावच्छेदकप्रकारकज्ञानशून्यकाले आपत्तिवारणाय विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकमनुमितिसाधारणमेव स्वीकरणीयमिति शङ्कते- **अथेति**। **विजातीयप्रत्यक्षत्वस्य** जन्यप्रत्यक्षमात्रवृत्तिजातिविशेषस्य। **तज्जन्यतावच्छेदकत्वे** विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकत्वे। **इतरव्यापकीभूतेति**- पृथिवीतरव्यापकीभूतेत्यर्थः। व्याप्यतावच्छेदकसम्बन्धश्च तादात्म्यम्। **तच्छून्यदशायामपि** इतरभेदत्वप्रकारकज्ञानशून्यदशायामपि, अनुमितौ विशिष्टवैशिष्ट्यावगाहिन्यामपि विशेषणतावच्छेदकप्रकारकनिर्णयस्याकारणत्वेन तत्सत्ताया अनावश्यकत्वात्। **तादृशानुमितौ** 'पृथिवी पृथिवीतरभेदवती' इत्याकारकानुमितौ। '**अन्वयव्याप्तिज्ञानस्यैव**, इत्येवकारेण व्यतिरेकव्याप्तिज्ञानस्य व्यतिरेकव्याप्तिविशिष्टहेतुमत्तापरामर्शस्य च तादृशानुमितौ कारणत्वस्य व्यवच्छेदः।' **स्वातन्त्र्येणेति**- यत्र 'पृथिवीतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवी' इत्याकारकव्यतिरेकपरामर्शः, परामर्शासन्निविष्टतयैव पृथिवीतरभेदत्वप्रकारकज्ञानं च तत्र 'पृथिवी पृथिवीतरभिन्ना' इत्याकारकानुमितिरुत्पद्यमानाऽनुभूयते, सा न स्यात् तां प्रति तदानी विद्यमानस्य व्यतिरेकपरामर्शस्याकारणत्वात्, तत्कारणतयाऽभिमतस्यान्वयव्याप्तिज्ञानस्य तदानीमभावादित्यर्थः। '**सादृश**' इति स्थाने 'तादृश' इति पाठो युक्त.। तदानीं 'पृथिव्यामितरभेदः' इत्याकारिका आधेयतासम्बन्धेन पृथिवीप्रकारकपृथिवीतरभेदविशेष्यकैवानुमितिरेवोदयते इत्याशङ्क्य प्रतिक्षिपति- **न चेति**। **नेयमापत्तिरिति**- तदानीं पृथिवीविशेष्यकपृथिवीतरभेदप्रकारकानुमितेरनुपगमान्न तदनुत्पत्त्यापादनम्, इष्टापत्तिरूपतया न दोषावहमित्यर्थः। साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेर्विरोधित्वेन स्वातन्त्र्येणेतरभेदत्वप्रकारकज्ञानस्य विरोधिनः सत्त्वे तदानीं साध्यविशेष्यकानुमित्युत्पादस्यासम्भवेन साध्यप्रकारकानुमित्युत्पादस्यैव स्वीकर्तुमुचितत्वेन तदनुमित्यनुत्पादापादनस्यानिष्टतयेष्टापादनत्वेन तत्परिहरणं कर्तुमशक्यमिति निषेधहेतुमुपदर्शयति- **साध्यविशेष्यकानुमिताविति**। **तत्र** इतरभेदत्वप्रकारकज्ञानकाले। **तादृशानुमित्युत्पादासम्भवात्** पृथिव्यामितरभेदविशेष्यकानुमित्युत्पादस्यासम्भवात्। तदानी 'विशेष्ये विशेषणम्' इति रीत्या साध्यप्रकारिकाऽनुमितिरुपजायत इत्याशङ्क्य प्रतिक्षिपति- **न चेति**। **तत्र** स्वातन्त्र्येणेतरभेदत्वप्रकारकज्ञानकाले। यदि 'विशेष्ये विशेषणम्' इति रीत्यैव पृथिवीतरभेदप्रकारिकानुमितिरुपेयते तदा तत्र विशेषणतावच्छेदकप्रकारकज्ञानस्य नापेक्षेति यदा स्वातन्त्र्येणापि पृथिवीतरभेदत्वप्रकारकज्ञान नास्ति किन्तु केवलव्यतिरेकपरामर्श एव विद्यते तदानीं साध्यविशेष्यकानुमितिप्रतिवन्धकसाध्यप्रसिद्धेरभावात् साध्यविशेष्यिकोक्तदिशा साध्यप्रकारिका चेत्युभयाकारानुमितिः स्यादिति निषेधहेतुमुपदर्शयति- **तथा सतीति**- विशेष्ये विशेषणमिति रीत्या साध्यप्रकारकानुमितेरभ्युपगमे सतीत्यर्थः,। **तादृशपरामर्शात्** 'पृथिवीतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवी' इत्याकारकव्यतिरेकपरामर्शात्, ननु विशेष्ये विशेषणमिति रीत्याऽनुमितिरपि विशिष्टबुद्धिर्भवत्येव, सा साध्यरूपविशेषणज्ञानजन्येति साध्यज्ञानाभावे कारणाभावान्नोत्पत्तुमर्हतीत्याशङ्क्य प्रतिक्षिपति- **न चेति**। **नेयमापत्तिः** 'पृथिवी पृथिवीतरभिन्ना' इत्याकारकानुमित्यापत्तिर्न सम्भवति। निषेधे हेतुमाह- **एवमपीति**- स्वातन्त्र्येण पृथिवीतरभेदत्वप्रकारकज्ञानशून्यकाले विशेषणज्ञानाभावात्' साध्यप्रकारकज्ञानलक्षणसाध्यविशिष्टबुद्ध्यापादनासम्भवेऽपीत्यर्थः। **तथाविधानुमितेः** 'पृथिवी पृथिवीतरभिन्ना' इत्याकारिकायाः,

तादृशानुमित्युत्पादासम्भवात्, न च 'विशेष्ये विशेषणम्' इति रीत्या 'पृथिवी इतरभेदवती' इत्याकारकानुमितिस्तत्र जायत एवेति वाच्यम्, तथा सति साध्यज्ञानशून्यकाले तादृशपरामर्शात् 'पृथिव्यामितरभेदः, पृथिवी इतरभेदवती' इत्याद्याकारकद्विविधविषयताशालिन्या अनुमितेरापत्तेः, न च विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वान्नेयमापत्तिः, एवमपि प्रमेयत्वेनेतरभेदज्ञानकाले तथाविधानुमितेरापत्तिसम्भवात्, न च प्रमेयत्वादिना साध्यज्ञानकाले साध्यविशेष्यकानुमितिप्रतिबन्धकीभूतसाध्यसिद्धिसत्त्वेन न तत्र तथाविधविषयताशाल्यनुमित्यापत्तिरिति वाच्यम्, साध्यतावच्छेदकप्रकारकसिद्धेरेव साध्यविशेष्यकानुमितिविरोधित्वात्, अन्यथेतरभेदत्वरूपेण भेदान्तरावगाहिसिद्धिकाले तादृशानुमितिवारणाय तत्र पक्षविशेष्यतां निवेश्य सिद्धेः प्रतिबध्यप्रतिबन्धकभावान्तरापत्तेः, तस्मादितरभेदत्वप्रकारकज्ञानकालीनव्यतिरेकव्याप्तिज्ञानजन्यानुमितिविशिष्टवैशिष्ट्यविषयतास्वीकार आवश्यकः, तत्साधारण्यं च विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्यावश्यकम्, तथा च सति नेतरभेदत्वप्रकारकज्ञानशून्यकाले 'विशेष्ये विशेषणम्' इति रीत्येतरभेदत्वप्रकारकद्विविधविषयताशाल्यनुमित्यापत्तिः, विशिष्टवैशिष्ट्यानवगाहिन्या विशेष्ये विशेषणमिति रीत्या जायमानाया अनुमितेरप्रसिद्धेः, विशिष्टवैशिष्ट्यावगाहिन्यां च विशेषणतावच्छेदक-

पृथिव्यामितरभेदः' इत्याकारिकायाश्चेत्येवद्विविधविषयताशालिन्या अनुमिते । ननु प्रमेयत्वेन रूपेण यदितरभेदज्ञानं तत् साध्यप्रसिद्धिरूपत्वात् साध्यविशेष्यकानुमितिप्रतिबन्धकमिति तत्काले जायमानाया अनुमितेः साध्यविशेष्यकत्वाभावान्नोक्तद्विविधविषयताशाल्यनुमित्यापत्तिरित्याशङ्क्य प्रतिक्षिपति— **न चेति**— अस्य 'वाच्यम्' इत्यनेनान्वय । **तत्र** प्रमेयत्वादिना साध्यज्ञानकाले । **तथाविधेति**— निरुक्तद्विधेत्यर्थ. । साध्यविशेष्यकानुमितिं प्रति साध्यसिद्धे साध्यतावच्छेदकप्रकारकसिद्धित्वेनैव प्रतिबन्धकत्वम्, प्रमेयत्व च न प्रकृतसाध्यतावच्छेदकमिति तत्प्रकारकज्ञानस्य साध्यतावच्छेदकप्रकारकज्ञानत्वाभावात् प्रतिबन्धकत्वाभावेन तथाविधविषयताशाल्यनुमित्यापत्तिः स्यादेवेति निषेधहेतुमुपदर्शयति— **साध्यतावच्छेदकप्रकारकसिद्धेरेवेति** । **अन्यथा** साध्यतावच्छेदकप्रकारकज्ञानत्वेन साध्यविशेष्यकानुमितिं प्रति साध्यसिद्धे प्रतिबन्धकत्वमनभ्युपगम्य साध्यविषयकज्ञानत्वेन प्रतिबन्धकत्वाभ्युपगमे । '**तादृशानुमितिवारणाय**' इति स्थाने 'तादृशानुमित्यनुत्पत्तिवारणाय' इति पाठो भवितुमर्हति । अत्रायमभिप्राय.— साध्यतावच्छेदकप्रकारकज्ञानत्वेन साध्यसिद्धेः प्रतिबन्धकत्वे इतरभेदत्वेन भेदान्तरावगाहिज्ञानस्यापि साध्यविशेष्यकानुमितिं प्रति प्रतिबन्धकत्वेन तत्काले साध्यविशेष्यकानुमित्यनुत्पत्तिरयत्नोपनतैव, साध्यज्ञानत्वेन प्रतिबन्धकत्वपक्षे तु यत्साध्यस्य ज्ञानं तत्साध्यविशेष्यकानुमितिर्न भवतीति पृथिवीतरभेदत्वेन भेदान्तरावगाहि ज्ञान न साध्यविशेष्यकज्ञानमिति तन्न तत्र प्रतिबन्धकमिति भवत्येव तत्र साध्यविशेष्यकानुमितिरित्येवं यत् तादृशानुमित्युनुत्पत्तेर्वारणं तद् विशिष्य साध्यविशेष्यकत्वस्य प्रतिबध्यप्रतिबन्धकभावकोटौ निवेशे सत्येव इत्येव प्रतिबध्यप्रतिबन्धकभावान्तरापत्त्या गौरवमिति । '**पक्षविशेष्यताम्**' इत्यस्य पक्षनिरूपिता या साध्यनिष्ठविशेष्यता तामित्यर्थ. । '**अथ**' इत्याशङ्कि। स्ववक्तव्यमुपसहरन्नाह— **तस्मादिति** । '**ज्ञानजन्यानुमिति**' इति स्थाने 'ज्ञानजन्यानुमितौ' इति पाठो युक्तः । यदा चोक्तानुमितौ विशिष्टवैशिष्ट्यविषयता तदा तादृशानुमितिरपि विशेषणतावच्छेदकप्रकारकनिर्णयजन्येति विशिष्टवैशिष्ट्यप्रत्यक्षत्वं तदवृत्तित्वान्न्यूनवृत्तितया न विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकं किन्तु प्रत्यक्षानुमितिसाधारणमेव विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकमुपेयमित्याह— **तत्साधारण्यं चेति**— अनुमितिसाधारण्यं चेत्यर्थः, विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्य तत्साधारण्य चावश्यकमित्यन्वयः । **तथा च सति** विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्यानुमितिसाधारण्ये च सति । **नेतरेति**— नञोऽनुमित्यापत्तिरित्यनेनान्वयः । कथं नोक्तद्विविधविषयताशाल्यनुमित्यापत्तिरित्यपेक्षायामाह— **विशिष्टवैशिष्ट्यानवगाहिन्या** इति— 'विशेष्ये विशेषणम्' इति रीत्या काऽप्यनुमितिर्भवत्येव नेत्यप्रसिद्धत्वादेव पृथिवी पृथिवीतरभिन्ना' इत्याकारकानुमितेः 'विशेष्ये विशेषणम्' इति रीत्याऽभ्युपगन्तुमशक्यत्वाद् विशिष्टवैशिष्ट्यावगाहिनी सा भवति, किन्तु ता प्रति विशेषणतावच्छेदकप्रकारकनिर्णयविधया पृथिवीतरभेदत्वप्रकारकनिर्णय कारणमिति तच्छून्यकाले तद्रूपकारणाभावादेव न सोत्पत्तुमर्हतीति 'पृथिवी इतरभेदव्यापकीभूताभावप्रतियोगि पृथिवीत्ववती' इत्याकारकव्यतिरेकपरामर्शात् तदानीं 'पृथिव्यामितरभेदः' इत्येकाकारैवानुमितिरिति द्विविधविषयताशाल्यनुमित्यापत्तिर्न सम्भवतीत्यर्थः । विशिष्टवैशिष्ट्यावगाह्यनुभवत्समेव

प्रकारकनिर्णयस्य हेतुत्वादिति चेत् ? एवमप्यनुमितौ स्वातन्त्र्येणैव हेतुत्वम्, अनुमितिसाधारणजन्यतावच्छेदकत्वे नित्यव्यावर्तनाय जन्यत्वनिवेशस्यावश्यकत्वे मिथोविशेषणविशेष्यभावे विनिगमनाविरहेण नानाकार्यकारणभावस्यावश्यकत्वादवच्छेदकगौरवाच्च' इत्याहुः ।

परे तु–"अनुभवत्वादिकमनिवेश्यं विशिष्टवैशिष्ट्यविषयतावत्त्वमेव तदवच्छेदकम्, विशेषणतावच्छेदकप्रकारकज्ञानशून्यकालीनस्मरणे ईश्वरज्ञाने च 'विशेष्ये विशेषणम्' इत्येतादृशविषयतामात्रमभ्युपेयते, अतो न व्यभिचारो नवा नित्यसाधारणम्" इत्याहुः ।

केचित् तु विशेषणतावच्छेदकसंशयकाले विशिष्टवैशिष्ट्यबोधं स्वीकृत्य विशेषणतावच्छेदकप्रकारक-

---

प्रत्यक्षा-ऽनुमितिसाधारणम्, तच्च नित्यप्रत्यक्षसाधारणत्वान्न कार्यतावच्छेदकम्, जन्यानुभवमात्रवृत्तिजातिविशेषश्च नाभ्युपगन्तुं शक्यः, प्रत्यक्षत्वाभाववत्यनुमितौ तस्य सत्त्वं तदभाववति नित्यप्रत्यक्षे प्रत्यक्षत्वस्य सत्त्वमित्येवं परस्परात्यन्ताभावसामानाधिकरण्ये सति तयोर्जन्यप्रत्यक्षे विद्यमानत्वेन प्रत्यक्षत्वेन साङ्कर्यात्, किन्तु जन्यत्वे सति विशिष्टवैशिष्ट्यावगाह्यनुभवत्वं तदुभयसाधारण विशेषणतावच्छेदकप्रकारकनिर्णयकार्यतावच्छदकं वाच्यम्, तत्र यथा जन्यत्वं सामानाधिकरण्यसम्बन्धेनानुभवत्वस्य विशेषणं तथाऽनुभवत्वमपि सामानाधिकरण्यसम्बन्धेन जन्यत्वस्य विशेषण सम्भवत्येव, न चात्र विनिगमकं किञ्चिद् येन जन्यत्वविशिष्टमनुभवत्वमेव निरुक्तजन्यावच्छेदकं नानुभवत्वविशिष्टं जन्यत्वं तथेति गुरुधर्मावच्छिन्नकार्यकारणभावद्वयप्रसङ्ग इत्यतोऽनुमितेर्विशिष्टवैशिष्ट्यागाहिन्या यद् विशेषणतावच्छेदकप्राकारकनिर्णयजन्यत्वं तदवच्छेदकमन्यदेव, तदन्यदेव च विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकमिति– समाधत्ते– **एवमपीति**– अनुमितेर्विशिष्टवैशिष्ट्यावगाहित्वेन विशेषणतावच्छेदकप्रकारकनिर्णयजन्यत्वेऽपीत्यर्थः । **स्वातन्त्र्येणैवेति**– विशिष्टवैशिष्ट्यावगाह्यनुमितित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणत्वमित्यर्थः । नन्वेवमुक्तानुमितिं प्रति पृथक्कारणत्वं पृथक् च प्रत्यक्षविशेप प्रति कारणत्वमित्येवं गौरव स्यादतोऽनुमितिसाधारणधर्मस्य कार्यतावच्छेदकत्वमुररीकृत्यैककारणत्वकल्पनमेव न्याय्यमित्यत आह– **अनुमितीति**– अनुमितिसाधारणधर्मस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकत्व इत्यर्थः । **नित्यव्यावर्तनाय** नित्यप्रत्यक्षे कार्यतावच्छेदकधर्मस्य व्यावर्तनाय । **जन्यत्वनिवेशस्य** जन्यत्वे सति विशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्न प्रति विशेषणतावच्छेदकप्रकारकनिर्णयः कारणमित्येवं कार्यकारणभावक्लृप्तौ कार्यतावच्छेदककोटौ जन्यत्वनिवेशस्य । **मिथोविशेषणविशेष्यभाव** इति– सामानाधिकरण्यसम्बन्धेन जन्यत्वविशिष्टनिरुक्तानुभवत्व प्रकृतकार्यतावच्छेदकयुक्तानुभवत्वविशिष्टं जन्यत्व वा तथेत्येव विशेषणविशेष्यभावे । नानाकार्यकारणभावः स्वातन्त्र्येणानुमितित्वस्य कार्यतावच्छेदकत्वेऽप्यत आह– **अवच्छेदकगौरवाच्चेति** । विशिष्टवैशिष्ट्यविषयतावत्त्वावच्छिन्न प्रति विशेषणतावच्छेदकप्रकारकनिर्णयः कारणमित्येकविध एव कार्यकारणभावः, विशिष्टवैशिष्ट्यविषयतावत्त्वं यथा प्रत्यक्षविशेषे तथाऽनुमितावपीति, ईश्वरप्रत्यक्षं विशेपणतावच्छेदकप्रकारकज्ञानशून्यकालीन स्मरणं च 'विशेष्ये विशेषणम्' इति रीत्यैवोपेयत इति तत्र विशिष्टवैशिष्ट्यविपयतावत्त्वस्याभावादेव व्यभिचाराप्रसक्तावीश्वरप्रत्यक्षव्यावर्तनाय जन्यत्वस्य स्मरणव्यावर्तनायानुभवत्वस्य कार्यतावच्छेदककोटौ न निवेश इति परेषा मतमुपदर्शयति– **परे त्विति**– अस्य 'आहु' इत्यनेन सम्बन्धः । **'अनिवेश्यम्'** इत्यस्य स्थाने 'अनिवेश्य' इति पाठो युक्तः । **तदवच्छेदकं** विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकम् । **अतः** ईश्वरज्ञाने निरुक्तस्मरणे च विशिष्टवैशिष्ट्यविपयतावत्त्वाभावात् ।

'दण्डो रक्तो नवा' इति संशयानन्तरं 'रक्तदण्डवान्' इति रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिबुद्ध्यनुत्पत्तावेव विशेपणतावच्छेदकप्रकारकनिर्णयत्वेन विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्वमभ्युपेयम्, न चैवम्, उक्तसंशयानन्तरमपि विशिष्टवैशिष्ट्यावगाह्युक्तबुद्धिरुत्पद्यत एवेति विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेपणतावच्छेदकप्रकारकज्ञानत्वेनैव कारणत्वं लाघवादुपेयते, अथवा लाघवाद् विशेपणतावच्छेदकप्रकारकज्ञानत्वेन विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्वे व्यवस्थिते विशेपणतावच्छेदकप्रकारकसंशयकालेऽपि विशिष्टवैशिष्ट्यावगाहिबोधः स्वीक्रियत इति केपाञ्चिन्मतं प्रतिक्षेप्तुमुपन्यस्यति– **केचित् त्विति**– अस्य 'आहु.' इत्यनेनान्वय' । अत्र संशयस्य ज्ञानत्वादिना कारणत्व प्रतिवन्धकत्वं वा, तत्राप्रामाण्यज्ञानस्य निर्णयत्वेनैनोत्तेजकत्वम्, अर्थात् अप्रामाण्यनिर्णयानास्कन्दितस्यैव ज्ञानस्य कारणत्व प्रतिवन्धकत्वं वा, यतोऽप्रामाण्यनिर्णये सति तज्ज्ञानविपयस्य वैपरीत्यं सुनिश्चितं भवतीति तज्ज्ञानं स्वविपयस्य संशयात्मना निर्णयात्मना चाव्यवस्थितौ

ज्ञानत्वेनैव हेतुत्वमाहुः, तदसत्–संशयसाधारणज्ञानस्य हेतुत्वेऽप्रामाण्यनिर्णयस्यैवोत्तेजकतया निर्णयत्वेन हेतुत्वे चाप्रामाण्यज्ञानस्यैव तथात्वे निर्णयत्वेन हेतुत्वकल्पनाया एवोचितत्वाद्, अन्यथा विशेषणतावच्छेदकप्रकारकज्ञानीयनिर्णयत्वापेक्षया गुरुशरीरस्याप्रामाण्यज्ञाननिर्णयत्वस्य निवेशेन महागौरवप्रसङ्गात्, अथ विशेषणतावच्छेदकसंशयकाले तत्र चाप्रामाण्यशङ्कायां भवन्मत इव ममापि विशिष्टवैशिष्ट्यबोधो न जायत इत्यप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव निवेशे क दोष इति चेत्? एवमपि संशयसाधारणज्ञानस्य विशिष्टवैशिष्ट्यबोधहेतुत्वे अनुमित्यादिकं प्रति परामर्शहेतुत्वे व्याप्त्यांशे निर्णयत्वनिवेशे महा-

न स्वकार्यं कार्यान्तरं वा कुर्यात् प्रतिबध्नीयाद् वा, तत्राप्रामाण्यसंशये तु तदधीनो विषयसंदेह एव, न तद्वैपरीत्यमिति स्वविषयसंशयात्मकत्वं तस्याक्षुण्णमेवेति तदात्मनस्तस्य स्वकार्यकरणसामर्थ्यं कार्यान्तरप्रतिबन्धनसामर्थ्यं च समस्त्येवेत्यप्रामाण्यसंशयस्याकिञ्चित्करत्वान्न तत्रोत्तेजकत्वम्, यत्र तु निर्णयस्यैव कारणत्वं प्रतिबन्धकत्वं वा, तत्राप्रामाण्यज्ञानस्याप्रामाण्यज्ञानत्वेनैवोत्तेजकत्वम्, अर्थादप्रामाण्यज्ञानानास्कन्दितस्यैव तस्य कारणत्व प्रतिबन्धकत्व वा, यतस्तत्राप्रामाण्यसंशये अप्रामाण्यनिर्णये वा सति तस्य स्वविषये सन्दिग्धत्वस्य वैपरीत्यस्य वा प्राप्तौ निर्णयरूपता तस्य स्वविषयादपैतीति निर्णयात्मना तस्य न स्वकार्यकारित्व कार्यान्तरप्रतिबन्धकत्वं वेति, एवं च प्रकृते विशेषणतावच्छेदकप्रकारकज्ञानत्वेन विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्वे तत्राप्रामाण्यनिर्णयत्वेनैवाप्रामाण्यज्ञानस्योत्तेजकत्वमिति गौरवम्, विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणत्वे तु अप्रामाण्यज्ञानत्वेनैवोत्तेजकत्वमिति लाघवम्, ततो विशेषणतावच्छेदकप्रकारकनिर्णयत्वस्यैव प्रकृतकार्यकारणत्वावच्छेदकत्व युक्तमतः केषाञ्चिन्मतं न युक्तमित्याह– **तदसदिति**। **तथात्वे** उत्तेजकत्वे। **अन्यथा** निर्णयत्वस्य कारणतावच्छेदककोटावनिवेश्य तत्स्थाने ज्ञानत्वस्य निवेशे। **विशेषणे**ति– विशेषणतावच्छेदकप्रकारकनिर्णयत्वं विशेषणतावच्छेदकाभावाप्रकारकत्वे सति विशेषणतावच्छेदकप्रकारकज्ञानत्वम्, तदपेक्षया तदभाववद्विशिष्टविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वलक्षणाप्रामाण्याभावाप्रकारकत्वे सति निरुक्ताप्रामाण्यनिष्ठप्रकारताकत्वलक्षणाप्रामाण्यज्ञाननिष्ठनिर्णयत्वस्योत्तेजककोटौ विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वपक्षे प्रविष्टस्य गुरुत्व सुव्यक्तमेवातो महागौरवप्रसङ्गादप्रामाण्यज्ञानानास्कन्दितविशेषणतावच्छेदकप्रकारकनिर्णयत्वेनैव विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्व न तु अप्रामाण्यनिर्णयानास्कन्दितविशेषणतावच्छेदकप्रकारकज्ञानत्वेनेति। ननु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वपक्षेऽप्यप्रामाण्यज्ञानत्वेनैवोत्तेजकत्वम्, यथा विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणत्वपक्षे विशेषणतावच्छेदकप्रकारकनिर्णये अप्रामाण्यशङ्काया ततो विशिष्टवैशिष्ट्यावगाहिज्ञान न जायते तथा विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वपक्षेऽपि विशेषणतावच्छेदकप्रकारकसंशयेऽप्रामाण्यशङ्काया ततो विशिष्टवैशिष्ट्यावगाहिबोधो न जायत एवेति तत्त्वेन कारणत्वपक्षेऽपि न गौरवमित्याशङ्कते– **अथेति**। **तत्र च** विशेषणतावच्छेदकसंशये च। **भवन्मत इव** विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणत्वमिति मते विशेषणतावच्छेदकप्रकारकनिर्णयेऽप्रामाण्यशङ्कायामिव। **ममापि** विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वमित्यभ्युपगन्तुर्मतेऽपि। **निवेशे** विशेषणतावच्छेदकप्रकारकज्ञाननिष्ठकारणतावच्छेदकतया निवेशे। विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वे अनुमितिं प्रति हेतुत्वेनाभिमतस्य परामर्शस्य विशिष्टवैशिष्ट्यावगाहिबोधात्मकस्य कारणं विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकनिर्णय एवेति ततो जायमानस्य न व्याप्त्यंशे संशयरूपता, व्याप्त्यभावप्रकारकज्ञानं प्रति व्याप्तिप्रकारकनिश्चयस्य प्रतिबन्धकत्वेन व्याप्तिप्रकारकनिर्णयोत्तरजायमानज्ञाने व्याप्त्यभावप्रकारकत्वासम्भवादित्येतावतैव परामर्शो व्याप्त्यंशे निर्णयरूप एवेति, यद्यपि अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्वत्तानिश्चयस्यैव तदभाववत्ताबुद्धिं प्रति प्रतिबन्धकत्वमित्याहार्यव्याप्तिप्रकारकनिश्चये सत्यपि तदनन्तरजायमानज्ञाने व्याप्त्यभावप्रकारकत्व सम्भवति, तथापि विशेषणतावच्छेदकप्रकारकनिश्चयस्यानाहार्यप्रामाण्यज्ञानानास्कन्दितस्यैव विशिष्टवैशिष्ट्यबोधहेतुत्वमिति विशिष्टवैशिष्ट्यावगाहिपरामर्शहेतुतयाऽऽदरणीयस्य व्याप्तिलक्षणविशेषणतावच्छेदकप्रकारकनिर्णयस्यानाहार्यत्वमेवेति, न तदनन्तरं व्याप्तिप्रकारकसंशयसम्भव इति अनुमितिं प्रति परामर्शस्य हेतुत्वे व्याप्त्यंशे निश्चयत्व न निवेश्यते, विशेषणतावच्छेदकप्रकारकज्ञानत्वेन संशयसाधारणधर्मेण कारणत्वपक्षे तु व्याप्तिरूपविशेषणतावच्छेदकप्रकारकसंशयादपि निरुक्तपरामर्शस्य सम्भवेन व्याप्त्यंशे संशयरूपस्यापि तस्य सम्भवेन ततोऽनुमित्युत्पत्तिवारणाय व्याप्त्यंशे निर्णयात्मकत्व तस्य कारणतावच्छेदककोटौ निवेशनीयमिति गौरव स्यादिति समाधत्ते– **एवमपीति**– विशेषणतावच्छेदकप्रकारकसंशयेऽप्रामाण्यसंशयदशाया विशिष्टवैशिष्ट्यबोधोत्पादस्यान-

गौरवात्, विशेषणतावच्छेदकप्रकारकनिश्चयस्य चानाहार्यस्यैव हेतुत्वस्वीकारादाहार्यतदुत्तरोत्पन्नज्ञाने व्याप्यंशे निर्णयत्वनिवेशानावश्यकत्वात्, ननु तथापि 'विशेष्ये विशेषणम्' इति ज्ञानसाधारण्येवातिरिक्तप्रकारिताऽस्तु तदवच्छिन्नेऽप्रामाण्यनिश्चयाभावकूटविशिष्टसंशयाभावस्य नियामकस्याप्रामाण्यज्ञानाभावकूटविशिष्टनिश्चयत्वावच्छिन्नतो लघुत्वात्, इयमेव योग्यताज्ञानादिनिष्ठहेतुतावच्छेदिका बाधादिप्रतिबन्धकतावच्छेदिका च, अत एवानन्वितान्वयबुद्धेर्बाधादिप्रतिबध्यत्वप्रतिबन्धकत्वे, अत एव (च) व्याप्तिप्रकारनिश्चयोत्तरमपि व्याप्यभावांशे आहार्यसंशयात्मकतथाविधज्ञानादनुमित्यनापत्तिः, कार्यसहभावेन तथाविधसंशयस्य प्रतिबन्धकत्वादिति चेत् ? न—अप्रामाण्यनिश्चयत्वावच्छिन्नाभावविशिष्टनिरुक्त-

---

भ्युपगमेऽपीत्यर्थः । **आहार्यतदुत्तरोत्पन्नज्ञान** इति— आहार्यं यद् विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकनिर्णयात्मक तदव्यवहितोत्तरोत्पन्नज्ञाने इत्यर्थः, तच्च ज्ञानमनाहार्यव्याप्तिप्रकारकनिर्णयाभावाद् व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शात्मक न भवत्येवेति तदानी परामर्शाभावादेव नानुमितिरिति तत्र व्याप्यंशे निर्णयत्वस्यानावश्यकत्वादित्यर्थः । ननु यदि विशेषणतावच्छेदकप्रकारकसंशयतो विशिष्टवैशिष्ट्यावगाहिबोधो न भवतीति संशयसाधारणरूपेण न कारणत्वं तर्हि 'विशेष्ये विशेषणम्' इति रीत्या ज्ञानसाधारणी याऽतिरिक्तप्रकारिता तामुपगम्य तदवच्छिन्नं प्रति तत एव विशेषणतावच्छेदकप्रकारकसंशयकाले न तादृशप्रकारित्वावच्छिन्नोत्पत्त्यापत्तिसम्भव इति तादृशप्रकारित्वावच्छिन्नोत्पत्तिवारणाय तादृशप्रकारित्वावच्छिन्नं प्रति अप्रामाण्यज्ञानाभावकूटविशिष्टविशेषणतावच्छेदकप्रकारकनिश्चयत्वावच्छिन्नस्य नियामकत्वं न कल्पनीयं तादृशसंशयाभावापेक्षया तस्य गुरुत्वात्, विशेष्ये विशेषणमिति रीत्या ज्ञानसाधारणी प्रकारितैव च शब्दबोध प्रति योग्यताज्ञानस्य या कारणता तदवच्छेदिकापि, तथा तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयलक्षणबाधनिश्चयस्य यत् प्रतिबन्धकत्व यच्च तन्निरूपितप्रतिबध्यत्वं तयोरवच्छेदिकाऽपि, एव तदभाववत्ताबुद्धिं प्रति तद्वत्तानिश्चयस्य यत् प्रतिबन्धकत्वं यच्च तन्निरूपितप्रतिबध्यत्वं तयोरवच्छेदिकाऽपि, तत एव च 'विशेष्ये विशेषणम्' इति रीत्या यः शाब्दबोधोऽनन्वितान्वयबोधात्मा तस्यापि बाधबुद्धिं प्रति प्रतिबध्यत्वं प्रतिबन्धकत्वं च सम्भवतः, अप्रामाण्यनिश्चयाभावकूटविशिष्टसंशयाभावस्य प्रतिबन्धकाभावविधया कार्यसहभावेन तादृशप्रकारित्वावच्छिन्नं प्रति नियामकत्वाश्रयणादेव यत्र व्याप्तिप्रकारकनिश्चयानन्तरं व्याप्यभावांशे आहार्यसंशयात्मको व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शस्तत्र ततो नानुमित्यापत्ति. कार्यकाले निरुक्तसंशयस्यैव कार्यसहभावेन प्रतिबन्धकस्य भावादिति शङ्कते— **नन्विति । तदवच्छिन्ने** विशेष्ये विशेषणमिति ज्ञानसाधारणप्रकारित्वावच्छिन्ने, अस्य 'नियामकस्य' इत्यनेनान्वयः, तच्च 'संशयाभावस्य' इत्यस्य विशेषणम्, 'संशयाभावस्य' इत्यस्य 'लघुत्वाद्' इत्यत्रान्वयः । **इयमेव** विशेष्ये विशेषणमिति ज्ञानसाधारणप्रकारितैव, **'बाधादि'** इत्यादिपदात् तद्वत्तानिश्चयादेः प्रतिबन्धकान्तरज्ञानस्य चोपग्रहः । **अत एव** निरुक्तप्रकारिताया बाधादिप्रतिबन्धकतावच्छेदकत्वोपगमादेव । **अत एव च** निरुक्तप्रकारित्वावच्छिन्नेऽप्रामाण्यनिश्चयाभावकूटविशिष्टसंशयाभावस्य नियामकत्वादेव पुनः । **तथाविधज्ञानात्** विशेष्ये विशेषणमिति ज्ञानसाधारणप्रकारित्वावच्छिन्नपरामर्शात्मकज्ञानात् । **तथाविधसंशयस्य** अप्रामाण्यनिश्चयाभावकूटविशिष्टस्य व्याप्यभावांशे आहार्यसंशयस्य । अप्रामाण्यनिश्चयत्वावच्छिन्नाभावविशिष्टनिरुक्तसंशयत्वेन प्रतिबन्धकत्वं तदभावत्वेन च कारणत्वमिति कल्पनापेक्षयाऽप्रामाण्यज्ञानाभावविशिष्टविशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कारणत्वस्यैव लाघवादौचित्यम्, विशिष्टवैशिष्ट्यविषयता च 'अभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते' इति नियमबलादभावबोधे सिद्धा, तत्र विशेषणतावच्छेदकीभूतप्रतियोगितावच्छेदकप्रकारकनिश्चयस्य यत् कारणत्व क्लृप्तं तस्य कार्यकोटावभावांशप्रवेशस्यैव विशिष्टवैशिष्ट्यावगाहिबोधत्वावच्छिन्ने युक्तत्वमिति समाधत्ते— **नेति । 'प्रतियोगितावच्छेदकप्रकारकनिश्चयस्य'** इत्यस्य 'हेतुत्वम्' इत्यनेनान्वयः, **अभावांशप्रवेशेनेति**— 'प्रतियोगितावच्छेदकविशिष्टस्याभावेन सह वैशिष्ट्यावगाहिप्रत्यक्षे' इत्यत्राभावेन सहेत्यनुक्त्वा प्रतियोगितावच्छेदकविशिष्टस्य वैशिष्ट्यज्ञान इत्युक्तौ लाघव व्यक्तमेव । **तादृशज्ञान एव** प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यज्ञान एव तथा च प्रत्यक्षस्थाने ज्ञानस्यैव प्रवेशो विधेय इत्येतावता विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वं 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि सः' इति न्यायादायाति, यतः

संशयाभावत्वेन हेतुत्वे गौरवात्, प्रतियोगितावच्छेदकप्रकारकनिश्चयस्य प्रतियोगितावच्छेदकविशिष्टविषयकेऽभावस्य प्रत्यक्षे हेतुत्वं कल्प्यमानमभावांशाप्रवेशेन लाघवात् तादृशज्ञान एव युक्तमिति तद्बलेन निश्चयजन्यतावच्छेदकविशिष्टवैशिष्ट्यविषयतासिद्धेश्च ।

"शाकपाकजत्वादौ साध्यव्यापकत्वसन्देहेनाहितो हेतौ साध्यव्यापकत्वव्यभिचारसन्देह उपाधिः" इति दीधित्युक्तस्तु फलीभूतसन्देहे शाकपाकजत्वविशिष्टे साध्यव्यापकस्याविशेषणात्, अन्यथा तु द्रव्यत्वादौ तस्य निश्चयात् तत्र तद्विशेषणे तु साध्यव्यापकत्वांशे 'विशेष्ये विशेषणम्' इति रीत्या

---

प्रतियोगितावच्छेदको विशेषणतावच्छेदकधर्मविशेष एव तत्प्रकारकज्ञान विशेषणतावच्छेदकप्रकारकज्ञानविशेषः, प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानं च विशिष्टवैशिष्ट्यावगाहिज्ञानविशेष इति, एतेन विशिष्टवैशिष्ट्यावगाहिज्ञानविषयैव प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाह्यभावज्ञानस्य कार्यत्व विशेषणतावच्छेदकप्रकारकनिर्णयविषयैव च प्रतियोगितावच्छेदकज्ञानस्य कारणत्वं न तु स्वातन्त्र्येण तयोः कार्यकारणभाव इत्यपि लाघवं सुस्पष्टं प्रतीयते । 'हेतुत्वम्' इति पूर्वमुक्तस्य 'युक्तम्' इत्यनेनान्वयः । **तद्बलेनेति**– प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यज्ञाने प्रतियोगितावच्छेदकप्रकारकज्ञानस्य यत् कारणत्वं तद्बलाज्जन्यतावच्छेदकतया विशिष्टवैशिष्ट्यविषयतासिद्धेरिति तदवच्छिन्ने विशेषणतावच्छेदकप्रकारकनिर्णयस्य सामान्यत· कारणत्वं युज्यत एवेति ।

ननु यदि विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य सामान्यत· कारणत्वं तदा 'स श्यामो मित्रातनयत्वाद्, इत्यत्र शाकपाकजत्वमुपाधि., तद्धि श्यामत्वलक्षणसाध्यस्य व्यापकं मित्रातनयत्वलक्षणसाधनस्याव्यापकमतः साध्यव्यापकत्वे सति साधनाव्यापकत्वलक्षणोपाधिस्तत्र विद्यते, व्यभिचारानुमानं चोपाधे प्रयोजनम्, तद्यथा– मित्रातनयत्वं श्यामत्वव्यभिचारि श्यामत्वव्यापकशाकपाकजत्वव्यभिचारित्वादिति, अत्र शाकपाकजत्वे श्यामत्वव्यापकत्वनिश्चये तद्व्यभिचारलक्षणहेतुरपि मित्रातनयत्वलक्षणप्रकृतहेतौ निश्चीयते, यदा तु शाकपाकजत्वे श्यामत्वव्यापकत्वसदेहस्तदा तेन मित्रातनयत्वे श्यामत्वव्यापकव्यभिचारित्वसदेहः, सोऽयं हेतुसंदेहः साध्यव्यभिचारित्वलक्षणसाध्यसंदेहस्य प्रयोजक इति, स च साध्यव्यभिचारसदेहो ग्राह्यसशयविधया व्याप्तिज्ञानप्रतिबन्धक इत्यभिप्रायेण शाकपाकजत्वादौ साध्यव्यापकत्वसदेहाहितो हेतौ साध्यव्यापकव्यभिचारसंदेह इत्येवमुपाधिग्रन्थे शिरोमणिभट्टाचार्येण यदुक्तं तत् कथ सङ्गच्छते ? साध्यव्यापकव्यभिचारसदेहस्य साध्यव्यापकत्वविशिष्टवैशिष्ट्यावगाहिबोधरूपत्वेन तं प्रति विशेषणतावच्छेदकीभूतसाध्यव्यापकत्वप्रकारकनिश्चयस्य कारणत्वेन साध्यव्यापकत्वसंदेहेनातथाभूतेन तदाधानासम्भवादित्यत आह– **शाकपाकजत्वादाविति** । **"साध्यव्यापकत्वव्यभिचारसंदेह उपाधिः इति दीधित्युक्तस्तु"** इत्यस्य स्थाने "साध्यव्यापकव्यभिचारित्वसन्देह." इत्युपाधिदीधित्युक्तस्तु" इति पाठो युक्तः, 'इत्युपाधिदीधित्युक्तस्तु' इत्यस्य 'एवस्वरूप उपाधिनिरूपणात्मकोपाध्यभिख्यदीधितिग्रन्थैकदेशप्रकरणोक्तस्तु' इत्यर्थः, 'शाकपाकजत्वविशिष्टे साध्यव्यापकस्याविशेषणाद्' इत्यस्य स्थाने 'शाकपाकजत्वविशिष्टे साध्यव्यापकत्वस्याविशेषणत्वाद्' इति पाठो युक्त·, तथा च **'फलीभूतसन्देहे'** इत्यादेरयमर्थ.– शाकपाकजत्वादौ साध्यव्यापकत्वसंदेहस्य फलीभूतो यः सदेहो हेतौ साध्यव्यापकत्वसन्देहस्तत्र शाकपाकजत्वत्वेन रूपेण शाकपाकजत्वस्याविषयत्वेन तत्र साध्यव्यापकत्वस्याविशेषणत्वात्, एवं च साध्यव्यापकत्वविशिष्टस्य शाकपाकजत्वत्वावच्छिन्नस्य वैशिष्ट्यावगाहिज्ञानं हेतौ साध्यव्यापकव्यभिचारित्वसन्देहो न भवत्येवेति न तत्र शाकपाकजत्वविशेष्यकसाध्यव्यापकत्वप्रकारकनिर्णयस्य हेतुत्वमिति शाकपाकजत्वादौ साध्यव्यापकत्वसन्देहतो हेतौ साध्यव्यापकव्यभिचारित्वसन्देहेऽपि न व्यभिचार इति भावः । यदि तु यद्धर्मविशिष्टयद्धर्मावच्छिन्नवैशिष्ट्यावगाहिज्ञान एव तद्धर्मप्रकारकतद्धर्मावच्छिन्नविशेष्यकनिर्णयः कारणं सामान्यतस्तु तद्धर्मविशिष्टवैशिष्ट्यावगाहिज्ञाने तद्धर्मप्रकारकनिर्णयमात्र कारणमिति विभाव्यते तदा शाकपाकजत्वादौ श्यामत्वव्यापकत्वसन्देहेऽपि द्रव्यत्वादौ श्यामत्वव्यापकत्वनिर्णय. समस्त्येव, एकस्यापि ज्ञानस्यैकत्र तत्संशयरूपस्यान्यत्र तन्निश्चयरूपस्य समूहालम्बनस्य सम्भवादिति तत एवोक्तविशिष्टवैशिष्ट्यावगाहिनिरुक्तसंशयसंभवेन न तत्र व्यभिचार इत्याह– **अन्यथा त्विति**– प्रकारान्तरेण पुनः, सामान्यत इति यावत् । **तस्य** साध्यव्यापकत्वस्य । यदि तु 'हेतौ साध्यव्यापकव्यभिचारित्वसन्देहः' इत्यस्य 'हेतौ साध्यव्यापकशाकपाकजत्वव्यभिचारित्वसन्देहः' इत्यर्थमुपादाय फलीभूतसन्देहे शाकपाकजत्वविशिष्टे साध्यव्यापकत्व विशेषणतया भासत इति विभाव्यते तदा व्यभिचारित्वे निरूपितत्वसम्बन्धेन शाकपाकजत्वं तत्र साध्यव्यापकत्वमित्येवं 'विशेष्ये विशेषणं तत्र च विशेषणान्तरम्' इत्येवंरीत्यैव निरुक्तसंशय इति तस्य विशिष्टवैशिष्ट्यावगाहित्वाभावादेव न तत्र व्यभिचार इत्याह– **तत्र तद्विशेषणे त्विति**– शाकपाकजत्वत्वविशिष्टे साध्य-

संशयाकार एव सः, 'रक्तो दण्डो नवा' इति संशयकालीनो रक्तदण्डवान् इति प्रात्यक्षिकवोध इव रक्तत्वांशे इति द्रष्टव्यम्।

इदं तु वोध्यम्-किञ्चिद्धर्मावच्छिन्ने यद्विशेषणतावच्छेदकं तत्प्रकारकनिश्चयत्वेनैव हेतुत्वम्, अन्तरा धर्म्मितावच्छेदकानियन्त्रितस्थले 'दण्डवद्' इत्यादौ तु दण्डत्वादिप्रकारकज्ञानत्वेनैव निर्धर्मितावच्छेदकनिश्चयत्वस्य दुर्वचत्वात् तत्प्रवेशवैयर्थ्याच्चेति।

'विशिष्टवैशिष्ट्यम्' इति वुद्धित्वं तु रक्तत्वदण्डत्वोभयधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारताशालिवुद्धित्वम्, कारणता च तत्र दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारताशालिनिर्णयत्वेन, कार्यता

---

व्यापकत्वस्य विशेषणत्वे त्वित्यर्थः। सः फलीभूतसन्देहः। यत्र विशेषणतावच्छेदकप्रकारकसन्देहस्तत्र तद्भूतज्ञानं 'विशेष्ये विशेषणम्' इति रीत्या भवतीत्यत्र दृष्टान्तमाह- **'रक्तो दण्डो नवा'** इतीति- रक्तत्वप्रकारकदण्डविशेष्यकज्ञानानन्तरं जायमानो रक्तदण्डवानिति प्रात्यक्षिकवोधो यथा धर्म्यंशे दण्डं तत्र च रक्तत्वमित्येवमवगाहमानो 'विशेष्ये विशेषणम्' इति रीत्या भवतु न तु रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यावगाही तथा हेतौ साध्यव्यापकोपाधिव्यभिचारसन्देहोऽपि व्यभिचारे उपाधिमुपाधौ साध्यव्यापकत्वमित्येवमवगाहमानो विशेष्ये विशेषणमिति रीत्या भवति न तु साध्यव्यापकत्वविशिष्टोपाधेर्व्यभिचारे वैशिष्ट्यावगाहीति विशिष्टवैशिष्ट्यावगाहिवोधत्वलक्षणकार्यतावच्छेदकधर्मानाक्रान्तस्य तस्य साध्यव्यापकत्वरूपविशेषणतावच्छेदकप्रकारकनिश्चयं विना भावेऽपि न व्यभिचार इत्यर्थः।

यत्र कमपि धर्मं धर्मितावच्छेदकीकृत्य विशिष्टस्वरूपविशेषणसन्निविष्टं विशेषणं विशेषणेऽवगाहते विशिष्टवैशिष्ट्यवुद्धिस्तत्र यद्धर्मावच्छिन्ने यद्धर्मो विशेषणीभवन् विशेषणतावच्छेदको भवति तद्धर्मावच्छिन्नविशेष्यकतद्धर्मप्रकारकनिश्चयत्वेनैव तादृशविशिष्टवैशिष्ट्यवुद्धिं प्रति कारणत्वम्, यद् विशिष्टस्वरूपं तु नैकं धर्मं धर्मितावच्छेदकीकृत्यापरधर्मवैशिष्ट्यतो निष्पन्नस्वरूपं किन्त्वेकधर्मवद्रूपतया प्रतिभासमानतयैव विशिष्टं तद्वैशिष्ट्यवुद्धिं प्रति कश्चिद्धर्मितावच्छेदकमनिवेश्यैव विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव हेतुत्वं न तु तथाविधवुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वम्, तदभावनिष्ठप्रकारत्वानिरूपिततन्निष्ठप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताकज्ञानत्वमेव तन्निश्चयत्वं तत्संशयत्वविरुद्धं सधर्मितावच्छेदकज्ञानगतमेव, निर्धर्मितावच्छेदकज्ञानगतं तु निश्चयत्वं तु निर्वक्तुमशक्यम्, यतः संशयविरोधिज्ञानस्यैव निश्चयत्वम्, संशयश्चैकधर्मिविशेष्यकविरुद्धभावाभावोभयप्रकारको नियमेन सधर्मितावच्छेदक एव, तद्विरोधिज्ञानमपि सधर्मितावच्छेदकमेव भवितुमर्हति, एकधर्मविशिष्टवैशिष्ट्यावगाहिज्ञानं च 'दण्डवद् इति ज्ञानम्', तच्च 'दण्डो न वा' इत्येवं संशयस्वरूपादपि दण्डत्वप्रकारकज्ञानादुत्पत्तुमर्हतीति तत्कारणावच्छेदककुक्षौ निश्चयत्वनिवेशनं विफलमपीति सूक्ष्मेक्षिकां स्वयं ग्रन्थकृदाह- **इदं तु वोध्यमिति**। **'अन्तरा'** इत्यादिकं न पूर्वेणान्वितं किन्तूत्तरेण, यस्य वैशिष्ट्यं विशिष्टवैशिष्ट्यतयाऽभिमतं तत्, तस्य च तद् विशेषणं तयोर्मध्ये धर्मितावच्छेदको न यत्र समस्ति तादृशस्थले इत्यर्थः, तादृशस्थलमेवोपदर्शितम् 'दण्डवद्' इत्यादौ तु, इत्यनेन। **तत्प्रवेशवैयर्थ्याच्च** निश्चयत्वस्य कारणतावच्छेदककुक्षौ प्रवेशस्य वैयर्थ्याच्च, तथा च 'दण्डवद्' इत्याकारकदण्डत्वविशिष्टवैशिष्ट्यवुद्धौ विशेषणतावच्छेदकीभूतदण्डत्वप्रकारकज्ञानत्वेनैव हेतुत्वं न तु दण्डत्वप्रकारकनिर्णयत्वेन, 'रक्तदण्डवान्' इत्यादौ तु किञ्चिद्धर्मावच्छिन्ने दण्डत्वावच्छिन्ने रक्तत्वं विशेषणत्वाद् विशेषणतावच्छेदकमतो दण्डत्वावच्छिन्नविशेष्यकरक्तत्वप्रकारकनिर्णयो 'रक्तदण्डत्वान्' इति विशिष्टवैशिष्ट्यावगाहिवुद्धिहेतुरित्यर्थः।

विशिष्टवैशिष्ट्यवुद्धेश्चत्वारो भेदा नैयायिकाभिमताः, तत्र 'विशिष्ये विशेषणम्' इति रीत्या यो विशिष्टवैशिष्ट्यवुद्धिप्रकारः स उपवर्णितः- 'विशेष्ये विशेषणम्' इति रीत्या वुद्धित्वं 'रक्तत्वाद्यवच्छिन्नप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नप्रकारताकवुद्धित्वम्' इत्यादिना ग्रन्थेन, 'विशिष्टस्य वैशिष्ट्यम्' इति यो विशिष्टवैशिष्ट्यवुद्धिप्रकारः स व्यावर्णितः-विशिष्टवैशिष्ट्यवुद्धित्वं तु रक्तदण्डत्वादिविशिष्टपर्याप्तिप्रकारताकवुद्धित्वम्' इत्यादिग्रन्थेन, इदानीम् 'एकविशिष्टेऽपरवैशिष्ट्यम्' इति रीत्या वोधलक्षणो यो विशिष्टवैशिष्ट्यवुद्धेः प्रकारस्तं व्यावर्णयति- **विशिष्टवैशिष्ट्यवुद्धित्वं त्विति**- अत्र 'विशिष्टे वैशिष्ट्यवुद्धित्वं तु' इति पाठो युक्त.। **रक्तत्वेति**-'रक्तदण्डः प्रमेय.' इति ज्ञानं रक्तत्वविशिष्टदण्डे प्रमेयत्वस्य वैशिष्ट्यावगाहि, तत्र रक्तत्व-दण्डत्वोभयधर्मावच्छिन्ना या विशेष्यता सा रक्तदण्डनिष्ठविशेष्यता, तन्निरूपिता प्रकारता प्रमेयत्वनिष्ठप्रकारता, तच्छालिवुद्धित्वं तन्निरूपकज्ञानत्व समस्तीति लक्षणसङ्गतिः। तत्र कीदृशः कार्यकारणभाव इत्यपेक्षायामाह- **कारणता चेति**। **तत्र** 'विशिष्टे वैशिष्टम्' इति वुद्धिस्थले। 'रक्तदण्डः प्रमेयो रक्तदण्डो वाच्यो रक्तदण्डो द्रव्यम्' इत्येवं रक्तत्वविशिष्टदण्ड-

च रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेनैव, तेन 'एको द्वयम्' इति रीत्या 'दण्डो रक्तोऽयं मेयश्च' इति ज्ञाने न व्यभिचारः, तत्र दण्डत्वविशिष्टविशेष्यताया रक्तत्वानवच्छिन्नत्वेन रक्तत्वं धर्मितावच्छेदकीकृत्य प्रमेयत्वादिबाधकालेऽपि तथाविधज्ञानापत्तिरिति तादृशविशेष्यताया रक्तत्वावच्छिन्नत्वमावश्यकमिति वाच्यम्, एकस्या अपि प्रमेयत्वादिप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताभिन्नाया एव रक्तत्वावच्छिन्नविशेष्यताया अभ्युपगमात्, एकस्या विशेष्यताया रक्तदण्डत्वोभयानवच्छिन्नत्वेनाव्यभिचारात् तत्रापि रक्तत्वधर्मितावच्छेदकदण्डत्वप्रकारकनिर्णयजन्ये 'दण्डो रक्तः प्रमेयः' इत्येतादृशबोधे

---

विशेष्यकप्रमेयत्वादिप्रकारकज्ञानमात्रमेव 'रक्तो दण्डः' इति निर्णयात्मकज्ञाने सत्येव भवतीति तस्मिञ्ज्ञाने दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वनिष्ठप्रकारताशालिनिर्णयत्वं समस्तीति तद्रूपेण तस्य कारणत्व निर्वहति, यदि तादृशकारणतानिरूपितकार्यता रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यतानिरूपितप्रमेयत्वनिष्ठप्रकारताशालिज्ञानत्वेन, तदा 'रक्तदण्डो वाच्यः' इत्यादिज्ञानानां निरुक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वान्न तानि प्रति 'रक्तो दण्डः' इति निर्णयस्य कारणत्वं स्यात्, यदि च रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यतानिरूपितवाच्यत्वनिष्ठप्रकारताशालिज्ञानत्वादिनाऽपि कार्यत्व तदा कार्यतावच्छेदकभेदेनानन्तकार्यकारणभावप्रसङ्ग इति प्रकारताविशेषानन्तरर्भावेणैव कार्यतावच्छेदकधर्ममुपदर्शयति— **कार्यता चेति**। **एवकारेण** रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नदण्डत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन कार्यत्वस्य व्यवच्छेदः। तद्व्यवच्छेदप्रयोजनमुपदर्शयति— **तेनेति**— अस्य 'न व्यभिचारः' इत्यनेनान्वयः। **'एको द्वयम्' इति रीत्येति**— 'दण्डो रक्तोऽयं मेयश्च' इति दण्डे रक्तत्वं मेयत्वं च प्रकार इति एको दण्डो रक्तप्रमेयोभयरूप इतिं 'दण्डो रक्तोऽय मेयश्च' इति ज्ञानं भवति 'एको द्वयम्' इति रीत्येति, यद्येवकारेणोक्तव्यवच्छेदो न क्रियते तदा 'दण्डो रक्तोऽयं मेयश्च' इति ज्ञानमपि रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नदण्डत्वावच्छिन्नविशेष्यताशालिज्ञानत्वलक्षणकार्यतावच्छेदकाक्रान्तमिति तद् 'दण्डो रक्त' इति निर्णय विनाऽपि भवतीति व्यतिरेकव्यभिचारः स्यात्, रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यताया एव कार्यतावच्छेदककोटौ प्रवेशे चोक्तज्ञानस्य निरुक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वान्न व्यभिचारः इत्यर्थ.। निरुक्तज्ञानस्योक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वावबोधनायाह— **तत्रेति**— 'दण्डो रक्तोऽय मेयश्च' इति ज्ञाने इत्यर्थः। **'रक्तत्वानवच्छिन्नत्वेन रक्तत्वम्'** इति स्थाने 'रक्तत्वानवच्छिन्नत्वात्, न च रक्तत्वम्' इति पाठो युक्त 'दण्डो रक्तोऽय मेयश्च' इति ज्ञाने दण्डत्वविशिष्टविशेष्यताया रक्तत्वावच्छिन्नत्वाभावे तज्ज्ञानं प्रमेयत्वनिष्ठप्रकारतानिरूपितरक्तत्वावछिन्नविशेष्यताकत्वाभावाद् 'रक्तो न प्रमेयः' इत्याकारकस्य रक्तत्वावच्छिन्नविशेष्यतानिरूपितप्रमेयत्वाभावनिष्ठप्रकारताकबाधनिर्णयस्य प्रतिबध्यत्वाभावात् तत्कालेऽप्यापद्येतेत्यतस्तज्ज्ञाने दण्डत्वविशिष्टविशेष्यतायां रक्तत्वावच्छिन्नत्व स्वीकरणीयमित्याशङ्क्य प्रतिक्षिपति— **न चेति**— अस्य 'वाच्यम्' इत्यनेनान्वयः,। **तथाविधज्ञानापत्तिः** 'दण्डो रक्तोऽय प्रमेयश्च' इति ज्ञानापत्ति.। **तादृशविशेष्यतायाः** प्रमेयत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यतायाः। निषेधे हेतुमाह— **एकस्या अपीति**— एतत्स्थाने 'एतस्या अपि' इति पाठो युक्तः, प्रमेयत्वनिष्ठप्रकारतानिरूपिताया अपीत्यर्थः। 'दण्डो रक्तोऽयं प्रमेयश्च' इति ज्ञाने एका मेयत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यता, द्वितीया मेयत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यता, तथा चोक्तज्ञानस्य 'रक्तोऽय न प्रमेयः' इति बाधनिश्चयनिष्ठप्रमेयत्वाभावनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रमेयत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यताशालित्वान्नोक्तबाधदशायामापत्तिरित्यर्थः, एव च 'दण्डो रक्तोऽयं प्रमेय.' इति ज्ञाने दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वनिष्ठप्रकारताकनिर्णयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकस्य रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यताकबुद्धित्वस्याभावेन तस्य 'दण्डो रक्त' इति निर्णय विनाऽभावेऽपि न व्यभिचार इत्याह— **एकस्या इति**। ननु दण्डत्वविशिष्टरक्तत्वावच्छिन्नविशेष्यकप्रमेयत्वप्रकारकं यद् 'दण्डो रक्तो प्रमेयः' इति ज्ञान तदपि रक्तत्व दण्डत्वोभयावच्छिन्नविशेष्यताशालिज्ञानत्वरूपकार्यतावच्छेदकधर्माक्रान्तं भवति, जायते च तत् दण्डत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताशालिनिर्णयाद् 'दण्डरक्त.' इत्याकारकात्, न तु दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वनिष्ठप्रकारताकनिर्णयाद् 'रक्तो दण्ड' इत्याकारकादिति तत्र व्यभिचार इत्यत आह— **तत्रापीति**— निरुक्तकार्यकारणभावेऽपीत्यर्थः। **तादृशविशेष्यतायामिति**— रक्तत्व-दण्डत्वोभयावच्छिन्नविशेष्यतायामित्यर्थ.। **'विशेष्यताभिन्नत्वम्'** इत्यत्र विशेष्यताऽभिन्नत्वमित्याकारप्रश्लेषः, **रक्तप्रकारतेत्यस्य** 'रक्तत्वनिष्ठप्रकारतेत्यर्थः, तथा च रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वाभिन्ना या

व्यभिचारवारणाय तादृशविशेष्यतायां रक्तप्रकारतादिनिरूपितदण्डत्वावच्छिन्नविशेष्यताभिन्नत्वं निवेशनीयम् ।

'एकत्र द्वयम्' इति विषयिता च प्रकारिताद्वयावच्छिन्नविशेष्यतारूपा, यथा–चैत्रो दण्डी कुण्डलीत्यत्र, न चैवमेकत्र त्रयादिकमप्यतिरिच्येत 'एकत्र द्वयम्' इति सञ्ज्ञयैव सङ्ग्रहात्, एवं च 'दण्डी चैत्रो न कुण्डली' इति ज्ञानप्रतिबध्यतावच्छेदिका दण्डप्रकारित्वकुण्डलप्रकारित्वनिरूपितचैत्रत्वावच्छिन्नविशेष्यताकनिश्चयत्वस्या 'चैत्रो दण्डी कुण्डली, दण्डी चैत्रः कुण्डली' इत्युभयत्र सत्त्वात्, उद्देश्यतावच्छेदकत्व-विधेयत्वयोः प्रकारताविशेषत्वात्, तादृशबाधधीप्रतिबध्यतावच्छेदकत्वादेव चास्याश्चैत्रत्वेन

---

रक्तत्व-दण्डत्वोभयावच्छिन्नविशेष्यता तन्निरूपकबुद्धित्वावच्छिन्नं प्रति दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वनिष्ठप्रकारताशालिनिर्णयत्वेन कारणत्वम्, 'दण्डो रक्तः प्रमेयः' इति ज्ञाने च प्रमेयत्वनिष्ठप्रकारतानिरूपितरक्तत्व-दण्डत्वोभयावच्छिन्नविशेष्यता दण्डत्वनिष्ठप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यत्वाभिन्ना, न तु रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वाभिन्नेति 'दण्डो रक्तः प्रमेयः' इति ज्ञानस्य दण्डविशेष्यकरक्तत्वप्रकारकनिर्णयजन्यतावच्छेदकनिरुक्तधर्मानाक्रान्तत्वान्न तत्र व्यभिचार इत्याशयः ।

विशिष्टवैशिष्ट्यबुद्धेस्तुरीय प्रकारम् 'एकत्र द्वयम्' इति रीत्या ज्ञानं प्ररूपयति– **'एकत्र द्वयम्' इतीति** । **'विशेष्यतारूपा'** इति स्थाने 'विशेष्यितारूपा' इति पाठो युक्तः, यथा च अनन्तराभासमानसमानाधिकरणैकज्ञानीयविषयत्वानां मतभेदेनाभेदोऽवच्छेद्यावच्छेदकभावश्च, तथैकज्ञाननिष्ठविषयित्वानामपि, तत्र विशिष्टबुद्धौ विशेष्यतया भासमानस्य प्राधान्यं तदाश्रयणेन विशेषणानां प्रवृत्तेरिति तद्गतत्वाद् विशेष्यताया प्राधान्यम्, तत एव च तन्निरूपितविशेष्यिताया अपि प्राधान्यम्, विशेषणस्याप्राधान्ये तद्गतत्वात् प्रकारताया अप्राधान्ये तन्निरूपितप्रकारिताया अप्यप्राधान्यम्, प्रधानाप्रधानयोश्चाप्रधानमवच्छेदकं भवतीति 'एकत्र द्वयम्' इति ज्ञाने प्रकारताद्वयनिरूपितैका विशेष्यतेति प्रकारिताद्वयावच्छिन्नविशेष्यितात्मकविषयितावज्ज्ञानत्वम् 'एकत्र द्वयम्' इति ज्ञानत्वमित्यर्थः । उदाहरति– **यथेति**– 'चैत्रो दण्डी कुण्डली' इति ज्ञाने चैत्रस्य विशेष्यत्वं दण्ड-कुण्डलयोश्च प्रकारत्वमिति दण्डनिरूपितप्रकारित्वकुण्डलनिरूपितप्रकारित्वद्वयावच्छिन्नचैत्रनिरूपितविशेष्यितावज्ज्ञानत्व तत्र समस्तीति लक्षणसमन्वयः । ननु यथा 'एकत्र द्वयम्' इति रीत्या ज्ञानं तथा 'एकत्र त्रयम्' इति 'एकत्र चतुष्टयम्' इत्यादिरीत्याऽपि ज्ञानमित्येवं बहवः प्रकारा 'विशिष्टवैशिष्ट्यबुद्धेः स्युरिति तेषामनुपवर्णनान्न्यूनत्वमित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **'त्रयादिकम्'** इत्यत्रादिपराच्चतुष्टयादेरुपग्रहः । प्रकारिकाद्वयेति प्रकारितात्रयादीनामप्युपलक्षणमिति नानाप्रकारित्वावच्छिन्नविशेष्यितावज्ज्ञानत्वमेवैषामनुगमकलक्षणमिति 'एकत्र त्रयम्' इत्यादिप्रकाराणामनेनैव सङ्ग्रहान्न न्यूनत्वमिति प्रतिक्षेपहेतुमुपदर्शयति– **'एकत्र द्वयम्' इति सञ्ज्ञयैव सङ्ग्रहादिति**– एकत्र द्वयमेकत्र त्रयमित्याद्यशेषज्ञानानामेकत्र द्वयमिति संज्ञा, तया निरुक्तसर्वज्ञानाना सङ्ग्रहादित्यर्थः । **'एवं च'** इति स्थाने 'इय च' इति पाठो युक्तः, प्रकारिताद्वयावच्छिन्नविशेष्यितारूपविषयिता चेति तदर्थ., 'दण्डी चैत्रो न कुण्डली' इति निश्चयनिष्ठदण्डचैत्रत्वोभयावच्छिन्नविशेष्यतानिरूपितकुण्डलाभावत्वावच्छिन्नप्रकारताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदिका दण्डनिष्ठप्रकारतानिरूपितप्रकारित्व-कुण्डलनिष्ठप्रकारतानिरूपितप्रकारित्वद्वयावच्छिन्नचैत्रत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यित्वात्मकविषयितेत्यर्थः । अस्या निरुक्तबाधप्रतिबध्यतावच्छेदकतयोररीकारे सति निरुक्तबाधप्रतिबध्यत्वं 'चैत्रो दण्डी कुण्डली' इति ज्ञाने 'दण्डी चैत्रः कुण्डली' इति ज्ञाने च सम्भवति, निरुक्तज्ञानद्वयेऽपि निरुक्तप्रकारिताद्वयावच्छिन्नचैत्रत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यित्वस्य सत्त्वादित्याह– **दण्डप्रकारित्वेति** । **'कुण्डलप्रकारित्वनिरूपित'** इत्यत्र निरूपितत्वमवच्छिन्नत्वरूपम् । **'चैत्रत्वावच्छिन्नविशेष्यताकनिश्चयत्वस्या'** इत्यस्य स्थाने 'चैत्रत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यितावन्निश्चयत्वस्य' इति पाठो युक्तः । ननु 'चैत्रो दण्डी कुण्डली च' इति ज्ञाने चैत्रस्य विशेष्यत्व दण्ड-कुण्डलयोश्च प्रकारत्वमिति निरुक्तप्रकारिताद्वयावच्छिन्नविशेष्यिता तत्र सम्भवति, 'दण्डी चैत्रः कुण्डली' इति ज्ञाने तु दण्ड-चैत्रत्वोभयावच्छिन्नस्य विशेष्यत्व केवलकुण्डलस्यैव प्रकारत्वमिति कथं तत्र निरुक्तप्रकारिताद्वयावच्छिन्नविशेष्यितेत्यत आह– **उद्देश्यतावच्छेदकत्वेति**–'दण्डी चैत्र कुण्डली' इत्यत्र दण्डविशिष्टचैत्रस्योद्देश्यत्वे उद्देश्यतावच्छेदकता या दण्डनिष्ठा सा प्रकारताविशेषरूपा, कुण्डलस्य तत्र विधेयत्वमिति कुण्डलनिष्ठविधेयताऽपि प्रकारताविशेषरूपेति तादृशप्रकारताद्वयनिरूपितप्रकारिताद्वयावच्छिन्नविशेष्यितावन्निश्चयत्व तत्र समस्तीति 'दण्डी चैत्रो न कुण्डली' इति बाधनिश्चयप्रतिबध्यत्वम्, 'चैत्रो दण्डी कुण्डली' इत्यत्र तु दण्ड-कुण्डलयो-

शारीरद्वयं नेदं कुण्डलग्रहादेकत्र चैत्रे 'चैत्रोऽयं दण्डी कुण्डली च' इति धियो विशेषो रक्तदण्डाभावधियः समूहालम्बनादिव, इयं चैकविशिष्टेऽपरवैशिष्ट्यविषयताव्यापिका 'दण्डी कुण्डली चैत्रो द्रव्यम्' इत्यत्रेव 'दण्डी कुण्डली चैत्रः' इत्यत्रापि सत्त्वात्, तत्प्रयोजकसामग्री व्यापकसामग्री व्यापकत्वा-चेति वदन्ति, तदसत्—सामान्य-विशेषापेक्षयैकानेकात्मकवस्त्वनभ्युपगमे एकान्तवादस्य कुत्राप्यघट-

विधेयत्वेन विधेयतायाः प्रकारताविशेषरूपत्वेन तादृशप्रकारताद्वयनिरूपितप्रकारिताद्वयावच्छिन्नविशेष्यितावन्निश्चयत्व तत्रापि समस्तीति तस्यापि निरुक्तबाधप्रतिबध्यत्वम्, यत्र चैकं चैत्रमुद्दिश्य दण्डविधेयकं द्वितीयं चैत्रमुद्दिश्य कुण्डलविधेयकं 'चैत्रो दण्डी, कुण्डली च चैत्रः' इति समूहालम्बनज्ञानं तत्रैकस्य चैत्रत्वविशिष्टस्य शरीरविशेषावच्छिन्नात्मन. कुण्डलविशेष्यत्वादपरस्य च चैत्रत्वविशिष्टस्य शरीरविशेषावच्छिन्नात्मनो दण्डविशेष्यत्वादिति तस्य समूहालम्बनज्ञानस्य न दण्डनिष्ठप्रकारतानिरूपितप्रकारित्व कुण्डलनिष्ठप्रकारतानिरूपितप्रकारित्वद्वयावच्छिन्नचैत्रनिष्ठैकविशेष्यितावज्ज्ञानत्वमिति 'न दण्डी चैत्रो न कुण्डली' इति बाधनिश्चयप्रतिबध्यत्वमित्याह— **तादृशबाधधी**ति— 'दण्डी चैत्रो न कुण्डली' इति बाधज्ञानेत्यर्थः । **अस्याः** दण्डनिरूपितप्रकारित्व- कुण्डलनिरूपितप्रकारित्वद्वयावच्छिन्नचैत्रत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यितायाः । '**चैत्रत्वेन शारीरद्वयं नेदं कुण्डलग्रहादेकत्र**' इत्यस्य स्थाने 'चैत्रत्वेन शारीरद्वये दण्ड कुण्डलग्रहादेकत्र' इति पाठो युक्त., चैत्रत्वेनैकस्मिन् चैत्रे दण्डस्यापरस्मिंश्चैत्रे कुण्डलस्य समूहावलम्बनग्रहाद् एकस्मिन्नेव चैत्रे दण्ड-कुण्डलयोर्वा 'एकत्र द्वयम्' इति रीत्या 'चैत्रोऽयं दण्डी कुण्डली च' इति धीस्तस्या विशेषः, यतः सा निरुक्तबाधधीप्रतिबध्यतावच्छेदकनिरुक्ता विशेष्यिताधर्माकान्ता, विभिन्नचैत्रधर्मिकसमूहालम्बनधीश्च तादृशधर्मविकलेत्यर्थः । उक्तविशेषं दृष्टान्तावष्टम्भेन द्रढयति— **रक्त-दण्डाभावधिय** इति— 'रक्ताभावो दण्डाभावश्च' इति समूहालम्बनबुद्धितो 'रक्तदण्डाभाव.' इति बुद्धेर्यथा विशेषस्तथेत्यर्थः, अत्र 'रक्तदण्डधियः समूहालम्बनादिव' इत्येतावन्मात्रपाठ उपादानार्हः, तत्र 'रक्तो दण्डश्च' इति समूहालम्बनाद् यथा 'रक्तदण्डः' इति बुद्धेर्भेदस्तथेत्यर्थः । **इयं च** प्रकारिताद्वयावच्छिन्नविशेष्यितारूपा 'एकत्र द्वयम्' इति ज्ञाननिष्ठविषयिता च । '**विषयताव्यापिका**' इति स्थाने 'विषयिताव्यापिका' इति पाठो युक्त । यत इयम् 'एकत्र द्वयम्' इति ज्ञाने 'एकविशिष्टेऽपरवैशिष्ट्यम्' इति ज्ञाने च वर्ततेऽत एकविशिष्टेऽपरवैशिष्ट्यनिरूपितविषयताया व्यापिकेति स्पष्टयति— **दण्डी**ति— 'दण्डी कुण्डली चैत्रो द्रव्यम्' इति ज्ञानं दण्ड कुण्डलविशिष्टचैत्रे द्रव्यत्ववैशिष्ट्यावगाहित्वादेकविशिष्टेऽपरवैशिष्ट्यज्ञानम् । 'दण्डी कुण्डली चैत्र.' इति ज्ञानं चैकत्र चैत्रे दण्डकुण्डलद्वयवैशिष्ट्यावगाहित्वादेकत्र द्वयमिति, तदुभयत्र निरुक्तैकत्र द्वयमिति विषयितायाः सत्त्वादेकविशिष्टेऽपरवैशिष्ट्यविषयिताव्यापकत्वम् । तत. किमित्यपेक्षयामाह— **तत्प्रयोजकसामग्री**ति— व्यापकत्वात् तत्प्रयोजकसामग्री व्यापकसामग्रीत्यन्वय., एव च तत्प्रयोजकसामग्री व्यापकसामग्रीविधया 'एकविशिष्टेऽपरवैशिष्ट्यम्' इति ज्ञानीयविषयताप्रयोजिकाऽपीति भावः ।

इत्थं विशिष्टवैशिष्ट्यबुद्धेर्विशिष्ये विशेषणमिति १ विशिष्टस्य वैशिष्ट्यमिति २ विशिष्टे वैशिष्ट्यमिति ३ एकत्र द्वयम् ४ इत्येवं चत्वारः प्रकारा इति नैयायिकानां मत व्युत्पाद्य प्रतिक्षिपति— **तदसदि**ति । उक्तप्रकारेष्वपि सामान्यविशेषापेक्षाया आवश्यकत्वेनापेक्षाख्यबोधत्वलक्षणनयत्वमवश्यमभ्युपगन्तव्यम्, एकान्तवादेऽविशिष्टस्वरूपे वस्तुनि न कस्यचिद् वैशिष्ट्यम्, सामान्यैकान्तात्मके नापरवैशिष्ट्यनिबन्धनविशिष्टरूपता विशेषैकान्तात्मके चैकधर्मविशिष्टस्य नापरधर्मविशिष्टता धर्मभेदेन तयोरत्यन्तभेदादिति नोक्तप्रकारसम्भावनाऽपीत्यभिप्रायेण प्रतिक्षेपहेतुमुपन्यस्यति— **सामान्ये**ति— सामान्यापेक्षयैकात्मकं विशेषापेक्षया चानेकात्मक यद् वस्तु तस्यानभ्युपगमे इत्यर्थः, एकान्तवादे वस्तुनः सामान्यैकान्तरूपत्वेन विशेषरूपत्वाभावाच्च कस्यचिद् वैशिष्ट्यमिति 'विशेष्ये विशेषणम्' इत्यादिरूपता विषयावगाहनवैलक्षण्यनिबन्धना कुतो ज्ञानस्य, विषयावगाहनस्यापि सामान्यैकान्तरूपस्य वैलक्षण्याभावात्, विशेषैकान्तरूपत्वेन च धर्मद्वयाधारसामान्यरूपाभावादेकधर्मविशिष्टमेव नापरधर्मविशिष्टमिति विशेष्यतावच्छेदकधर्मालिङ्गितो विशेष्यस्वभावोऽन्य एव तदन्य एव च विशेषणालिङ्गितस्वभाव इत्येवमपि विशेष्ये विशेषणमित्यादिरूपता ज्ञानस्य तथाविधविषयाभावात् तदवगाहनविशेषस्याप्यभावेन न सम्भवत्येव, अनेकान्तवादे तु धर्मद्वयाधारत्वमेकस्य धर्मिण. सामान्यस्वभावेन, विशेषस्वभावेन च विशेष्यरूपत्व विशिष्टरूपत्वं प्रत्येकधर्मविशिष्टरूपत्वं धर्मद्वयविशिष्टरूपत्वमित्याद्यनेकस्वभावत्वमिति विवक्षाभेदेन तत्तद्विषयावगाहनस्वभावमुपादाय ज्ञानस्य प्रकारभेदः सम्भवति, पर तत्र चतुर्धैव ज्ञानस्य विशिष्टवैशिष्ट्यबोधात्मनो विभाग इत्येकान्तो नात्मानं लभते निरूपकवैलक्षण्यनिबन्धनानल्पविषयत्वानुभवेन विषयताबाहुल्यप्रयुक्तविशिष्टवैशिष्ट्यज्ञानप्रकारबाहुल्यसम्भवादित्याशयेनाह— **विशिष्टबुद्धिष्वपी**ति— विशिष्टबुद्धिषु यथा

मानत्वात्, विशिष्टबुद्धिष्वपि हि सामान्यत एकाविशेषितस्यापरस्य निरूपितत्वेन बहुतरापि विषयता अनुभूयन्त इति चतुर्द्धैवेति को विभागः, अत एवैकत्र द्वयस्थलेऽप्येकत्र भासनयोर्विशेषणयोः परस्पर-

एकविशेषितोऽपरो विषय इति तन्निष्ठविषयता तत्सम्बन्धित्वेन तन्निरूपिता समस्ति, सा च तत्तद्विशेषणनिष्ठप्रकारतानिरूपित-विशेष्यतारूपा, तामुपादाय च प्रकारचतुष्टयोपवर्णन कृत तथा स्वतन्त्रतया विशेषणस्वरूपं विशेष्यस्वरूपं च विषयः, कथमन्यथा दण्डविशिष्टपुरुषज्ञानस्य विशेष्यांशमुपादाय पुरुषमात्रविषयकपुरुषज्ञानविषयकत्व विशेषणांशमुपादाय दण्डमात्रविषयकपुरुषज्ञान-विषयकत्व विशेषणांशमुपादाय दण्डमात्रविषयकदण्डज्ञानविषयविषयकत्वमनुभूयमानमुपपद्येत, दण्डविशिष्टपुरुषज्ञाने दण्डविशिष्ट-पुरुषनिष्ठविषयताकत्वमेव समस्ति, पुरुषमात्रज्ञाने च दण्डाविशेषितपुरुषनिष्ठविषयताकत्वमेव समस्ति, एवं दण्डविशिष्टपुरुषज्ञाने पुरुषविशेषणीभवद्दण्डनिष्ठविषयताकत्वमेव समस्ति, दण्डमात्रज्ञाने च पुरुषाविशेषणीभूतदण्डनिष्ठविषयताकत्वमेव समस्तीति 'दण्डी पुरुषः' इति ज्ञाने विशेष्यांशमुपादाय या केवलपुरुषज्ञानेन सहैकविषयविषयकत्वं विशेषणांशमुपादाय या केवलदण्डज्ञानेन सहैकविषयविषयकत्व तदनुरोधेनैकाविशेषितापरनिरूपितविषयता विशेषण-विशेष्य-संसर्गादिविभिन्नविषयस्वरूपगतत्वेन बहुतरा स्वीकरणीया, एव विशिष्टे यदपरवैशिष्ट्यबुद्धिस्तस्या विशिष्टस्वरूपनिविष्टविशेष्यांशमुपादाय तत्रापरवैशिष्ट्यबुद्धिरूपताऽपि, तत एव च तस्या केवले विशेष्यस्वरूपे याऽपरवैशिष्ट्यबुद्धिस्तया सहैकविषयविषयकत्वमिति तत्तद्विषयतानामुपादानेनापि परिगणितप्रकारव्यतिरिक्तप्रकाराणां सम्भवाच्चतुर्धैव विभाग इति नैयायिकपरिकल्पन न युक्तमिति । **अत एव** बहुतराणा विषयत्वानामनुभवानुरोधात् स्वीकरणीयत्वादेव । **एकत्रेति**– यदि च '**एकाविशेषितस्यापरस्य**' इति स्थाने 'एकविशेषित-स्यापरस्य' इति पाठोऽनुभवपथमवतरति तदा विशिष्टस्य वैशिष्ट्यबुद्धौ यथा विशेषणतावच्छेदकधर्मनिष्ठावच्छेदकतानिरूपित-स्वासाधारणधर्मनिष्ठावच्छेदकतानिरूपितविशेष्यीभूतनिष्ठप्रकारताख्या विषयता, यथा वा विशेषणतावच्छेदकधर्मनिष्ठप्रकारता-निरूपितस्वासाधारणधर्मनिष्ठावच्छेदकतानिरूपितविशेष्यत्वाभिन्नतादृशधर्मद्वयनिष्ठावच्छेदकतानिरूपितविशेष्यीभूतनिष्ठप्रकारत्वा ख्यविषयता, विशेषण-विशेष्योभयस्वरूपमेव विशेषण-विशेष्यभावमापन्नं विशिष्टं न त्वतिरिक्तमित्यभिप्रायाश्रयणेनाभिमता, तथा विशेषण-विशेष्यभावेन निष्पन्नं विशिष्टस्वरूप कथञ्चिद्विशेषणविशेष्यस्वरूपाभ्या भिन्नमेवेत्यभिप्रायाश्रयणेन कथञ्चिदतिरि-रिक्तस्वरूपस्य विशिष्टस्य प्रकारत्वाख्यविषयत्वमप्यतिरिक्त, तदवच्छेदकताऽपि विशिष्टासाधारणधर्मस्वरूपातिरिक्तधर्मगता-ऽतिरिक्ता, तन्निरूपितसंसर्गताऽपि तदवच्छेदकसम्बन्धगता विलक्षणैवेति तत्तद्विषयनिष्ठविषयतानिरूपितविषयताकबोधोऽपि विशिष्टवैशिष्ट्यबोधप्रकारक. सम्भवति, एवं तथाभूतानां विषयत्वानां मध्ये एकस्य निरूपितत्वमपरस्य निरूपकत्वमिति समाश्रयणेन यः प्रकारस्ततो विलक्षणप्रकारो भवत्येवैकस्य निरूपकत्वमपरस्य निरूपितत्वमित्याश्रयणेन प्रकारः, तथा यद्धर्म-विशिष्टस्य यत्र प्रकारत्व तत्र तद्धर्मस्यापि प्रकारत्वमित्यभिप्रायाश्रयणेन तद्धर्मनिष्ठपरम्परासम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यताकबोधलक्षणोऽप्यपर. प्रकार इत्येवं सूक्ष्मेक्षिकया बहूना विशिष्टवैशिष्ट्यबुद्धिप्रकाराणां सम्भवे चतुर्धैवेति विभागो न युक्त इत्याशय. । 'एकत्रद्वयस्थलेऽपि' इत्यपिना यथा 'विशिष्टबुद्धिषु' इत्यनेनाभिमतस्य विशिष्टवैशिष्ट्यबुद्धिषु दर्शितदिशा विषयताऽभेदस्तथेत्यस्यार्थस्याम्रेडनम्, 'चैत्रो दण्डी कुण्डली' इत्येवम् 'एकत्र द्वयम्' इति ज्ञाने दण्डत्वावच्छिन्नप्रकारता-निरूपिता सती कुण्डलत्वावच्छिन्नप्रकारतानिरूपिता या चैत्रत्वावच्छिन्नविशेष्यता तन्निरूपकबोधत्वमित्येकविशेष्यतायाः प्रकारताद्वयनिरूपितत्वेन तत्र विशेष्यितायाः प्रकारिताद्वयावच्छिन्नत्वमित्येवमन्यप्रकाराद् यथा वैलक्षण्यं तथैकत्र चैत्रे भास-मानयोर्दण्डकुण्डयोरपि परस्पर सामानाधिकरण्यसम्बन्धेनवैशिष्ट्यभानमिति । सामानाधिकरण्यसम्बन्धावच्छिन्नदण्डनिष्ठ-प्रकारतानिरूपितकुण्डलनिष्ठविशेष्यताकत्वं सामानाधिकरण्यसम्बन्धावच्छिन्नकुण्डलनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यताकत्व-मपीति, तथा च सामानाधिकरण्यसम्बन्धावच्छिन्ना या दण्डनिष्ठप्रकारता, या च सयोगसम्बन्धावच्छिन्नदण्डनिष्ठप्रकारता तयोरवच्छेद्यावच्छेदकभावः, एवं सामानाधिकरण्यसम्बन्धावच्छिन्ना या कुण्डलनिष्ठप्रकारता या च संयोगसम्बन्धावच्छिन्न-कुण्डलनिष्ठप्रकारता तयोरवच्छेद्यावच्छेदकभावः, एवमवच्छेद्यावच्छेदकभावापन्नप्रकारत्वाना स्वसमानाधिकरणविशेष्यतया-वच्छेद्यावच्छेदकभावः, तथा प्रकारत्वाख्यविशेष्यत्वाख्यविषयतावैलक्षण्ये तन्निरूपितप्रकारित्व विशेष्यित्वयोरपि वैलक्षण्यम्, तादृशविशेष्यित्वस्यापि प्रकारितयाऽवच्छेद्यावच्छेदकभाव इति, तथा च विषयताभेदप्रयुक्तमेकत्र द्वयमिति ज्ञानस्यापि प्रकारान्तर सम्भवतीत्यतोऽपि चतुर्धैवेति विभागोऽनुपपन्न इत्याशय. । ननु 'एकत्र द्वयम्' इत्यत्रैकविशेष्यतानिरूपितयोः प्रकारतयोर्विशेष्यताद्वारा यत् परम्परया निरूपितत्वलक्षणो निरूपितत्वविशेषः समूहालम्बनज्ञानीयप्रकारत्वयोर्नास्तीत्येतावतैव समूहालम्बनादितो वैलक्षण्यस्य सम्भवेनापरधर्मनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभेदमपरधर्म-निष्ठविशेष्यतानिरूपितप्रकारत्वाभेदं चाभ्युपगम्यान्यज्ञानीयप्रकारतातो भेदो नाभ्युपेय इति न तत्र भासमानयोर्विशेषणयोः

मपि सामानाधिकरण्येन वैशिष्ट्यभानाद् विषयताभेदः, यदि च तत्र प्रकारतयोर्निरूपितत्वविशेषान्नाति-रेकस्तदा विशिष्टवैशिष्ट्यस्थलेऽप्येकप्रकारतावच्छिन्नापरप्रकारतयोपपत्तावतिरेके किं मानम्? 'विशेष्ये विशेषणम्' इति स्थले हि रक्तत्वप्रकारतानिरूपिता दण्डत्वावच्छिन्नप्रकारता, विशिष्टवैशिष्ट्यस्थले च रक्तत्वप्रकारतावच्छिन्ना दण्डत्वावछिन्नप्रकारतेत्येवं विशेषसम्भवात्, स्वीक्रियतां वा तत्रावच्छेदकत्वा-ख्येष्वेव प्रकारता, प्रकारताद्वयघटितरूपेण च यथा हेतुतावश्यकत्वं तथा प्रागुक्तमेव यथा सन्निवेश-ध्रौव्येणेति न रक्तत्व-दण्डत्वोभयावच्छिन्नप्रकारतयैव रक्तदण्डस्यैव विशिष्टवैशिष्ट्यविषयता, अन्यथा 'रक्तदण्डद्रव्यवान्' इत्यतः 'रक्तदण्डवान्' इत्यस्य वैलक्षण्याद् रक्तत्व-दण्डत्वनिष्ठद्वित्वावच्छिन्न-

---

परस्पर सामानाधिकरण्यसम्बन्धेन वैशिष्टयभानमभ्युपेयमित्यत आह- **यदि चेति**। **तत्र** 'एकत्र द्वयम्' इति ज्ञाने। **निरूपितत्वविशेषात्** अन्यज्ञानीयप्रकारतातो य एकविशेष्यतानिरूपितत्वलक्षणो विशेषस्तस्मात्। **नातिरेकः** परस्परं सामानाधिकरण्येन वैशिष्टयभाननिबन्धनज्ञानान्तरीयप्रकारतातो न भेद, 'रक्तदण्डवान् पुरुष.' इति विशिष्टवैशिष्टयबोधेऽपि 'पुरुषे दण्डस्तत्र रक्तत्वम्' इत्येव रीत्या जायमान'रक्तदण्डवान् पुरुष.' इति ज्ञानीयप्रकारतात प्रकारताया न भेदः किन्तूभयत्र रक्तत्वे दण्डे च प्रकारता समैव। विशिष्टवैशिष्टयबुद्धिप्रकारतयोरवच्छेद्यावच्छेदकभावो 'विशेष्ये विशेषणम्' इति ज्ञानप्रकारतयो- र्निरूप्यनिरूपकभाव इत्येव तयोर्विशेषसम्भवादित्याह- **तदेति**। **किं मानमिति**- न किञ्चिन्मानमित्यर्थ.। तादृगबोधद्वय-वैलक्षण्यस्यान्यथाऽप्युपपत्त्या न तदन्यथानुपपत्तिस्तत्र मानमित्याह- **'विशेष्ये विशेषणम्' इति स्थले हीति**- यद्यपि ज्ञानान्तरे प्रकारत्वविशेष्यत्वयोरेव निरूप्यनिरूपकभाव इति प्रकारतात्वावच्छिन्ननिरूपकतानिरुपितनिरूप्यतावच्छेदक विशेष्य-तात्वमेव न प्रकारतात्वमिति रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यतैव भवति न तु दण्डत्वावच्छिन्नप्रकारतेति दण्डत्वावच्छिन्नविशेष्यताऽतिरिक्ता तत्राभ्युपगम्यैव, तथा च रक्तत्वनिष्ठप्रकारतानिरूपितदण्डत्वावच्छि॰नविशेष्यता-वच्छेद्यैव तत्र दण्डनिष्ठप्रकारता न तु रक्तत्वनिष्ठप्रकारतानिरुपितदण्डत्वावच्छिन्नप्रकारतारूपा सा, तथापि यथैकत्र द्वयमिति स्थले प्रकारत्वयोर्निरूपितत्वविशेषमुपास्य सामानाधिकरण्यसम्बन्धेन परस्परवैशिष्टयभानप्रयुक्तस्य सम्भवतोऽपि विषयताति-रेकस्यानभ्युपगमस्तथैवान्यत्राद्दष्टस्यापि प्रकारतात्वाभ्यां निरूप्यनिरूपकभावस्य विशिष्टवैशिष्टयबोधतो विशेषाधिगतये 'विशेष्ये विशेषणम्' इति ज्ञानीयप्रकारत्वयोरभ्युपगमेन तत्र दण्डे विशेष्यतालक्षणविषयताभेदानभ्युपगम इत्याशयः। 'विशेष्ये विशेषणम्' इति बोधतो विषयतातिरेकाभ्युपगममन्तरेणापि विशेषमुपदर्शयति- **विशिष्टवैशिष्ट्यस्थले चेति**- यद्यप्यत्रापि अनन्तराभासमानसमानाधिकरणैकज्ञानीयविषयत्वयोरेवावच्छेद्यावच्छेदकभावो ज्ञानान्तरीयविषयतास्थले दृष्ट इति 'रक्तदण्डवान्' इति विशिष्टवैशिष्टयज्ञाने या रक्तत्वनिष्ठप्रकारता या च दण्डत्वावच्छिन्नदण्डनिष्ठप्रकारता तयोरेकज्ञानीययोरपि सामानाधिकरण्याभावान्नोक्तनियमानुसारेणावच्छेद्यावच्छेदकभावसम्भव., तथापि विशेष्ये विशेषणम्' इति ज्ञानीयप्रकारतातो विशेषाधिगत्यर्थमन्यत्राद्दष्टस्याप्येतस्य कल्पनम्, एतावतैवान्यबुद्धितो विशिष्टवैशिष्टयबुद्धेर्भेदस्य सम्भवान्नातिरिक्तविषयता-कल्पनमित्याशयः। यदि च व्यधिकरणविषयतात्मनो रक्तत्वनिष्ठप्रकारत्व-दण्डत्वावच्छिन्नप्रकारत्वयोर्न विच्छेदकभावस्तदा विशिष्टवैशिष्टयबोधे या रक्तत्वनिष्ठप्रकारता सा रक्तत्वनिष्ठावच्छेदकतैव, तन्निरूपितत्वादेव दण्डत्वावच्छिन्नप्रकारतायाः 'विशेष्ये विशेषणम्' इति ज्ञानीयप्रकारतातो विशेष इत्याह- **स्वीक्रियतां वेति**। **तत्र** विशिष्टवैशिष्ट्यबोधे। **'अवच्छे-दकत्वाख्येष्वेव'** इति स्थाने 'अवच्छेदकताख्यैव' इति पाठो युक्त.। 'विशेष्ये विशेषणम्' इति ज्ञानीयविषयताया रक्तत्व-निष्ठप्रकारतानिरूपितशुद्धदण्डत्वावच्छिन्नप्रकारतारूपाया अनुभवसिद्धत्व कारणतावच्छेदकत्व च पूर्वमुपपादितमेवेति स्मार-यति- **प्रकारताद्वयघटितरूपेणेति**। रक्तत्वनिष्ठप्रकारत्वावच्छिन्नदण्डत्वावच्छिन्नप्रकारताकत्वेन विशिष्टबोधस्य बोधान्तरतो विशेषे तद्रूपेणैव तस्य स्वकार्यं प्रति कारणत्वादिकं परिभावनीयम्, प्रकारान्तराश्रयणेन तत्र विशिष्टनिष्ठप्रकारतानिर्वचन तु न सम्भवदुक्तिकमित्याह- **न रक्तत्वेति**- प्रथमैवकारेण रक्तत्व-दण्डत्वद्रव्यत्वादित्रितयधर्मावच्छिन्नप्रकारतया रक्तत्वनिष्ठ-प्रकारतानिरूपितदण्डत्वावच्छिन्नप्रकारतया विशिष्टवैशिष्ट्यबुद्धिविषयत्वस्य व्यवच्छेद, द्वितीयैवकारेण रक्त-दण्ड-द्रव्यादेः प्रकृत-दण्डवानिति विशिष्टवैशिष्ट्यबुद्धिविषयत्वव्यवच्छेद', नयभेदेन बहूना विशिष्टवैशिष्ट्यबुद्धिप्रकाराणा सम्भवे रक्तत्वनिष्ठप्रकारत्वाव-च्छिन्नदण्डत्वावच्छिन्नप्रकारतयाऽपि रक्तदण्डस्येव रक्तदण्डद्रव्यत्वादेरपि विशिष्टवैशिष्टयबुद्धिविषयता सम्भवत्येवेति तद्व्यवच्छेदन न न्याय्यमिति निषेधहेतुरत्रावसेयः। **अन्यथा** निरुक्तैकान्तस्यैवाश्रयणे। **'रक्तदण्डवान्' इत्यस्य वैलक्षण्याद्'** अस्य

पर्याप्त्याधी(धा)रताकावच्छेदकताप्रकारताश्रयणेऽतिगौरवात्, 'गुणवान् दण्डवान्' इत्यतो वैलक्षण्यसम्पादनाय रक्तविशिष्टदण्डत्वोभयपर्याप्तावच्छेदकताकप्रकारतानुधावने रक्तत्वेन दण्डे पीतावगाहिनि तादृशबोधेऽगतेश्च, तस्माद् रक्तत्वत्वावच्छिन्नावच्छेदकतानिरूपकदण्डत्वावच्छिन्नप्रकारताकबुद्धित्वमेव 'रक्तदण्डवान्' इति विशिष्टवैशिष्ट्यबुद्धित्वमाश्रयणीयम्, अनुमितिहेतुपरामर्शेऽपि हेतुतावच्छेदकावच्छिन्न-

---

स्थाने 'रक्तदण्डवान्' इत्यस्यावैलक्षण्याद्' इति पाठः सम्यग्, रक्तत्व-दण्डत्वोभयावच्छिन्नप्रकारता यथा रक्तदण्डनिष्ठप्रकारता तथा रक्तदण्डद्रव्यनिष्ठप्रकारताऽपि तस्यां द्रव्यत्वस्याधिकस्यावच्छेदकत्वेऽपि रक्तत्व-दण्डत्वोभयस्यावच्छेदकत्वानपायात्, एव च रक्तत्व-दण्डत्वोभयावच्छिन्नप्रकारताकबुद्धित्वलक्षण रक्तदण्डवैशिष्ट्यावगाहिबुद्धित्वं 'रक्तदण्डवान्' इति बुद्धाविव 'रक्तदण्डद्रव्यवान्' इति बुद्धावपीति तयोर्वैलक्षण्यं न स्यादिति तादृशप्रकारतयैव विशिष्टवैशिष्ट्यधीविषयत्वस्योररीकारेऽपि रक्तदण्डस्यैवेत्यवधारणं न घटते रक्तदण्डद्रव्यस्याप्युक्तप्रकारत्वसद्भावादित्यर्थः। ननु रक्तत्व-दण्डत्वनिष्ठद्वित्वावच्छिन्नपर्याप्त्याधारताकावच्छेदकतानिरूपितप्रकारतयैव रक्तदण्डस्यैव निरुक्तविशिष्टवैशिष्ट्यधीविषयतेत्येवमवधारण सम्भवति, यतो 'रक्तदण्डद्रव्यवान्' इति ज्ञानीयप्रकारतानिरूपितावच्छेदकतापर्याप्तिसम्बन्धेन रक्तत्व दण्डत्व-द्रव्यत्वेषु त्रिषु वर्तत इति पर्याप्तिसम्बन्धावच्छिन्नतादृशावच्छेदकतानिष्ठनिरूपकतानिरूपिताधारता रक्तत्व-दण्डत्व द्रव्यत्वैतद्गतत्रित्वावच्छिन्ना न तु रक्तत्व दण्डत्वनिष्ठद्वित्वावच्छिन्ना, तादृशद्वित्वावच्छिन्नाधारता तु रक्तदण्डवानिति ज्ञानीयप्रकारतानिरूपितावच्छेदकत्वनिष्ठपर्याप्तिसम्बन्धनिरूपकतानिरूपितैवेति भवति 'रक्तदण्डद्रव्यवान्' इत्यतो 'रक्तदण्डवान्' इत्यस्य वैलक्षण्यम्, तादृशप्रकारतयैव रक्तदण्डस्यैव विशिष्टवैशिष्ट्यधीविषयतेत्यवधारणं च सुसङ्गतमित्यत आह- **रक्तत्व-दण्डत्वनिष्ठे**ति- रक्तत्व दण्डत्वगतं यद् द्वित्वं तदवच्छिन्नानुयोगितानिरूपिका या पर्याप्तिस्तत्सम्बन्धावच्छिन्ननिरूपकतानिरूपिताधारताका याऽवच्छेदकता तन्निरूपितप्रकारताकबुद्धित्वं रक्तदण्डवैशिष्ट्यबुद्धित्वमित्येवमभ्युपगमेऽतिगौरवादित्यर्थः, किञ्च गुणवद्दण्डवानितिबुद्धितो रक्तदण्डवानितिबुद्धेर्वैलक्षण्य न रक्तत्वदण्डत्वोभयावच्छिन्नप्रकारताकबुद्धित्वेन सम्भवति गुणवद्दण्डवानिति बुद्धेरपि गुणत्वेन गुणमात्रस्य दण्डविशेषणत्वे रक्तरूपस्यापि गुणत्वेन दण्डविशेषणतया रक्तत्वदण्डत्वोभयावच्छिन्नप्रकारताकबुद्धित्वादतस्ततो वैलक्षण्याय रूपत्वावान्तरसामान्यरूप यद्रक्तत्व तद्विशिष्ट यद्रक्तरूपं यच्च दण्डत्वं तदुभयपर्याप्तावच्छेदकताकप्रकारताकबुद्धित्वमेव रक्तदण्डवैशिष्ट्यबुद्धित्वं वाच्यम्, 'गुणवद्द्रव्यवान्' इति बुद्धिप्रकारताया च गुणत्वेनैव रक्तरूपस्यावच्छेदकत्वं न तु रक्तत्वविशिष्टस्य तत्त्वमिति भवति तद्वारणम्, किन्तु रक्तत्वेन पीतस्य दण्डेऽवगाहक यद् 'रक्तदण्डवान्' इति ज्ञान तदपि रक्तदण्डवैशिष्ट्यावगाहित्वेन सम्मतम्, तस्य सङ्ग्रहो न भवेत्, तज्ज्ञानीयप्रकारताया रक्तत्वविशिष्टं यद् रक्तरूपं तद्-दण्डत्वोभयपर्याप्तावच्छेदकताकत्वाभावादित्याह- **'गुणवान् दण्डवान्' इत्यत** इति-एतस्य स्थाने 'गुणवद्दण्डवानित्यत' इति पाठो युक्तः। **रक्तत्वविशिष्ट** इत्यत्र रक्तत्वपदेन रूपत्वावान्तरसामान्यरूपं रक्तत्वं ग्राह्यम्। स्वसम्मतं विशिष्टवैशिष्ट्यबुद्धित्वस्वरूपमुपसंहरति- **तस्मादि**ति- 'रक्तदण्डद्रव्यवान्' इत्यत्र रक्तं यद् दण्डात्मकं द्रव्य तद्वानित्येव स्वरूपपर्यवसाने रक्तत्वत्वावच्छिन्नावच्छेदकतानिरूपकं द्रव्यत्वावच्छिन्नप्रकारत्वमेव न दण्डत्वावच्छिन्नप्रकारत्वमिति तद्व्यवच्छेदः, 'गुणत्ववद्द्रव्यवान्' इत्यत्र दण्डत्वावच्छिन्नप्रकारतानिरूपितावच्छेदकता गुणत्वावच्छिन्ना न रक्तत्वत्वावच्छिन्नेति तद्व्यवच्छेदः, रक्तत्वत्वपदेनात्र रूपत्वावान्तरसामान्य रक्तत्वमेव विवक्षितम्, रक्तत्वेन दण्डे पीतावगाहिबोधीयप्रकारतानिरूपिता पीतनिष्ठावच्छेदकताऽपि रक्तत्वत्वावच्छिन्ना भवत्येवेति तत्सङ्ग्रहश्चेति। अनुमितिं प्रति परामर्शस्य यद् विशिष्टवैशिष्ट्यावगाहित्वेन कारणत्व तत्रापि कारणतावच्छेदक विशिष्टवैशिष्ट्यबुद्धित्वमित्थमेव निर्वक्तव्यमित्याह- **अनुमितिहेतुपरामर्शेऽपी**ति। **हेतुतावच्छेदकावच्छिन्ने**ति- 'हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणहेतुमान् पक्षः' इत्याकारकः परामर्शोऽनुमितिकारणम्, निरुक्तपरामर्शीयपक्षनिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतायाः साक्षादवच्छेदको हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदक स्वरूपसम्बन्धेन वृत्तित्वं च, यद् यत्र विशेषण तत् तन्निष्ठावच्छेदकताया अवच्छेदकम्, असाधारणधर्मस्यावच्छेदकत्वेऽपि तत्तद्धर्मावच्छिन्नत्वेनैव तत्तद्धर्मिनिष्ठावच्छेदकता निविशते विशेषणान्तरनिष्ठावच्छेदकतानिरूपितत्वेनावगतिसौलभ्याय, एवं च वृत्तित्वेऽधिकरणं तत्र साध्यं तत्र साध्यतावच्छेदकं तत्राभावस्तत्र प्रतियोगितयाऽवच्छेदकत्वं तत्र प्रतियोगिता तत्राभावस्तत्र वृत्तित्वं तत्राधिकरणं तत्र हेतुस्तत्र हेतुतावच्छेदकमसाधारणधर्मतया विशेषणम्, तदवलम्बनेन 'हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठावच्छेदकतानिरूपित' इत्यादि निवेशः, हेत्वधिकरणस्य साध्याधिकरणस्य चाधिकरणत्वेने प्रवेशो नाभिलषित इत्यधिकरणत्वावच्छिन्नत्वेन नाधिकरणनिष्ठावच्छेदकतानिवेश आदृतः, अधिकरणत्वेन तत्प्रवेशस्या-

**हेतुनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपिताधेयत्वत्वावच्छिन्नावच्छेदकतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरूपितवह्नित्वनिष्ठावच्छेदकतानिरूपितसाध्यनिष्ठावच्छेदकतानिरूपिताधेयत्वत्वावच्छिन्नावच्छेदकतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वमेव निवेश्यताम्, न च, यत्र व्याप्ति धूमत्वयोः 'एकत्र द्वयम्' इति रीत्यैव हेतुनिष्ठप्रकारतावच्छेदकत्वं तादृशपरामर्शादनुमित्यापत्तिः, इष्टापत्तौ च विरोध-व्यभिचारयोर्हेत्वाभासत्वानुपपत्तिः, तादृशज्ञानस्य तज्ज्ञानाप्रतिबद्ध्यत्वात्, इति तद्वारणाय व्याप्तिप्रकारतानिरूपितविशेष्यतात्वेन धूमत्वावच्छिन्नप्रकारता निवेशनीया, तत्त्वेन धूमत्वावच्छिन्नत्वं च धूमप्रकारतायां तत्रैव**

---

भिमतत्वे तु हेतुनिष्ठावच्छेदकतानिरूपिताधिकरणत्वावच्छिन्नाधिकरणनिष्ठावच्छेदकतानिरूपितेत्येव वक्तव्यम्, अधिकरणनिष्ठावच्छेदकतेत्युक्त्यैवाधिकरणत्वावच्छिन्नत्व तत्र लभ्यते, अत एव यत्रासाधारणधर्मावच्छिन्नत्वेन निवेशन न तत्र धर्मिनिष्ठतयाऽवच्छेदकत्वोपादानम्, तेनाधेयत्वत्वावच्छिन्नत्वेनोपादाने आधेयत्वनिष्ठत्वेन नोपादानमेवमग्रेऽपि, **'प्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरूपित'** इत्यस्य स्थाने 'प्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरूपित' इति पाठो युक्तः, हेतुतावच्छेदकादीनां सामान्यत एव निवेशे कस्यचिद् विशेषत उपादानं न सङ्गतिमङ्गतीति **'वह्नित्वनिष्ठावच्छेदकता'** इति स्थाने 'साध्यतावच्छेदकनिष्ठावच्छेदकता' इति पाठो युक्तः, **'साध्यनिष्ठावच्छेदकतानिरूपिताधेयत्वत्वावच्छिन्नावच्छेदकता'** इति स्थाने 'साध्यनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपिताधेयत्वत्वावच्छिन्नावच्छेदकता' इति पाठो युक्त.। ननु पर्वते धूमव्यक्ति तत्र धूमव्यापकवह्निसामानाधिकरण्य-धूमत्वे अवगाहमाना या 'एकत्र द्वयम्' इति रीत्या बुद्धिः साऽपि 'हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठावच्छेदकतानिरूपित' इत्यादिनिरुक्तकारणतावच्छेदकधर्माक्रान्ता, यतस्तत्र धूमनिष्ठप्रकारताया धूमत्वावच्छिन्नत्वस्य निरुक्तव्याप्तिनिष्ठावच्छेदकतानिरूपितत्वस्यास्त्येव सत्त्वमिति ततोऽप्यनुमित्यापत्तिः, नेयमापत्तिरिष्टापत्तितया परिहर्तुं शक्या, तथा सत्यनुमितिकारणस्य निरुक्तपरामर्शस्य विरोध-व्यभिचारप्रतिबध्यतावच्छेदकं यद् व्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताबुद्धित्वं तदनाक्रान्तत्वेन तं प्रति विरोध-व्यभिचारज्ञानयोरप्रतिबन्धकतया विरोध-व्यभिचारयोर्हेत्वाभासत्वमेव न स्यात्, इत्येकत्र द्वयमिति रीत्या जायमानपरामर्शस्यानुमितिकारणत्ववारणाय व्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यतात्वेन हेतुप्रकारता निवेशनीया, एव च तत्र व्याप्त्यवच्छिन्नत्वनिवेशनमफलमित्याशङ्क्य प्रतिक्षिपति- **न चेति**-अस्य 'वाच्यम्' इत्युत्तरेण सम्बन्धः। **तादृशपरामर्शात्** हेत्वंशे 'एकत्र द्वयम्' इति रीत्या व्याप्तिहेतुतावच्छेदकोभयावगाहिपरामर्शात्। **इष्टापत्तौ च** निरुक्तपरामर्शादनुमित्यापत्तेरिष्टापत्तिरूपतयाऽदोषत्वाभ्युपगमे च। **विरोधेति**- साध्यव्यापकीभूताभावप्रतियोगिहेतुलक्षणविरोधस्य पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टनिश्चयत्वेनानुमितिप्रतिबन्धकस्वज्ञानविषयत्वेन हेत्वाभासत्वसम्भवेऽपि साध्यासामानाधिकरण्यात्मकहेतुनिष्ठविरोधस्य साध्यसामानाधिकरण्यघटितव्याप्तिज्ञानविरोधिज्ञानविषयत्वेनैव हेत्वाभासत्वस्य स्वीकृततया तन्निश्चयस्य व्याप्तिघटकीभूतसाध्यसामानाधिकरण्यनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नव्याप्तिप्रकारकहेतुविशेष्यकज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालितायामेव विरोधस्य तद्विषयस्य हेत्वाभासत्व भवेत्, निरुक्तपरामर्शस्य तु निरुक्तप्रतिबध्यताशून्यत्वेनोक्तप्रतिबन्धकताशून्यनिश्चयविषयत्वेन विरोधस्य हेत्वाभासत्व न स्यात्, एव व्यभिचारस्यापि व्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनिश्चयविषयत्वेनैव हेत्वाभासत्वं नान्यथा निरुक्तपरामर्शस्य तु व्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताकत्वलक्षणप्रतिबध्यतावच्छेदकधर्मानाक्रान्तत्वेनाप्रतिबध्यत्वे तदप्रतिबन्धकनिश्चयविषयस्य व्यभिचारस्यापि हेत्वाभासत्व न स्यादित्यर्थ । **तादृशज्ञानस्य** 'एकत्र द्वयम्' इत्यादिरीत्या हेत्वंशव्याप्तिहेतुतावच्छेदकोभयावगाहिनः परामर्शस्य। **तज्ज्ञानाप्रतिबध्यत्वात्** विरोधव्यभिचारज्ञानाप्रतिबध्यत्वात्। **इति** एतस्माद् हेतोः। **तद्वारणाय** तादृशपरामर्शादनुमित्यापत्तिवारणाय। **व्याप्तीति**- 'एकत्र द्वयम्' इति रीत्या व्याप्ति-हेतुतावच्छेदकोभयप्रकारक-हेतुव्यक्तिविशेष्यकपरामर्शे च व्याप्तिनिष्ठप्रकारतानिरूपितहेतुनिष्ठविशेष्यता हेतुतावच्छेदकनिष्ठप्रकारतानिरूपितैव न तु हेतुतावच्छेदकावच्छिन्नेति नोक्तरूपेण तस्य कारणत्वमतो नोक्तपरामर्शादनुमित्यापत्तिः। **तत्त्वेन** व्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यतात्वेन, यत्र धूमत्वस्य व्याप्तिधर्मितावच्छेदकत्वं तत्रैव धूमप्रकारतायां तत्त्वेन धूमत्वावच्छिन्नत्वमित्यन्वयः। **अन्यत्र तु** यस्मिन् ज्ञाने न धूमत्वस्य व्याप्ति-

यत्र धूमत्वस्य व्याप्तिधर्मितावच्छेदकत्वमन्यत्र तु धूमप्रकारकत्वेनैवेति नातिप्रसङ्गः, तथा च प्रागुक्तरीत्या व्याप्यत्वावच्छिन्ननिवेशनमफलमिति वाच्यम्, व्याप्यंशे संशयाकारज्ञानादनुमितिवारणाय तत्तदंशे निश्चयनिवेशापेक्षया लाघवादुक्तरीत्या व्याप्यत्वावच्छिन्ननिवेशस्यैवोचितत्वात्, न चायमेकान्तोऽपि युक्तः, परस्परानिरूपितावान्तरावयवस्थानीयविषयताया अप्यनुभवात्, न च विशिष्टपर्याप्तप्रकारतैकान्तपक्षोऽपि युक्तः, विशिष्टपर्याप्तप्रकारतान्तरस्यापि सिद्ध्यापत्तेः, तत्सिद्धाविष्टापत्तिः, दण्डविशिष्टपुरुषविशिष्टभूतलपर्याप्तप्रकारताकबुद्धौ च दण्डांशे निश्चयात्मकदण्डविशिष्टपुरुषवद्भूतलमिति निश्चयो हेतुः,

---

धर्मितावच्छेदकत्वं तस्मिन् ज्ञाने पुनः । '**धूमप्रकारत्वेनैव**' इति स्थाने 'धूमप्रकारतात्वेनैव' इति पाठो युक्तः, तस्य धूमप्रकारतात्वेनैव धूमप्रकारतायां धूमत्वावच्छिन्नत्व न तु व्याप्तिप्रकारतानिरूपितविशेष्यतात्वेनेत्यर्थः । **नातिप्रसङ्ग** इति– 'एकत्र द्वयम्' इति रीत्या धूमे व्याप्ति-धूमत्वोभयावगाहिपरामर्शस्य व्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नधूमत्वावच्छिन्नप्रकारताकनिश्चयत्वलक्षणानुमितिकारणतावच्छेदकधर्मानाक्रान्तत्वान्न ततोऽनुमित्यापत्तिरित्यर्थः । **तथा च** अनुमित्यापत्तिवारणाय व्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यतात्वेन धूमत्वावच्छिन्नप्रकारतानिवेशस्यावश्यकत्वे च । **प्रागुक्तरीत्या** हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठावच्छेदकतानिरूपितेत्यादिप्रकारेण । **व्याप्यत्वावच्छिन्ननिवेशनं** व्याप्तिनिष्ठावच्छेदकतानिरूपितेति निवेशनम् । निषेधे हेतुमाह– **व्याप्त्यंशे संशयाकारज्ञानादिति**– व्याप्यंशे संशयाकारस्यापि परामर्शस्य व्याप्तिनिष्ठप्रकारतानिरूपितहेतुनिष्ठविशेष्यताकत्वस्य भावेन निरुक्तकारणतावच्छेदकधर्माक्रान्तत्वेन ततोऽनुमित्यापत्तिः स्यादेवेति व्याप्तिनिष्ठप्रकारतानिरूपिता या व्याप्यभावनिष्ठप्रकारत्वानिरूपिता विशेष्यता तदभिन्नहेतुतावच्छेदकावच्छिन्नप्रकारताकज्ञानं व्याप्यंशे निश्चयस्वरूप कारणं वाच्यमिति गौरव स्यात्, प्रागुक्तरीत्या व्याप्तिनिष्ठावच्छेदकतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताकज्ञानत्वेन परामर्शस्यानुमितिकारणत्वे तु तथाभूतपरामर्शस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिबुद्धिरूपस्य विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकनिश्चयजन्यत्वेन तत्पूर्वं व्याप्तिनिश्चयस्यावश्यं सद्भावेन तस्य व्याप्तिसशयविरोधितया ततो जायमानज्ञाने व्याप्यंशे संशयरूपत्वाभावेन व्याप्यंशे निश्चयरूपत्वस्यानिवेशनीयत्वेन लाघवमित्यतो व्याप्यत्वावच्छिन्ननिवेशस्यैवोचितत्वादित्यर्थः । विशिष्टवैशिष्ट्यावगाहिज्ञानलक्षणपरामर्शे तत्तदवच्छेदकतानिरूपितप्रकारत्वाख्यविशिष्टवैशिष्ट्यविषयतैव समस्तीत्येकान्तोऽपि न साधीयान्, तत्र परामर्शे परस्परानिरूपितव्याप्तिस्वरूपसन्निविष्टतत्तत्पदार्थनिष्ठविषयताऽपि समस्त्येव यामुपादाय केवलतत्तत्पदार्थविषयकज्ञानविषयविषयकत्वमपि परामर्शेऽनुभवपथमायातीत्याह– **न चेति**– 'युक्त.' इत्यनेनान्वयः । **अयं** प्रागुक्तरीत्योपवर्णितस्वरूप. परामर्श. । **एकान्तः** तत्तदवच्छेदकतानिरूपितहेतुनिष्ठप्रकारताशाल्येव । अयुक्तत्वे हेतुमाह– **परस्परानिरूपितेति**– निरूप्यनिरूपकभावलक्षणशृङ्खलानालिङ्गितेत्यर्थः । **अवान्तरेति**– हेत्वधिकरणाद्यखिलघटितव्याप्तिस्वरूपघटकेत्यर्थः । **अवयवस्थानीयेति**– निरूप्यनिरूपकभावलक्षणशृङ्खलाबद्धविषयतासमष्टिस्वरूपनिष्पन्ना विशिष्टवैशिष्ट्यविषयताऽवयविस्थानीया, तदन्तर्गतैकैकविषयताऽवयवस्थानीयेत्यर्थ. । न साऽपलपितुं शक्याऽनुभूयमानत्वादित्याह– **अनुभवादिति**– यथा तत्र विशिष्टवैशिष्ट्यविषयतानुभूयते तथा प्रत्येकविषयताऽपीत्यावेदनाय '**अपि**' इति । विशिष्टवैशिष्ट्यबोधे 'रक्तदण्डवान्' इत्यत्र रक्तत्वविशिष्टदण्डपर्याप्तैव प्रकारता समस्तीत्येकान्तोऽपि न युक्त., तत्र रक्तत्वे दण्डत्वे दण्डे च प्रत्येकमविशिष्टेऽपि प्रकारत्वानामनुभवात्, तत एव च तज्ज्ञानस्य रक्तत्वादिप्रकारकज्ञानैः समं समानप्रकारकत्वमप्यनुभववीथीमवतरतीत्याह– **न चेति**– अस्य 'युक्त' इत्यनेनान्वयः । अयुक्तत्वे हेतुमाह– **विशिष्टेति**– '**विशिष्टपर्याप्तप्रकारतान्तरस्यापि**' इति स्थाने 'विशिष्टापर्याप्तप्रकारतान्तरस्यापि' इति पाठो युक्तः । तादृशविषयत्वानामनुभूयमानत्वेन तदापादनमुक्तदिशा भवदिष्टापत्तिरूपतयैव परेणापि स्वीकारेणानुभवमुखमवलोकयतेत्याह– **तत्सिद्धाविष्टापत्तिरिति**– विशिष्टवैशिष्ट्यबोधे परस्परानिरूपिताविषयताविशिष्टापर्याप्तप्रकारतान्तरसिद्धाविष्टापत्तिरित्यर्थः । एवंदिशा यद्यपि बह्व्यो विषयताः सन्त्येव विशिष्टवैशिष्ट्यबोधे, परं ताः सर्वा क्षयोपशमविशेषजन्यतावच्छेदकतयैवोपगमार्हाः, अत्र परेषां कार्यकारणभावान्तरावलम्बनं गौरवप्रतिहत न युक्तमित्यावेदयितुमाह– **दण्डविशिष्टेति**– दण्डिपुरुषवद्भूतलवानिति दण्डविशिष्टपुरुषविशिष्टभूतलपर्याप्तप्रकारताकबुद्धौ 'दण्डिपुरुषवद्भूतलम्' इति निश्चयो दण्डविशिष्टपुरुषवैशिष्ट्यावगाही दण्डांशे निश्चयात्मको हेतुः, तेन दण्डांशे संशयात्मकात् पुरुषांशे निश्चयात्मकाद् दण्डविशिष्टपुरुषवैशिष्ट्यावगाहि 'दण्डदण्डाभाववत्पुरुषवान्' इति ज्ञानान्न दण्डविशिष्टपुरुषविशिष्टभूतलवानिति दण्डविशिष्टपुरुषविशिष्टभूतलवैशिष्ट्यावगाहिज्ञानं ततो मवेश्च दण्डांशे 'विशेष्ये विशेषणम्' इति रीत्या दण्डवत्पुरुषवद्भूतलवानिति ज्ञानमिष्टमेवेति तदापादनं नानिष्टावहमित्याह–

**अत एव दण्डांशे पुरुषांशे च संशय-निश्चयात्मकतादृशज्ञानाद् दण्डांशे 'विशेष्ये विशेषणम्' इति रीत्या पुरुषांशे विशिष्टनिरूपितवैशिष्ट्यविषयताशालिज्ञानापत्तिरित्यभ्युपगमे च सविशेषणविशिष्टवैशिष्ट्यबुद्धि-स्थले नवत्यंशे निश्चयात्मकमेकं ज्ञानहेतुभूतं कल्पनीयम्, ततः पूर्वं चैकैकह्रासेनाष्टानवतिज्ञानानि पश्चानुपूर्व्या हि तु भूतानि कल्पनीयानीति सर्वमिदमनुभवविरुद्धम्। तत्र विशृङ्खलोपस्थिततावद्विशेष-णानां 'विशेष्ये विशेषणम्' इति रीत्या बोधस्वीकारे च तत्तदंशेऽनुभूयमानस्य निश्चयाकारस्य नियामक-स्तत्र संशयसामग्र्यभाव एव वाच्यः, तथा च विशिष्टवैशिष्ट्यविषयता 'वह्निव्याप्तितदभाववद्धूमवान्' इत्यादित इव 'पर्वतो वह्निव्याप्यधूमवान् नवा' इत्यादितोऽपि व्यावृत्तस्तत्तदवच्छिन्ननियामकश्च तत्तत्-**

---

**अत एवेति**–दण्डविशिष्टपुरुषविशिष्टभूतलपर्याप्तप्रकाराताकबुद्धौ दण्डांशे निश्चयात्मक'दण्डविशिष्टपुरुषवद् भूतलम्' इति निश्चयस्य हेतुत्वादेवेत्यर्थः। **इत्यभ्युपगमे च** उक्तदिशा परैरित्थमभ्युपगमे च। **सविशेषणविशिष्टवैशिष्ट्यबुद्धिस्थले नवत्यंशे'** इत्यस्य स्थाने 'शतविशेषणवैशिष्ट्यबुद्धिस्थले नवनवत्यंशे' इति-पाठः, **'ज्ञानहेतुभूतं'** इत्यस्य स्थाने 'ज्ञानं हेतुभूतं' इति पाठः, **'हि तु भूतानि'** इत्यस्य स्थाने 'हेतुभूतानि' इति पाठश्च युक्तः। अयमर्थः–विशेष्यविशेषणभावा-पन्नयावद्विशेषणविशिष्टस्य वैशिष्ट्यबुद्धौ यावत्सु विशेषणेषु निश्चयात्मक विशेषणतावच्छेदकप्रकारकज्ञानं यदि हेतुरभ्युप-गम्यते तदा विशेष्यविशेषणभावशृङ्खलावबद्धशतत्वसङ्ख्यावच्छिन्नविशेषणवैशिष्ट्यबुद्धौ नवनवतिसङ्ख्यावच्छिन्ना ये विशेषण-विशेषणत्वाद् विशेषणताव‌च्छे‌दकधर्मास्तत्प्रकारक ज्ञानं नवनवत्यशे निश्चयात्मकमेक कारण कल्पनीयम्, तदपि ज्ञानमष्टानवति-सङ्ख्यावच्छिन्नधर्मविशिष्टस्य वैशिष्ट्यावगाहीति तत्राष्टानवतिसङ्ख्यावत्सु विशेषणतावच्छेदकधर्मेषु निश्चयात्मकमष्टानवति-संख्यावच्छिन्नविशेषणतावच्छेदकप्रकारकमेकं ज्ञानं कारण कल्पनीयम्, तदपि ज्ञान सप्तनवतिसङ्ख्यावच्छिन्नधर्मविशिष्टस्य वैशि-ष्ट्यावगाहीति तत्र सप्तनवतिसङ्ख्यावत्सु विशेषणतावच्छेदकधर्मेषु निश्चयात्मक सप्तनवतिसङ्ख्यावच्छिन्नविशेषणतावच्छेदक-प्रकारकं ज्ञानं कारण कल्पनीयमित्येव पश्चानुपूर्व्या हेतुभूतान्यष्टानवतिज्ञानानि विशिष्टवैशिष्ट्यबोधहेतुभूतानि कल्पनीयानीति परमते सर्वमिदमनुभवविरुद्धमिति। उक्तदिशा विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वे यथा परे-षामनुभवविरुद्धानेककारणपरिकल्पनदोषस्तथा तत्रैव विशेषणतावच्छेदकीभूततत्तद्धर्मप्रकारकनिश्चयाभावदशायां 'विशेष्ये विशेषणम्' इति रीत्या जायमाने तत्तद्धर्मांशे निश्चयात्मके ज्ञाने तत्तद्धर्मांशनिश्चयत्वप्रयोजकतया तत्तधर्मांशसशयप्रयोजकतत्तत्सामग्र्य-भावकल्पनदोषोऽपीत्याह– **तत्रेति**– शतविशेषणविशिष्टवैशिष्ट्यबुद्धिस्थल इत्यर्थ.। **विशृङ्खलोपस्थिततावद्विशेषणा-नामिति**– उत्तरज्ञाने स्वस्वविशेष्यत्वेन भासमानतत्तद्विशेषणविशेषणतया पूर्वज्ञानागोचरीकृतनवनवत्यादिसङ्ख्यावच्छिन्नविशेषणाना विशेष्यविशेषणभावानापन्नत्वलक्षणस्वातन्त्र्येण पूर्वज्ञानविषयीभूतशतसङ्ख्यावच्छिन्नविशेषणानामित्यर्थः। **तत्र** तत्तदशे। यथा च धूमांशे वह्निव्याप्तिरूपविशेषणस्य संशयात्मकात् परामर्शान्न भवति वह्न्यनुमितिस्तथा पर्वतांशे वह्निव्याप्तिविशिष्टधूमरूपविशे-षणस्य संशयात्मकपरामर्शादपि न भवति पर्वते वह्न्यनुमितिः, एव महानसादिलक्षणविशेष्ये वह्निव्याप्यधूमस्य सशयात्मकपरा-मर्शादपि महानसादौ न भवति वह्न्यनुमितिरिति धूमलिङ्गकवह्न्यनुमितित्वावच्छिन्नकार्यतानिरूपितवह्न्यव्याप्यधूमविषयकपरामर्श-निष्ठकारणतावच्छेदिका विशिष्टवैशिष्ट्यविषयता यथा 'वह्निव्याप्तिमद्वह्निव्याप्यभाववद्धूमवान्' इति ज्ञानाद् वह्न्यनुमित्यजनकाद् व्यावृत्ता तथा 'पर्वतो वह्निव्याप्यधूमवान् नवा' इति ज्ञानादपि व्यावृत्ता, एवमालोकादिलिङ्गकपरामर्शादपि वह्न्यनुमितिर्भवति, तत्रालोकलिङ्गकवह्न्यनुमितित्वावच्छिन्नकार्यतानिरूपितवह्निव्याप्यालोकादिविषयकपरामर्शनिष्ठकारणतावच्छेदिकाऽपि विशिष्ट-वैशिष्ट्यविषयता यथा 'वह्निव्याप्तिमद्वह्निव्याप्यभाववदालोकवान्' इत्यादिज्ञानाद् वह्न्यनुमित्यजनकाद् व्यावृत्ता तथा 'पर्वतो वह्निव्याप्यालोकवान् नवा' इत्यादिज्ञानादपि पर्वतादिविशेष्यकवह्न्यनुमित्यजनकाद् व्यावृत्ता स्वीकरणीयेति तादृशतादृशविषयता-विशेषावच्छिन्ननियामकस्तत्तत्सशयसामग्र्यभावोऽभ्युपेय इति कल्पनागौरव परेषा दुष्परिहरणीयमित्याह– **तथा चेति**– तत्तदशेऽनुभूयमाननिश्चयाकारप्रयोजकतया तत्तदंशे संशयसामग्र्यभावस्याभ्युपगमे चेत्यर्थः। विशिष्टवैशिष्ट्यविषयत्वाना बहु-त्वाद् **विशिष्टवैशिष्ट्यविषयता** इति बहुवचनान्तं बोध्यम्, **तदभावेति**– वह्निव्याप्यभावेत्यर्थ। **'इत्यादितः'** इत्यादि-पदाद् 'वह्निव्याप्तितदभाववदालोकवान्' इत्यादेर्ग्रहणम्। **'पर्वतो वह्निव्याप्यधूमवान् नवा'** इत्यादितोऽपि इत्यत्रादि-पदात् 'पर्वतो वह्निव्याप्यालोकवान् नवा' इत्यादेर्ग्रहणम्। **'व्यावृत्तस्तत्तदवच्छिन्न'** इति स्थाने 'व्यावृत्ता, तत्तदव-च्छिन्न' इति पाठो युक्त, **'व्यावृत्ताः'** इति च 'विशिष्टवैशिष्ट्यविषयता' इति पूर्वेणान्वितम्। **तत्तदवच्छिन्नेति**– विशिष्टवैशिष्ट्यविषयता यावन्तस्तत्प्रत्येकावच्छिन्नेत्यर्थः। **तत्तत्संशयसामग्र्यभाव** इति– 'विशेष्ये विशेषणमिति रीत्या

**संशयसामग्र्यभाव एवेति विशेष्यताविशेषपर्यनुयोगे किमुत्तरम् ? तस्मात् क्षयोपशमविशेषजन्यतावच्छेदिकाः समनियता एवैता विषयिता अन्यापेक्षा भेदेन प्रतीयमाना अंशसमुदितपर्याप्ता अनेका प्रतिपत्तव्याः, ग्राह्यस्येव ग्राहकस्य चित्रस्वभावस्यापेक्षयैव विवेचयितुं शक्यत्वात्, हन्त ! एवमखण्डोऽपि विषयताविशेषः सिध्येत् सामान्यदृष्ट्या तथाप्यनुभवात्, तया च तेनैव परामर्शादेर्हेतुत्वापत्तिरिति चेत् ?**

निश्चीयमानतया विशिष्टवैशिष्ट्यबोधविषयीक्रियमाणतत्तद्धर्मविषयकसंशयसामग्र्यभाव इत्यर्थः । उक्तदिशा प्रकारताविशेषलक्षणविशिष्टवैशिष्ट्यविषयतानियामकः परैरुपदर्शितो भवति, न च प्रकारतालक्षणविषयताविशेषनियामक एव विशेष्यताविशेषनियामक इति तत्र विशेष्यताविशेषस्य किं नियामकमिति जिज्ञासायां तन्नियामकमप्यन्यदेव किञ्चिद् वाच्यमिति तन्नियामकविशेषकल्पनगौरवमपि परमतेऽपरिहार्यमेवेत्याशयेनाह— **विशेष्यताविशेषे**ति—विशिष्टपर्याप्तप्रकारतानिरूपितविशेष्यतातो विशेष्ये विशेषणमितिज्ञानीयप्रकारतानिरूपितविशेष्यता विलक्षणैव तन्नियामकं किमिति **पर्यनुयोगे** प्रश्ने **किमुत्तरं** नाकल्पितमुत्तरं तत्र सम्भवतीति किञ्चिन्नियामकं परिकल्प्यैवोत्तरं ते स्यात् तत्र च कल्पनागौरवमुपतिष्ठते, एवं प्रकारता विशेष्यत्वयोर्विलक्षणयोरनेकप्रकारयोरिव संसर्गत्वाख्यविषयत्वस्यापि विलक्षणस्यावश्यं स्वीकरणीयतया तन्नियामकमप्यन्यदेव किञ्चित् परेण वाच्यमिति तत्कल्पनागौरवमपीत्याशयः । इत्थमपेक्षाभेदेनैका-ऽनेकस्वभावत्वं ग्राह्यस्य ग्राहकस्यानभ्युपगच्छतामेकान्तवादिना मननं न युक्तमित्येतावतोपपाद्य, 'यथा च ग्राह्ये एका-ऽनेकतया चित्रस्वभावत्वमानुभविकं तथा ग्राहकज्ञानेऽपि' इत्यादि 'सप्तनयात्मकमहावाक्यार्थज्ञाने एकाऽवशिष्टा प्रमाणाकारता, अनेकाश्चांशिक्यो नयविषयता. परस्परसंयोगजाश्च बह्व्योऽनुभूयन्ते' इत्यन्तं स्वयं यत् प्रतिज्ञातं तत्समर्थनं च विशिष्टवैशिष्ट्यबोधस्थलीयनैयायिकाभिमतचतुर्विधविभजनकदर्थनमुखेन सङ्क्षेपतः परिसमाप्योपसंहरति— **तस्मादि**ति— उक्तदिशा परेषां विशिष्टवैशिष्ट्यबुद्धिस्थले तत्कार्यकारणभावपरिकल्पनायामनुभवविरुद्धानेककारणपरिकल्पनगौरवतोऽपेक्षाविनिर्मुक्तैकान्तपक्षस्यानुपपद्यमानत्वादित्यर्थः । **क्षयोपशमे**ति— 'रक्तदण्डवान् पुरुषः' इत्यादिविशिष्टवैशिष्ट्यज्ञानं तावन्मतिज्ञानम्, तच्च मतिज्ञानावरणीयकर्मक्षयोपशमविशेषसमुत्थमिति तत्र यावन्त्यो विशिष्टवैशिष्ट्यविषयितास्तत्तद्घटकधर्मनिरूपिताः परस्परानिरूपिता अनेका अंशपर्याप्ताः परस्परविशेष्यविशेषणभावशृङ्खलाबद्धत्वप्रयुक्तवैशिष्ट्यभावलब्धात्मलाभविशिष्टवस्तुस्वरूपनिरूपिता परस्परनिरूप्यनिरूपकभावलब्धात्मलाभैकविषयतानिरूपितैकविषयिताः ताः सर्वा अनेकांशसमुदितांशिस्वरूपज्ञानगतत्वादंशपर्याप्ता अंशिपर्याप्ता भवन्त्येकज्ञानगतत्वात् समनियताः, अंशानामपि परस्परमंश्यभेदतोऽभिन्नत्वमिति विभिन्नतदंशगतानामपि समनियतत्वम्, तावद्विषयिताविशिष्टमतिज्ञानात्मकविशिष्टवैशिष्ट्यबोधस्यावरणक्षयोपशमजन्यत्वे तासां सर्वासामपि निरुक्तक्षयोपशमविशेषजन्यतावच्छेदकत्वमिति तावद्विषयिताविशिष्टवैशिष्ट्यबोधं प्रति मतिज्ञानावरणीयकर्मक्षयोपशमविशेषः कारणमित्येकविधकार्यकारणभाव एव स्याद्वादिभिः कल्प्यते, निरुक्तक्षयोपशमविशेषजन्यतावच्छेदकविषयिताश्चैकस्मिन्नपि ज्ञाने विभिन्नापेक्षाभेदेनैवानुभूयन्त इति केषाञ्चिदपेक्षाभेदेनांशपर्याप्ततयाऽनुभूयमानानां तत्तन्नयनिरूपितत्वमंशिपर्याप्ततयाऽनुभूयमानायाश्च प्रमाणनिरूप्यत्वमपि सुघटमेव, तावतैवानेकस्वभावस्य ज्ञानस्य प्रमाणापेक्षयैकत्वं नयापेक्षयाऽनेकत्वं चेत्येवं चित्रस्वभावस्य ज्ञानस्य ग्राह्यस्येवापेक्षाभेदेन विवेचनं सुशकमेवेत्यपेक्षाख्यबोधत्वलक्षणं नयत्वमुपपद्यतेतरामित्यर्थः । **'अन्यापेक्षा भेदेन'** इति यथाश्रुतपाठे **अन्यापेक्षाः** स्वस्वाभ्युपगन्तृनयविशेषप्रमाणापेक्षाः, **भेदेन** परस्परं भेदेन, **प्रतीयमाना** अनुभूयमाना इत्यर्थः, 'अन्यापेक्षाभेदेन' इति समस्तपाठे तु अन्यः परस्परं भिन्नो यो नैगमसङ्ग्रहादिः, यच्च नयाद् भिन्नं प्रमाणं तल्लक्षणो योऽपेक्षाभेदो निमित्तभेदस्तेन प्रतीयमाना इत्यर्थो बोध्यः । ननु यथा विशिष्टवैशिष्ट्यबोधे प्रमाणप्रयोज्या समुदितपर्याप्तैका विषयता तन्निरूपितैका विषयिता वा, विभिन्ननयप्रयोज्या अंशपर्याप्ता अनेका विषयतास्तन्निरूपिता अनेका विषयिता वाऽनुभूयमानत्वादभ्युपगम्यन्ते, तथा सङ्ग्रहनयेनाखण्डसन्मात्राभ्युपगन्त्राऽखण्डमपि वस्तु तत्र प्रतीतिपदमारोहतीति सङ्ग्रहनयापेक्षयाऽखण्डवस्तुगतोऽखण्डोऽपि विषयताविशेषस्तन्निरूपितोऽखण्डो विषयिताविशेषोऽपि वा प्रतीयमानत्वादभ्युपेयः, तथा चानुमितिं प्रति परामर्शस्य हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितेत्यादिदर्शितनिरूप्यनिरूपकभावशृङ्खलाबद्धहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वेन किमिति कारणत्वं कल्पनीयम्, किन्तु सामान्यदृष्ट्यपेक्षयाऽनुभूयमानेन विषयताविशेषेण विषयिताविशेषेण वा हेतुत्वमेवोपेयतामित्याशङ्कते— **हन्ते**ति **'विषयताविशेष'** इति विषयिताविशेषस्याप्युपलक्षणम् । **सामान्यदृष्ट्या** सामान्यग्राहिसङ्ग्रहनयाश्रयणेन । **तथापि** अखण्डविषयतावत्तयाऽपि । **अनुभवात्** विशिष्टवैशिष्ट्यबोधस्यानुभवात् । **'तथापि'** इति स्थाने **'तस्यापि'** इति पाठे— अस्य अखण्डविषयताविशेषस्येत्यर्थः । **तथा च** अखण्डविषयताविशेषस्य सिद्धौ च । **तेनैव** अखण्डविषयताविशेषरूपेणैव । समाधत्ते— **सत्यमि**ति— सामान्यदृष्ट्याऽखण्डविषयता-

**सत्यम्-भावसङ्ग्रहेण** विषयताविशेषेण शक्तिविशेषणहेतुत्वे अभावसङ्ग्रहेण चाभावविशेषेण तथात्वे बाधका-**भावात्, व्यवहारोच्छेदस्य** व्यवहारनयसिद्धकार्यकारणभावेनैव निराकरणाद्, अनुभवसिद्धास्तु ग्राह्य-**ग्राहकनिष्ठाः** सामान्यविशेषधर्मा न कल्पनामात्रेणापोहितुं शक्या इति दिक् ।

**उत्तिष्ठन्तु विकल्पवीचिनिचयाः पर्यायमर्यादया, द्रव्यार्था[व]हिते तु चेतसि चिरं शाम्यन्तु तत्रैव ते ।**
**वस्तु प्रस्तुतमस्तु सागरसमं सर्वोपपत्तिक्षमं, बाह्यं वा स्फुटमान्तरं समुचितस्याद्वादमुद्राङ्कितम् ॥ १ ॥**

---

विशेषेण परामर्शादेर्हेतुत्वमिष्टमेवेति तदापादन स्याद्वादिन प्रति नानिष्टापादनमित्यर्थः, सामान्य भावस्वरूप विशेषोऽभाव-स्वरूप इति ग्राह्यवद् ग्राहकस्यापि सामान्य-विशेषोभयरूपत्वमित्यखण्डविषयताविशेषः सामान्यांश, अन्याश्च तत्तद्विपय-निरूपिता विषयता विशेषाश इति तत्र सामान्यग्राहिपरसङ्ग्रहनयेनाखण्डविषयतालक्षणशक्तिविशेषेण हेतुत्वं विशेषग्राह्य-परसङ्ग्रहेण नैगमनयविशेषेणातत्तद्विषयतानिरूपिततत्तद्विपयतालक्षणसखण्डविषयतास्वरूपशक्तिविशेषेणापि हेतुत्वमित्यखण्ड-विषयताविशेषेणैव हेतुत्वमित्यवधारणस्यायुक्तत्वमित्याशयेनाह- **भावसङ्ग्रहेणेति**- भावः- सामान्यांशस्त संग्रहीतु शीलमस्येति भावसङ्ग्रहः, परसामान्यग्राहिसङ्ग्रहनयस्तेनेत्यर्थः । '**शक्तिविशेषणताहेतुत्वे**' इति स्थाने 'शक्तिविशेषेण हेतुत्वे' इति पाठो युक्त', शक्तिविशेषश्चात्र सामान्याशगतः सामर्थ्यविशेषो बोध्यः । **अभावसङ्ग्राहकेणेति**- अभावो विशेषांशस्तं ग्रहीतु शीलमस्येति अभावसङ्ग्राहकोऽपरसामान्यग्राही नयस्तेनेत्यर्थः । **अभावविशेषेण** तत्तत्खण्डविषयताविशेषेण । **तथात्वे** हेतुत्वे । नन्वखण्डविषयत्वादिना परामर्शादेरनुमित्यादिकं प्रति कारणत्व नापामरसाधारणव्यवहर्तॄणां व्यव-हारवीथीमवतरतीति तथा कार्यकारणभावमाश्रयता तत्तद्व्यापकविधेयकानुमितिस्तत्तद्व्याप्यविषयकपरामर्शादित्येवं विशि-ष्यानुमितिपरामर्शकार्यकारणभावावलम्बिनो व्यवहारस्योच्छेद स्यादित्यत आह- **व्यवहारोच्छेदस्येति**- अस्य 'निरा-करणाद्' इत्यनेनान्वयः, आपामरानुभवगोचरीक्रियमाणतत्तद्विषयताविशेषघटितमूर्तिकाभ्यां परामर्शत्वा-ऽनुमितित्वाभ्यां व्यवहारनयसिद्धो योऽनुमिति-परामर्शयोः कार्यकारणभावः सोऽपि सर्वनयमये स्याद्वादे समस्त्येव, तादृशकार्यकारणभावेनैवा-पामरसिद्धानुमिति परामर्शकार्यकारणभावस्य व्यवहारोपपत्तेर्व्यवहारोच्छेदस्यासम्भवादित्यर्थः । नन्वनुमिति-परामर्शकार्य-कारणभाव विशिष्टवैशिष्ट्यबोधविशेषणतावच्छेदकनिश्चयकार्यकारणभावव्यवहारादिक यदि व्यवहारनयसिद्धापामरानुभवगोचरी-क्रियमाणतत्तद्विषयताविशेषसङ्घटितमूर्तिकानुमितित्व-परामर्शत्वादिकमुपादायैव तदोक्तदिशा व्यवस्थाप्यमानाखण्डविषयतादिक-मनतिप्रयोजनकमेव न प्रामाणिकाभ्युपगमार्हमित्यत आह- **अनुभवसिद्धास्त्विति**- अनुभूतिर्हि सर्वतो बलवती प्रामाणिकानपि स्वपक्ष एव व्यवस्थापयति, व्यवहारो हि भवत्युपचारबहुलो यथा यथा यद् यद् व्यवह्रियते तथा तथा तत् तत् कल्प्यते, न त्वेव व्यवहारमात्रानुरोधिस्थूलकल्पनामात्रेणानुभवसिद्धाना धर्माणामपह्नव. शक्यः कर्तुमिति सामान्यविशेषात्मकस्य ग्राह्यस्य वस्तुनः सामान्य-विशेषात्मकमेव ग्राहकं युक्तिक्षममिति ग्राह्ये ग्राहके चानुभवसिद्धा. सामान्य-विशेषधर्मा अखण्डसखण्डरूपा' स्वीकरणीया एव प्रामाणिकैरुक्तदिशा व्यवस्थाप्यमाना विशिष्टवैशिष्ट्यबोधीयानल्प-प्रकारविषयताविशेषा आवरणक्षयोपशमविशेषजन्यतावच्छेदिकाः प्रमाण-नयापेक्षात्मलाभा इत्यर्थः ।

विशिष्टवैशिष्ट्यबोधविचारफलं पद्येनोपदर्शयति- **उत्तिष्ठन्त्विति** । '**द्रव्यार्थाहिते तु**' इत्यस्य स्थाने 'द्रव्यार्थाव-हिते तु' इति पाठो युक्तः, पर्यायमर्यादया विकल्पवीचिनिचया उत्तिष्ठन्तु, सागरे यथा क्रमश एकवीचिप्रादुर्भावो-पशमानन्तरमपरवीचिप्रादुर्भावोपशमनं पुनस्तदनन्तरमपरवीचिप्रादुर्भावोपशमनमित्येवं वीचि नचयाः-तरङ्गपरम्परा., तीरमर्यादयं त्तिष्ठन्ति- समुद्रः स्वतीरद्वयमनतिक्रम्यैवावतिष्ठते न स्वावस्थानमर्यादा कदाचिदप्युल्लङ्घयति ततस्त-दीयजलतरङ्गपरम्परा अपि मर्यादितदेशव्यापिन्य एव भवन्ति, तथा स्याद्वादाभ्युपगतं वस्तु यत् सागरोपमया समलङ्कृत तद्विषयकं चैतन्यमपि सागरतयाऽध्यवसितं तस्मिंश्चित्ते, **पर्यायमर्यादया** पर्यायनयापेक्षया, यावन्तो धर्म-विशेषस्वरूपा वस्तुगतास्तज्ज्ञानगताश्च धर्मास्ते सर्वे पर्याया एव, तद्विषयका विकल्पा एव वीचयस्तरङ्गास्तासा निचया· समुदायाः, **उत्तिष्ठन्तु** तत्तत्पर्यायग्राहिनयापेक्षया प्रादुर्भवन्तु, यदा हि ग्राहकस्य विशेषरूपतामाकलयन्ति प्रेक्षाविदग्धा-स्तदोत्तिष्ठन्त्येव तत्तद्विशेषापेक्षया तत्तद्विकल्पा', विशेषा' सर्वे सामान्यैकस्वरूपा एव, न तु सामान्यातिरिक्ता विशेषाः सन्तीत्येवं सङ्ग्रहैकनयकृतादरा भवन्ति यदा कृतिनस्तदा **द्रव्यार्थावहिते** द्रव्य सामान्यमेव तत्त्वमित्येवं द्रव्यार्थिक-नयापेक्षया द्रव्यार्थिकावगाहनप्रवणे, **चेतसि** ज्ञाने सति, **तत्रैव** तस्मिन्नेकस्वरूपे चेतस्येव, **ते** विकल्पवीचिनिचया., **चिरं** यावत्पर्यायनयविचारसम्मुखीना न भवन्ति कृतिनस्तावत्कालपर्यन्तम्, **शाम्यन्तु** तिरोभूता भवन्तु, नहि द्रव्यार्थ-

**ईहाऽपायपरम्परापरिचयः सर्वोऽप्ययं युज्यते, वस्त्वंशेऽप्युपयोगमाकलयतामन्तर्मुहूर्तावधिम् ।**
**अन्येषां तु विकल्पशिल्पघटितो बोधस्तृतीयं क्षणध्वंसी ध्वस्तसमस्तहेत्वमिलितः कस्मिन् विचारे क्षमः ॥२॥**

नयविचारणाया पर्यायनयविषयतद्विकल्पाना मनागप्यस्त्याविर्भावसङ्कथेति भावः, अतः सागरोपमं प्रस्तुतं स्याद्वाद्यभ्युपगतं वस्तुतत्त्वमस्तु । कथमित्थमभ्युपगन्तुं शक्यमित्यपेक्षायामाह- **सर्वोपपत्तिक्षममिति**- सामान्यापेक्षया विशेषापेक्षया च ये एकस्मिन्नेव वस्तुनि बोधवैचित्र्यप्रकारा व्यवहृतिभेदास्तन्निबन्धनकार्यकारणभावभेदाः प्रामाण्याप्रामाण्यव्यवस्थादयश्च तेषां सर्वेषा स्याद्वाद्यभ्युपगतेऽनेकान्तात्मकवस्तुन्येवोपपत्तिरिति सर्वविचित्रप्रत्यय-व्यवहारादिसमर्थमित्यर्थः । तदीदृश वस्तु न केवल बाह्यमेवान्तरमेव तथा, किन्तु बाह्यमाभ्यन्तरं च स्फुटं तथानुभूयमानत्वात् तथाभ्युपगन्तव्यमित्याह- **बाह्यं वा स्फुटमान्तरमिति**- अत्र वाकार. समुच्चयार्थकः । ननु सामान्य-विशेषस्वभावादीनामखण्ड-सखण्डविषयत्वादीना विरोधाद् यत् सामान्यात्मक तद्विशेषात्मकं न भवितुमर्हति, यस्मिन् प्रत्यये नानाविषयताशालित्व न तत्रैकविषयताशालित्वम्, अखण्डविषयतावदति च न सखण्डविषयतावत्त्वमिति प्रस्तुतं वस्तु न सम्भवतीत्यत आह- **समुचितस्याद्वादमुद्राङ्कितमिति**- प्रामाणिकानां मध्ये विशिष्टाधिपत्यशालित्वेन राजपदाभिषिक्तानामनेकान्तवादिना तत्तन्नयोपस्थापिततत्तन्निमित्तापेक्षया सामान्य-विशेषादिविरोधप्रतिरोधकत्वेन समुचितो यः स्याद्वादोऽनेकान्तवादस्तल्लक्षणा या मुद्रा तयाऽङ्कितमित्यर्थः । उपमाने समुद्रेऽपि गङ्गायमुनादिनदीसमागमप्रभवो यो जलसमष्टेः पर्यायः- परित आय आगमनम्, तस्य या मर्यादा तीरमनुल्लङ्घ्यैव व्यवस्थान तया, तीरमुल्लङ्घ्यापि जलागमनस्य भावे तेन सहैव जलकल्लोलमालाया. समतलस्वभावतयैवानवरतान्यान्यभूभागसमवगाहने ऊर्ध्वदेशाक्रान्त्यभावादुत्थानं न स्यादिति निरुक्तपर्यायमर्यादयैव समुद्रे वीचिनिचया उत्तिष्ठन्तीति, तद्द्रष्टुः पुरुषस्य द्रव्यं सुवर्णरत्नादिकं तद्रूपो योऽर्थमाणत्वादर्थो धनं तदवहिते तदवधानपरे-एतस्मिन् रत्नाकरे बहूनि रत्नानि सन्ति तानि कल्लोलमालया यदि तीरमागच्छेयुस्तर्हि यथेष्टतदुपादानतः कृतार्थो भविष्यामीत्येव तदेकाग्रे, चिरं- चिरकालं यावत्, चेतसि सति, तत्रैव-यस्मात् समुद्रादुत्तिष्ठन्ति कल्लोलास्तस्मिन्नेव समुद्रे, ते शाम्यन्ति न तु समुद्रात् नीर रत्नान्यानयन्तीति द्रष्टुश्चेतसि मनोरथैकप्रवाहशालिनि 'मनोरथमपरिपूर्यैव शाम्यन्ति- विषयभावं परित्यज्यन्ति, सोऽय समुद्रः सर्वेषां नदी-नदानां योपपत्तिरेकत्र सर्वेषा प्राप्तावपि निराबाधमवस्थान न तु कस्यचित् तत्रान्त.प्रवेशोऽन्यस्य च तत्र प्रवेशाभाव इत्येव वैषम्यलक्षणानुपपत्तिस्तत्र क्षमः, सागरे 'समुद्र.' इति सञ्ज्ञाऽन्वर्था- मुद्रया सह वर्तत इति, उह्यते नौकादिना यत् तत्र तद् वाह्यम्, रत्नादिकं चान्तर्व्यवस्थितत्वादान्तरम्, तदुभयमपि स्फुटं यथा स्यात् तथा समुचितस्याद्वादमुद्राङ्कितम्- समुचितो यः स्याद्वादः- अमुकप्रदेशेऽस्य बाह्यं वस्तु, अमुकप्रदेशेऽस्यान्तर वस्त्वित्येवमस्तित्ववादः, तस्यातिविपुलशरीरत्वादतिगम्भीरदुरवगाहाधस्तलत्वाच्च यन्मुद्रणं प्रत्यक्षादिबुद्धावप्रतिभासनम्, तेनाङ्कितं चिह्नित बाह्यमाभ्यन्तरं चास्य न प्रत्यक्षादिबुद्ध्याऽवधारयितु शक्यमित्येव ज्ञेयमिति ॥ १ ॥

यत्र चेतस्यनेकान्तवस्तुविचारकर्मठे विकल्पवीचिनिचया उत्तिष्ठन्त्यनेकरूपताया पर्यायार्थिकनयाभिमतायाम्, द्रव्यार्थिकनयाभिमताया त्वेकरूपताया शाम्यन्ति, तस्य चेतस एकाऽनेकरूपस्य सतो दीर्घोपयोगरूपतया चिरकालावस्थाने सत्येवैतन्मननपरायणस्य स्याद्वादिनः प्रामाणिकपरिषदि सुग्राह्यवचनत्वम्, तदेतत् कथमित्यपेक्षायामाह- **ईहेति**- अवगृहीतस्य विशेषाकाङ्क्षणमीहा, यथा 'किञ्चिदिदम्' इति नैश्चयिकावग्रहगृहीतस्य सामान्यवस्तुनः श्रोत्रग्राह्यत्वादिना प्रायः शब्देनानेन भवितव्यमिति 'शब्दोऽयम्' इति व्यावहारिकावग्रहगृहीतस्य वा शब्दत्वावान्तर-सामान्यवतो मधुरत्वसुश्रवत्वादिगुणयोगेन प्राय शाङ्खादिनानेन भवितव्यमिति ज्ञानमीहा, ततः पर. 'शब्द एवायम्, शाङ्ख एवायम्' इति निर्णयोऽवायः, ईहितविशेषनिर्णयलक्षणः, तत्परम्परा- विशिष्टबुद्धि-विशिष्टवैशिष्ट्यावगाहिबुद्ध्युपलक्षितवैशिष्ट्यावगाहिबुद्धि-विशिष्टवैशिष्ट्यबुद्ध्येकत्रद्वयमितिबुद्धिलक्षणावान्तरप्रभेदलक्षणा, तत्परिचयः-परित. सर्वतोभावेन च य एकत्रोपयोगेऽपेक्षाभेदेन सम्मिलनम्, परिचीयते निश्चीयतेऽनेनेति वा परिचयः, तत्तत्सखण्डाखण्डैकानेकविषयतावैलक्षण्ययोगः । **अयम्** अनन्तरदर्शितस्वरूप· सर्वोऽपि, **अपिना** न तु तत्र किञ्चिद् युज्यते किञ्चिन्न युज्यत इत्यर्थस्य सङ्ग्रहणम् । **युज्यते** युक्त्या घटते । केषा मते युज्यते ? इत्यपेक्षयामाह- **वस्त्वंशेऽपीति**- अपिना वस्तुनि किमु वक्तव्यमित्यर्थस्याम्रेडनम् । **अन्तर्मुहूर्तावधिमुपयोगमाकलयताम्** अन्तर्मुहूर्तं यावदेक उपयोगोऽवतिष्ठत इत्यन्तर्मुहूर्तस्थितिकमेकमुपयोगमभ्युपगच्छता स्याद्वादिना मत इत्यर्थ., वस्त्वशेऽप्येकोपयोगस्यान्तर्मुहूर्तस्थितिकस्य भावे बहुविचारेहापायादिरूपस्य तस्यांशभेदेन विशिष्टबुद्धित्व-विशिष्टवैशिष्ट्यबुद्धित्वादिधर्मसमावेशस्य सम्भवेनैकानेक सखण्डाखण्डविषयत्वादीना तत्र सम्भवेन तदा-

**तदेवमेकानेकरूपा** नयप्रमाणप्रतिपत्तयः प्रामाणिकय इति स्थितम् ॥ ७ ॥

**अथेदं** नयज्ञानं प्रमा-ऽप्रमयोः कुत्रान्तर्भवतीत्याशङ्क्य तदुभयविलक्षणमेवेति निश्चिनोति—

**अयं न संशयः कोटेरैक्यान्न च समुच्चयः ।**

**न विभ्रमो यथार्थत्वादपूर्णत्वान्न प्रमा ॥ ८ ॥**

**नयामृत०**—अयमिति—अयं नयात्मको बोधः, संशयो न, कुतः ? **कोटेः**—प्रकारस्य ऐक्यात्, संशयस्य चैकत्र विरुद्धोभयप्रकारकज्ञानस्वरूपत्वात्, अत एव समुच्चयोऽपि न, चोऽप्यर्थः, तस्य एकत्रा-

श्रयणेन पूर्वं परिभावितो विचार उपपद्यतेतराम् । एकान्तवादिना तु विचारो न कोऽपि युक्त्योपपद्यत इत्याह- **अन्येषां त्विति**- एकान्तवादिनां नैयायिकादीना पुनरित्यर्थ । **विकल्पशिल्पघटितः** विशिष्टबुद्धिश्चतुर्धा- विशेष्ये विशेषणमिति बुद्धिः, विशिष्टस्य वैशिष्ट्यमिति बुद्धिः, विशिष्टे वैशिष्ट्यमिति बुद्धिः, एकत्र द्वयमिति बुद्धिरित्येवं विकल्परचनानिर्मितः । **'बोधस्तृतीयं क्षणध्वंसी'** इत्यस्य स्थाने 'बोधस्तृतीयक्षणध्वसी' इति पाठो युक्त., तस्य 'बोधस्तृतीयक्षणवृत्ति· ध्वंसप्रतियोगी' इत्यर्थः, प्रथमक्षणे बुद्धिरुत्पद्यते, द्वितीयक्षणे ज्ञानान्तरमुत्पद्यते इच्छादिकं वा, तेन तृतीयक्षणे प्रथमक्षणोत्पन्ना बुद्धिर्विनश्यतीति क्षणद्वयमात्रस्थायी बोध इति यावत् । यस्मात् कारणकदम्बादय बोध उदितस्तेन कारणनिचयेन सह नैकस्मिन् काले सामानाधिकरण्यमनुभवतीति तत्तद्विषयैतदीयविषयसमष्ट्युपादानतो योऽयं विचारपरिपूर्तिभावो यो युक्तायुक्तविवेकाय प्रामाणिकैर्मृग्यते स एव न स्याद्, दीर्घोपयोगे सत्येव हेतुहेतुमद्भावापन्नज्ञानस्तोमात्मकैकज्ञानत एव विचार्यस्वरूपविशेष-निष्टङ्कनपटिष्ठविचारपरिसमाप्तेरित्याह- **ध्वस्तसमस्तहेत्वमिलित** इति- स्वोत्पत्तिसमयक्षणवृत्तिध्वसप्रतियोगितत्तद्विषयपरि-भावुकबुद्धिकदम्बात्मकस्वहेत्वधिकरणसमयावृत्तिरित्यर्थः । **कस्मिन् विचारे** न कस्मिन् विचारे, **क्षमः** समर्थ., ततश्च स्वाभीष्टसमर्थनप्रवणविचारनिष्पादनासमर्थानामेकान्तवादिना न किमपि विचार्यं सिद्धिपद्धतिमुपगच्छतीति तेषा सर्वोऽपि तदर्थं प्रयासो निष्फल एवेति भावः ॥ २ ॥ उपसंहरति- **तदेवमिति** ॥ ७ ॥

एतावता नयात्मकं ज्ञानं व्यवस्थाप्य तस्य प्रमा-ऽप्रमोभयविलक्षणस्वरूपत्वप्रतिपादनप्रत्यलमष्टमपद्यमवतारयति- **अथेति । इदम्** अनन्तरमेव प्रामाणिकतया निष्टङ्कितस्वरूपम् । **तदुभयविलक्षणमेव** प्रमाऽप्रमोभयविलक्षणमेव । अष्टमपद्यं विवृणोति- **अयमितीति । अयम्** इति मूलम्, तद्विवरणम्- 'नयात्मको बोधः' इति, इदमः प्रत्यक्षवाचि-त्वेनेदानी नयनिरूपणप्रवणस्य नयोपदेशकर्तुर्बुद्धौ विपरिवर्तमानत्वात् सन्निहितो नयात्मकबोध एव मानसप्रत्यक्षविषयत्वात् प्रत्यक्ष इति स इदमूपदव्यपदेश्यो भवतीति, यद्यप्येककोटिकज्ञानलक्षणस्य नयस्य सशयत्व-समुच्चयत्वे न प्राप्ते, अत एव तत्र तदन्तर्भावस्य सम्भावनाऽपि नास्तीत्याकलय्य प्रमा-ऽप्रमयोरेकत्रैव तदन्तर्भाव· सम्भाव्येतेति 'प्रमा-ऽप्रमयोः कुत्रा-न्तर्भवति' इत्येवमाशङ्क्यैव तदाशङ्कोन्मूलनप्रवणतदुभयविलक्षणत्वनिष्टङ्कनपरतयैव पद्यमवतारितम्, तथापि यत्र वस्तु निश्चयरूपं तत्संशयरूपमिति नियमावलम्बिनः कस्यचिद् वस्त्वंशावगाहिनि नये वस्तुनिश्चयत्वाभावेन सशयरूपत्वं सम्भाव-नापथमधिरोहेत्, एवं वस्तुगत्या प्रत्येकमेककोटिकत्वेऽपि विभिन्नधर्मद्वयग्राहिणो नयद्वयस्यैकनयस्वरूपत्वभ्रान्तिमतः कस्य-चित् तस्य समुच्चयत्वमपि प्रतीतिकोटिमापतेदित्यतो भ्रान्तिप्राप्तयोस्तयोर्व्यपोहन नायुक्तम्, अवतरणे तु विचारकाणा प्रतिपत्तॄणां न नये उत्सर्गतः सशयत्व-समुच्चयत्वयोः शङ्का समुल्लसतीत्यभिसन्धानेन प्रमा-प्रमान्यतरस्वरूपत्वस्यैव तत्र प्रेक्षा-वद्भिः सम्भावयितु तदन्यतरान्तर्भावशङ्काप्रतिविधानपरत्वमेव दर्शितमिति बोध्यम् । **प्रकारस्यैक्यात्** नये प्रकारतया भासमानस्यैकत्वात्, अत्र 'नयात्मको बोधः संशयो न भवति प्रकारस्यैक्याद्' इत्येवमनुमानप्रयोगो न सम्भवति, सश-यत्वाभावलक्षणसाध्यस्य नयरूपपक्षे सद्भावेऽपि 'प्रकारस्यैक्याद् इति हेतोस्तत्राभावात्, तस्य संशयविपर्यीभूतप्रकार एव भावात्, किन्तु 'नयात्मको बोध. संशयो न भवति, एकप्रकारतामात्रनिरूपकत्वादुभयसम्प्रतिपन्ननिश्चयवद् इति प्रकारता-द्वयनिरूपके सशयेऽप्येकप्रकारतानिरूपकत्व समस्तीत्यत एकप्रकारतानिरूपकत्वादित्यनुक्त्वा 'एकप्रकारतामात्रनिरूपकत्वाद्' इत्युक्तम्, एकमात्रनिष्ठप्रकारतानिरूपकत्वमपि संशयं समस्त्येव, विधिकोटिनिष्ठप्रकारताया विधावेव निषेधकोटिनिष्ठप्रका-

विरुद्धोभयधर्मप्रकारकज्ञानस्वरूपत्वात्, संशये प्रकारताद्वयनिरूपिता एका विशेष्यता, समुच्चये तु विशेष्यताभेद इत्यन्ये, तदपि भेदा-ऽभेदवादे कथञ्चित् सङ्गच्छते, नैकान्तवादे, विषये तद्वति तत्प्रकारकत्वनिरपेक्षविशेष्यताभेदेऽभ्युपगम्यमाने साकारवादप्रसङ्गात्, यथार्थत्वात् विभ्रमो न, अवगाहते हि

रताया निषेध एव सत्त्वादिति तन्नोपादातुं शक्यमिति बोध्यम् । एकप्रकारतामात्रनिरूपकत्वस्य संशयत्वासामानाधिकरण्येन संशयत्वाभावव्याप्यत्वं भावयितुमाह– **संशयस्य चेति** । **एकत्रेति**– एकधर्मावच्छिन्नविशेषतानिरूपितविरुद्धधर्मनिष्ठप्रकारताद्वयनिरूपकज्ञानस्वरूत्वादित्यर्थः । **अत एव** नयस्यैकप्रकारतामात्रनिरूपकत्वादेव, प्रकारता चात्र मुख्या ग्राह्या, मुख्यप्रकारतात्वं चावच्छेदकतानात्मकप्रकारतात्वम्, तेन नयात्मकज्ञाने विशेष्यतावच्छेदकस्य निरवच्छिन्नविशेष्यतानिरूपितप्रकारतावत्त्वेऽपि न क्षतिः, विशेष्यतावच्छेदकनिष्ठप्रकारताया अवच्छेदकतात्मकत्मकत्वात्, जात्यखण्डोपाध्यतिरिक्तस्य यत्र नये प्रकारत्वं तत्र प्रकारताया विशेष्यतात्मकत्वस्य सम्भवेन विशेष्यतानात्मकप्रकारतात्वं तत्र न सम्भवतीत्यतो विशेष्यतानात्मकत्व परित्यज्यावच्छेदकतानात्मकत्वमुक्तम् । **चोऽप्यर्थः मूले न च** इत्यत्र चकारोऽप्यर्थकः, तस्य 'समुच्चयः' इत्यनेन सम्बन्धात् समुच्चयोऽपि नेति लभ्यते । एकप्रकारतामात्रनिरूपकत्वस्य नयगतस्य समुच्चयत्वासामानाधिकरण्येन समुच्चयत्वाभावव्याप्यत्वं भावयितुमाह– **तस्येति**– समुच्चयस्येत्यर्थ । निरूपकीभूतप्रकारताभेदेन संशये समुच्चये च विशेष्यस्यैकत्वेऽपि तन्निष्ठाया विशेष्यताया भेदः, इयोस्तु विशेष. संशये प्रकारगततया विरोधस्य भानं समुच्चये तु प्रकारगततयाऽविरोधस्य भानं विरोधस्याभान वेत्यभिप्रायेण संशयस्वरूपोपदर्शने प्रकारविशेषणतया विरोधस्य समुच्चयस्वरूपोपदर्शने च प्रकारविशेषणतयाऽविरोधस्योपादानमिति । संशये विरोधस्य समुच्चयेऽविरोधस्य च न भानं किन्तु संशये प्रकारताद्वयनिरूपितैका विशेष्यता समुच्चये तु प्रकारताद्वयनिरूपिता विशेष्यताद्वयी, तत एव च संशयात् समुच्चयस्य भेद इत्यन्येषां मतमुपदर्शयति– **संशय** इति । **तदपि** संशये विशेष्यतैक्यं समुच्चये विशेष्यताभेद इत्यन्येषां मननमपि । **भेदा-ऽभेदवादे** एकस्यापि वस्तुनः किञ्चिदपेक्षया भेदः किञ्चिदपेक्षयाऽभेद इत्यभ्युपगन्तृस्याद्वाद्यभिमतभेदाभेदवादे । **कथञ्चिदिति**– एकविशेष्यलक्षणाधाराभेदात् तदपेक्षया समुच्चयज्ञानीयविशेष्यताया अभेदेऽपि पर्वतो वह्निमान् वह्न्यभाववाँश्चेति समुच्चयस्य वह्निमति वह्निप्रकारत्वेन पर्वतो वह्निमानितिज्ञानसमानविषयताशालिनो वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वमित्यत एका वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यता, वह्न्यभाववति वह्न्यभावप्रकारकत्वेन पर्वतो वह्न्यभाववानिति ज्ञानसमानविषयताशालिनो वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वमित्यतस्तदन्या वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतेति समुच्चयज्ञानस्यांशभेदतो विषयभेद इत्यतोऽपेक्षाभेदेन तत्र विशेष्यताभेदो युज्यतेऽशभेदनिबन्धनविषयभेदप्रयुक्तविशेष्यताख्यविषयताभेदस्य युक्तत्वात्, संशये तु कोटिद्वयेऽपि दोलायमानरूपत्वेन ज्ञानान्तरस्य चैकैकप्रकारकत्वेनादोलायमानरूपस्यैव सम्भवेन न तेन सह समानविषयत्वम्, दोलायमानरूपस्यादोलायमानरूपेण सह समानविषयत्वासम्भवात्, तयोः समानविषयत्वे वा दोलायमानस्वरूपमप्यदोलायमानस्वरूपं स्याददोलायमानस्वरूपमपि वा दोलायमानस्वरूप स्यादतो विलक्षणमेव संशयस्वरूपम्, यत्र सदपि तद्वति तत्प्रकारत्वमनिर्णीतस्वरूपमेवेति सत्यपि प्रकारताभेदे तद्भेदप्रयुक्तभेदमप्रधानीकृत्याधारीभूतविशेष्यस्वरूपाभेदप्रयुक्ताभेदमेव प्रधानीकृत्य तत्स्वरूपसंवेदनं भवति शेमुषीविशेषशालिनामिति सूक्ष्मदृष्ट्यपेक्षया विशेष्यताऽभेद. सुदृढनिरूढ इत्येवं भेदाऽभेदवादे स्याद्वादे अन्येषा मननमपि साधु सङ्गच्छत इत्याशयः । विषयभेदप्रयुक्तभेदमनादृत्यैकान्ततः समुच्चये विशेष्यताभेदोपगमस्त्वेकान्तवादिनो न युक्त इत्याह– **नैकान्तवाद** इति– एकान्तवादेऽन्येषामुक्तदिशा मनन न सङ्गच्छत इत्यर्थः । **विषय** इति– विषयावच्छेदेन यत् तद्वति तत्प्रकारकत्वम्, अत्र तत्पदेन समुच्चये प्रकारतयाऽभिमतयोरुभयोरपि प्रत्येकं ग्रहणम्, तन्निरपेक्षो यो विशेष्यताभेदो ज्ञानस्यैव विलक्षणाकारानुरोधेन विशेष्यताभेदो विशेष्यतावैलक्षण्यं संशये विशेष्यताया अभेदः समुच्चये तस्या भेदस्तस्मिन्नभ्युपगम्यमाने सति साकारवादप्रसङ्गात्, विषयवैलक्षण्यनिबन्धनं न संशये विशेष्यताऽभेदः समुच्चये विशेष्यताभेदः किन्तु ज्ञानाकारभेदप्रयुक्तः संशयस्य दोलायमानकारता, समुच्चये तद्विलक्षणाकारता, तन्निबन्धस्य विशेष्यताऽभेदस्य तद्भेदस्य चोत्पत्तिस्तदा स्याद् यदि साकार ज्ञानं भवेदित्येवं साकारवादप्रसङ्गात् । तद्वति तत्प्रकारकत्वं ज्ञानस्य यथार्थत्वम्, तथा चास्ति घट इति द्रव्यार्थिकनयोऽस्तित्ववति घटेऽस्तित्वमवगाहते, नास्ति घट इति पर्यायास्तिकनयो नास्तित्ववति घटे नास्तित्वमवगाहते, इति तद्वति तत्प्रकारकत्वलक्षणयथार्थत्वान्नयो द्रव्यार्थिकादिर्न

द्रव्यार्थिकादिरस्तित्वादिमति कथञ्चिदस्तित्वादिकम्, अपूर्णत्वात् सप्तभङ्गपरिकरितवस्त्ववगाहितात्पर्याभाववत्त्वाच्च प्रमा न,–अनेनालौकिकप्रामाण्याभाव आवेदितः, लौकिकं तु प्रामाण्यं तद्वति तत्प्रकारकत्वरूपं न बाधितमिति न व्यवहारविरोधः, विचारोपयिकं चा(च)प्रामाण्यं प्रस्तुतम्, न प्रवृत्तिमात्रोपयिकमिति नयज्ञानस्य न पूर्णप्रमात्वमत उक्तचतुष्टयविलक्षणमेवेदं नयज्ञानमनुभवसिद्धमभ्युपगन्तव्यम्, न चेदं स्वमनीषिकाविजृम्भितम्, यत उक्तं तत्त्वार्थभाष्ये "तथाप्येते तन्त्रान्तरीयाः स्वतन्त्रा वा चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता" [अत्राह–किमेते तन्त्रान्तरीया वादिनः ? आहोस्वित् स्वतन्त्रा एव चोदकपक्षग्राहिणो मतिभेदेन प्रधाविता इति ?, अत्रोच्यते–नैते तन्त्रान्तरीयाः, नापि स्वतन्त्रा मतिभेदेन प्रधाविताः, ज्ञेयस्य त्वर्थस्याध्यवसायान्तराण्येतानि । तत्त्वार्थ० अध्याय० १, सूत्र–

---

विभ्रम इत्याह– **अवगाहते** हीति । '**द्रव्यार्थिकादिः**' इत्यत्रादिपदात् पर्यायार्थिकस्योपग्रहः, सामान्यतो द्रव्यार्थिक-पर्यायार्थिकयोर्ग्रहणे तदवान्तरभेदानामपि सङ्ग्रहादीनामपि तत्त्वेन ग्रहणमायातमेवेति बोध्यम् । '**अस्तित्वादि**' इत्यादि-पदान्नास्तित्वादेरुपग्रह. । एकान्तास्तित्वादिकमवगाहमानस्य दुर्नयत्वेन विभ्रमत्वमिष्टमेव तस्य यथार्थत्वाभावात्, नह्येकान्तास्तित्वादिमत् किमपि समस्तीति तस्य न तद्वति तत्प्रकारकत्वाभावात्, किन्तु कथञ्चिदस्तित्वादिमति कथञ्चिदस्तित्वादिकमवगाहमानस्य सुनयस्य यथार्थत्वाद् विभ्रमत्वाभाव इत्यावेदनायोक्तम्–**कथञ्चिदस्तित्वादिकमिति** । '**अपूर्णत्वाद्**' इत्यस्य स्थाने 'अपूर्णत्वाच्च' इति पाठो युज्यते तत एव तत्तद्विवरणं चकारान्तामिति । '**सप्तभङ्गपरिकरितवस्त्ववगाहितात्पर्याभाववत्त्वाच्च**' इत्यस्य स्थाने 'सप्तभङ्गपरिकरितवस्त्ववगाहितापर्याप्त्यभाववत्त्वाच्च' इति पाठो युक्तः, सप्तभङ्ग्यात्मकमहावाक्यजन्यबोधस्य निराकाङ्क्षस्य सप्तभङ्गप्रतिपाद्यकथञ्चिदस्तित्वादिसप्तविधधर्मात्मकवस्त्ववगाहितापर्याप्तिमत्त्वेन प्रमाणत्व तदभाववत्त्वाच्चैकधर्मात्मकवस्त्ववगाहिनो नयस्य न प्रमाणत्वमित्यर्थः । नन्वनन्तधर्मात्मकवस्तुनो न सप्तविधधर्मात्मकतयैव पूर्णतेति तत्त्वेनावगाहमानस्य बोधस्यापि न पूर्णत्वमिति कथं प्रमाणत्वनिमित्तं निरुक्तपर्याप्तिमत्त्वम्, तथाऽपि एकैकधर्माश्रयणेन प्रत्येक सप्तधर्मात्मकत्वमेव भवति वस्तुन इति तथावबोधे सति न तद्धर्माश्रयणेन भवत्याकाङ्क्षेति निराकाङ्क्षत्वनिमित्तकपूर्णत्वनिमित्तक निरुक्तपर्याप्तिमत. प्रमाणत्वम्, यच्च 'स्याद्वाद-केवलज्ञाने सकलार्थावभासने' इति वचनात् सप्तभङ्गात्मकस्याद्वादप्रभवज्ञानस्य सकलार्थावभासकत्वेन प्रामाण्यमभिमत तत् सकलादेशमहिम्नैव सम्भवति नान्यथा, सकलादेशमहिम्ना चैकभङ्गेनापि स्यात्पदलाञ्छितेन स्याद्वादस्वरूपतामाभजानेनानन्तधर्मात्मकवस्तुग्रहणलक्षणप्रमाणोत्पत्ति. सम्भवत्येव, परं सकलादेशाश्रयण नात्राभिमत तथा सति 'सप्तभङ्गपरिकरित' इत्युक्तिरसमञ्जसा स्यादिति बोध्यम् । **अनेन** न प्रमेति वचनेन । **न बाधितं** नये न बाधितं किन्त्वबाधितमेव । **इति** एतस्मात् कारणात् । **न व्यवहारविरोध** इति– एकैकधर्मावगाहिज्ञानादिष्टसाधनताज्ञानलक्षणाद् यः प्रवृत्तिलक्षणो व्यवहारो यश्च तादृशज्ञानाद् द्विष्टसाधनताज्ञानलक्षणान्निवृत्तिलक्षणो व्यवहारस्तस्यानुपपत्तिलक्षणविरोधो नेत्यर्थः । ननु नयस्य लौकिकप्रामाण्यस्याप्यभावेऽलौकिकप्रामाण्यपरिकलितादेव ज्ञानात् प्रवृत्ति-निवृत्तिलक्षणव्यवहारो भविष्यतीत्येतावताऽपि न व्यवहारविरोध इत्यत आह– **विचारोपयिकं चेति** । **प्रस्तुतं** नयज्ञाने निषेध्यत्वेन प्रक्रान्तमलौकिकम् । **न प्रवृत्तिमात्रोपयिकम्** न लौकिकप्रवृत्ति-निवृत्त्यादिलक्षणव्यवहारोपयोगि, तथा च प्रवृत्तिमात्रोपयिकं प्रामाण्यं न प्रस्तुतं येन तस्य नये सत्त्वेन तन्निषेधो नोपपद्येत किन्तु विचारोपयिकमेव प्रामाण्य प्रस्तुतम्, तच्च सप्तभङ्गपरिकलितवस्त्ववगाहिपर्याप्तिमत्त्वलक्षणपूर्णप्रमात्वमेव, तन्न नयज्ञानस्येति निगमयति– **इति नयज्ञानस्य न पूर्णप्रमात्वमिति** । **अतः** उक्तदिशा नये संशयत्वादिनिषेधात् । **उक्तचतुष्टयविलक्षणम्** संशय-समुच्चय-भ्रम-प्रमाविलक्षणम् । ननु स्वकपोलकल्पितं नयस्य भ्रमसंशयादिवैलक्षण्यं न परीक्षकमान्यमित्यत आह– **न चेदमिति** । तत्त्वार्थभाष्यग्रन्थमुल्लिखति– **तथापीति** । **एते** अनन्तरोपदर्शितस्वरूपा नयाः । **तन्त्रान्तरीयाः** एकान्ताभिनिवेशग्रहग्राहिलनैयायिकाद्यभिमतबोधस्वरूपा. । **स्वतन्त्रा** वेति– जैनराद्धान्तगता एव, किन्तु चोदकस्य प्रश्नकर्तुर्योऽभिमत. पक्षः तद्ग्राहिण. सन्तो **मतिभेदेन** 'सामान्यमेव तत्त्वं विशेषाणां सत्तामहासामान्यव्यतिरिक्तानामभावात्, विशेषा एवार्थक्रियाकारिणस्तत्त्व दोहनवाहनाद्यर्थक्रियाऽसमर्थस्य सामान्यस्य तत्त्वरूपत्वासम्भवाद्' इत्येव मतिभेदेनाभिप्रायभेदेन **विप्रधाविताः** विरुद्धवस्तुनिरूपणमार्गं समाश्रिताः, तथा चैते विप्रति-

३५ भाष्यम्] उभयथापि मिथ्यात्वमिति चेत्? न-प्रमाणापेक्षात्वेनैतेषामुभयवैलक्षण्यादिति, अत एव संयोगेऽपि नैतेषां विप्रतिपत्तित्वम्, सत्त्व-जीवाजीवात्मकत्व-द्रव्यगुणपर्यायात्मकत्व-चतुर्दर्शनविषयत्व-पञ्चास्तिकायावरुद्धत्व-षड्द्रव्यक्रोडीकृतत्वधर्म्मैरेकत्व-द्वित्व-त्रित्व-चतुष्क-पञ्चत्व-षड्त्वाध्यवसायानामिव पर्यायविशुद्धिवशात् पृथगर्थग्राहिणां मतिज्ञानादीनामिवैकत्रार्थे प्रतिनियतविषयविभागशालिनां प्रत्यक्षादीनामिव वा नैगमाद्यध्यवसायानामविरुद्धनानाधर्मग्राहित्वेनाविप्रतिपत्तिरूपत्वादिति सम्प्रदायः, अत्र त्रिभिर्निदर्शनैर्विरुद्धधर्मग्राहित्वांऽशग्राहित्व-परस्परफलवैलक्षण्यानां विप्रतिपत्तित्वसाधकहेतूनामसिद्धि-व्यभिचारप्रदर्शनादिष्टसिद्धिरित्यस्मदीयो विवेकः ॥ ८ ॥

पत्तय इत्यर्थः। **उभयथाऽपि** नयाना तन्त्रान्तरीयत्वे स्वतन्त्रत्वे चेत्यर्थ। **मिथ्यात्वं** भ्रमत्वम्, तथा च मिथ्याज्ञानं न वस्तुसिद्ध्यङ्गमिति न नयाना तत्त्वाधिगमाङ्गत्वमिति प्रश्नाभिसन्धिः, समाधत्ते- **नेति**। **'प्रमाणापेक्षात्वेन'** इति स्थाने 'प्रमाणापेक्ष्यत्वेन' इति पाठः शोभन.। **एतेषां** नैगमादिनयानाम्। **उभयेति**- तन्त्रान्तरीय-स्वतन्त्रोभयेत्यर्थः, प्रमाणं सत्त्वाऽसत्त्वाद्यनन्तधर्मात्मकतया वस्तुतत्त्वं गृह्णाति, न च परस्परविरुद्धानां सत्त्वा-ऽसत्त्वादीनामेकस्मिन् समावेश इति तेषामपेक्षाभेदेनैकत्र समावेशतोऽविरोध इत्यधिगतिप्रयोजनका निमित्तभेदोपदर्शका नया विवेकेन स्वविषयधर्माणामेकस्मिन् समावेशसौष्ठवाय प्रमाणेनापेक्ष्यन्ते, तन्त्रान्तरीयाश्चैकान्तेनैव सत्त्वा-ऽसत्त्वादिधर्मग्राहका इति नाविरोधोप्रपादनप्रत्यला:, प्रत्युत विरोधोपस्थापका एवेति न प्रमाणापेक्ष्याः, एवं चोदकपक्षग्राहिणः स्वतन्त्रा अपीति नयानां प्रमाणापेक्ष्यत्वं तन्त्रान्तरीयाणा स्वतन्त्राणा च तदभाव इति विरुद्धधर्मयोगान्न नयाना तन्त्रान्तरीयत्वं स्वतन्त्रत्व वा किन्तु तदुभयविलक्षणत्वमेवेत्यर्थः। **अत एव** प्रमाणापेक्ष्यत्वेन नयानामुभयवैलक्षण्यादेव। **संयोगेऽपीति**- अपिना केवलस्यैकैकस्यैकैकधर्मग्राहकत्वेनैव विरुद्धधर्मद्वयग्राहकत्वाभावादेव न विप्रतिपत्तित्वमित्यस्योपग्रहः, नययोः संयोगे निष्पन्ननयद्वयस्वरूपस्य धर्मद्वयग्राहकत्वेऽपि विषयीभूतयोर्धर्मयोर्विरोधाभावादेव विरुद्धधर्मद्वयादिग्राहकत्वलक्षणं विप्रतिपत्तित्वमेतेषा नयाना नेत्यर्थः। नैगमादिनयानामविरुद्धनानाधर्मग्राहित्वेनाविप्रतिपत्तिरूपत्व दृष्टान्तत्रयोपढौकनेन द्रढयति- **सत्त्वेति**- 'सर्वमेक सदविशेषाद्' इति सत्त्वधर्मेण सर्वस्यैकत्वाध्यवसाय, 'सर्वं द्विस्वभावं जीवाजीवात्मकत्वाद्' इति जीवा-ऽजीवात्मकत्वधर्मेण सर्वस्य द्वित्वाध्यवसायः, 'सर्वं त्रितयस्वरूपं द्रव्यगुणपर्यायात्मकत्वाद्' इति द्रव्य गुण-पर्यायात्मकत्वधर्मेण सर्वस्य त्रित्वाध्यवसायः, 'सर्वं चतुष्टयस्वरूपं चतुर्दर्शनविषयत्वाद्' इति चतुर्दर्शनविषयत्वधर्मेण सर्वस्य चतुष्ट्वाध्यवसाय., 'सर्वं पञ्चात्मक पञ्चास्तिकायावरुद्धत्वाद्' इति पञ्चास्तिकायावरुद्धत्वधर्मेण सर्वस्य पञ्चात्मकत्वाध्यवसाय., 'सर्वं षट्स्वरूप षड्द्रव्यक्रोडीकृतत्वाद्' इति षड्द्रव्यक्रोडीकृतत्वधर्मेण सर्वस्य षट्त्वाध्यवसाय इत्येवमुक्ताना षण्णामध्यवसायानामिवेत्यर्थ.,। **पर्यायेति**- पर्यायविशुद्धिवशादेकत्रैवार्थे न्यूनाधिकपर्यायग्राहित्वेन पृथगर्थग्राहिणां मतिज्ञान-श्रुतज्ञानादीनामिवेत्यर्थः, **एकत्रार्थे** इति- एकस्मिन् घटादिरूपेऽर्थे प्रतिनियतरूपरसादिविषयविभागशालिना चाक्षुषरासनादि-प्रत्यक्षादीनामिवेत्यर्थः। एकेनैव निदर्शनेन नैगमादीनामविप्रतिपत्तिरूपत्वस्य निर्णीतिसम्भवेन निदर्शनत्रयोपादानं किमर्थमित्यपेक्षायामाह- **अत्रेति**-'नैगमादयो नया विप्रतिपत्तयो विरुद्धधर्मग्राहित्वाद्' इत्यनुमानहेतोर्विरुद्धधर्मग्राहित्वस्यासिद्ध्युपदर्शनाय प्रथमनिदर्शनम्, यथैकत्व-द्वित्वाद्यध्यवसायविषया एकत्व-द्वित्वादयोऽपेक्षाभेदेनैकत्र वर्तमाना न विरुद्धा इति तद्ग्राहिणामेकत्व-द्वित्वाद्यध्यवसायानामविरुद्धनानाधर्मग्राहित्वमेव न विरुद्धनानाधर्मग्राहित्वं तथा नैगमाद्यध्यवसायविषया. सामान्य-विशेषधर्मा अप्यपेक्षाभेदेनैकत्र वर्तमाना न विरुद्धा इति तद्ग्राहिणामपि नैगमाद्यध्यवसायानामविरुद्धनानाधर्मग्राहित्वमेव न विरुद्धनानाधर्मग्राहित्वमिति तस्यासिद्धि., 'नैगमादयो नया विप्रतिपत्तयोऽंशग्राहित्वाद्' इत्यनुमानहेतोरंशग्राहित्वस्य व्यभिचारोपदर्शनार्थं द्वितीयनिदर्शनम्, विप्रतिपत्तित्वस्य व्याप्यं नांशग्राहित्वं मतिज्ञानादीनामंशग्राहित्वेऽपि विप्रतिपत्तित्वाभावादित्यंशग्राहित्वहेतुर्व्यभिचरित., 'नैगमादयो नया विप्रतिपत्तयः परस्परफलवैलक्षण्याद्' इत्यनुमानहेतोरपि व्यभिचारप्रदर्शनार्थं तृतीयनिदर्शनम्, विप्रतिपत्तित्वाभावेऽपि प्रत्यक्षादिषु परस्परफलवैलक्षण्यस्य सद्भावादिति व्यभिचार्येव परस्परफलवैलण्यलक्षणो हेतुरतो नैगमादीना न विप्रतिपत्तित्वमितीष्टं निर्वहतीति निदर्शनत्रयोपादानं युक्तमेव, अयं च विवेको नान्येन परिभावितः किन्तु मया यशोविजयोपाध्यायेनैवेत्यावेदनायाह- **इत्यस्मदीयो विवेक** इति ॥ ८ ॥

उक्तमेवार्थं लौकिकदृष्टान्तेन समर्थयति—

**न समुद्रोऽसमुद्रो वा समुद्रांशो यथोच्यते ।**
**नाप्रमाणं प्रमाणं वा प्रमाणांशस्तथा नयः ॥ ९ ॥**

**नयामृत०**—'न समुद्रः'—स्पष्टः । पर्याप्ति-तदन्यसम्बन्धाभ्यां समुद्रत्व-तदभाववत्तया प्रमाणाऽप्रमाणोभयवैलक्षण्यम्, अन्यत्र तु तज्जातीयतयेति फलितार्थः ॥ ९ ॥

स्वार्थनिश्चायकत्वरूपं नयप्रामाण्यसंशयेन विषयसंशयात् निश्चयस्यानिश्चयपरिणत्या न कथञ्चिदित्यत्रापि नयानामनेकान्त एवेति शिक्षयति—

**स्वार्थे सत्या परैर्नूना असत्या निखिला नयाः ।**
**विदुषां तत्र नैकान्त इति दृष्टं हि सम्मतौ ॥ १० ॥**

**नयामृत०**-स्वार्थ इति—स्वार्थे स्वविषये, सत्याः निश्चायकाः, परैः नयैः, नूना अप्रामाण्याः शङ्काविषयीकृताः, असत्याः अनिश्चायकाः, निखिला नयाः नैगमादयः, विदुषां सिद्धान्तव्युत्पन्नानाम्, तत्र नयप्रामाण्या ऽप्रामाण्ययोः, नैकान्तः, वक्तुं युक्त इति शेषः, इति दृष्टं परीक्षितम्, हि सम्मतौ, अभियुक्तवचनसंवादप्रदर्शनमेतत्, तद्वचनं च—

नवम पद्यमवतारयति- **उक्तमेवेति**- नयस्य प्रमाणा-ऽप्रमाणवैलक्षण्यमेवत्यर्थः । "**न समुद्र०**" इत्यादि पद्यं स्पष्टार्थत्वान्न विवरणार्हमतो नतैद्व्याख्या वितन्यत इत्यावेदनायाह- **स्पष्ट** इति- श्लोकोऽय स्पष्टार्थ इत्यर्थः । यथाश्रुतार्थस्य स्पष्टत्वेऽपि फलितार्थस्य स्थूलमत्यगोचरत्वात् तमुपदर्शयति- **पर्याप्तीति**- अत्र 'पर्याप्ति-तदन्यसम्बन्धाभ्या समुद्रत्व तदभाववत्तया' इत्यस्य स्थाने 'समुद्राशे वैलक्षण्य पर्याप्ति-तदन्यसम्बन्धाभ्यां समुद्रत्व तदभाववद्भ्याम्' इति पाठो युक्तः, तथा च समुद्रांशे समुद्रत्व पर्याप्तिसम्बन्धेन न वर्तते, समुद्राशे पर्याप्तिसम्बन्धेन समुद्रत्वस्य सत्त्वे तस्मिन्नेकस्मिन्नेवाशे समुद्रत्वस्य परिसमाप्तत्वात् सम्पूर्णः समुद्रः समुद्रो न भवेत्, तथा समुद्राशे समुद्रत्वाभावोऽपि स्वरूपसम्बन्धेन न वर्तते, समुद्राशे स्वरूपसम्बन्धेन समुद्रत्वाभावस्य सत्त्वे एकस्मिन्नेवान्यस्मिन्नपि समुद्राशे विनिगमनाविरहेण समुद्रत्वाभावस्य सत्त्वमित्यशेषाणामेव समुद्रांशाना समुद्रत्वाभाववत्तयाऽशेषांशाभिन्नस्यांशिन समुद्रस्याभावेन न कोऽपि समुद्रः स्यादिति पर्याप्तिसम्बन्धेन यत् समुद्रत्ववत्, यच्च- **तदन्यसम्बन्धेन** पर्याप्तिभिन्नसम्बन्धेन स्वरूपसम्बन्धेनेति यावत्, **तदभाववत्** समुद्रत्वाभाववत्, ताभ्या समुद्राशे वैलक्षण्यमित्यर्थ. । **प्रमाणेति** । **तु** पुनः । **अन्यत्र** नयरूपे प्रमाणांशे, प्रमाणा-ऽप्रमाणोभयवैलक्षण्यं प्रमाणाप्रमाणाभ्यां वैलक्षण्यम् । **तज्जातीयतया** प्रमाणजातीयतया अप्रमाणजातीयतया च, अर्थान्नयः सप्तभङ्गपरिकरितवस्त्ववगाहितावद् यत् प्रमाण तज्जातीयत्वाभावाच्च प्रमाणमिति प्रमाणविधर्मा, तदभाववति तत्प्रकारकत्ववद् यदप्रमाणं तज्जातीयत्वाभावान्नाप्रमाणमित्यप्रमाणाविधर्मेत्यर्थः ॥ ९ ॥

दशमं पद्यमवतारयति- **स्वार्थनिश्चायकत्वरूपमिति**- अत्र 'स्वार्थनिश्चायकत्वरूप नयप्रामाण्यसशयने' इत्यस्य स्थाने 'स्वार्थनिश्चायकत्वरूप प्रामाण्यमपि परनयप्रयुक्तप्रामाण्यसशयेन' इति पाठो युक्त., अयमर्थ.- स्वार्थनिश्चायकत्वरूप यन्नयगतं प्रामाण्यं तदपि स्वप्रतिपक्षभूतनयप्रयुक्तो य स्वस्मिन् प्रामाण्यसशयस्तेन, स्वविषये सशयान्निश्चयात्मकस्यापि स्वस्यानिश्चयपरिणत्या अनिश्चयात्मना परिणामेन न कथञ्चित् कथञ्चिन्न भवत्यपि। इति एतस्मात् कारणात् । **अत्रापि** स्वगतप्रामाण्येऽपि । **नयानामनेकान्त एव** नयाः कथञ्चित् प्रमाणं कथञ्चिदप्रमाणमित्येवमनेकान्त एव । **इति शिक्षयति** एवं निरूपयति । '**स्वार्थे सत्या परैर्नूना**' इत्यस्य स्थाने 'स्वार्थे सत्याः परैर्नुन्ना' इति पाठो युक्तः, टीकायामपि **नूनेति** स्थाने नुन्नेति पाठो बोध्य. । 'परैः' इत्यस्य विवरणम्- 'नयै' इति, तस्य परनयै. स्वविपक्षनयैरित्यर्थः; '**नूना अप्रामाण्याः शङ्काविषयीकृताः**' इत्यस्य स्थाने 'नुन्ना अप्रामाण्याशङ्काविषयीकृता' इति पाठ.

"णियवयणिज्जसच्चा, सव्वणया परविआलणे मोहा ।
ते पुण ण दिट्ठसमयो विभयइ सच्चे य अलीए वा ॥ १० ॥"

[ सम्मतौ का०, गाथा-२८ ]त्ति,

ननु नयग्रन्थे सम्मत्यादौ बौद्धादिदर्शनपरिग्रहेण नैयायिकादिदर्शनखण्डनं श्रूयते, तत्र दुर्नयपरिग्रहे कथं न मिथ्यात्वैकान्त इत्याशङ्कयाह—

**बौद्धादिदृष्टयोऽप्यत्र वस्तुस्पर्शेन नाप्रमाः ।**
**उद्देश्यसाधने रत्नप्रभायां रत्नबुद्धिवत् ॥ ११ ॥**

**नयामृत०-बौद्धादीति**—अत्र नयग्रन्थे, उद्देश्यं यदभिनिविष्टेतरनयखण्डनं तत्साधने तत्साधननिमित्तम् **बौद्धादिदृष्टयोऽपि** बौद्धादिनयपरिग्रहा अपि, **वस्तुस्पर्शेन** शुद्धपर्यादिवस्तुप्राप्त्या, **नाप्रमाः** फलतो न मिथ्यारूपा इत्यर्थः, किंवत् ? **रत्नप्रभायां रत्नबुद्धिवत्** यथाहि तत्रारत्ने रत्नावगाहितया स्वरूपतो न प्रामाण्यम्, अदूरविप्रकर्षात् तु वस्तुप्रापकतया फलतः प्रामाण्यं तथा दुर्नयान्तरच्छेदाय दुर्नयान्तरपरिग्रहेऽपीति न कश्चिद् दोषः ॥ ११ ॥

---

सम्यग् । **तद्वचनं च** अभियुक्तवचन च । **णियय०** इति- " निजकवचनीयसत्याः सर्वनयाः परविचालने मुग्धाः । तान् पुनर्न दृष्टसमयो विभजते सत्या वा अलीका वा " इति संस्कृतम् ॥ १० ॥

एकादशपद्यमवतारयति-**नन्विति** । **नयग्रन्थे** नयप्रतिपादकग्रन्थे । **दुर्नयपरिग्रहे** एकान्तक्षणिकत्वादिविषयकाध्यवसायलक्षणदुर्नयबौद्धादिदर्शनपरिग्रहे सति । विवृणोति- **बौद्धादीति** । **अभिनिविष्टेति**- अभिनिवेश एकान्तस्थैर्यादिविषयकाध्यवसायकदाग्रहस्तच्छाली य इतरनय एकान्तनैयायिकादिदर्शनलक्षणनयः, तत्खण्डनं तस्मिन्नप्रामाण्यज्ञापनं यदुद्देश्यमभीष्टम्, ' तत्साधने ' इत्यत्र सप्तमी निमित्तार्थिकेत्यभिप्रायेण तत्साधने' इत्यस्य विवरणम्- ' तत्साधननिमित्तम् ' इति, नैयायिकादिदर्शनखण्डनसाधननिमित्तमित्यर्थ. । ' **शुद्धपर्यायादि** ' इत्यादि पदाच्छुद्धद्रव्यस्य परिग्रहः, बौद्धादिकदर्शनखण्डनसाधननिमित्तं नैयायिकादिदर्शनपरिग्रहस्याप्यादृतत्वेन शुद्धद्रव्यप्राप्तेरपि सम्भवात् । ननु शुद्धपर्यायो द्रव्यानात्मकपर्यायः, शुद्धद्रव्यं च पर्यायानात्मकद्रव्यम्, तदुभयमप्यसदेव ॥

" द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः । क्व कदा केन किंरूपा दृष्टा मानेन केनचित् " ॥ १ ॥

इत्यादिवचनात्, तथा च शुद्धपर्यायादिवस्तुप्रापका अपि बौद्धादिदृष्ट्या अप्रमा एवेति चेत् ?, न- ऋजुसूत्रादिपर्यायनयेष्वन्त्यपर्यायनय एवम्भूतनयस्तद्विषयो यः पर्यायः सोऽन्त्यपर्यायत्वात् शुद्धपर्यायः, सङ्ग्रहादिद्रव्यार्थिकेषु सङ्ग्रहनयः शुद्धद्रव्यार्थिकस्तद्विषयस्य सत्तारूपमहासामान्यस्य कस्याप्यपेक्षया विशेषत्वाभावात् तदुभयात्मकं चैकं वस्तु, तदात्मतया द्रव्यस्य पर्यायस्वरूपत्व पर्यायस्य च द्रव्यस्वरूपत्वम्, स्वरूपतस्तु पर्याय द्रव्ययोरन्त्ययोर्भेद एवेत्येकान्तद्रव्यात्मकत्वमेव वस्तुन इति मतस्य खण्डनेन पर्यायात्मकत्वस्यैकान्तपर्यायात्मकत्वमेव वस्तुन इति मतस्य खण्डनेन द्रव्यात्मकत्वस्य च व्यवस्थापनेन तदुभयात्मक वस्त्ववाप्यत इत्यनेकान्तात्मकवस्तुप्राप्तिलक्षणफलस्य वास्तवत्वेन ततो मिथ्यारूपा अपि बौद्धादिदृष्टयः फलतो न मिथ्यारूपा इत्यर्थः । स्वरूपतोऽप्रमात्मकस्यापि साधनज्ञानस्य यथार्थफलजनकत्वेन फलतः प्रामाण्यमित्यत्र दृष्टान्ततया मूले ' रत्नप्रभायां रत्नबुद्धिवद् ' इति दर्शितमवतार्य विवृणोति- **किंवदिति** । दृष्टान्ते स्वरूपतः प्रामाण्याभावं फलतः प्रामाण्यं च भावयति- **यथाहीति** । **तत्र** रत्नप्रभायां रत्नबुद्धौ । **अरत्ने** रत्नत्वाभाववति रत्नप्रभास्वरूपे धर्मिणि । **रत्नावगाहितया** रत्नत्वप्रकारकतया । एतावता तदभाववति तत्प्रकारकत्वलक्षणमप्रामाण्य तत्रावेदितम्, तथा च तद्वति तत्प्रकारकत्वलक्षणं प्रामाण्यं । स्वरूपतस्तत्र नास्तीत्याह- **स्वरूपतो न प्रामाण्यमिति** । **अदूरविप्रकर्षात्** त्विति- **तु** पुन., दूरविप्रकर्षो व्यवहितकालत्वम्, तदभावोऽदूरविप्रकर्षः, विप्रकृष्टकालत्वाभावः, तस्माददूरविप्रकर्षात्, किञ्चिद्व्यवहितोत्तरकाले इति यावत् **वस्तुप्रापकतयेति**- मणिप्रभाया मणिबुद्ध्या प्रवृत्तस्तद्देश गतस्तत्रत्य मणिमासादयतीति

एवं सामान्यलक्षणं विविच्य तद्विभागमाह—

**अयं संक्षेपतो द्रव्य-पर्यायार्थतया द्विधा ।**
**द्रव्यार्थिकमते द्रव्यं तत्त्वं नेष्टमतः परम् ॥ १२ ॥**

**नयामृत०–अयमिति**—अयं सामान्यलक्षणलक्षितो नयः, सङ्क्षेपतः अवान्तरभेदापरिग्रहेण, द्रव्य-पर्याय(यार्थ)तया द्रव्यार्थिकः पर्यायार्थिकश्चेति द्विधा द्विप्रकारः, तीर्थकरवचनसङ्ग्रह-विशेषप्रस्तारमूलत्वेनेत्थमेव मूलनयविभजनात्, तदाह वादी—

" तित्थयरवयणसंगह-विसेसपत्थारमूलवागरणी ।
दव्वट्ठिओ अ पज्जवणओ अ सेसा विगप्पासिं ॥ "

[ सम्मतौ का० १, गाथा–३ ]त्ति

तत्रादौ द्रव्यार्थिकमतमाह–द्रव्यार्थिकस्य मते द्रव्यं तत्त्वं परमार्थसत्, अतः द्रव्यात् पृथग् भिन्नं विकल्पसिद्धं गुण-पर्यायस्वरूपं तत्त्वं नेष्टम्, संवृतिसतोऽपि तस्य परमार्थतोऽसत्त्वादिति भावः ॥१२॥

एतदेवाह—

**तिर्यगूर्ध्वप्रचयिनः पर्याया खलु कल्पिताः ।**
**सत्यं तेष्वन्वयि द्रव्यं कुण्डलादिषु हेमवत् ॥ १३ ॥**

**नयामृत०–तिर्यगिति**—तिर्यक्प्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परभिन्नकालीना रक्त-अणुत्वस्थूलत्वादयश्च, उर्द्ध्वप्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परभिन्नकालीना रक्त-श्यामादयः संयोगो-विभागादयश्च पर्यायाः, खलु निश्चितम्, कल्पिताः वासनाविशेषप्रभवविकल्प-

---

मणिप्रभाधर्मिकमणिबुद्धेर्मणिलक्षणवस्तुप्राप्तिजनकत्वेनेत्यर्थः. **फलतः प्रामाण्यमिति**– संवादिप्रवृत्तिजनकत्वमेव फलतः प्रामाण्यम्, तच्च मणिप्रभाया मणिबुद्धौ समस्तीत्यर्थः । दार्ष्टान्तिके फलत. प्रामाण्यं दर्शयति– **तथेति** ॥ ११ ॥

द्वादशपद्यमवतारयति– **एवमिति**– उक्तप्रकारेण नयसामान्यलक्षण प्रमाणादिव्यावृत्तमुपदर्श्य नयविभागं कथयति ग्रन्थकार इत्यर्थः । विवृणोति– **अयमितीति** । ननु नैगम-सङ्ग्रह-व्यवहारर्जुसूत्र-शब्द समभिरूढैवम्भूतभेदात् नया. सप्तेत्येवमन्यत्र सप्तधा नयविभागः कृत., किमित्यत्र द्विधैव नयो विभज्यत इत्यत आह– **तीर्थकरेति**– तीर्थकरस्य जिनस्य यद् वचनमागमस्तस्य यः सङ्ग्रह-विशेषप्रस्तारः, संग्रह. सामान्यं द्रव्यमिति यावत् विशेषः पर्यायः, तयो· प्रस्तारः– विशेषेण प्रपञ्चः सामान्यप्रतिपादकविशेषप्रतिपादकवचनसन्दर्भः तस्य मूलत्वेन यानि द्रव्यात्मकसामान्यप्रतिपादकवचनानि तानि सर्वाणि द्रव्यार्थिकनयात् प्रवृत्तानि, यानि पर्यायात्मकाविशेषप्रतिपादकवचनानि तानि सर्वाणि पर्यायार्थिकनयात् प्रवृत्तानीत्यतस्तीर्थकरवचनसङ्ग्रह-विशेषप्रस्तारमूलं द्रव्यार्थिक पर्यायार्थिकश्चेत्येवं निरुक्तमूलत्वेनेत्यर्थः । **इत्थमेव** द्रव्यार्थिकः पर्यायार्थिकश्चेति द्विधा नय इत्येव प्रकारेणैव । उक्तप्रकारेण मूलनयविभजने वादिप्रकाण्डश्रीसिद्धसेनदिवाकरवचनं संवादकतया दर्शयति– **तदाहेति** । **तित्थयर०** इति–" तीर्थकरवचनसङ्ग्रह-विशेषप्रस्तारमूलव्याकरणी द्रव्यार्थिकश्च पर्यवनयश्च शेषा विकल्पा अनयोः " ॥ इति संस्कृतम् । **तत्र** द्रव्यार्थिक पर्यायार्थिकभेदेन द्विधा विभक्ते नये । **आदौ** प्रथमम् । **'पृथग्'** इति 'परम्' इत्यस्य विवरणम्, तस्य पर्यायकथन 'भिन्नम्' इति । किं तदित्यपेक्षायामाह– **विकल्पसिद्धं गुणपर्यायस्वरूपं तत्त्वमिति** । कथ नेष्टमित्यपेक्षायामाह– **संवृतिसतोऽपीति**– संवृणोति स्वाकारेण बाह्यमिति संवृतिर्विकल्पात्मकं ज्ञानम्, तेन सतोऽपि यदेव ज्ञान तदेव गुण-पर्यायस्वरूपमिति ज्ञानसत्त्वमेवास्य सत्त्वमित्येतावता संवृत्या सत्त्वमुपादाय गुण-पर्यायस्वरूप संवृतिसदिति कथ्यते, तादृशस्यापीत्यर्थ. । **तस्य** गुण पर्यायस्वरूपस्य ॥ १२ ॥

त्रयोदशपद्यमवतारयति– **एतदेवाहेति**– द्रव्याद्भिन्नं गुणपर्यायस्वरूप कल्पितमेव न परमार्थसदित्येव कथयतीत्यर्थ. । विवृणोति– **तिर्यगितीति** । ये समानकालीना एकाधिकरणवर्तिन. पर्यायास्ते तिर्यक्प्रचयिनः पर्याया., ये तु विभिन्न-

सिद्धाः, अपारमार्थिका इति यावत्, तेषु कल्पनारूढेषु पर्यायेषु, अन्वयि व्यापकतया प्रतीयमानम्, द्रव्यं सत्यम्, कुण्डलादिषु नानाकाञ्चनपर्यायेष्वन्वीयमानहेमवत्, अयं भावः—यथा शुक्तौ रजतभ्रान्तौ बाधावतारानन्तरं रजताभावमानेऽपि तत्र शुक्तेर्भासमानत्वात् शुक्तेः सत्यत्वं रजतस्य चासत्यत्वं तथा कुण्डलाद्यभावभानेऽपि हेम्नो भानात् कुण्डलादिपर्यायाणामसत्यत्वं हेमद्रव्यस्य च सत्यत्वम्, एवमन्यत्रापि भावनीयमिति। नन्वेवं भ्रमाधिष्ठानत्वमेव सत्यत्वं भ्रमविषयत्वं चासत्यत्वमित्यागन्तुं अत्र चासत्यत्वम्, प्रत्यक्षाप्रतीयमानेषु पर्यायेष्वव्यापकम्, एवं तत्र तदसत्त्वरूपसत्यत्वमपि तेष्वव्यापक-

---

कालीना एकाधिकरणवर्तिनः पर्यायास्ते ऊर्ध्वप्रचयिन इति क्रमेण निदर्शनाप्रदर्शनपुरस्सरं दर्शयति– **तिर्यक्प्रचयिन** इति । **अणुत्व-स्थूलत्वादयश्चेति**– आमलकमाम्रापेक्षयाऽणु बदरीफलापेक्षया स्थूलं चेत्येकदैवाणुत्वस्थूलत्वादयः पर्याया अपेक्षाभेदेनैकत्र वर्तन्त इत्यभिसन्धिः। पर्यायेषु द्रव्यस्य सत्त्वे आधारत्वान्यथानुपपत्त्या पर्यायाणां सत्त्वं स्यादत आह– **कल्पनारूढेष्विति**– आधारतया कल्पनाविषया एव ते न वस्तुत आधारत्वमिति मूलाभिसन्धिः । द्रव्यस्य पर्याय-व्यापकत्वे द्रव्यव्याप्याः पर्यायाः सन्त एव स्युरित्यत 'अन्वयि' इत्यस्य 'व्यापकतया प्रतीयमानम्' इति विवरणम्, कल्पनारूढाना पर्यायाणा वस्तुतोऽसतामपि व्यापकतया प्रतीयमानं द्रव्यमित्यर्थः । कल्पनारूढेषु पर्यायेषु व्यापकतया प्रतीयमानस्य द्रव्यस्य सत्यत्वे निदर्शनमाह– **कुण्डलादिष्विति** । भावार्थमावेदयति–**अयं भाव** इति । **बाधावतारानन्तरं** नेदं रजतमिति शुक्तौ रजतत्वबाधानन्तरम् । **'रजताभावभानेऽपि'** इत्यस्य स्थाने 'रजतभानाभावेऽपि' इति पाठो युक्तः, यथाश्रुतपाठस्तु न युक्तः, यतो बाधस्यैव रजताभावज्ञानरूपतया रजताभावभानस्य बाधकालीनतया तत्र बाधावतारानन्तर-मिति विशेषण न सुसङ्गतं स्यात्, तत्र रजतं यदि सत्यं स्यात् तदा पूर्वमिव बाधानन्तरमपि भासेत, न च तदानीं रजत भासत इति तन्न सत्यमित्याशय । **तत्र** बाधानन्तरकाले, अथवा 'रजताभावभानेऽपि' इत्यपि पाठः सम्यग्, यथा बाधकाले रजताभावो भासते तथा तदनन्तरकालेऽपि रजताभाव एव भासते, न तु रजतमतो न रजतस्य सत्यत्वम् । **कुण्डलाद्यभावभानेऽपीति**– कटक-केयूराद्यवस्थाकाले कुण्डलाभावभानमेव भवति, न तु कुण्डलभानम्, सुवर्णं तु तदानीमप्यवभासत इति कुण्डलादिपर्यायाणामसत्यत्व हेमद्रव्यस्य च सत्यत्वमित्यर्थः, **'कुण्डलाद्यभावभानेऽपि'** इत्यस्य स्थानेऽपि 'कुण्डलादिभानाभावेऽपि' इति पाठो युक्तः, कुण्डलाद्यभावभानकाले कुण्डलादिक न भासत इत्यत एव कुण्डलादी-नामसत्यत्वं व्यवस्थापनीयम्, तच्च 'कुण्डलादिभानाभावेऽपि' इति पाठ एव सौसङ्गत्यमर्हतीति, पूर्ववद् वा स पाठोऽपि युक्ततया निभालनीय । ननु शुक्तौ रजतस्य यथाऽसत्यत्व तथा द्रव्ये पर्यायाणामसत्यत्वमित्येव दृष्टान्त-दार्ष्टान्तिकभावा वष्टम्भेन पर्यायाणामसत्यत्वं द्रव्यस्य सत्यत्व यत् समर्थितं तेनेदं ज्ञायते– यदुत, **भ्रमाधिष्ठानत्वं सत्यत्वं भ्रमविषयत्वं चासत्यत्वमिति,** तथा चोक्तरूपमसत्यत्व भ्रान्तप्रत्यक्षे ये पर्याया प्रतीयन्ते तत्रैव स्यात्, ये च पर्याया नास्मादृगा प्रत्यक्षसमधिगम्यास्तेऽपि बहव सन्ति तेषु न स्यात्, एव ये यत्र न सन्ति तेषामेव तत्र ज्ञान भ्रमः, पर्यायास्तु द्रव्ये सन्त्येवेति न तत्र तज्ज्ञान भ्रमः ये च प्रत्यक्षेण न प्रतीयन्ते तेषु तत्र तदसत्त्वमेव तदसत्यत्वमित्यपि पर्यायेषु प्रत्यक्षा-प्रतीयमानेषु न स्यादेव, तेषां द्रव्ये सत्त्वेन तदसत्त्वस्याभावादिति शङ्कते– **नन्वेवमिति** । 'अत्र चासत्यत्व प्रत्यक्षप्रती-यमानेषु' इत्यस्य स्थाने 'एतच्चासत्यत्वं प्रत्यक्षाप्रतीयमानेषु' इति पाठो युक्त । **एतच्चासत्यत्वं** भ्रमविषयत्वलक्षण-मसत्यत्वं पुनः **'प्रत्यक्षाप्रतीयमानेषु'** इत्यनेनैतत् कथित भवति– यदि प्रत्यक्षप्रतीयमानत्व तेषु स्यात् तदैतद् वक्तुं शुक्तौ रजतप्रत्यक्षवद् द्रव्ये तेषां प्रत्यक्ष भ्रम इति प्रत्यक्षात्मकभ्रमविषयत्वमुपादायोक्तलक्षणमसत्यत्व तेषु स्यादपि, यदा प्रत्यक्षेण न प्रतीयन्त एव ते तदा नोक्तस्वरूपमसत्यत्व तेष्विति । ते च पर्याया द्रव्ये वर्तन्त एवेति तत्र तदसत्त्वरूपम-सत्यत्वमपि तेष्वव्यापकमित्याह– **एवमिति** । **'तदसत्त्वरूपमसत्यत्वमपि'** इत्यस्य स्थाने 'तदसत्त्वरूपमसत्यत्वमपि' इति पाठो युक्तः । समाधत्ते– **नेति** । 'सत्यरजतस्यापि' इत्यस्य स्थाने 'असत्यरजतस्यापि' इति पाठो युक्तः, तत्र तद-सत्त्वमात्रमविशेषितमसत्यत्वं न द्रव्यार्थिकनयेऽभ्युपगम्यते, तथा सति शुक्तौ यद्रजतं प्रतीयते तच्छुक्तिरजतपदप्रतिपाद्य प्रातिभासिकरजतमिति गीयते, तस्यासत्यरजतस्यापि प्रतिभासकाले यदा प्रतीयते तदानीं सत्ताभानेन शुक्तौ तस्य प्रति-भासकाले सत्त्वमेवेत्युक्तलक्षणमसत्यत्वं तस्य न स्यात्, किन्तु कालत्रयसत्त्वमेव सत्यत्व द्रव्यार्थिकनये, तदभाव एव

मिति चेत् ? न–सत्यरजतस्यापि प्रतिभासकाले सत्ताभानेन कालत्रयसत एवैतन्नये सत्यत्वस्वीकारात्, अत एव कालवृत्त्यत्यन्ताभावाप्रतियोगित्वमेव परमार्थसत्यत्वमित्यभिप्रेत्याहैतत्साम्प्रदायिकः– ॥ १३ ॥

**आदावन्ते च यन्नास्ति मध्येऽपि हि न तत्तथा ।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ १४ ॥**

**नयामृत०**–आदाविति—आदावन्ते च यत् वस्तु, नास्ति तत् मध्येऽपि मध्यमकालेऽपि न तथा नास्तीत्यर्थः, नहि प्रागभावध्वंसानवच्छिन्नकालसम्बन्धः सत्तेत्यभ्युपगन्तुं शक्यम्, उत्पत्ति-विनाश्यता-समययोः उत्पत्ति-विनाशव्यापारव्यग्रयोरन्वयिव्यवहारात्, न च तद्विवेके मध्यभागः कश्चिदवशिष्यते इक्षुदण्डस्येव सकलमूलाऽग्रभागच्छेदे । किञ्च पूर्वं पश्चाच्चासत्स्वभावस्य कथं मध्यमक्षणे सत्स्वभावत्वं स्वभावविरोधात्, मध्यक्षणे सन्नेव पर्यायः पूर्वाऽपरकालयोरसद्व्यवहारकारीति न स्वभावविरोध इति

---

चासत्यत्वं शुक्तिरजतस्य प्रतिभासकाले सत्त्वेऽप्यप्रतिभासकाले न सत्त्वमिति कालत्रयसत्त्वाभावाद् यथाऽसत्यत्वं तथा पर्यायाणामपि वर्तमानकाले सत्त्वेऽपि स्वोत्पादात् पूर्वं स्वविनाशानन्तर चासत्त्वेन कालत्रयसत्त्वाभावादसत्यत्वम्, एतच्च प्रत्यक्षप्रतीयमानप्रत्यक्षाप्रतीयमानपर्यायगतमिति न कुत्राप्यव्याप्तिरिति निर्गलितोऽर्थः । **एतन्नये** द्रव्यार्थिकनये । **अत एव** द्रव्यार्थिकनये कालत्रयसत एव सत्यत्वस्वीकारादेव, कालवृत्त्यन्ताभावाप्रतियोगित्वलक्षण परमार्थसत्यत्व तत्रैव यत् काल-त्रयेऽपि वर्तते, यच्च प्रतिनियतकाल एव वर्तते तत्र कालपदेन स्वानधिकरणीभूतकालोऽपि ग्रहीतुं शक्यत इति तद्वृत्त्यन्ताभावस्य प्रतियोगित्वमेव न तदप्रतियोगित्वमिति न परमार्थिकसत्यत्वं तस्य, **इत्यभिप्रेत्य** एवम्भूताभिप्राय समाश्रित्य । **एतत्साम्प्रदायिकः** द्रव्यार्थिकनयसम्प्रदायकुशलो विपश्चित्, **आह** कथयति ॥ १३ ॥

किमाहेत्यपेक्षाया तदीयपद्यमुल्लिखति– **आदावन्ते चेति**– यद्यतत् पद्यमन्यकर्तृक न मूलकर्तृकपद्यसमष्ट्यन्तर्गतं ततस्तत्पद्यसङ्ख्यान्तःपातिचतुर्दशमितसङ्ख्यागणनीयत्वाभावात् तदङ्कचिह्नित न भवितुमर्हति, तथापि चतुर्दशसङ्ख्याङ्कचिह्नितमेव ग्रन्थनिबद्ध यदस्ति तत् तथाऽनुट्टङ्कने 'अथ द्रव्योपयोगः स्याद्' इति पद्यमेव चतुर्दशसङ्ख्यास्पदत्वेन तथोट्टङ्कितं भवेत्, तथा चाग्रिम. सर्वाऽप्यङ्कोट्टङ्कनप्रकारस्तदनुक्रमेणैव समुचितो भवेत्, न च तथासन्निवेशनं समस्तीत्युपेक्षैवात्र श्रेयसी, अथवा 'आदावन्ते च' इति पद्यमेकाङ्कचिह्नितमेव समुल्लिख्य 'अथ द्रव्योपयोगः' इति पद्यमेव चतुर्दशसङ्ख्याङ्कचिह्नितमुल्लेख्यम्, तदग्रिमपद्येषु तदनुक्रमेण सङ्ख्याङ्कयोजना विधेयेति । 'आदावन्ते च' इति परकीय पद्यं विवृणोति–**आदावितीति**। **आदौ** स्वोत्पत्तितः प्राक्काले । **अन्ते च** स्वध्वंसानन्तरकाले च । **मध्यमकालेऽपि** वर्तमानसमयेऽपि । 'नहि' इत्यस्य 'शक्यम्' इत्यनेनान्वयः, प्रागभावध्वंसानवच्छिन्न कालो वर्तमानसमय, तत्सम्बन्धो वस्तुनः सत्तेत्यभ्युपगन्तु नहि शक्यमित्यर्थः । निषेधे हेतुमाह– **उत्पत्तीति**– उत्पत्तिसमये उत्पत्तिव्यापारे व्यग्रो विनश्यतासमये विनाशव्यापारे व्यग्रस्तयोर्योऽन्वयिव्यवहारोऽनुगामिद्रव्यव्यवहारस्तस्मादित्यर्थः, अत्र 'उत्पत्ति-विनाशव्यापारव्यग्रयोरन्वयिव्यवहारात्' इत्यस्य स्थाने 'उत्पत्ति-विनाशव्यग्रसत्तयैवान्वयिव्यवहारात्' इति पाठो युक्त, तस्य 'उत्पत्ति विनाशव्यग्रो य सन् तत्त्वेनैवान्वयिद्रव्यस्य व्यवहारात्' इत्यर्थः, तथा चोत्पत्तिकाले उत्पत्तिव्यापारव्यग्र एवेति न तदानी स्थायिता, विनश्यतासमये च मध्यमव्यापारव्यग्र एवेति न तदानीं स्थायिता, तद्भिन्नश्च वर्तमानसमयो नानुभूयत इति उत्पत्ति-विनाशव्यग्रो य सन् तत्त्वेनैव न तु वर्तमानसमयवृत्तित्वेन, अन्वयिव्यवहारादन्वयिनो व्यवह्रियमाणत्वात्, तथा च क्षणिकस्य वस्तुनः कश्चिदुत्पत्तिसमय कश्चिद्विनाशसमयः, तद्विवेके मध्यभागो वर्तमानसमयो न च कश्चिदवशिष्यते, न च कश्चिदुत्पत्ति-विनाशसमयव्यतिरिक्तो मध्यमसमयो नामेति न वर्तमानसमयसम्बन्धः सत्तेत्यभ्युपगन्तु शक्यमित्यर्थः । मध्यसमयाभावे दृष्टान्तमाह– **इक्षुदण्डस्येवेति**– सकला ये मूला-ऽग्रभागास्तेषां छेदे खण्डने सति इक्षुदण्डस्य यथा मध्यभागो नास्ति तथा प्रकृतेऽपीत्यर्थः । यस्य य. स्वभाव. स तस्य सर्वदैवेति नियमे पूर्वा-ऽपरयोरसत्स्वभावस्य वस्तुनो मध्यमक्षणेऽप्यसत्स्वभावत्वमेव न तु सत्स्वभावत्व विरोधादित्याह– **किञ्चेति** । परः शङ्कते– **मध्यक्षण** इति– वर्तमानसमय इत्यर्थः, तथा च मध्यक्षणस्थायित्वलक्षण एकस्वभावो

चेत्? तर्हि पूर्वाऽपरकालयोरसत्त्वभाव एवायं मध्यक्षणसम्बन्धेन सद्व्यवहारकारीत्येव किं न स्वीक्रियते, तस्मान्न निरपेक्षपारमार्थिकसत्तावन्तः पर्यायाः, किन्तु वितथैः शशविषाणादिभिः काल्पनिकत्वेन सदृशाः सन्तः, अनादिलौकिकव्यवहारवासनात् अवितथा इव लक्षिता लोकैरिति शेषः ॥ १४ ॥

नन्वेवं द्रव्यार्थिकनये पर्यायाणां शशविषाणप्रायत्वात् तदवगाहिज्ञानमलीकविषयत्वेन मिथ्या स्यात्, न च घटादिज्ञानविनिर्मुक्तविषयको द्रव्योपयोगः कश्चिदवशिष्यत इति नामशेषतैव तस्य स्यादित्याशङ्क्य शुद्धावान्तरद्रव्यार्थिकभेदेन तस्य द्वैविध्याद् नानुपपत्तिरित्यभिप्रायवानाह—

**अयं द्रव्योपयोगः स्याद् विकल्पेऽन्त्ये व्यवस्थितः ।**
**अन्तरा द्रव्य-पर्याया धीः सामान्य-विशेषवत् ॥ १५ ॥**

**नयामृत०**—अयमिति । अयं **द्रव्योपयोगः** द्रव्यार्थिकनयजन्यो बोधः, **अन्त्ये विकल्पे** शुद्धसङ्ग्रहाख्ये, **व्यवस्थितः** पर्यायबुद्ध्याऽविचलितः स्यात्, **अन्तरा** शुद्धसङ्ग्रह-शुद्धर्जुसूत्रविषयमध्ये, द्रव्यपर्यायधीरेव स्यात्, सामान्य विशेषबुद्धिवत्— यथा हि परेषां द्रव्यत्वादिकं द्रव्याद्यपेक्षया सामान्यं सद् गुणाद्यपेक्षया विशेषाख्यां लभते तथाऽस्माकं घटादिकं स्वपर्यायापेक्षया सामान्यं सद् गुणाद्यपेक्षया पर्यायाख्यां लभत इति घटावगाही अवान्तरद्रव्यार्थिकः पर्यायोपसर्जनतां द्रव्यमुख्यतां चावगाहमानो न

---

वस्तुनो न तु पूर्वापरकालासत्त्वस्वभावोऽपि तस्य, मध्यक्षणस्थायिस्वभावस्यैवास्य पूर्वा-ऽपरकालयोरसद्व्यवहारकारित्वमपीष्यते, ततः पूर्वा-ऽपरकालयोरसद्व्यवहारोऽपि तस्योपपद्यते इत्यर्थः । समाधत्ते-**तर्हीति** । **'पूर्वापरकालयोरसत्त्वभाव एव'** इत्येवकारेण मध्यक्षणे सत्स्वभावस्य व्यवच्छेदः, एव सति कथ मध्यक्षणे सद्व्यवहारस्तस्येत्यपेक्षायामाह- **मध्यमेति** । उपसंहरति- **तस्मादिति**- प्रागभाव-ध्वंसानवच्छिन्नकालसम्बन्धस्य सत्तारूपत्वासम्भवादित्यर्थ. । **निरपेक्षेति**- कालवृत्त्यत्यन्ताभावाप्रतियोगित्वलक्षणा या प्रतिनियतकालनिरपेक्षपारमार्थिकसत्ता तद्वन्तो न पर्यायाः, तर्हि किंरूपास्त इति पृच्छति- **किन्त्विति** । उत्तरयति- **वितथैरिति** । **'वासनात्'** इत्यस्य स्थाने 'वासनावशात्' इति पाठो युक्तः ॥ १४ ॥

पञ्चदशपद्यमवतारयति- **नन्वेवमिति** । **तदवगाहिज्ञानं** पर्यायावगाहिज्ञानम् । ननु पर्यायावगाहिज्ञानस्य मिथ्यात्वापादनमिष्टमेवेत्यत आह- **न चेति**- अस्य 'अवशिष्यते' इत्यनेनान्वयः । द्रव्यज्ञान यदा यदा जायते तदा घट-पटादिज्ञानरूपेणैवेति घट-पटादिज्ञानव्यतिरिक्तो द्रव्योपयोग एव नास्तीति तल्लक्षणको द्रव्यार्थिकनयोऽपि न स्यादित्याह- **घटादिज्ञानेति**- घटादिज्ञानेन विषयतया विनिर्मुक्तो घटादिज्ञानविनिर्मुक्त., घटादिज्ञानाविषय इति यावत्, तद्विषयको द्रव्योपयोगः कश्चिन्नावशिष्यते, घटादिज्ञानविनिर्मुक्तो यदि कश्चिद् द्रव्यनामको विषयः स्यात् तर्हि तद्विषयको द्रव्योपयोगो भवेत्, तथाविधविषयाभावे तु निर्विषयको द्रव्योपयोगो न भवेदेवेत्यर्थः । **नामशेषतैव** नाममात्रतैव । **तस्य** द्रव्योपयोगस्य । **शुद्धेति**-शुद्धद्रव्यार्थिकोऽवान्तरद्रव्यार्थिकश्चेत्येव द्रव्यार्थिकस्य द्वैविध्यात् घटादिज्ञानविनिर्मुक्तविषयकः समस्त्येव द्रव्योपयोग इति तस्य नानुपपत्तिरित्यभिप्रायवान् ग्रन्थकार आहेत्यर्थ । **'द्रव्यपर्याया धीः'** इत्यस्य स्थाने द्रव्य पर्यायधी. इति पाठो युक्त । विवृणोति- **अयमितीति** । दृष्टान्त-दार्ष्टान्तिकसङ्गमना करोति- **यथा हीति** । **परेषां** नैयायिकादीनाम् । **'द्रव्यत्वादिकम्'** इत्यत्रादिपदाद् द्रव्यत्वावान्तरजातीनां गुणत्व-कर्मत्व-तदवान्तरजातीना चोपग्रह., 'द्रव्याद्यपेक्षया' इत्यत्रादिपदात् पृथिव्यादीनां गुण-कर्म-तद्विशेषरूपरसाद्युत्क्षेपणावक्षेपणादीनामुपग्रह , 'गुणाद्यपेक्षया' इत्यत्रादिपदाद् द्रव्यादेरुपग्रहः, अयमभिप्राय – द्रव्यत्वं द्रव्यमात्रानुगामित्वाद् द्रव्यापेक्षया सामान्य सद् गुणादिषु न वर्तत इति गुणादिव्यावृत्तत्वाद् गुणाद्यपेक्षया विशेषोऽपि भवति, एव गुणत्व गुणमात्रानुगामित्वाद् गुणापेक्षया सामान्यं सद् द्रव्यादिषु न वर्तत इति द्रव्यादिव्यावृत्तत्वाद् द्रव्याद्यपेक्षया विशेषो भवति, एव कर्मत्वमपि सामान्य-विशेषरूप बोध्यम्, उक्तदिशा पृथिवीत्वादीनां रूपत्वादीनामुत्क्षेपणत्वादीनां च सामान्य-विशेषरूपत्वं बोध्यम् । **अस्माकं** जैनानाम् । **'घटादिकम्'** इत्यत्रादिपदात् पटादीनां नीलादीना च ग्रहणम् । **'गुणाद्यपेक्षया'** इत्यत्र 'मृदाद्यपेक्षया' इति पाठोऽनुगुणः । ननु घटादेर्द्रव्यत्ववत् पर्यायत्वस्यापि भावे तदवगाहिनयस्यावान्तरद्रव्यार्थिकत्वमेव कथम्? पर्यायार्थिकत्वस्यापि तत्र सम्भवादित्यत आह- **पर्यायोपसर्जनतामिति**- अस्य

विरुध्यते, असतोऽप्युपसर्जनतयाऽऽश्रयणं च कर्णशष्कुल्यवच्छिन्नाकाशस्य शब्दग्राहकतां वदतां तार्किकाणाम्, आनुपूर्वीविशेषविशिष्टस्य शब्दस्य श्रोत्रग्राह्यतां वदतां मीमांसकादीनां च दृश्यत एवेति भावः । यद्वा घटादेर्द्रव्यार्थिकेन पर्यायविनिर्मुक्तद्रव्याकारेणैव ग्रहः, पर्यायनयेन तत्र पर्यायत्वापादने च पर्यायविशिष्टतया ग्रहणमित्येवं सूक्ष्मेक्षिकायां शुद्धसङ्ग्रहाद् अन्त्यविशेषं यावद् अव्यवस्थितिः, अन्त्यविशेषविकल्पे च शुद्धर्जुसूत्रलक्षणे कारणाभावादेव द्रव्योपयोगो व्यवस्थितः स्यात्–व्युपरतः स्यादिति व्याख्येयम्, न चानया व्यवस्थयैवैकस्यापि बोधस्यानापत्तिः, तत्तदवान्तरभेदप्रवृत्तौ वा विषयान्तरसञ्चारानुपपत्तिः, पर्यायान्तरजिज्ञासोपरमे तद्बोधविश्रान्तेः, इति विभावनीयम्, तदिदमुक्तं सम्मतौ—

---

'अवगाहमानः' इत्यनेनान्वयः, तथा च घटाद्यवगाह्युपयोगो द्रव्यार्थिकनये घटाऽपेक्षया पर्यायः सन्नपि तस्योसर्जनतां गौणतामेवावगाहते, द्रव्यस्वरूपस्य तस्य मुख्यतामवगाहत इत्यतोऽवान्तरद्रव्यार्थिको भवन् घटाद्यवगाह्युपयोगो न विरुध्यत इत्यर्थः । ननु पर्यायो द्रव्यार्थिकनयेऽसन्नेवेति कथं तस्योपसर्जनतयाऽऽश्रयणमित्यत आह– **असतोऽपीति** । **तार्किकाणां** नैयायिकानाम्, नन्वाकाशे कर्णशष्कुल्यवच्छेद. समस्त्येवेति कथं कर्णशष्कुल्यवच्छिन्नाकाशस्य शब्दग्राहकत्वाभ्युपगमेऽसत उपसर्जनतयाऽऽश्रयणमायातीति चेत् ? इत्थम्– श्रोत्रेन्द्रियस्य शब्देन सह समवायः सन्निकर्षः शब्दप्रत्यक्षे कारणं तैरिष्यते, न च शब्दस्य समवायः कर्णशष्कुलीरूपोपाधौ किन्तु शुद्धाकाशस्वरूप एव, शुद्धाकाशस्तु तन्मते निष्प्रदेश एव व्यापकः, व्यापकत्वं च देशावच्छेदराहित्ये सत्येव सर्वमूर्तसंयोगित्वलक्षणं सम्भवति, ततो देशावच्छेदरहितस्य शब्दसमवायितया शब्दग्राहकस्याकाशस्य कर्णशष्कुल्यवच्छिन्नत्वमसदेव शब्दग्रहणोपयोगितयाऽऽश्रीयते, उपसर्जनत्व तु तस्याकाशस्वरूपेऽवर्तमानत्वेऽप्यन्यतो व्यावर्तकत्वादेवेति, मीमांसकमते व्यापकनित्यद्रव्यरूपे शब्दे एकवर्णाव्यवहितोत्तरकालवृत्तित्वरूपस्य कालकृतक्रमावस्थानलक्षणस्यैकवर्णदेशाव्यवहितदेशवृत्तित्वरूपस्य देशकृतक्रमावस्थानलक्षणस्य वाऽऽनुपूर्वीस्वरूपस्याभावेऽपि व्यञ्जकध्वनिगतस्य तस्यारोपेण तद्विशिष्टस्य शब्दस्य श्रोत्रग्राह्यत्वमित्यसत एवानुपूर्वीविशेषवैशिष्ट्यस्य शब्दातिरिक्तस्य तस्य न श्रोत्रग्राह्यत्वमत उपसर्जनतयाऽऽश्रयणमिति बोध्यम् । सूक्ष्मेक्षिकामाश्रित्य व्याख्यानान्तर दर्शयति– **यद्वेति** । **तत्र** घटादौ । **पर्यायत्वापादने चेति**– यद्यपि द्रव्यार्थिकमते पर्यायाभावात् पर्यायत्व कुत्रापि नास्ति, ततस्तदापादनमपि न सम्भवति, क्वचित् सत एवापादनसम्भवात्, तथापि पर्यायनय· पर्यायमभ्युपगच्छति तत्र पर्यायत्वमपि स्वीकरोति, स द्रव्यमपि पर्यायदृष्ट्यैव पश्यति, तथा च घटादिरपि तन्मते पर्याय एव तत्र पर्यायत्वज्ञानं प्रमैवेति न तस्यापादनं किन्तु द्रव्यनयस्तत्र तज्ज्ञानं भ्रान्तमेवाभिमन्यत इति तद्दृष्ट्या 'पर्यायत्वापादने' इत्युक्तिः, यदा चापादितपर्यायत्वको घटादिस्तदा पर्यायविशिष्टतया घटादेर्द्रव्यस्य द्रव्यार्थिकेन ग्रहणम् । '**अन्त्यविशेषम्**' इत्यत्र विषयेण विषयिणोऽन्त्यविशेषज्ञानस्याप्युपलक्षणम् । '**यावद्**' इति मर्यादायाम्, तेनान्त्यविशेषविकल्प विहाय शुद्धसङ्ग्रहादारभ्योपान्त्यविशेषविकल्पपर्यन्तं द्रव्योपयोगो**ऽव्यवस्थितो**ऽव्युपरत इत्यर्थः । **कारणाभावादेव** सामान्यावगाहित्वादेवोपयोगस्य द्रव्योपयोगतेति द्रव्योपयोगे विषयविधया द्रव्यं कारणं तदभावादेव । ननु विशेषाणामानन्त्यात् तेष्वन्त्यविशेष परित्यज्य द्रव्योपयोगप्रवृत्त्युपगमे तत्तद्विशेषाणा स्वस्वोत्तरविशेषापेक्षया सामान्यरूपत्वाद् द्रव्योपयोगपरम्पराप्रवृत्तितो न कोऽपि द्रव्योपयोगो विश्रान्तः स्यात्, तथा तस्यैव विषयावान्तरवैलक्षण्यनिबन्धनद्रव्योपयोगावान्तराशुद्धा-ऽशुद्धतरा-ऽशुद्धतमतत्तत्पर्यायविशिष्टद्रव्यग्रहणाविच्छिन्नधाराया विषयान्तरसञ्चारोऽपि न स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **अनया व्यवस्थयेति**– शुद्धसङ्ग्रहादारभ्योपान्त्यविशेषपर्यन्तं द्रव्योपयोगोऽव्युपरतोऽन्त्यविशेषविकल्पे द्रव्योपयोगो व्युपरत इति व्यवस्थयेत्यर्थ. । **अनापत्तिः** अपर्याप्तिः, पर्याप्तस्तु बोधस्तदैव यदि तद्विषयेऽनन्तरमेव ज्ञानान्तरापेक्षा न भवति, प्रकृते यदस्य बोधस्य विषयो यदपेक्षया सामान्यं सोऽपि विशेषस्तदुत्तरविशेषापेक्षया किं सामान्यं स्यादिति जिज्ञासाया तज्ज्ञानस्यैव तद्विषयापेक्ष्यविशेषस्योत्तरविशेषापेक्षया किं सामान्यं स्यादिति जिज्ञासाया तज्ज्ञानस्यैवं ज्ञानान्तरापेक्षाया अवश्यंभावादेकस्यापि बोधस्यापर्याप्तिरित्याशय. । जिज्ञासाऽवश्य भवत्येवेति नियमाभावेन यज्ज्ञानविषयस्य पर्यायजिज्ञासा न भवति तद्बोध एव विश्रान्तिसम्भवान्नानवस्था नवा विषयान्तरसञ्चारानुपपत्तिरिति निषेधहेतुमुपदर्शयति–**पर्यायान्तरेति** ।

उक्तार्थे सम्मतिसम्मतिमुपदर्शयति– **तदिदमुक्तं सम्मताविति** । **पज्जव॰** इति– "पर्यायनयव्युत्क्रान्तं वस्तु द्रव्यार्थिकस्य

" पज्जवणयवुक्कंतं वत्थुं दव्वट्ठिअस्स वयणिज्जं ।
जाव दविओवओगो अपच्छिमवियप्प-णिव्वयणो " ॥त्ति

[ सम्मतौ का० १, गाथा-८ ]

व्याख्या—न विद्यते पश्चिमे विकल्प-निर्वचने—सविकल्पधीर्व्यवहारलक्षणो यत्र स तथा, सङ्ग्रहावसान इति यावत्, ततः परं विकल्प-वचनाप्रवृत्तेः, ईदृशो यावद् द्रव्योपयोगो प्रवर्तते तावद् द्रव्यार्थिकस्य वचनीयं वस्तु, तच्च पर्यायनयेन वि– विशेषण, उत्– ऊर्ध्वम्, क्रान्तमेव विषयीकृतमेव, पर्यायानाक्रान्तसत्तायां मानाभावादित्येकोऽर्थः, यद्वा, यद् वस्तु सूक्ष्मतर-सूक्ष्मतमादिबुद्धिना पर्यायनयेन स्थूलरूपं त्यजता ( उत्तरत्र सूक्ष्मरूपाश्रयणात् ) व्युत्क्रान्तं गृहीत्वेदमुक्तम्, यथा ' किमिदं मृत्सामान्यं यत् घटादिविशेषानुपरक्तता विपयीभवेद् ' इत्येवमाकारेण यावच्छुक्लरूपतमोऽन्त्यो विशेषस्तावत् तत् सर्वं द्रव्यार्थिकस्य वचनीयता, यावदपश्चिमविकल्पनिर्वचनो योऽन्त्यः विशेषस्तावद् द्रव्योपयोगः प्रवर्तत इति द्वितीयोऽर्थः । अत एव द्रव्य-पर्यायविषयतया तदितरातिपयतया वा न शुद्धजातीयद्रव्यार्थिकव्यवस्था, किन्तूपसर्जनीकृतानर्थ-प्रधानीकृतस्वार्थविपयतया, तदुक्तम्—

" दव्वट्ठिओ त्ति तम्हा णत्थि णयो नियमसुद्धजाईओ ।
ण य पज्जवट्ठिओ णाम को इ भयणाय उ विसेसो " ॥त्ति

[ सम्मतौ का० १, गाथा-९ ]

---

वचनीयम् । यावद्द्रव्योपयोगोऽपश्चिमविकल्पनिर्वचनः" ॥ इति संस्कृतम् । उक्तसम्मतिगाथा विवृणोति— **न विद्यत** इति— अत्र 'न विद्येते विकल्प-निर्वचने सविकल्पधी-व्यवहारलक्षणे यत्र स तथा' इति पाठः सम्यक्, **तथा** अपश्चिमविकल्प-निर्वचनः । **ततः परं** सङ्ग्रहात् परम् । **ईदृशः** सङ्ग्रहावसान. । **तच्च** द्रव्यार्थिकवचनीयं वस्तु च । उक्तगाथाया. प्रकारान्तरेण व्याख्यानमुपदर्शयति— **यद्वेति** । **'स्थूलरूपं त्यज्यता'** इत्यस्य समर्थकम्– 'उत्तरत्र सूक्ष्मरूपाश्रयणाद्' इति । **'गृहीत्वेदमुक्तम्'** इत्यस्य स्थाने 'गृहीत्वा त्यक्तम्' इति पाठो युक्त', गृहीत्वा त्यक्तमित्येव भावयति— **यथेति** । **'उपरक्तता विषयीभवेद्'** इत्यस्य स्थाने 'उपरक्तं सद् विषयीभवेद्' इति पाठो युक्त. । **'यावच्छुक्लरूपतमः'** इत्यस्य स्थाने 'यावत्सूक्ष्मरूपतमः' इति पाठो युक्तः । **'वचनीयता'** इति स्थाने 'वचनीयम्' इति पाठः सम्यक् । निर्गलितार्थमाह— **यावदपश्चिमेति** । **अत एवेति**— यत एव सङ्ग्रहावसानो यावद् द्रव्योपयोगः प्रवर्तते तत् सर्वं द्रव्यार्थिकवक्तव्य पर्यायनयेन विषयीकृतमेव, तथाऽन्त्यविशेषं यावत् पर्यायनयेन गृहीत्वा मुक्तं तत् सर्वं द्रव्यार्थिकस्य वक्तव्यमित्येवमशेपस्य द्रव्यार्थिकनयविषयस्य पर्यायनयविषयत्वमशेषस्य पर्यायार्थिकनयविषयस्य द्रव्यार्थिकनयविषयत्वमेतस्मादेव कारणात् । **द्रव्येति**— द्रव्यविषयको नयः शुद्धजातीयद्रव्यार्थिकः, पर्यायविषयो नयः शुद्धजातीयपर्यायार्थिक इति द्रव्येतराविपयको नय शुद्धजातीयद्रव्यार्थिकः पर्यायेतराविषयको नयः शुद्धजातीयपर्यायार्थिक इति वा व्यवस्था न सम्भवति, पर्यायार्थिकस्यापि द्रव्यविषयकत्वाद् द्रव्यार्थिकस्यापि पर्यायविषयकत्वाद् द्रव्यार्थिकस्य द्रव्येतरपर्यायविषयकत्वेन द्रव्येतराविषयकत्वासम्भवात् पर्यायार्थिकस्यापि पर्यायेतरद्रव्यविषयकत्वेन पर्यायेतराविषयकत्वासम्भवादित्यर्थः । तर्हि शुद्धजातीयद्रव्यार्थिक-पर्यायार्थिकव्यवस्था कथमिति पृच्छति— **किन्त्विति** । उत्तरयति— **उपसर्जनीकृतेति**— 'उपसर्जनीकृतानर्थ' इति स्थाने 'उपसर्जनीकृतान्यार्थ' इति पाठो युक्त', तथा चोपसर्जनीकृतपर्याय-प्रधानीकृतद्रव्यविषयको नयः शुद्धजातीयद्रव्यार्थिकः, उपसर्जनीकृतद्रव्य-प्रधानीकृतपर्यायविषयको नय. शुद्धजातीयपर्यायार्थिक इत्येवं व्यवस्था युक्तेत्यर्थः । वस्तुतो द्रव्यार्थिकेऽप्युपसर्जनतया पर्यायस्य, पर्यायार्थिकेऽप्युपसर्जनतया द्रव्यस्य नियमतो विषयत्वेन न शुद्धजातीयो द्रव्यार्थिकः पर्यायार्थिको वा, व्यवस्था तु द्रव्यार्थिकत्व-पर्यायार्थिकत्वाभ्यामेव, न तत्र शुद्धजातीयत्वमेव प्रविशतीति बोध्यम् । उक्तार्थे सम्मतिसंवादमाह— **तदुक्तमिति** । **दव्वट्ठिओ०** इति—"द्रव्यार्थिक इति तस्मान्नास्ति नयो नियमशुद्धजातीयः । न च पर्यवार्थिको नाम कोऽपि भजनायास्तु विशेषः " ॥ इति संस्कृतम् । भजनया तु द्रव्यार्थिक-पर्याया-

भजना– उपसर्जन-प्रधानभावावगाहना, आह सामान्यसङ्ग्रहेऽपि शुद्धद्रव्यार्थैकान्तिको न स्यादिति चेत् ? न स्यादेव, पर्यायनयविचारानवतारदशायामेव तस्य शुद्धत्वव्यवस्थितेः, तदवतारे तु पूर्वप्रवृत्त-द्रव्यार्थिकाप्रामाण्यनिश्चयेन तदर्थाभावस्यैव निश्चयात्, तदुक्तम्—

" दव्वट्ठिअवत्तव्वं अवत्थु नियमेण होइ पज्जाए ।
तह पज्जववत्थु अवत्थुमेव दव्वट्ठिअनयस्स " ॥

[ सम्मतौ का० १, गाथा–१० ]

अवस्तु– इतरनयप्राधान्योपस्थितिजनितनयाप्रामाण्यनिश्चयकृतावस्त्वनिश्चयविषयः, तस्मात् पर्याय-विनिर्मुक्तप्रकारताकस्य पर्यायनिष्ठोपसर्जनत्वाख्यविषयताकस्य वा द्रव्यार्थिकस्य तत्कोपनीतस्वार्थविचार-दशायामेव शुद्धत्वम्, पर्यायनयार्थान्तरभावाकाङ्क्षायां चाशुद्धत्वमिति विवेकः ॥ १५ ॥

पर्यायार्थिकमतमुपन्यस्यति—

**पर्यायार्थमते द्रव्यं पर्यायेभ्योऽस्ति नो पृथक् ।**
**यत् तैरर्थक्रिया दृष्टा नित्यं कुत्रोपयुज्यते ? ॥ १६ ॥**

**नयामृत०—पर्यायार्थमत** इति । पर्यायार्थमते द्रव्यं–द्रव्यपदार्थः सदृशक्षणसन्ततिरेव न तु

---

र्थिकयोर्विशेषस्तत्र का नाम भजनेत्यपेक्षयामाह–**भजनोपसर्जन-प्रधानभावावगाहनेति**– द्रव्यार्थिकेन पर्यायस्योपसर्जनभावेन द्रव्यस्य प्रधानभावेन याऽवगाहना, या च पर्यायार्थिकेन द्रव्यस्योपसर्जनभावेन पर्यायस्य प्रधानभावेनावगाहना सा भजनेत्यर्थः। अत्र पराशङ्कामुत्थाप्यापहस्तयति— **आहेति**– परो वक्तीत्यर्थः । **सामान्यसङ्ग्रहेऽपि** महासामान्यसत्त्वावगाहिनि सङ्ग्रहनयेऽपि । '**शुद्धद्रव्यार्थैकान्तिको न स्याद्**' इत्यस्य स्थाने 'शुद्धद्रव्यार्थतैकान्तिकी न स्याद्' इति पाठो युक्त.। ग्रन्थकार आह– **न स्यादेवेति**– सामान्यसङ्ग्रहेऽपि शुद्धद्रव्यार्थतैकान्तिकी न स्यादेवेत्यर्थः, तथा चोक्तापादनमिष्टापादत्वान्न दोषावहमिति भावः । तर्हि सामान्यसङ्ग्रहः शुद्धद्रव्यार्थिक इति व्यवहारस्य का गतिरित्यपेक्षयामाह– **पर्यायेति**– यदा पर्यायनयविचारो नावतरति तदानीमेव सामान्यसङ्ग्रहाख्यद्रव्यार्थिकस्य शुद्धत्वव्यवस्थितेरित्यर्थ. । **तदवतारे** तु पर्यायनय-विचारावतारे पुनः । **पूर्वेति**– पर्यायनयविचारावतारात् पूर्वं प्रवृत्तो यो द्रव्यार्थिको द्रव्यार्थिकनयस्तस्मिन् पश्चात् प्रवृत्तेन पर्याया-र्थिकनयविचारेण योऽप्रामाण्यनिश्चयो द्रव्यार्थिकनयो न प्रमाणमित्याकारकस्तेन, **तदर्थाभावस्यैव** द्रव्यार्थिकनयविषयाभाव-स्यैव निश्चयात्, तथा च द्रव्यार्थिकनयविषयस्य द्रव्यवस्तुन एवाभावे तच्छुद्धताया अप्यभावान्न तद्विषयकस्य सामान्य-सङ्ग्रहात्मकद्रव्यार्थिकनयस्य शुद्धत्वमित्यर्थ. ।

इत्थं च पर्यायार्थिकनयविचारदशाया द्रव्यार्थिकनयविषयोऽवस्तुतयैव निश्चीयते, द्रव्यार्थिकनयविचारदशाया पर्याया-र्थिकनयविषयोऽप्यवस्तुतयैव निश्चीयत इत्यत्र सम्मतिसंवादमाह–**तदुक्तमिति** । **दव्वट्ठिअ०** इति–"द्रव्यार्थिकवक्तव्यमवस्तु नियमेन भवति पर्याये । तथा पर्यववस्तु अवस्त्वेव द्रव्यार्थिकनयस्य" ॥ इति संस्कृतम् । ननूक्तरीत्या द्रव्यार्थिक-पर्याया-र्थिकविषययोरवस्तुत्वे सामान्य-विशेषयोर्द्वयोरप्यभावाद् वस्तुकथैवोच्छिद्येत, नवा वस्तु केनाप्यवस्तु कर्तुं शक्यमतोऽवस्त्वित्य-स्यार्थमाह– **अवस्त्विति** । **इतरेति**– द्रव्यार्थिकनयव्यतिरिक्तस्य पर्यायार्थिकनयस्य प्राधान्येन योपस्थितिस्तज्जनितो नयस्य द्रव्यार्थिकस्य योऽप्रामाण्यनिश्चयस्तत्कृतो योऽवस्तुत्वनिश्चयस्तद्विषयो द्रव्यार्थिकनयविषयो भवति, एवं पर्यायार्थिकनयव्यतिरिक्तस्य द्रव्यार्थिकनयस्य प्राधान्येन योपस्थितिस्तज्जनितो नयस्य पर्यायार्थिकनयस्य योऽप्रामाण्यनिश्चयस्तत्कृतो योऽवस्तुत्वनिश्चयस्तद्विषयः पर्यायार्थिकनयविषयो भवतीत्यर्थ । द्रव्यार्थिकस्य शुद्धत्वा-शुद्धत्वविवेकमुपसहरति– **तस्मादिति** । **स्वार्थविचारेति**– द्रव्या-र्थिकनयार्थविचारेत्यर्थ । **पर्यायनयार्थान्तरभावाकाङ्क्षायां** पर्यायनयविषयीभूतपर्यायरूपद्रव्यभिन्नार्थभावापेक्षायाम् ॥१५॥

षोडशपद्यमवतारयति– **पर्यायेति** । विवृणोति– **पर्यायार्थमत इतीति**– स्पष्टम् । भावार्थमुपदर्शयति– **अयं भाव इति** । **अन्यैः** नित्यद्रव्याभ्युपगन्तृभि. पर्यायमात्राभ्युपगन्तृभिर्वा । **यत् किञ्चिदिति**– सत्तासामान्यलक्षणम् उत्पाद-

पर्यायेभ्यः पृथगस्ति, यत्— यस्मात् कारणात्, तैः—पर्यायैः, अर्थक्रिया— जलाहरणादिरूपा दृष्टा, नित्य-सम्प्रच्युता-ऽनुत्पन्न-स्थिरैकस्वभावं वस्तु कुत्रोपयुज्यते ? न कुत्रचिदित्यर्थः, अयं भावः— सत्त्वं तावद-न्यैर्यत् किञ्चित् परिभाष्यताम्, अस्मन्मते तु भावानां प्रत्यक्षसिद्धमर्थक्रियाकारित्वमेव तत्, तच्च क्रम-यौगपद्याभ्यां व्याप्तम्, नहि क्रमा-ऽक्रमाभ्यामन्यः प्रकारः शङ्कितुमपि शक्यते, व्याघातस्योद्भवात्, न क्रम इति निषेधादेवाक्रमस्य, नाक्रम इति निषेधादेव च क्रमस्योपगमात्, अभ्युपगमश्च प्रतिक्षेपं व्याह-न्तीति क्रमा-ऽक्रमौ स्थिरेऽसम्भवन्तौ अर्थक्रियामपि ततो व्यावर्तयतः। न च 'क्रमो नानाकालीन-कार्यजनकत्वं स्वकार्यप्रागभावसमानकालीनकार्यजनकत्वं वा, अक्रमश्चैकदा यावत्स्वकार्यजनकत्वम्' इति, कारितागर्भत्वेन व्यावर्त्य-व्यावर्तकयोरविशेषः, कारिताद्वयव्यावृत्त्या तत्सामान्यव्यावृत्त्यापादाने तात्पर्यात्, समर्थो हि भावो वर्तमानार्थक्रियाकरणकालेऽतीतानागतेऽर्थक्रिये कुर्यादेव, यत्काले यत्करण-समर्थं तत्काले तदुत्पादकत्वमिति व्याप्तेः, असमर्थत्वे तु पूर्वा-ऽपरकालयोरप्यकरणापत्तिः, समर्थोऽप्य-

व्यय-ध्रौव्ययुक्तत्वरूप त्रिगुणात्मकप्रकृत्यात्मकत्वरूप प्रतीतिकालसत्त्व-व्यावहारिकसत्त्व-पारमार्थिकसत्त्वान्यतमात्मकमित्यादि-स्वस्वसिद्धान्तानुगुणमित्यर्थ.। **परिभाष्यताम्** आधुनिकस्वस्वसङ्केतविषयः क्रियताम्, युक्त्याऽघटमानत्वेन परपरिकल्पित-स्वरूपस्य तस्य वस्तुत्वाभावादित्याशय.। **अस्मन्मते** पर्यायार्थिकनयमते। '**प्रत्यक्षसिद्धम्**' इत्यनेन प्रमाणसिद्धस्य तस्य सर्वैरप्युपादेयत्वमित्याविष्कृतम्। **तत्** सत्त्वम्। अर्थक्रियाकारित्वलक्षणं सत्त्वं च नित्यतया पराभिमते द्रव्ये न सम्भवतीति न तत् सदित्युपपादनायाह— **तच्चेति**— अर्थक्रियाकारित्वं चेत्यर्थः। क्रमकारित्व-युगपत्कारित्वाभ्यामन्यस्य प्रकारस्य सम्भवे तेन रूपेणार्थक्रियाकारिणि वर्तमानमर्थक्रियाकारित्वं व्यभिचाराज्ञ क्रम-यौगपद्याभ्या व्याप्तं स्यादतस्तथाभूतप्रकारस्या-सम्भवमुपदर्शयति— **नहीति**— अस्य 'शक्यते' इत्यनेनान्वय.। क्रमा-ऽक्रमव्यतिरिक्तप्रकाराभ्युपगमे व्याघातमेव भावयति— **न क्रम इतीति**। '**अक्रमस्य**' इत्यस्य 'उपगमाद्' इत्यनेन सम्बन्धः। न क्रम इत्येवं निषेधे अक्रमस्याभ्युपगम आयाति, स च नाक्रम इत्येवमक्रमप्रतिक्षेप विरुणद्धि, तथा नाक्रम इत्येव निषेधे क्रमस्याभ्युपगमः प्राप्नोति, स च न क्रम इत्येवं क्रमप्रतिक्षेपं हिनस्तीत्याह— **अभ्युपगमश्चेति**। यदा च क्रमाऽक्रमाभ्या व्याप्तमर्थक्रियाकारित्वलक्षणं सत्त्वं व्यवस्थितं तदा व्यापकीभूतयो· क्रमकारित्वा-ऽक्रमकारित्वयोर्यत्राभावस्तत्रावश्य तद्व्याप्यस्यार्थक्रियाकारित्वस्याप्यभावः, व्यापकाभावस्य व्याप्याभावव्याप्यत्वात्, एव च क्रमा-क्रमरूपव्यापकस्याभावात् स्थिरे व्याप्यस्यार्थक्रियाकारित्वस्याभाव: सिध्यतीत्याह—**क्रमा-ऽक्रमाविति**। **ततः** स्थिरात्। ननु क्रमा-ऽक्रमयोरर्थक्रियाकारित्वरूप एव पर्यवसानात् तदभावयो-रप्यैक्यान्न क्रमा-क्रमाभावतोऽर्थक्रियाकारित्वाभावसाधन सम्भवतीत्याशङ्क्य प्रतिक्षिपति— **न चेति**। **स्वकार्येति**— यत् क्रमेण कार्यं करोति तस्य स्वकार्य यद् द्वितीयादि कार्यं पूर्वकार्योत्तरकालभावि तत्प्रागभावसमानकालीनं तत्पूर्वकालभावि-कार्यं तज्जनकत्व समस्तीति। निषेध हेतुमाह—**कारिताद्वयव्यावृत्त्येति**— क्रमकारित्वा-ऽक्रमकारित्वोभयव्यावृत्त्येत्यर्थः, विशेषाभावकूटस्य सामान्याभावव्याप्यत्वेन सामान्याभावसाधकत्वं सर्वानुमतमिति प्रकृतेऽपि क्रमकारित्वाऽक्रमकारित्वे कारित्वसामान्यस्य विशेषरूपे इति क्रमकारित्वाभावा-ऽक्रमकारित्वाभावोभयेन विशेषाभवकूटरूपेण कारित्वाभावस्य सामा-न्याभावरूपस्यापादने दोषाभावादित्यर्थः। नित्यस्य द्रव्यस्य तावद् युगपदर्थक्रियाकारित्वे स्वकार्यत्वेनाभिमतानामशेषा-णामपि प्रथमक्षण एव करणे द्वितीयक्षणे करणीयस्य कस्यापि कार्यस्याभावे तत्कारित्वलक्षणसत्त्वस्याभावान्नित्यत्व न स्यात्, तथैकस्मिन्नपि क्षणे येन स्वभावेनैककार्यकारित्वं तेनैव स्वभावेनान्यकार्यकारित्वे एककार्यस्य यद् रूपं तत्स्वभावजनितं तदेव रूपमन्यकार्याणामपि तत्स्वभावजनितमित्यशेषकार्यस्य कारणैकस्वभावजनितैकस्वभावस्यानुषङ्ग., यदि च यावन्ति कार्याणि तावत्कार्यानुगुणानेकस्वभाववत्त्वसमर्थादेकेन स्वभावेनैककार्यजनकत्वं तद्भिन्नेन स्वभावेनापरकार्यजनकत्वमित्येवमनेक-स्वभाववत्त्वम्, तथा सति स्वभावभेदेन कारणभेद आवश्यक इति नैकस्य कारणस्य युगपदनेककार्यकारित्वमित्येवं स्थिराद् युगपत्कारित्वस्य व्यावृत्तिः, क्रमकारित्व यथा स्थिराद् व्यावर्तते तथोपदर्शयति— **समर्थो हीति**— यदा यत् कार्यं प्रति यः समर्थस्तदा तत् कार्यं स करोत्येवेति वर्तमानक्रियाकरणकाले वर्तमानक्रियां प्रति समर्थो भावो यथा वर्तमानक्रिया

पेक्षणीयासन्निधेर्न करोतीति चेत् ? केयं सहकारिणामपेक्षा ? किं तैः सह करोतीत्यन्वयपर्यवसितः स्वभाव(वा)भेदः १ उत तैर्विना न करोतीति व्यतिरेकिनिष्टं स्वरूपम् २, आहोस्वित् तैरुपकृतः करोतीत्युपकारभेदः ३ ?, न प्रथमः—सहकार्यभावकालेऽपि स्वभावस्य तादवस्थ्यात् तदा तत्कार्यकरणापत्तेः, तत्स्वभावतादवस्थ्य एव तैः सहैव करोतीति स्वभावहानिभिया तदा न कार्यं करोतीति चेत् ? स तर्हि स्वभावाभेदः सहकारिसाहित्ये सति कार्यकरणनियतः सहकारिणो न जह्यात्, प्रत्युत स्वगल एव बध्नीयात् । अत एव न द्वितीयः— अकर्तृस्वभावापरावृत्तेः, स हि स्वभावः कालान्तरे उपनयतोऽपि सहकारिणः पराणुद्य कार्यं प्रतिबध्नीयात्, तद्विरहादकर्तृशीलः खल्वयमिति; अथ सहकारिषु सत्सु कर्तृस्वभावस्तद्विरहे त्वकर्तृरूपोऽयमित्यभिप्रायः, विरुद्धधर्माध्यासस्तर्हि भावं भिन्द्यात्; न चायं कालभेदेन

करोति तथाऽतीतानागतक्रिये प्रति समर्थोऽतीतानागते अपि कुर्यादेवेत्यर्थ , 'अतीतानागतेऽर्थक्रिये' इत्यस्य स्थाने 'अतीतानागते अर्थक्रिये' इति पाठो युक्त', अतीता चानागता चेत्यतीता ऽनागते, ते अतीतानागते इति द्वितीयाया द्विवचनान्तमेतत्, एवमर्थक्रिये अपि । समर्थोऽपि भावो वर्तमानक्रियाकरणकाले अतीता-ऽनागते अर्थक्रिये न करिष्यतीत्युपगमो न सम्भवति, तत्प्रतिपन्थिन्या 'यत्काले यस्य यत्करणसामर्थ्यं तत्काले तस्य तदुत्पादकत्वम्' इति व्याप्ते. सद्भावादित्याह—यत्काल इति—अत्र 'यत्काले यस्य यत्करणसामर्थ्यं तस्य तत्काले तदुत्पादकत्वमिति व्याप्ते'' इति पाठो युक्त' । ननु स्थिरस्यापि भावस्य वर्तमानक्रियाकरणकाले अतीतानागते अर्थक्रिये प्रति न सामर्थ्यमतो नातीतानागते अर्थक्रिये तदानी विदधातीत्यत आह— **असमर्थत्वे त्विति**— यद् यत्कार्यं प्रति न समर्थं तत् तत्कार्यं कदाचिदपि न करोति, यथाऽङ्कुर प्रत्यसमर्थं शिलाशकल कदाचिदपि नाङ्कुरं करोति, अतीतानागते अर्थक्रिये प्रति असमर्थ च प्रकृतमिति प्रयोगोऽत्र ज्ञेयः । **पूर्वेति**— स्थिरो भावः पूर्वकाले पूर्वकालीनं कार्यं करोति, उत्तरकाले उत्तरकालीन कार्यं करोतीत्येव पूर्वा-ऽपरकालयोः कार्ययोर्यत् करण तदभाव' प्रसज्यत इत्यर्थ. । द्रव्यवादी शङ्कते— **समर्थोऽपीति**— वर्तमानक्रियाकरणकाले भावोऽतीता-ऽनागते अर्थक्रिये प्रत्यपि समर्थ एव, किन्तु तदुत्पादनेऽपेक्षणीयस्य सहकारिणो वर्तमानक्रियाकरणकालेऽसन्निधेस्तदानीमतीता-ऽनागते अर्थक्रिये न करोतीत्यर्थ । समाधत्ते— **केयमिति** । तैः सहकारिभि , एवमग्रेऽपि । '**व्यतिरेकिनिष्टम्**' इत्यस्य स्थाने 'व्यतिरेकनिष्टम्' इति पाठो युक्तः, तस्य व्यतिरेकपर्यवसितमित्यर्थ. । **न प्रथम** इति— तै सह करोतीति प्रथमपक्षो न युक्त इत्यर्थः, तैः सह करोतीति योऽयमस्य स्वभाव. स यदि सर्वदाऽस्य भवेत् तदैव स तस्य स्वभावः स्यात्, एव च यदा न सहकारिसमवधान तदापि स स्वभावस्तस्य समस्त्येवेति तद्बलादतीता ऽनागते अपि अर्थक्रिये तदानीं कुर्यादेवेत्यर्थः । द्रव्यवादी आह— **तत्स्वभावेति**— यदा न सहकारिसमवधान तदानीमपि तै. सह करोतीति स्वभावस्तस्य तदवस्थ एव, यदि तदानी कार्यं कुर्यात् तर्हि सहकारिणामभावेऽपि कार्यकारित्वमापतितमस्येति तै सह करोतीति स्वभाव एव विलीयेतेत्युक्तस्वभावरक्षार्थमेव तदानी कार्यं न करोतीत्यर्थ , तै' सह करोतीति स्वभावो हि सहकारिसाहित्ये सति यत् कार्यकरण तेन नियतः, यश्च येन नियत. स तस्मिन् सत्येवावतिष्ठते, अन्यथा तन्नियतत्वमेव तस्य न स्यात्, एवं च सहकारिभि. सह करोतीति स्वभावस्य सर्वदाऽवस्थाने तद्व्यापकस्य सहकारित्वे सति कार्यकरणस्यापि सर्वदावस्थानमेव, तच्च तदा स्याद् यदि सहकारिसाहित्यमपि सर्वदा स्यात्, अन्यथा सहकारिसाहित्ये सति कार्यकरणमित्येव न भवेत्, तथा चोक्तस्वभावरक्षार्थं पलायमानानपि सहकारिणो गले बध्नीयादेव, न तु कदाचिदपि जह्यादित्यर्थः । **अत एव** स्वस्वभावापरित्यागादेव । **न द्वितीय** इति— तैर्विना न करोतीति द्वितीयपक्षोऽपि न सम्भवतीत्यर्थ. । 'अत एव' इत्यतिदिष्टमेव हेतुमुपदर्शयति— **अकर्तृस्वभावापरावृत्तेरिति**— सहकारिसमवधाने सत्यपि सहकारिभिर्विना न करोतीति स्वभावस्यापरावृत्तेरप्रच्यवादित्यर्थ. । सहकारिराहित्ये तत्कार्याकरण तन्नियत खलु सहकारिभिर्विना न करोतीति स्वभावः, स च सर्वदा समस्तीति तद्व्यापकं सहकारिराहित्ये सति कार्याकरणमपि सर्वदा भवेत्, तत्स्वरूपसन्निविष्टं सहकारिराहित्यमपि सर्वदैव भवितुमर्हतीति स्वसन्निधापककारणबलादापततोऽपि सहकारिणो दूरीकृत्य स्वकार्यं न कुर्यादेव, अन्यथा सहकारिभिर्विना न करोतीति स्वभाव एव तस्य न सुरक्षित इत्याह— **स हीति** । **पराणुद्य** हठादपास्य । **तद्विरहात्** सहकारिविरहात् । **अयं** स्थिरो भावः । द्रव्यवादी स्वाभिप्रायमुद्घाटयति— **अथेति** । **तद्विरहे**

परिहर्तव्यः, प्रतीत्योत्पत्तिकधर्मसमुदायाद्धर्मिणोऽनतिरेकात्, अन्यथा तस्य सामर्थ्या-ऽसामर्थ्याभ्यां भिन्नस्य निरुपाख्यत्वापत्तेः; न च परं प्रत्यापाद्याप्रसिद्धिः, अयमङ्कुरो यदि स्वधर्मभिन्नः स्यादङ्कुरो न स्यात् पटवदित्यापादानार्थत्वात् । उपकारपक्षस्त्वनेकमुखानवस्थादुस्थतयोपन्यासानर्ह एवेति । न च, क्षणिकपक्षेऽपि निरपेक्षत्वात् कदाचिदपि कार्यानुत्पत्तेः सापेक्षस्यैवार्थक्रियाकारित्वमाश्रयणीयम्, तत्त्वं च नानुपकारपेक्षायामतिप्रसङ्गात्, उपकारापेक्षायां चानवस्थादौस्थ्यमेव, तथा पुञ्जात् पुञ्जोत्पत्तौ बीजमपि पवनपाथस्तेजोऽङ्कुरान् जनयतीति पक्षे किं येनैव स्वभावेनाङ्कुरं करोति तेनैव पवनादीन् अन्येन वा ? नाद्यः— एकस्वभावाधीनत्वेन कार्याणामभेदप्रसङ्गात्, पवनादिकं यदि यावदङ्कुरप्रयोज्यं

सहकारिविरहे । पर्यायवादी उत्तरयति— **विरुद्धधर्माध्यास** इति— 'अयमेव भेदो भेदहेतुर्वा, यदुत— विरुद्धधर्माध्यासः, स च चेन्न भेदको विश्वमेक स्याद्' इति वचनाद् विरुद्धधर्माध्यासस्य भेदकत्वमविगानेन मन्तव्यम्, तथा च सहकारिषु सत्सु कर्तृत्व सहकारिविरहे त्वकर्तृत्वमित्येव विरुद्धधर्माध्यासः स्थिरं भाव भिन्द्यादित्यर्थः । ननु यदा सहकारिसमवधानं तत्कालावच्छेदेन सहकारिषु सत्सु कर्तृत्वमित्ययं स्वभाव., यदा च न सहकारिसमवधानं तत्कालावच्छेदेन सहकारिविरहेऽकर्तृत्वस्वभाव इत्येव कालावच्छेदकभेदेनैकत्रापि भावरूपधर्मिण्युक्तस्वभावद्वयस्य सम्भवेन न विरोध इति परिहृतविरोधस्य स्वभावद्वयस्य सद्भावतो न भेदापत्तिरित्याशङ्क्य प्रतिक्षिपति— **न चेति** । **अयं** निरुक्तकर्तृत्वाकर्तृत्वस्वभावयोर्विरोध., सहकारिसमवधाने सति कर्तृत्वस्वभाव. सहकारिसमवधानादुत्पद्यते, सहकारिविरहेऽकर्तृत्वस्वभावः सहकारिविरहादुत्पद्यते इति स्वभाव-तद्वतोरभेदात् स्वभावोत्पादे स्वभाववतोऽप्युत्पत्तिरित्येवमपि भावस्य भेदः स्यादेवेति निषेधहेतुमुपदर्शयति— **प्रतीत्येति**— किञ्चिदपेक्ष्योत्पत्तिको यो धर्मस्तत्समुदायाद्धर्मिणोऽनतिरेकादभेदात्, तथा च धर्मोत्पादे धर्मिण उत्पाद आवश्यक इति न नित्यत्व तस्येत्यर्थः । **अन्यथा** धर्मसमुदायाद्धर्मिणोऽभेदानभ्युपगमे । **तस्य** कारणतयाऽभिमतस्य भावस्य । **निरुपाख्यत्वापत्तेः** अलीकत्वापत्ते. । ननु भावो यदि सामर्थ्या-ऽसामर्थ्याभ्या भिन्न स्यात् निरुपाख्यः स्यात् शशशृङ्गवदित्येवमापादनमत्राभिमतम्, तच्च द्रव्यवादिनं प्रति न सम्भवति, तन्मते असत्ख्यातेरनभ्युपगमेनासत आपादनासम्भवादित्याशङ्क्य प्रतिक्षिपति— **न चेति** । **परं प्रति** द्रव्यवादिनं प्रति । **आपाद्याप्रसिद्धिरिति**— यदेव क्वचित् प्रसिद्धं तस्यैवापादन भवति, अलीकं त्वसत्ख्यात्यनभ्युपगन्तृद्रव्यार्थिकमते न क्वचित् प्रसिद्धमिति तस्यापादनं न सम्भवतीत्याशय. । निषेधहेतुमाह— **अयमिति**— अत्राङ्कुरभेद आपाद्यः, स च परमतेऽपि प्रसिद्ध एवेति । सहकारिभिरुपकृतः कार्यं करोतीति तृतीयपक्षस्य दुष्टत्वमुपदर्शयति— **उपकारपक्षस्त्विति** । **अनेकमुखेति**— सहकारिभिराधीयमान उपकारो भावाद् भिन्नोऽभिन्नो वा ?, आद्ये भेदे सम्बन्धायोगादुपकारसम्बन्धाभावादनुपकृत एव भावः स्यात्, भिन्नेनाप्युपकारेण भावे कश्चिदुपकार. क्रियत इत्युपकृतो भवति भाव इति यद्युच्यते तदा सोऽप्युपकारो भावाद् भिन्न एवेति तस्मिन् जातेऽपि भावोऽविचलितरूप एवेत्यनुपकृत एव स्यात्, तेनाप्युपकारेणोपकारान्तराधानेऽनवस्था स्यादित्येवं दिशाऽनेकानवस्थादु.स्थत्व वोध्यम् । द्रव्यवादिन. पर्यायवाद्युद्भावितं स्वपक्षगतदोषकदम्बकं तन्मतेऽपि सलग्नमित्याशङ्कामुद्भाव्य पर्यायवादी प्रतिक्षिपति— **न चेति**— अस्य 'वाच्यम्' इत्यनेन सम्बन्धः । **तत्त्वं च** सापेक्षस्वार्थक्रियाकारित्व च । **अनुपकारापेक्षायाम्** उपकारेण जनकतया हीनोऽनुपकार', अनुपकारी, एवम्भूतस्य सहकारिणोऽपेक्षायामित्यर्थः । अनुपकारिसहकार्यपेक्षयाऽर्थक्रियाकारित्वे बीज यथा सलिलादिकमपेक्ष्याङ्कुरं करोति तथोपलखण्डादिकमपेक्ष्याप्यङ्कुरं विदध्यादित्येवमतिप्रसङ्गाच्चानुपकारिसहकार्यपेक्षातः कार्यकारित्व क्षणिकस्यापीत्याह— **अतिप्रसङ्गादिति** । उपकारिणं सहकारिणमपेक्ष्य क्षणिक. स्वकार्यमर्जयतीत्युपगमे उपकारेऽपि कर्तव्ये सहकारी उपकारिण सहकारिणमपेक्षेत, अन्यथाऽतिप्रसङ्गस्यात्रापि प्रसङ्ग इत्येवमुपकारिसहकार्यपेक्षायामनवस्था क्षणिकेऽपि संलग्नैवेत्याह— **उपकारापेक्षायां चेति** । पुञ्जात् पुञ्जमुत्पद्यत इति क्षणिकवादिराद्धान्तोऽपि दोषग्रस्त एवेत्याह— **तथेति** । **नाद्य** इति— बीज येनैव स्वभावेनाङ्कुरं करोति तेनैव स्वभावेन पवनादीन् करोतीति प्रथमपक्षो न युक्त इत्यर्थ. । निषेधे हेतुमाह— **एकस्वभावाधीनत्वेनेति**— एकस्वभावेनानेककार्यकारित्वलक्षणमापादकं कारणे, आपाद्यं चाभेद कार्येष्वित्यापाद्या ऽऽपादकयोर्वैयधिकरण्यादापाद्यापादकभावो न भवेदतः कार्येष्वेकस्वभावाधीनत्वस्यापादकत्वमभेदस्य चापाद्यत्वमाश्रित्येत्थमुक्तिः, तथा च कार्याणि यदि कारणैकस्वभावा-

स्यादङ्कुरं स्यादित्यापादयितुं शक्यत्वात्, न द्वितीयः– एकस्यापि क्षणस्य स्वभावभेदेन भेदापत्तेः, तव मते स्वभाव-स्वभाववतोरभेदाभ्युपगमादिति वाच्यम्; इतरसाहित्यनियतायां फलोपधानलक्षणाया-मपेक्षायां क्षणिकस्य सापेक्षत्वादेव समर्थस्य सहकार्यव्यभिचारात्, योग्यत्वे सतीतरव्यतिरेकात् कार्याभाववत्त्वलक्षणायां चापेक्षायां तस्य निरपेक्षत्वादेव तैर्विना तस्यासत्त्वात् विशिष्टार्थानिर्वचनात्, स्थिरस्य तु भावस्य तैर्विनापि समर्थत्वे कार्यकरणप्रसङ्गस्य वज्रलेपत्वात्, एकस्यैवानेककार्यकारिस्वभावस्य स्वकारणादुत्पत्तेः कार्यभेदेन स्वभावभेदापादनस्य च दूरे निरसनात्; एतेनानङ्कुरस्य पवनादेरङ्कुरत्वे-नैकजातीयताप्रसङ्गः, अनङ्कुरदेशस्य तद्देशीयतया एकदेशप्रसङ्गश्च निरस्तः, नानाजातीय-नानादेशीय-कार्यकारित्वलक्षणैकस्वभावत एव स्वहेतोरुत्पत्तेरभ्युपगमात्, न चास्थैर्येऽप्येष न्यायः सम्भवति, तदुत्पत्ते-

धीनानि स्युरभिन्नानि स्युरित्येवं प्रसञ्जने नापाद्या-ऽऽपादकयोर्वैयधिकरण्यम् । एतावता सामान्यत. प्रसञ्जनस्य सुग्रहत्वेऽपि विशेषतः प्रसञ्जन न सुग्रहमित्यत आह– **पवनादिकमिति**– बीज यथा येन स्वभावेनाङ्कुर करोति तेनैव स्वभावेन पवनादीन्, तथा पवनोऽपि येन स्वभावेनाङ्कुर करोति तेनैव स्वभावेन पवनादीन्, एव कारणान्तरमपीत्यङ्कुरप्रयोजका यावन्त. कारणानां स्वभावास्ते सर्वे पवनादिकार्यप्रयोजका इति यावदङ्कुरप्रयोजकप्रयोज्यत्वलक्षणमापादकं पवनादिपु समस्तीति, "**यावदङ्कुर-प्रयोज्यं स्यात्**" इत्यस्य स्थाने 'यावदङ्कुरप्रयोजकप्रयोज्यं स्यात्' इति पाठो युक्त. । **न द्वितीय** इति– बीजमेकेन स्वभावेनाङ्कुर करोति, अन्येन स्वभावेन पवनादीन् करोतीति द्वितीयपक्षोऽपि न युक्त इत्यर्थ. । निपेध हेतुमाह– **एक-स्यापीति**–क्षणमात्रवृत्तित्वात् क्षणरूपस्यैकस्यापि बीजस्याङ्कुरजननोपयोग्येकस्वभाव· पवनजननोपयोग्यपरस्वभाव. पाथोजन-नोपयोग्यन्यस्वभाव इत्येव स्वभावभेदेन भेदप्रसङ्गादित्यर्थ । न चैकस्यापि कार्यभेदेनानेके स्वभावा भवन्तु नाम, तावताऽ-नेकस्वभावत्वमेवास्य भवेन्न तु भेद इत्यत आह– **तव मत** इति–पर्यायवादिनो मते इत्यर्थः, यदि स्वभावभेदेऽपि स्वभाव-वतो भेदो न भवेन्न तर्हि स्वभावस्वभाववतोरभेदो भवेत्, अभ्युपगम्यते च पर्यायवादिना तयोरभेद इति तदभ्युपगम-बलादेव स्वभावभेदे स्वभाववतो भेदोऽभ्युपगन्तव्य इत्यर्थ· । द्रव्यवादिनेत्थं पल्लवितायाः आशङ्काया· प्रतिक्षेपस्य हेतुं पर्यायवादी दर्शयति– **इतरसाहित्यनियतायामिति**– क्षणिकस्याङ्कुरकुर्वद्रूपात्मकस्य बीजस्य याऽङ्कुरलक्षणकार्यं प्रति फलोपधानलक्षणा कारणता सैवापेक्षा, सा सहकारिनियतैव, इतरसहकारिसहितस्यैव बीजस्य सापेक्षत्वादेव फलोपधानलक्षणसामर्थ्यवतो नियमेन सहकारिसमवहितत्वमिति सहकार्यव्यभिचारान्नोपकारापेक्षानिबन्धनाऽनवस्थाद्युत्थता क्षणिकपक्षे इत्यर्थ । स्वरूपयोग्यतालक्षण कारणता तु क्षणिके नाभ्युपगम्यत एव पर्यायवादिनेति स्वरूपयोग्यतालक्षणकारणतामादृत्य या योग्यत्वे सतीतरव्यतिरेकात् कार्याभाववत्त्वलक्षणाऽपेक्षा सा नास्त्येव क्षणिके इति तादृशापेक्षाराहित्यलक्षणनिरपेक्षत्वादेव क्षणिकस्य स्वकार्यकारित्वं समस्त्येवोक्तनिरपेक्षत्ववत एव क्षणिकात् कार्योत्पत्तिरभ्युपेयत एव पर्यायवादिना, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्व क्षणिकस्य तदा भवेद् यदि सहकारिविरहकालेऽपि तस्य सत्त्वं स्यात्, न चैवमिति तस्य स्वसत्त्वदशाया कार्याभाववत्त्वं नास्त्येवेति कस्य सहकारिविरहप्रयोज्यत्वमित्याह– **योग्यत्वे सतीति** । '**इतरव्यतिरेकाद्**' इत्यत्र पञ्चम्यर्थः प्रयो-ज्यत्वम् । **तस्य** क्षणिकस्य. एवमग्रेऽपि । स्थिरस्य तु सहकारिविरहकालेऽपि सत्त्वमस्तीति सहकारिविरहप्रयुक्तकार्याभाव-वत्त्वलक्षणापेक्षा समस्त्येवेति न तादृशापेक्षायामादृताया निरपेक्षत्व तस्य, तथा च तस्य सहकारिविरहकाले सामर्थ्या-भ्युपगमे कार्यकरणप्रसङ्ग. स्यादेव, तदानीमसामर्थ्ये च सामर्थ्या-ऽसामर्थ्यलक्षणविरुद्धधर्माध्यासाद् भेद आपतेदेवेत्याह– **स्थिरस्य त्विति** । **तैर्विनाऽपि** सहकारिभिर्विनाऽपि । एकस्य क्षणस्य कार्यभेदेन स्वभावभेदतो भेदापादन यत् कृत द्रव्यवादिना तत् पर्यायवादी परिहरति– **एकस्यैवेति** । '**एतेन**' इत्यस्य 'निरस्त.' इत्यनेनान्वय । **तद्देशीयतया** अङ्कुरदेशीयतया । 'एतेन' इत्यदिष्टमेव हेतुं दर्शयति– **नानेति**– 'स्वभावत' इत्यस्य स्थाने 'स्वभाववतः' इति पाठो युक्त, नानाजातीयानि नानादेशीयानि यानि कार्याणि तत्कारित्वलक्षणो य एकस्वभावस्तद्वत एव बीजादिलक्षणस्य क्षणिकस्य कारणस्य स्वहेतो· स्वकारणादुत्पत्तेरभ्युपगमादित्यर्थ· । ननु स्थैर्यपक्षेऽपि नानाजातीय-नानादेशीय-नानाकालीनकार्यकारित्व-लक्षणैकस्वभाववतः स्थिरस्य कारणस्य स्वहेतोरुत्पत्तेस्तत. क्रमिककार्योत्पत्ति. स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'सम्भवति' इत्यनेनान्वय । '**न चास्थैर्ये**' इत्यस्य स्थाने 'न च स्थैर्ये' इति पाठो युक्त. । निपेधे हेतुमाह– **तदुत्पत्तेरिति**– स्थिरकारणोत्पत्तेरित्यर्थ· । ननु कारणसमुदायलक्षणसामग्र्या. कार्योत्पत्तिव्याप्यत्वं 'यस्मिन् क्षणे यत्कार्य-

१७

रनन्तरमेव तत्कार्यकरणप्रसङ्गात्, सामग्र्याः कार्योत्पत्तिव्याप्यत्वापेक्षया कुर्वद्रूपत्वसामर्थ्यवतः कारणस्यैव कार्योत्पत्तिव्याप्यत्वे लाघवात्, त्वया हि स्वेतरकारणविशिष्टबीजत्वादिनाऽङ्कुराद्युत्पत्तिव्याप्यत्वं कर्त्तव्यम्, मया तु कुर्वद्रूपत्वेनैवेति; एतेन 'क्षणिकोऽपि भावः कुर्वद्रूपः सहकारिभिः सहैव करोतीति नियतस्वभावश्चेत्? अन्वयवत् तैर्विना (न) करोत्येवेति व्यतिरेकोऽप्यवर्जनीयः, अन्वय-व्यतिरेकनियमयोर्मिथो नान्तरीयकत्वमिति त्वदीयसिद्धान्तात्, तथा च व्यतिरेकनियमे सहकारिणः स्वकारणादापततोऽपि निवार्य न कुर्यात्, तैर्विना न करोतीति स्वभावाप्रच्यवात्; अथ स्वभावाधीनसन्निधीनां सहका-

कारणसमुदायलक्षणसामग्र्यनन्तरत्वं तस्मिन् क्षणे तत्कार्योत्पत्तिः' इत्येवंरूपमुपगम्यत इति नैककारणोत्पत्त्यनन्तरकाल एव तत्कार्योत्पत्तिः, किन्तु सामग्र्यनन्तरसमय एव सेत्यत आह- **सामग्र्या** इति । लाघवमेव स्पष्टयति- **त्वयेति**- स्थिरवादिनेत्यर्थः । '**स्वेतरकारण**' इति स्थाने 'स्वेतरसकलकारण' इति पाठो युक्तः । **मया तु** क्षणिकवादिना पुनः । '**एतेन**' इत्यस्य 'अपास्तम्' इत्यनेनान्वयः, **एतेन** स्थैर्यवादावश्याभ्युपगन्तव्यस्य स्वेतरकारणविशिष्टबीजत्वादिना बीजादिरूपकारणस्याङ्कुरादिकार्योत्पत्तिव्याप्यत्वस्य- 'यदा यत्र स्वेतरकारणविशिष्टबीजादिकं तदा तत्राङ्कुराद्युत्पत्तिः' इति नियमस्य कल्पनापेक्षया क्षणिकवाद्यभ्युपगतस्य तत्तत्कार्यकुर्वद्रूपत्वेन बीजादिकारणस्याङ्कुरादिकार्योत्पत्तिव्याप्यत्वस्य- 'यदा यत्राङ्कुरकुर्वदात्मकं बीजं तदा तत्राङ्कुरोत्पत्तिः' इत्यादिनियमरूपस्य कल्पने बीजादिरूपकारणे स्वेतरकारणवैशिष्ट्यस्य व्याप्यतावच्छेदकतयाऽप्रवेशप्रयुक्तलाघवेन । क्षणिकोऽपि भावो बीजादिरङ्कुरादिकुर्वद्रूपः सलिल-धरणि-धामादिलक्षणसहकारिभिः सहैवाङ्कुरादि कार्यं करोतीत्येवंस्वरूपनियतस्वभावो यदि तदाऽयं स्वभावो विधिरूपत्वादन्वयः, सकलसहकारिसहित एव क्षणिककुर्वद्रूपात्मको बीजादिभावोऽङ्कुरादि कार्यं करोतीत्येवंरूपो यथाऽभ्युपगमस्तथाऽत्रैवकारार्थप्रवेशसामर्थ्यात् क्षणिकोऽपि कुर्वद्रूपो बीजादिः सहकारिभिर्विना न करोत्येवाङ्कुरमित्ययं स्वभावो निषेधरूपत्वाद् व्यतिरेकोऽप्यवश्यमभ्युपगन्तव्यः क्षणिकवादिना, 'यत्रान्वयस्तत्र व्यतिरेकोऽपि' 'यत्र व्यतिरेकस्तत्रान्वयोऽपि' इत्येवं स्वरूपमन्वय-व्यतिरेकनियमयोर्मिथो नान्तरीयकत्व- परस्परव्याप्यत्वं न स्थैर्यवादिभिरेवाभ्युपगतं किन्तु क्षणिकवादिना बौद्धेनाप्यभ्युपगतमिति स्वसिद्धान्तादप्यन्वयनियमं सहकारिभिः सहैव कुर्वद्रूपः क्षणिको भावः कार्यं करोतीत्येवंस्वरूपमभ्युपगच्छतो बौद्धस्य क्षणिकः कुर्वद्रूपो भावः सहकारिभिर्विना न करोत्येव कार्यमित्येवंस्वरूपव्यतिरेकनियमाभ्युपगन्तृत्वं स्यादेवेत्याह- **अन्वय-व्यतिरेकनियमयोरिति**- अन्वय व्यतिरेकव्याप्त्योरित्यर्थः । **मिथोनान्तरीयकत्वं** परस्परव्याप्यत्वम्, समनियतत्वमिति यावत् । **इति** एवम् । **त्वदीयसिद्धान्तात्** बौद्धसिद्धान्तात् । '**व्यतिरेकोऽप्यवर्जनीयः**' इति पूर्वस्मिन् हेतुः । **तथा** च यत्रान्वयनियमस्तत्र व्यतिरेकनियमोऽपीत्यस्य व्यवस्थितौ च । **व्यतिरेकनियमे** क्षणिकोऽपि कुर्वद्रूपो भावः सहकारिभिर्विना न करोतीत्येवेति नियमे । **आपततोऽपि** स्वनिकटमागच्छतोऽपि । **निवार्य** निवर्त्य । **न कुर्यात्** कुर्वद्रूपोऽपि भावः कार्यं न कुर्यात् । तत्र हेतु- **तैर्विना न करोतीति स्वभावाप्रच्यवादिति**- यदि सहकारिणस्तत्सन्निधिमागच्छेयुरेव 'तैर्विना' इत्यस्य 'न करोति' इत्यस्य चाभावे सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्वरूपस्य 'तैर्विना न करोति' इति स्वभावस्यैवाभावप्रसङ्गादित्यर्थः । प्रतिवन्द्या प्रतिविधानं कर्तुमिच्छुरुदयनाचार्यः— सम्भावनाविषयीभूतार्थप्रतिपादको यदिशब्दः, सम्भावनाविषयीभूतार्थश्च क्वचिद् विधिरूपः क्वचिच्च निषेधरूपः, द्विविधोऽप्ययमर्थो यथार्था-ऽयथार्थभेदेन द्विविधः, तत्र यत्रेष्टापादनरूपः प्रसङ्गस्तत्र सम्भावनाविषयीभूतोऽर्थो यथार्थः, यथा-यदि पर्वते धूमः स्याद् वह्निरपि स्यादित्यत्र वह्नि-धूमौ पर्वताधिकरणकौ विधिरूपौ यथार्थौ, यथा वा- ह्रदे यदि वह्निर्न स्याद् धूमोऽपि न स्यादित्यत्र ह्रदाधिकरणकौ वह्न्यभाव-धूमाभावौ निषेधरूपौ यथार्थौ, यत्र चानिष्टापादनरूपः प्रसङ्गस्तत्र सम्भावनाविषयीभूतोऽर्थोऽयथार्थः, यथा- यदि ह्रदे धूमः स्याद् वह्निरपि स्यादित्यत्र ह्रदे वह्नि-धूमौ विधिरूपावयथार्थौ, यथा वा- पर्वते यदि वह्निर्न स्याद् धूमोऽपि न स्यादित्यत्र पर्वते वह्न्यभाव-धूमाभावौ निषेधरूपावयथार्थौ, एवं च ययर्थघटितस्वभावावप्यन्वय-व्यतिरेकौ क्वचिदप्यधिकरणे सम्भाव्यमानौ तथा भवतः, न तयोराश्रये सत्त्वं, तद् यावदाश्रयकालनियतकालमेवेति नियम इति कुर्वद्रूपे कारणे सहकारिसमवधानैकनियते कार्यकारित्वलक्षणान्वयैकनिलये ययर्थघटितसहकारिसमवधानाभावसहितकार्यकारित्वाभावलक्षणव्यतिरेकोऽसन्नपि कल्पनापथमवतरतीति पराकूतमुत्प्रेक्ष्य परशङ्कामुत्थापयति- **अथेति** । **स्वभावाधीनसन्निधीनां** कुर्वद्रूपात्मककारणरूपेऽवश्य सन्निहितेन भाव्यमित्येवम्भूतस्वभावाधीनसन्निधीनाम्, अथवा प्रतिनियतकारणेभ्यः

रिणामुपनयना-ऽपनयनयोरयमनीश्वर एव यद्युपनिबन्धेन तूच्यते– 'यदि सहकारिणो न स्युर्न कुर्याद्' इति न दोष इति चेत् ? स्थिरपक्षेऽप्येवं वक्तुं शक्यम्– स्वकारणाधीनसन्निधीनां सहकारिणामुपनयना-ऽपनयनयोरयमनीश्वर एव यद्युपनिबन्धेन तूच्यते– 'यदि सहकारिणः स्युः कुर्याद्', इत्याद्युदयनोक्तमपास्तम्, सहकार्यभावस्य कार्याभावव्याप्यत्वेन व्यतिरेकपक्षे यद्युपनिबन्धसम्भवेऽप्यन्वयपक्षे तदसम्भवात्, लाघवात् कारणस्यैव कार्योत्पत्तिव्याप्यत्वेन सहकारिघटितसामग्र्याऽतथात्वेनापाद्या-ऽऽपादकयोर्व्याप्त्यप्रसिद्धेः; अथ क्षणिकोऽपि भावः स्वकालस्थ एकामपि यां काञ्चिदर्थक्रियां करोति तामेव कालान्तरे कुतो न करोति ? असत्त्वादिति चेत् ? करणस्य सत्त्वाप्रयुक्तत्वात्, अत एव स्वप्नावसानकं विज्ञानं प्रहराद्यन्तरितमपि सुषुप्तस्य जागराद्यज्ञानमुत्पादयतीति प्रज्ञाकरः; असामर्थ्यादेव न करोतीति चेत् ? तर्हि काल-

कुर्वद्रूपात्मककारणसन्निहिता एवोत्पद्यन्ते सहकारिण इत्येवम्भूतस्वभावाधीनसन्निधीनाम् । **उपनयना-ऽपनयनयोः** स्वसन्निहितदेशागमन-स्वसन्निधानापसरणयोः । **अयं** प्रकृतकुर्वद्रूप. । **अनीश्वरः** असमर्थः, **एव** न तु तयोः समर्थ । **यद्युपनिबन्धनेन** सम्भावनाविषयीभूतार्थप्रतिपादकयदिशब्दस्य व्यतिरेकस्वभावप्रतिपादकवाक्यघटकीकरणेन । **उच्यते** बौद्धैनाभिधीयते । तद्वाक्यस्वरूपमुल्लिखति– **'यदि सहकारिणो न स्युर्न कुर्यात्'** इति । **इति** यद्यर्थघटितव्यतिरेकस्वभावाभ्युपगमे । **न दोषः** स्थिरवाद्यभिहितः 'व्यतिरेकोऽप्यवर्जनीय.' इति दोष इष्टापादनस्वरूपत्वान्न दोषत्वमावहति । **इति चेत्** एव पराशङ्कायाम् । उदयनः प्रतिविधानमाविष्करोति– **स्थिरपक्षेऽपी**ति । **एवं** यथा क्षणिकवादिभिस्तैर्विना न करोतीति व्यतिरेकोपपत्तये उच्यते तथा । तदेव वक्तव्यमुल्लिखति– **स्वकारणाधीनसन्निधीनामि**त्यादि । 'एतेन' इत्यतिदिष्टमेव निरासहेतु स्पष्टयति– **सहकार्यभावस्ये**ति । अवतरणोपदर्शितबौद्धाभिप्राये असदर्थस्यापि यदिशब्दघटितस्वभावप्रतिपादकवाक्यप्रतिपाद्यस्वभावे प्रवेशः सम्भवति, तेन कुर्वद्रूपात्मककारणे सहकार्यभावस्य कार्यकारित्वाभावस्य चासद्रूपयोः प्रवेशो व्यतिरेकस्वभावे सम्भवति, व्यापकाभाववत्तया निर्णीते धर्मिणि व्याप्यारोपेण व्यापकारोपः प्रसङ्ग इति प्रसङ्गलक्षणोपपादकं सहकार्यभावस्यापादकस्य कार्यकारित्वाभावरूपापाद्यव्याप्यत्वं समस्तीति यद्यर्थघटितव्यतिरेकस्वभावस्य सम्भवेऽपि यदि सहकारिण. स्युस्तदा कुर्यादित्येवमन्वयस्वभावो यद्यर्थघटितमूर्तिर्न सम्भवति, तत्रापादकस्य सहकारिसमवधानविशिष्टकारणत्वस्य कार्योत्पत्तिमत्त्वपर्यवसितकार्यकारित्वरूपापाद्यव्याप्यत्वाभावेन प्रसङ्गप्रवृत्त्यभावेन यद्युपनिबन्धनस्य यदिशब्दघटितत्वस्यान्वयस्वभावप्रतिपादकवाक्येऽसम्भवात्, कारणत्वस्यैव लघुभूतस्य कार्योत्पत्तिव्याप्यत्वसम्भवेन सकलसहकारिसमवधानलक्षणसहकारिवैशिष्ट्यस्य गौरवेण व्याप्यतानवच्छेदकत्वात्, यथाऽसद्धेतौ व्याप्यतानवच्छेदकस्य तद्विशेषणत्वे व्यर्थविशेषणघटितत्वाद् व्याप्यत्वासिद्ध्याऽसाधकत्वं तथाऽऽपादकेऽपि व्याप्यतानवच्छेदकस्य विशेषणत्वे व्याप्यत्वासिद्ध्याऽनापादकत्वमित्याशयेनाह– **अन्वयपक्षे तदसम्भवादि**ति– अन्वयस्वभावप्रतिपादकवाक्ये निरुक्तार्थकयदिशब्दघटितत्वासम्भवादित्यर्थ. । **'सामग्र्याऽतथात्वेन'** इत्यस्य स्थाने 'सामग्र्या अतथात्वेन' इति पाठ. सम्यक् । **अतथात्वेन** कार्योत्पत्तिव्याप्यत्वाभावेन । **आपाद्याऽऽपादकयोः** कार्योत्पत्तिरूपापाद्य-सामग्रीसत्त्वरूपापादकयो. । द्रव्यवादी शङ्कते– **अथे**ति– पर्यायवादिमते क्षणविशरारोर्भावस्य कार्यकालेऽसत एव कारणत्वमिति स्वकालस्थ एव स स्वानधिकरणे द्वितीयस्मिन् क्षणे यामर्थक्रिया करोति तामर्थक्रिया कालान्तरे तदर्थक्रियोत्पत्तिमत्कालभिन्नकाले कुतो न करोतीत्यर्थः । अत्र पर्यायवादिन. समाधानमाशङ्क्य प्रतिक्षिपति– **असत्त्वादिति चेदि**ति– 'चेत्' इत्यनन्तरं 'न' इति दृश्यम्, कार्योत्पत्त्यापादनास्पदतयाऽभिमतस्य कालस्याव्यवहितपूर्वसमयेऽसत्त्वान्न करोतीत्यर्थ. । प्रतिक्षेपहेतु दर्शयति– **करणस्ये**ति–कार्योत्पादनस्येत्यर्थ. । **सत्त्वाप्रयुक्तत्वात्** कार्योत्पत्तिसमयाव्यहितपूर्वसमये यत् कारणस्य सत्त्व तदप्रयुक्तत्वात् । अत्रार्थे प्रज्ञाकरवचनसंवादमुपदर्शयति– **अत एवे**ति– कार्योत्पत्तेः स्वसमयाव्यवहितपूर्वसमयगतकारणसत्त्वाप्रयुक्तत्वादेव । **स्वप्ने**ति– यत्र स्वप्नानन्तरं सुषुप्तिस्तदनन्तर जागरितं तत्र जागराद्यज्ञान सुषुप्त्यवस्थाया ज्ञानाभावात् स्वप्नावसानक स्वप्नान्त्यसमयभावि विज्ञानमेवोत्पादयति, न च स्वप्नान्त्यसमयभाविविज्ञानं जागराद्यज्ञानोत्पत्तिसमयाव्यवहितपूर्वसमयवृत्तीत्यतः करणस्य कारणसत्त्वाप्रयुक्तत्वं प्रज्ञाकरस्य सम्मतमित्यर्थ. । **'प्रहराद्यन्तरितम्'** इति विशेषणेन कार्याव्यवहितपूर्वसमये न तस्य सत्त्वमित्यावेदितम् ।

भेदेन समर्था-ऽसमर्थतया भेदापत्तिरिति चेत्? न- वस्तुनः स्वकाले समर्थस्य कालान्तरेऽसमर्थतया संवृत्यैव व्यवहारात्, अभावानुप्रवेशेन वस्तुसिद्ध्यापादने शशविषाणादेरपि सिद्धिप्रसङ्गात्; अत एव क्षणिकस्यापि प्रथमं सतः पश्चादसत्त्वे स्वभावविपर्यय इति निरस्तम्, स्वदेश-कालस्थस्यैवान्यदेश-काल-योरसद्व्यवहारकारिस्वभावाभ्युपगमेनैवोपपत्तेः, निषेधव्यवहाराद् विधिव्यवहारस्य बलवत्त्वे लाघवमेव विनिगमकम्। ननु क्षणिकपक्षे क्षणिकानामेव हेतुत्वे तत्तत्क्षणोत्पन्नानामुदासीनानामपि हेतुत्वं किं न स्यादिति चेत्? न- कुर्वद्रूपत्वजात्या प्रसिद्धहेतूनामेवानुगमेनानतिप्रसङ्गात्, अन्वय-व्यतिरेकाभ्यां

पर्यायवादिन समाधानान्तरं स्वेष्टापादनानुकूलतयोपदर्शयति- **असामर्थ्यादेवेति**- स्वकालस्थो भावः तदर्थक्रियां प्रत्य-समर्थत्वादेव न करोतीत्यर्थः। स्थैर्यपक्षे सामर्थ्या-ऽसामर्थ्यलक्षणविरुद्धधर्माध्यासात् स्थिरस्य भावस्य भेदापत्तिर्या त्वयो-द्घोष्यते सा तव मतेऽपि क्षणिकस्य भावस्य सलग्नेत्याह- **तर्हीति**। भवन्मते स्थिरो भावो यथाऽभिमतकार्यकालसमये वर्तते तथा कालान्तरेऽपि वर्तत इत्यभिमतकालावच्छेदेन तत्कार्यं प्रति सामर्थ्यवत् कालान्तरावच्छेदेन तत्कार्यं प्रत्य-सामर्थ्यमपि तस्य वस्तुभूतमेवेति वस्तुभूतसामर्थ्या-ऽसामर्थ्यलक्षणविरुद्धधर्माध्यासात् स्थिरस्य भावस्य भेद आपादयितुं शक्यते, वस्तुत स्वकाले स्वार्थक्रियां प्रति समर्थस्य क्षणिकस्य भावस्य कालान्तरे न सत्त्वमिति तदानीमसति तस्मिन् न सामर्थ्यं नाप्यसामर्थ्यं वस्तुत. समस्ति, अथापि कालान्तरेऽसमर्थतया तस्य या व्यवहृति. सा संवृत्यैव भवति, तथा च संवृत्याऽसमर्थतया व्यवहाराद् वस्तुभूतस्यासामर्थ्यलक्षणविरुद्धधर्मस्य सिद्ध्यभावेन न तादृशधर्माध्यासतः क्षणिकभावस्य भेद आपादयितु शक्यत इत्याशयवान् पर्यायवादी द्रव्यवाद्युद्भावितामाशङ्कां प्रतिक्षिपति- **नेति**। 'संवृत्यैव' इत्येवकारेण प्रमि-त्याऽसमर्थतया व्यवहारस्य प्रतिक्षेपः। ननु कालान्तरे क्षणिको भावोऽसत्त्वात् समर्थो न भवतीत्येतावताऽसामर्थ्यम-यत्नोपनतमेव सामर्थ्याभावस्यासामर्थ्यरूपत्वादिति भवत्यसामर्थ्यलक्षणवस्तुसिद्धिरित्यत आह- **अभावानुप्रवेशेनेति**- अभावशरीरसन्निविष्टत्वेनेत्यर्थ., तच्च प्रकृते असामर्थ्याभावे सामर्थ्यं नास्तीत्येवंस्वरूपोऽभाव एव नोपपद्यत इत्यभाव-स्वरूपोद्दलकत्व बोध्यम्, शशविषाणं नास्तीत्येव प्रतीयमानाभावशरीरे प्रतियोगितया सन्निविष्टस्य शशविषाणादेरप्यभावानु-प्रवेशेन सिद्ध्यापत्त्या वस्तुत्व स्यादतः संवृत्यैव यथा निषेध्यतया व्यवह्रियमाणत्व शशशृङ्गादेरिति न वस्तुत्वं तथा संवृत्यैव व्यवह्रियमाणस्यासामर्थ्यस्य न वस्तुत्वमित्याशय.। '**अत एव**' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः। **स्वभाव-विपर्ययः** स्वभावस्य सत्त्वस्य विपर्ययोऽसत्त्वम्, तथा च सत्त्वा-ऽसत्त्वरूपविरुद्धधर्माध्यासात् क्षणिकस्यापि भेदापत्तिरि-त्यर्थः। '**अत एव**' इति निर्दिष्टमेव निरासहेतुमुपदर्शयति- **स्वदेश-कालस्थस्यैवेति**- यस्मिन् देशे यस्मिन् काले वर्तते क्षणिको भावस्तद्देश-कालस्थस्यैव तस्यान्यदेश-कालयोर्योऽसद्व्यवहारस्तत्कारिस्वभाव इत्यभ्युपगमेन देशान्तरकालान्तर योरसद्व्यवहारस्योपपत्तेर्नासत्त्वं धर्मान्तर तस्योपेयत इति न स्वभावविपर्यय इति भाव। ननु क्षणिकस्य भावस्य स्वदेश-कालयोः सद्बुद्ध्या यथा सद्व्यवहारो भवति तथा देशान्तर-कालान्तरयोरसद्बुद्ध्याऽसद्व्यवहारोऽपि भवति, एवं च विनिगमकाभावात् किमिति सद्बुद्धिप्रभवसद्व्यवहारबलात् सत्त्वमेवोपेयते, असद्बुद्धिप्रभवासद्व्यवहारबलान्नासत्त्वमित्यत आह- **निषेधव्यवहारादिति**- असत्त्वलक्षणनिषेधविषयकासद्व्यवहारात् सत्त्वलक्षणविधिविषयकव्यवहारस्य बलवत्त्वे लाघवमेव विनि-गमकम्, निषेधव्यवहारे निषेध्यज्ञानस्याप्यपेक्षा विधिव्यवहारे तु व्यवहर्तव्यविधिमात्रज्ञानापेक्षेति लाघव स्फुटमेवेति।

ननु क्षणभङ्गपक्षे पूर्वपूर्वक्षणस्योत्तरोत्तरक्षण प्रति यत् कारणत्वं तत्र कार्यस्वरूपानुस्यूतत्व न नियामकं किन्तु कार्याव्यवहितपूर्वकालवृत्तित्वमेव, तच्च यथा स्वसन्तत्यनुपतितपूर्वपूर्वक्षणे तथा सन्तानान्तरगतोदासीनक्षणेऽपि समस्ति, एक-सन्तानान्तर्गतपूर्वक्षणस्य यथा तदव्यवहितोत्तरक्षणजायमानतत्सन्ततिगतकार्याव्यवहितपूर्ववर्तित्व तथा तत्क्षणसमानकालीनानां सन्तानान्तरवर्तिनामपि क्षणानामुदासीनानामिति तेषामपि तत्कारणत्वं स्यादिति शङ्कते- **नन्विति** यत्कार्यकुर्वद्रूपात्मना स्वकारणतो यदुत्पन्न तत् तत्कुर्वद्रूपत्वेन तत्कार्यं प्रति कारणमित्येव पर्यायवादिना स्वीक्रियते, एकसन्ततिपतितपूर्वपूर्वक्षणानामे-वैकसन्ततिपतितोत्तरोत्तरक्षणं प्रति कारणत्व नोदासीनानामिति नोदासीनानामव्यवहितपूर्वक्षणवर्तिना कारणत्वप्रसङ्ग इति पर्यायवादी समाधत्ते- **न-कुर्वद्रूपत्वजात्येति**। **प्रसिद्धहेतूनामेवेति**- यद् यत् कार्यं प्रति यद् यत् कारणतया प्रसिद्धं तस्य तस्यैव तत्तत्कार्यकुर्वद्रूपत्वेन तत् तत् कार्यं प्रति कारणत्वमित्युदासीनाना प्रसिद्धहेतुभिन्नाना तत्तत्कार्याव्यवहितपूर्वक्षण-

सादृश्यानुसारेणैव कार्यकारणभावव्यवहारात् तन्निश्चयानुसारेणैव तच्छक्यानुभवस्यापि प्रकल्पनात् । अथाऽसतोऽजनकत्वान्न क्षणविशरारोः कार्यप्रसवः इति चेत् ? न– अनभ्युपगमात्, कार्यकाले सत्त्वस्य कारणतायामप्रयोजकत्वात्, कुर्वद्रूपत्वस्यैव तथात्वात्, तथाप्यविनष्टाद् द्वितीयक्षणव्यापारसमावेशवर्तिनः कार्यप्रसवाभ्युपगमे क्षणभङ्गभङ्गप्रसङ्ग इति चेत् न–द्वितीयक्षणप्रतीक्षाव्यतिरेकेणापि स्वमहिम्नैव कार्यकरणप्रवृत्त्यभ्युपगमात्, अन्यथा द्वितीयक्षणभाविव्यापारजननेऽप्यपरव्यापारसमावेशव्यतिरेकेणाप्रवृत्तेः, तत्राप्यपरव्यापारसमावेशकल्पनायामनवस्थानात्, अपरव्यापारनिवर्तकत्वाभ्युपगमे च किमपराद्धं

---

वृत्तित्वेऽपि तत्तत्कार्यकुर्वद्रूपत्वाभावेन न तत् तत् कार्यं प्रति कारणमित्येवमनतिप्रसङ्गादित्यर्थ । नन्वव्यवहितपूर्ववर्तित्व स्वसन्तानगतक्षणेष्विव सन्तानान्तरगतक्षणेष्वप्यविशिष्टमिति स्वसन्तानगतक्षणेष्वेव तत्तत्कार्यकुर्वद्रूपत्व न सन्तानान्तरगतक्षणेष्वित्यत्रैव नियामकं न पश्याम इत्यत आह– **अन्वय-व्यतिरेकाभ्यामिति**– तत्सन्तानपतितक्षणसत्त्वे तत्सन्तानपतिततदुत्तरक्षणसत्त्वं तत्सन्तानपतितक्षणाभावे तत्सन्तानपतितोत्तरक्षणाभाव इत्येवमन्वय-व्यतिरेकाभ्यामित्यर्थ. । **सादृश्यानुसारेणैव** पूर्वपूर्वक्षणाना तत्सन्तानपतितानामुत्तरोत्तरतत्सन्तानपतितक्षणसादृश्यानुसारेणैव, **कार्यकारणभावव्यवहाराद्** ययोरेकसन्तानपतितक्षणयो सादृश्यमनुभूयते तयोरेव कार्यकारणभावव्यवहाराद् 'इदमस्य कार्यमिदमस्य कारणम्' इत्येव कार्यकारणभावव्यवहारात् । यद्यपि कुर्वद्रूपत्वजातिरतीन्द्रियत्वान्न प्रत्यक्षविषयस्तथापि कार्यकारणभावव्यवहारनिवन्धनस्य सादृश्यस्य यत्र सत्त्वं तत्र तत्कार्यकुर्वत्त्वमित्येव व्याप्तेर्यत्र निरुक्तसादृश्यनिश्चयस्तत्र तत्कुर्वद्रूपत्वस्यापि निश्चय. स्यादेवेत्याह– **तन्निश्चयानुसारेणैवेति**– सादृश्यनिश्चयानुसारेणैवेत्यर्थ. । '**तच्छक्यानुभवस्यापि**' इत्यस्य स्थाने 'तच्छक्त्यनुभवस्यापि' इति पाठो युक्तः, तत्कुर्वद्रूपत्वानुभवस्यापीति तदर्थ, शक्तिः सामर्थ्यम्, तच्च प्रकृते कुर्वद्रूपत्वमेवेति बोध्यम् । ननु क्षणिक कारणं कार्यकाले न समस्तीति यत्कार्यकाले यत्र सत् तन्न तत्कार्यकारणमिति न क्षणिकात् कार्यजन्मसम्भव इति शङ्कते– **अथेति । असतः** कार्योत्पत्तिकालेऽसतः । समाधत्ते– **नेति । अनभ्युपगमात्** यत् कार्यकालेऽसत् तन्न कारणमित्यस्यानभ्युपगमात्, असत्त्वादकारणत्व तदा स्यात्, यदि सत्त्वात् कारणत्वं भवेत्, न च कार्यकाले सत्त्वस्य कारणताया प्रयोजकत्वमित्याह– **कार्यकाल** इति । तर्हि कारणताया किं प्रयोजकमित्यपेक्षायामाह– **कुर्वद्रूपत्वस्यैवेति । तथात्वात्** कारणतायां प्रयोजकत्वात् । ननु सव्यापारमेव कारणं कार्योत्पादने प्रत्यलमिति द्वितीयक्षणे सव्यापारादेव कारणात् कार्योत्पत्तिरिति व्यापारानुरोधेन द्वितीयक्षणवृत्तित्वव्यवस्थितौ क्षणभङ्गस्य क्षणैकमात्रवृत्तित्वस्य भङ्ग एवोपतिष्ठत इत्याशङ्कते– **तथाऽपीति**– कुर्वद्रूपत्वस्य कारणताया प्रयोजकत्वेऽपीत्यर्थं । **अविनष्टात्** द्वितीयक्षणेऽविनष्टात् । कथमित्थमित्यपेक्षायामाह– **द्वितीयक्षणव्यापारसमावेशवर्तिन** इति– द्वितीयक्षणे यो व्यापारसमावेशो व्यापारसमवधान तेन सह वर्तनशीलस्य, द्वितीयक्षणवृत्तिव्यापारवत इति यावत् । **कार्यप्रसवाभ्युपगमे** कार्योत्पत्त्यभ्युपगमे । **क्षणभङ्गभङ्गप्रसङ्गः** क्षणभङ्गस्योत्पत्त्यनन्तरमेव भावो विनश्यतीति क्षणभङ्गवादस्य भङ्गो विनाशस्तस्य प्रसङ्ग आपत्ति· । सव्यापारात् कारणात् कार्यजन्मेत्येव नेष्यते, कुतो व्यापारानुरोधिद्वितीयक्षणापेक्षा ? किन्तु कुर्वद्रूपत्वलक्षणस्वमहिम्नैव कार्यकरणे प्रवर्तते भाव इत्येवोपेयन इति न क्षणभङ्गभङ्ग इति समाधत्ते– **नेति । अन्यथा** सव्यापारस्यैव कारणत्वमिति व्यापारानुरोधेन द्वितीयक्षणप्रतीक्षाया आवश्यकत्वमित्यभ्युपगमे । यदि व्यापारमन्तरेण न कारण कार्यजननायालमित्युपेयते तर्हि व्यापारोऽपि कार्यमिति तज्जननेऽपि व्यापारान्तरापेक्षा स्यादेव, तदपि व्यापारान्तर कार्यमिति तज्जननायाप्यपरव्यापारापेक्षेत्येवमनवस्था स्यादित्याह– **द्वितीयक्षणेति**। 'व्यापारजननेऽपि' इत्यस्य 'अप्रवृत्ते' इत्यनेनान्वय । **तत्रापि** द्वितीयक्षणभाविव्यापारजननेऽपि । ननु व्यापारातिरिक्तकार्यजनन एव सव्यापारत्व कारणस्यापेक्षित व्यापाररूपकार्ये तु व्यापारमन्तरेणापि करोत्येव कारणमिति नानवस्थेत्यत आह– **अपरेति**– अत्र "**अपरव्यापारनिवर्तकत्वाभ्युपगमे च**" इत्यस्य स्थाने 'अपरव्यापारसमावेशव्यतिरेकेणापि द्वितीयक्षणभाविव्यापारनिवर्तकत्वाभ्युपगमे च' इति पाठो युक्त । यथा व्यापारमन्तरेणैव व्यापाररूपकार्यं करोति कारण तथा कार्यान्तरमपि व्यापारमन्तरेणैव करिष्यति कारणमित्याद्यव्यापारकल्पन व्यर्थमेव, तथा च न तदनुरोधेन द्वितीयक्षणस्थायित्व भावस्येत्याह– **किमपराद्धं कार्येणेति**– न किमपि विरुद्धमाचरितं कार्येणेति तदपि व्यापारमन्तरेणैव करोतु

कार्येण येनाद्यव्यापारं विनैव न तज्जन्यत इति, न च व्यापारमन्तरेणार्थक्रिया नोपपत्तिमती, व्यापारेणैव व्यभिचारादिति विभावनीयम् । अथानष्टात् कारणादुपजायमाने कार्ये कार्य-कारणयोः सहभावप्रसक्तिः, नष्टाच्च कारणात् कार्योत्पत्त्यभ्युपगमे तृतीयक्षणे तत्प्रसङ्गः, तथाहि–प्रथमे क्षणे कारण-सत्ता, द्वितीये तद्विनाशः, तृतीये च कार्योत्पत्तिरिति चेत् ? न–यथैव कारणविनाशस्तत्सत्तापूर्वको नष्टाद् भवति तथैव तत्समानकालं कार्यं नष्टात् कारणाद् भविष्यतीति दोषाभावात्; बतैवं विनाशोऽपि हेतुमान् स्यादिति चेत् ? न–नीरूपत्वेन तत्र हेतुव्यापार(रा)सम्भवात्, तदुपन्यासस्यात्र व्यवधायककाला-सम्भवदर्शनार्थत्वात्, ततो द्वितीयक्षणे कारणं नश्यति कार्यं चोपजायत इति कुतस्तयोः सहभाव-प्रसक्तिः, तदुक्तम्—

"अनष्टाज्जायते कार्यं हेतुश्चान्योऽपि तत्क्षणम् । क्षणिकत्वात् स्वभावेन तेन नास्ति सह स्थितिः" ॥

[ ] इति ।

अत्र चाविद्धकर्णोद्योतकरादिभिर्यदुक्तं "यदि तुलान्तयोर्नमनोन्नमनवत् कार्योत्पत्तिकाल एव कारणविनाशस्तदा कार्यकारणभावो न भवेत्, यतः कारणस्य विनाशः कारणोत्पाद एव "उत्पाद एव

कारणमित्याशयः । येन अपराधेन । तत् कार्यम् । **व्यापारेणैवेति**– व्यापारोऽपि अर्थक्रियैव, स च व्यापारमन्तरेणैव भवतीति व्यापारमन्तरेणार्थक्रिया न भवतीति नियमस्तत्रैव व्यभिचारान्न सम्भवतीत्यर्थः । ननु क्षणभङ्गपक्षे नष्टादनष्टाद् वा कारणात् कार्यजन्मनो न सम्भवः, यतः प्रथमक्षण एव कारणमनष्टमिति तदानीमेव यदि कार्यजन्मोपेयते तदा यदैव कारणमुत्पद्यते तदैव कार्यमप्युत्पद्यत इति स्यात्, न चैवं सम्भवति– सहभाविनोः सव्येतरगोविषाणयोरिव कार्यकारणभावा-भावात्, नष्टात् कारणात् कार्यजन्म तु प्रथमक्षणे कारणमुत्पद्यते द्वितीयक्षणे विनश्यतीति द्वितीयक्षणे तन्नष्टमतस्तृतीयक्षणे ततो नष्टात् स्यात्, एव सति कारणव्यक्ति-कार्यव्यक्त्योरेकेन क्षणेन व्यवधानादव्यवहितकारणकार्यक्षणपरम्परालक्षणसन्तति-रुत्सन्ना स्यादिति शङ्कते– **अथेति** । **तत्प्रसङ्गः** कार्योत्पत्तिप्रसङ्ग. । तृतीयक्षणे कार्योत्पत्तिप्रसङ्गमेव भावयति– **तथाहीति** । **तद्विनाश.** कारणविनाश । नष्टात् कारणात् कार्योत्पत्त्यभ्युपगम एव, एवमपि द्वितीयक्षण एव कार्यजन्म, यथा ध्वंस प्रति प्रतियोगिन कारणत्वमिति नष्टात् कारणात् तद्ध्वंसो भवन्नपि द्वितीयक्षण एव भवति तथैव नष्टात् कारणाद् भवदपि कार्यं द्वितीयक्षण एव भवतीत्येवमुपगमे दोषाभावादिति समाधत्ते–**नेति** । **तत्सत्तापूर्वकः** कारणसत्तापूर्वकः । **तत्स-मानकालं** कारणविनाशसमकालम् । नन्वहेतुको विनाशो भावोत्पत्त्यनन्तरमेव भवतीति सिद्धान्तः क्षणभङ्गवादिनो विनाशस्य हेतुमत्त्वाभ्युपगमे भज्येतेति शङ्कते– **बतैवमिति**– बतेति खेदे, खिद्यते मे मनः सूक्ष्मेक्षणविदग्धस्यापि परस्यैवं स्वसिद्धान्तविरुद्धं प्रलपतः किमय बुद्धिव्यामोह इति भावयतः । **एवं** विनाशस्य कारणसत्तापूर्वकत्वाभ्युपगमे । समाधत्ते–**नेति** । **नीरूपत्वेन** तुच्छत्वेन । **तत्र** ध्वसे । यदि हेतुव्यापारो ध्वंसे नास्ति तर्हि कथ दृष्टान्ततया तदुपन्यास इत्यत आह– **तदुपन्यासस्येति** । **अत्र** कारण-कार्ययोः, यथा कारण-तद्विनाशयोर्न व्यवधायक. कालस्तथा कारण-कार्ययोरपि न व्यवधायकः काल इत्यवगत्यर्थमेव तदुपन्यास इति । एवं च सति यत् सिद्ध तदाह– **तत** इति । **तयोः** कारणकार्ययोः । उक्तार्थे वृद्धबौद्धवचनसंवादमाह– **तदुक्तमिति** । "**अनष्टाज्जायते कार्यम्०**" इति पद्यस्वारस्यात् '**यथैव०**' इत्यादि-ग्रन्थोऽपि 'यथैव कारणविनाशस्तत्सत्तापूर्वकोऽनष्टाद्भवति तथैव तत्समानकाल कार्यमनष्टात् कारणाद् भविष्यतीति दोषाभावाद्' इत्येवरूपोऽवसेयः, तदवतरणेऽपि '**नष्टाद्**' इत्यस्य स्थाने 'अनष्टाद्' इत्येव वाच्यमिति बोध्यम्, '**हेतुश्चान्योऽपि तत्क्षणम्**' इत्यस्य स्थाने 'हेतुर्नान्वेति तत्क्षणम्' इति पाठो युक्त., तस्य कार्याधिकरणक्षण हेतुर्न संवध्नातीत्यर्थ. । **अत्र च** इत्थं क्षणिकवाद्युपगतपदार्थतत्त्वे पुनः । '**यदुक्तम्**' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः । अविद्धकर्णाद्युक्तिमेवोल्लिखति– **यदी-त्यादिना** । **तुलान्तयोः** तुलाकोट्यो. । **नमनोन्नमनवत्** अधिकगुरुत्ववन्मीयमानधान्यादिसम्बन्धाद् यदैवैककोटेर्नमनं तदैव तदल्पप्रमाणवस्तुसम्बन्धादपरकोटेरुन्नमनमिति समकालीनत्वं नमनोन्नमनयोः, एवमेव यदा कार्योत्पत्तिस्तदैव कारण-

विनाश ” [ ] इति वचनात्, एवं च कारणेन सह कार्यमुत्पन्नमिति प्राप्तम्, यदि च स एव विनाशस्तदा प्रथमेऽपि क्षणे न सत्ता भावस्य स्यात्, तदैव विनाशात्, भावस्यैव विनाशत्वे सर्वदा भावस्य सत्त्वं वा स्यात्, अन्यथा क्षणोत्तरं तन्नाशाभ्युपगमस्याप्रामाणिकत्वप्राप्तेः, अथ कारणोत्पादात् कारणविनाशो भिन्नस्तदा कृतकत्वस्वभावत्वमनित्यत्वस्य न भवेत्, उत्पाद-विनाशयोस्तादात्म्य-सम्बन्ध एव तस्य वक्तुं शक्यत्वात्, व्यतिरिक्ते च नाशे समुत्पन्ने न भावस्य निवृत्तिरिति कथं क्षणिकत्वम् ”इति तन्निरस्तम्, यतो द्विविधो विनाशः—संव्यवहारार्थस्तात्त्विकश्च, आद्यो भावनिवृत्तिरूप एव, द्वितीयश्च भावरूपः, तत्र कारणनिवृत्तिरूपोऽभावो लोकप्रतीत एव, नायं भावस्वभाव इष्यते, नापि कारणोत्पादभिन्नोऽभिन्नो वा नीरूपत्वात्, भेदाभेदप्रतिषेध एव केवलमस्य क्रियते, तदुक्तम्—“ भावे ह्येकविकल्पः स्याद् विधेर्वस्त्वनुरोध[तः]” [ ] इति, तेन व्यतिरिक्ते नाशे जाते क्षणिकरूपस्य भावस्यानिवृत्तिरित्यपास्तम्, यतश्च द्वितीयक्षणोत्पत्तिकाल एव प्रथमक्षणनिवृत्तिस्तेनैकक्षणस्थो

---

विनाश इति समकालीनत्वं कार्य-कारणविनाशयोरुपेयते तदा तयो· कार्यकारणभावो न स्यादित्यर्थः। तत्र हेतुमाह— **यत** इति। **एवं च** कारणविनाशस्य कारणोत्पादरूपत्वे च, कारणविनाशस्य कारणोत्पादरूपत्वे च यदा कारणविनाशस्तदा कारणोत्पाद एव, तथा च कार्योत्पत्तिकाले कारणविनाशो नाम कारणोत्पाद इति समकालोत्पत्तिकयो कार्यकारणयो· कथ कार्यकारणभाव इत्यर्थ.। यदि च कारणविनाश एव कारणोत्पाद इत्युपेयते तदा कारणमुत्पद्यत इत्युक्त्या कारणं विनश्यतीत्येव प्रतीयते, तथा च यदा कारणोत्पादस्तदा कारणविनाश एवेति प्रथमक्षणेऽपि कारणविनाशस्यैव प्राप्तौ कारणस्य प्रथमक्षणेऽपि सत्त्वं न स्यादित्याह— **यदि च स एव विनाश** इति— अत्रैवकारो विनाश इत्यनन्तर योज्य, तथा च स विनाश एवेत्यन्वये कारणोत्पाद कारणविनाश एवेत्यर्थो लभ्यते। **तदैव** प्रथमक्षण एव। यदि च विनाशो न भावाद् भिन्नः किन्तु भावस्यैव विनाशत्वं तदा प्रथमक्षणे भावोऽस्तीति निर्विवादं द्वितीयक्षणेऽपि भावविनाशस्य सत्त्वे भावस्यैव सत्त्वमिति सर्वदा भावस्य सत्त्व स्यादित्याह— **भावस्यैव विनाशत्व** इति। **अन्यथा** भावस्य सर्वदा सत्त्वाभावे। **क्षणोत्तरं** द्वितीयक्षणे। **तन्नाशाभ्युपगमस्य** भावनाशाभ्युपगमस्य। **अप्रामाणिकत्वप्राप्तेः** अप्रामाणिकत्वप्रसङ्गात्, यतो भावो यदि द्वितीयक्षणे सत्तामनुभवेत् तदा तद्रूपो भावविनाशोऽपि द्वितीयक्षणे स्यात्, भावस्य द्वितीयक्षणेऽसत्त्वे च तद्रूपस्य तन्नाशस्यापि द्वितीयक्षणेऽसत्त्वमेवेति द्वितीयक्षणे तन्नाशाभ्युपगमस्यासद्विषयकत्वेनाप्रामाणिकत्वमयत्नोपनतमित्यर्थः। यदि च कारणविनाश कारणोत्पादाद् भिन्न एव, तथा च द्वितीयक्षणे कारणविनाशसद्भावेऽपि न कारणसद्भाव इति न कारणस्य सर्वदा सत्त्वापत्तिस्तर्हि कृतकत्वेन हेतुना विनाशित्व यच्छब्दादीना साध्यते तत्र कृतकत्वहेतु स्वभावतयैवानित्यत्वस्य साधकः क्षणिकवादिनोऽभिमत., स्वभावहेतुश्च स एव भवति यस्य साध्येन सह तादात्म्यम् तच्च कृतकत्वमुत्पादरूपमनित्यत्व विनाशरूप तयोरभेदे सत्येव घटते, कारणविनाशस्य कारणोत्पादाद् भिन्नत्वे कृतकत्वा-ऽनित्यत्वयोस्तादात्म्यलक्षणाविनाभावाभावात् कृतकत्वेनानित्यत्वानुमानं न स्यादित्याह— **अथेति**। **तस्य** अनित्यत्वे कृतकत्वस्वभावत्वस्य। कारणविनाशस्य कारणाद् भेदे कारणविनाशस्य समुत्पादेऽपि कारणस्य न किमपि जातमिति न तस्य निवृत्तिरिति न क्षणिकत्वं स्यादित्याह— **व्यतिरिक्ते चेति**। अविद्धकर्णाद्युक्तस्य निरसने हेतुमुपदर्शयति— **यत** इति। **आद्यः** साव्यवहारिक। **द्वितीयश्च** तात्त्विक. पुन.। **तत्र** तयोर्विनाशयोर्मध्ये। **नायं भावस्वभाव इष्यते** कारणनिवृत्तिरूप. साव्यवहारिको विनाशो भावस्वरूपो नेष्यते। **नापीति**— कारणनिवृत्तिरूपो विनाशः कारणोत्पादाद् भिन्नोऽभिन्नो वा नापीष्यते। तत्र हेतुः— **नीरूपत्वादिति**— कारणनिवृत्तिरूपस्य विनाशस्य तुच्छत्वात्, तुच्छे च भावस्वभावत्वादिक न सभवत्येवेत्यभिसन्धि·। **अस्य** कारणनिवृत्तिरूपस्य ध्वंसस्य। अत्र वृद्धबौद्धसंवादमाह— **तदुक्तमिति**। ‘भावे ह्येकविकल्प. स्याद्’ इत्यस्य स्थाने ‘भावे ह्येष विकल्प· स्याद्,’ इति पाठो युक्त, **एष विकल्पो** भिन्नो वाऽभिन्नो वेत्येवस्वरूपो विकल्प., **हि** यत, **भावे** वस्तुस्वरूपे, **स्याद्** भवेत्, **विधेः** भेदाभेदादिविधानस्य, **वस्त्वनुरोधतः** वस्तुन्येव संभवात्, प्रतिषेधस्य तु न वस्त्वनुरोधोऽतो नीरूपेऽपि भेदा-ऽभेदप्रतिषेध. कर्तु शक्य इत्याशय.। ‘**तेन**’ इत्यस्य

यो भावो विनाशशब्देनोच्यते, अयं च भावरूपत्वात् तात्त्विकः साधनस्वभाव एव विनाशः कार्योत्पत्तिकाले च निवर्तत इति, कार्यभिन्नकालभावेन च सर्वकालमस्य सद्भावो भावस्यासत्त्वात्, यद्वा विनाशोऽस्य (स्यास्तीति) विनाशीति व्युत्पत्तेरविनाशिव्यावृत्तो भाव एव नाश उच्यत इति न दोषः । तदेवं क्षणिकाः सर्वे स्वपर्यायाः, त एवार्थक्रियाकारित्वेन सत्या इति निर्व्यूढम् ॥ १६ ॥

नन्वस्मिन्नेवायं घट इति प्रत्यभिज्ञाऽनुपपत्तिः, भिन्नेषु घटक्षणेष्वेकत्वस्य प्रतिसन्धातुमशक्यत्वात्, न च प्रत्यभिज्ञा न प्रमाणम्,

"तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम् । अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम्" ॥ १ ॥
इति प्रमाणलक्षणयोगात्,

न च स्मृतिपूर्वकत्वात् स एवायमिति प्रत्यभिज्ञानस्य प्रत्यक्षत्वमयुक्तमिति शङ्कनीयम्, सत्संप्रयोगजत्वेन स्मरणपश्चाद्भाविनोऽप्यक्षजप्रत्ययस्य लोके प्रत्यक्षेण प्रसिद्धत्वात्, न च पूर्वापरकालसम्बन्धिद्रव्यस्यैकत्वात् कालस्य चाऽतीन्द्रियत्वात् प्रमेयानतिरेकादस्याप्रामाण्यमिति वाच्यम्, तथापि सोऽयं

'अपास्तम्' इत्यनेनान्वय. । **तेन** ध्वसस्य भावव्यतिरिक्तत्वस्याविधानेन, साव्यवहारिककारणनिवृत्तिरूपत्वस्याभ्युपगमेन च । **तेन** द्वितीयक्षणोत्पत्तिकाले प्रथमक्षणनिवृत्तिभावेन । **अयं च** विनाशशब्दवाच्य एकक्षणस्थो भावश्च । **साधनस्वभाव एव** कारणस्वभाव एव, कारणात्मैवेति यावत् । यदा च कारणस्वरूपोऽयं तात्त्विको विनाश एकक्षणस्थ एव, कार्यकाले च नश्यति तदाऽस्य नाशस्य कार्यभिन्नकाल एव भावेन कार्यकालेऽसत्त्वान्न सर्वकाले सद्भावः, कारणस्वरूपस्यास्य कारणस्य सर्वदाऽभावेऽस्यापि सर्वदाऽभावादित्याह– **कार्यभिन्नकालभावेन चेति** । **'सर्वकालमस्य'** इति स्थाने 'न सर्वकालमस्य' इति पाठो युक्त. । **अस्य** साधनस्वभावस्य विनाशस्य । **भावस्यासत्त्वात्** साधनस्य सर्वकालमसत्त्वात् । भावस्यैव विनाशशब्दवाच्यत्वमतद्व्यावृत्तिमुखेन दर्शयति– **यद्वेति**– यथा घटत्ववत्त्वं घटत्वमेव तथा विनाशित्व विनाश एव, घटत्वादीना यथाऽघटव्यावृत्त्यादिरूपत्वं तथा विनाशस्याप्यविनाशिव्यावृत्तिरूपत्वम्, पर्यायनये च भावा विनाशिन एवेति भवन्त्यविनाशिव्यावृत्ता', तत्त्वादेव च नाशरूपत्वमेषा न तु नाशो नामातिरिक्तो भावेभ्य इति हृदयम् । पर्यायार्थिकमते द्रव्यं नास्त्येव, पर्याया एव तु सत्या अर्थक्रियाकारित्वलक्षणसत्त्वयोगादित्युपसंहरति– **तदेवमिति** । **त एव** पर्याया एव । **निर्व्यूढं** सुव्यवस्थितम् ॥ १६ ॥

सप्तदशपद्यमवतारयति– **नन्विति** । **'नन्वस्मिन्नेवायं'** इत्यस्य स्थाने 'नन्वस्मिन् नये स एवायं' इति पाठो युक्तः । **अस्मिन् नये** पर्यायार्थिकनये । प्रत्यभिज्ञानुपपत्तौ हेतुमुपदर्शयति– **भिन्नेष्विति**– एकसन्तानगता ये पूर्वोत्तरकालवर्तिनो घटक्षणास्तेऽन्योऽन्य भिन्ना एव, तेष्वेकत्वस्यासतः प्रतिसन्धातुमशक्यत्वादित्यर्थ. । ननु प्रत्यभिज्ञा न प्रमारूपेति तस्या अनुपपत्तिर्न दोषावहेत्याशङ्क्य प्रतिक्षिपति– **न चेति** । प्रमाणस्य यल्लक्षणमन्यत्र क्लृप्त तस्य प्रत्यभिज्ञायामपि सत्त्वेन प्रमाणलक्षणयोगात् प्रत्यभिज्ञाया प्रामाण्यस्यावश्य स्वीकरणीयत्वादिति निषेधहेतुमुपदर्शयति– **तत्रेति** । अधिगतार्थाधिगन्तृज्ञानेऽतिव्याप्तिवारणाय **'अपूर्वार्थविज्ञानम्'** इति । संशयेऽतिव्याप्तिवारणाय **'निश्चितम्'** इति । बाधितार्थविषयके विभ्रमेऽतिव्याप्तिवारणाय **'बाधवर्जितम्'** इति । यश्च विपर्ययोऽसदर्थविषयकोऽपि स्वविषयेऽजातबाध. स बाधवर्जितो भवत्येवेति तत्रातिव्याप्तिवारणाय **'अदुष्टकारणारब्धम्'** इति । प्रत्यभिज्ञायाः प्रत्यक्षरूपत्वेन प्रामाण्य मीमांसका अभ्युपगच्छन्ति, तत्र प्रत्यक्षत्वमसहमानस्य वादिन आशङ्कामुद्भाव्य प्रतिक्षिपति– **न चेति**– अस्य 'शङ्कनीयम्' इत्यनेनान्वयः । निषेधे हेतुमाह– **सत्संप्रयोगजत्वेनेति**– सता वर्तमानेनार्थेन सहेन्द्रियस्य य सप्रयोग. सन्निकर्षस्तज्जन्यत्वेनेत्यर्थ., इन्द्रियार्थसंप्रयोगजन्यज्ञानत्वं प्रत्यक्षस्य लक्षणम्, तच्च प्रत्यभिज्ञानेऽपि समस्तीति स्मरणपृष्ठभाविनोऽप्यस्य लोके प्रत्यक्षेण प्रसिद्धत्वात् प्रत्यक्षत्वं स्वीकरणीयमित्यर्थ । पूर्वज्ञानेनोत्तरज्ञानेन च यदेव द्रव्य विषयीक्रियते तदेव प्रत्यभिज्ञानेनापि विषयीक्रियते, कालस्त्वतीन्द्रियत्वादेव न प्रत्यभिज्ञाप्रत्यक्षविषय इति यदेव प्रमाणान्तरस्य प्रमेय तदेवास्यापि प्रमेयमिति प्रमेयानतिरेकात् प्रत्यभिज्ञानस्य न प्रामाण्यमित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वय. । **अस्य** प्रत्यभिज्ञानस्य । प्रमेयानतिरेकेऽपि मानान्तरानिवर्त्यसशयनिवर्तकत्वेन प्रत्यभिज्ञानस्य प्रामाण्यमिति निषेधहेतुमुप-

नवेति सन्देहनिराकरणेनास्य प्रामाण्यसिद्धेर्विषयातिरेकस्यै(स्ये)व सन्देहापाकरणस्यापि प्रामाण्यनिबन्धनत्वात्, न च सविकल्पत्वादेवास्या अप्रामाण्यं, नीलमनुभवामीति विकल्पादविकल्पनीलानुभवस्य सौगतैरिव पूर्वदृष्टं पश्यामीति विकल्पात्, अविकल्पात् तु यद्रूपशब्दानुभवस्यास्माभिः कल्पयितुं शक्यत्वादिति जाग्रत्कत्वं प्रत्यभिज्ञाने कथं क्षणिकपर्यायसिद्धिरित्याशङ्कायामाह—

**यथा लून-पुनर्जातनखादावेकतामतिः ।**
**तथैव क्षणसादृश्याद् घटादौ द्रव्यगोचरा ॥ १७ ॥**

**नयामृत०—यथेति** । यथा लून-पुनर्जातनखादौ भेदाग्रहात्, एकतामतिः—'स एवायं नखः' इत्याद्यभेदाभिमानात्, तथैव क्षणसादृश्यात्—सदृशापरापरक्षणोत्पत्तिरूपदोषात्, घटादौ द्रव्यगोचरैकतामतिर्भवेत्, तथा च प्रत्यभिज्ञाया भ्रान्तत्वान्न क्षणिकत्वसिद्धिप्रतिबन्धकत्वमिति भावः, न च लून-पुनर्जातनखादौ विच्छेदाभिज्ञैर्भेदग्रहणादस्तु तत्राभेदग्रहो भ्रमः, अत्र तु नैवमिति वैषम्यमिति वाच्यम्, अवगतविच्छेदानामपि प्रमातॄणां समानवर्ण-संस्थान-प्रमाणेषु केशादिषु तदन्येषामिव प्रत्यक्षेण भेदनिश्चयाभावात्, आनुमानिकभेदनिश्चयस्य चात्रापि साम्यात्, न च विकल्पवशादनुभवस्य विषयव्यवस्था

---

दर्शयति– **तथाऽपीति**– प्रमेयानतिरेकेऽपीत्यर्थ । **अस्य** प्रत्यभिज्ञानस्य । **विषयातिरेकस्येव** प्रमाणान्तरविषयभिन्नविषयकत्वस्येव । **सन्देहापाकरणस्यापि** सन्देहनिवर्तकत्वस्यापि । ननु निर्विकल्पकप्रत्यक्षमेव प्रमाणम्, प्रत्यभिज्ञा तु सविकल्पात्मिकाऽतो न प्रमाणमित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **अस्याः** प्रत्यभिज्ञाया. । निषेधे हेतुमाह– **नीलमनुभवामीति**– अनुभवरूपविकल्पद्वारा निर्विकल्पस्य प्रामाण्य सौगतैरिष्यते, ततो विकल्पस्य साक्षादप्रामाण्येऽपि स्वजनकनिर्विकल्पकानुभवव्यापारविधया प्रामाण्यम्, तत एव यत्र विकल्पस्तत्र विकल्पात् कार्यान्निर्विकल्पकस्यानुमित्यात्मककल्पनमिति नीलमनुभवामीति विकल्पादविकल्पस्यानुभवस्य सौगतैर्यथा कल्पना क्रियते तथा मीमांसकादिभिरपि पूर्वदृष्ट पश्यामीति विकल्पादविकल्पस्यानुव्यद्रूपशब्दाद्यनुभवस्य कल्पयितुं शक्यत्वादित्यर्थ । "**विकल्पात्, अविकल्पा तु यद्रूपशब्दाद्यनुभवस्यास्माभिः**" इत्यस्य स्थाने 'विकल्पादविकल्पानुव्यद्रूपशब्दाद्यनुभवस्यास्माभि.' इति पाठो युक्त. । तथा च पूर्वापरैकत्वग्राहिणि प्रत्यभिज्ञाने सति क्षणिकपर्यायसिद्धिर्न स्यादेवेत्याह– **इति जाग्रदिति**– अत्र '**जाग्रत्कत्वं प्रत्यभिज्ञाने**, इत्यस्य स्थाने 'जाग्रत्यैकत्वप्रत्यभिज्ञाने' इति पाठो युक्त ॥

विवृणोति– **यथेतीति** । **भेदाग्रहात्** लूनेन नखादिना पुनर्जातनखादेर्भेदस्य ज्ञानाभावात् । '**मानात् तैथव**' इत्यस्य स्थाने 'मानस्तथैव' इति पाठो युक्त., । '**एकतामति.**' इति मूलस्य विवरणम्–'**स एवायं नखः**' इत्याद्यभेदाभिमान इति, 'अभिमान.' इत्यनेनोक्तज्ञानस्य भ्रमत्वमाविष्कृतम्, भ्रमस्य दोषजन्यत्वमिति नियमेन भेदाग्रहस्य कारणत्वमत्र दोषविधयेति बोध्यम् । **तथा च** सदृशापरापरक्षणोत्पत्तिरूपदोषजन्यत्वेन दृष्टान्त दार्ष्टान्तिकयोर्वैषम्यमाशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वय. । **विच्छेदाभिज्ञैरिति**– यादृक्प्रमाण इदानीन्तननखादिस्तादृक्प्रमाण पूर्वनखादिर्विनष्ट इत्येव विच्छेदाभिज्ञैरित्यर्थ. । **भेदग्रहणात्** पूर्वानुभूतनखादितो वर्तमाननखादेर्भेदस्य ग्रहणात् । **तत्र** लून-पुनर्जातनखादौ । **अभेदग्रहः** विच्छेदानभिज्ञस्य भेदाग्रहरूपदोषात् पूर्वानुभूतनखादितो वर्तमाननखादेरभेदग्रह. । **भ्रमोऽस्तु** भ्रमात्मको भवतु नाम । **अत्र तु** स एवायं घट इत्यादिप्रत्यभिज्ञाया पुन. । **नैवं** न कोऽपि पूर्वघटो नष्टोऽन्य एवेदानीन्तनघट इत्येव विच्छेदाभिज्ञ. समस्ति यस्य भेदग्रहो भवेदपि, ततो न पूर्वापरघटैकत्वादिज्ञान भ्रम । निषेधहेतुमाह– **अवगतविच्छेदानामपीति** । **तदन्येषामिव** अनवगतविच्छेदाना प्रमातॄणामिव । ननु लून-पुनर्जातनख-केशादौ प्रत्यक्षात्मकभेदनिश्चयाभावेऽप्यनुमित्यात्मकभेदनिश्चय समस्त्येवेत्यत आह–**आनुमानिकेति** । **अत्रापि** प्रत्यभिज्ञानविषयघटादावपि । किञ्च, सोऽयं घट इति प्रत्यभिज्ञानात्मकविकल्पबलान्निर्विकल्पकोऽप्यनुव्यद्रूपघटादिगोचर इत्यत्र न प्रमाणमस्ति समानविषयकनिर्विकल्पकमन्तरेणापि वासनादितो विकल्पस्य सम्भवादित्याह– **न चेति**– अस्य 'सङ्गच्छते' इत्यनेनान्वयः । **विपयव्यवस्था** यद्विषयको

सङ्गच्छते; किञ्च, सोऽयमित्याकारयोरन्योऽन्यानुप्रवेशेन भाने परोक्षापरोक्षरूपमेकं ज्ञानं स्यादन्योन्यानुप्रवेशेन च भाने प्रतिभासद्वयं परस्परविविक्तमायातमिति प्रतिभास्यस्यापि भेद एव ध्रुवः, न चात्रुट्यद्रूपतया प्रतिभासात् प्रतिभास्यस्यैकत्वम्, पूर्वदृष्टाप्रतिभासनेन त्रुट्यद्रूपताया विद्युदादाविव स्तम्भादावपि तुल्यत्वात्, अविरतोपलब्धिरूपायाश्चात्रुट्यद्रूपताया अगृहीतभेदान्यान्यविषयत्वेनाप्युपपत्तिरिति दिक्।

ननु तथापि विनाशस्य सहेतुकत्वात् तद्धेत्वभावादेव कियत्कालं स्थैर्योपपत्तौ न घटादेः क्षणिकत्वमिति चेत्? न–विनाशस्य सहेतुकताया एवासिद्धेः, तथाहि–इन्धनादीनामग्निसंयोगावस्थायां त्रितयमुपलभ्यते–तदेवेन्धनादि, कश्चिद् विकारोऽङ्गारादिः, तुच्छरूपश्चाभावः कल्पनाज्ञानप्रतिभासी, तत्राग्न्यादीनां क व्यापार इति वक्तव्यम्, न तावदिन्धनादिजन्मनि स्वहेतुत एव तेषामुत्पत्तेः, नाप्यङ्गारादौ विवादाभावात्, किन्त्वग्न्यादिभ्योऽङ्गाराद्युत्पत्ताविन्धनादेरनिवृत्तत्वात् तथैवोपलब्ध्यादिप्रसङ्गः, अङ्गारादेरेवेन्धनादिनिवृत्तिरूपत्वात् तद्ग्रहे न तदुपलब्धिरिति चेत्? न–तस्य निवृत्तित्वे साध-

विकल्पस्तद्विषयको निर्विकल्पक इति विकल्पस्य पूर्वापरैकत्वावगाहित्वे निर्विकल्पमपि पूर्वापरैकत्वावगाहीत्येवं विषयव्यवस्था। अपि च, सोऽयमिति यदेकं ज्ञानं तस्य स इत्याकारोऽयमित्याकारश्च, तत्र स इत्याकारो यद्ययमित्याकारानुप्रवेशेन भासते, अयमित्याकारश्च स इत्याकारानुप्रवेशेन च भासते तदा प्रतिभासविवेकाभावात् स इत्याकाराशोऽपि ज्ञानं परोक्षमपरोक्षं च, अयमित्याकारेऽपि तथा, यतः स इति परोक्षाकारस्तद्वत्त्वात् परोक्षत्वम्, तस्यैव चायमिति प्रत्यक्षाकारानुप्रवेशात् प्रत्यक्षाकारत्वमपि, तदाकारवत्त्वात् प्रत्यक्षत्वमपि, एवमयमिति प्रत्यक्षाकारस्तद्वत्त्वात् प्रत्यक्षत्वम्, तस्यैव च स इति परोक्षाकारानुप्रवेशात् परोक्षाकारत्वमपि, तदाकारवत्त्वात् परोक्षत्वमपीति; यद्युक्ताकारयोरन्योऽन्याननुप्रवेशेन भान तदा स इत्याकारकं यज्ज्ञानं न तस्यायमित्याकारः, यच्चायमित्याकारकं ज्ञानं न तस्य स इत्याकार इति परोक्षप्रतिभास्येकं ज्ञानं प्रत्यक्षप्रतिभासि च ज्ञानान्तरमित्येवं ज्ञानद्वयमापन्नम्, तथा च तत्प्रतिभास्यस्य विषयस्यापि भेद इति नोक्तप्रत्यभिज्ञानबलात् पूर्वापरैकत्वसिद्धिरित्याह– **किञ्चेति**– अन्योऽन्यानुप्रवेशेन भाने परोक्षापरोक्षरूपं यदेकज्ञानं प्राप्तं तद्विरुद्धधर्माध्यासान्न संभवति, अन्योऽन्याननुप्रवेशेन भाने यदर्थं प्रत्यभिज्ञानप्रमाणाश्रयणं तदभिलपितं न सिध्यतीत्याशयः। प्रतिभासस्य भेदेऽपि प्रतिभास्यस्य विषयस्यात्रुट्यद्रूपतया प्रतिभासादेकत्वमित्यपि नास्ति, यदाऽयमिति वर्तमानकालवृत्तितया प्रतिभासते तदा न पूर्वकालवृत्तितया, यदा च पूर्वकालवृत्तितया स इति प्रतिभासते तदा न वर्तमानकालवृत्तितयेति विद्युदादीनामिव स्तम्भादीनामपि त्रुट्यद्रूपतयैव प्रतिभासादित्याह– **न चेति**। **अत्रुट्यद्रूपतया** पूर्वापरकालाविच्छिन्नरूपतया, एकज्ञाने पूर्वरूपं वर्तमानरूपं च यदि प्रतिभासेत तदा पूर्वापरकालाविच्छेदलक्षणात्रुट्यद्रूपताप्रतिभासनं शक्येताभ्युपगन्तुम्, न चैवमित्याशयः। ननु स्तम्भादिकं कियत्कालमविरतमुपलभ्यते न तु विद्युदादिकमित्यविरतोपलब्धिलक्षणात्रुट्यद्रूपता स्तम्भादावस्ति न तु सा विद्युदादावित्यस्ति विशेषः, तद्बलादेव प्रतिभास्यस्यैकत्वं स्यादित्यत आह– **अविरतोपलब्धिरूपायाश्चेति– अगृहीतेति**– यद्यपि प्रतिक्षणं स्तम्भादीनामन्यान्यभाव इति पूर्वक्षणवृत्तिस्तम्भादिव्यक्तिभ्य उत्तरोत्तरक्षणवर्तिनीनां स्तम्भादिव्यक्तीनां भेद एव तथापि सौसादृश्यदोषात् स भेदो न गृह्यत इत्यगृहीतभेदा या अन्या अन्यास्तम्भादिव्यक्तयस्तद्विषयकत्वेनाप्युक्तस्वरूपाया अत्रुट्यद्रूपताया उपपत्तिरिति नातः प्रतिभास्यस्यैकत्वमित्यर्थः।

द्रव्यवादी शङ्कते– **नन्विति**। **तथापि** उक्तदिशा प्रत्यभिज्ञाया अप्रामाण्यसमर्थनेऽपि। **तद्धेत्वभावादेव** विनाशहेत्वभावादेव। **कियत्कालं** यावन्न विनाशहेतुसमवधानं तावत्कालम्। पर्यायवादी समाधत्ते– **नेति**। विनाशस्य सहेतुकत्वाभावमेव भावयति– **तथाहीति**। **तेषाम्** इन्धनादीनाम्। **विवादाभावादिति**– अग्न्यादीनामङ्गारादौ व्यापार इत्यतोऽग्न्यादिभ्योऽङ्गारादीनामुत्पाद इति यदीष्यते तदाऽस्मदादिभिरप्यग्न्यादिभ्योऽङ्गारादीनामुत्पाद इष्यत एवेति तथोपगमे विवादाभावादित्यर्थः। यदि नास्ति विवादस्तत्किमित्थमस्माभिरुपदर्शिते भवद्भिस्तूष्णीम्भूय स्थातव्यमिति पृच्छति– **किन्त्विति**। एवमुपगमे भवत्पक्षे दोषान्तरोपदर्शने सावकाशा एव वयमित्युत्तरयति– **अग्न्यादिभ्य** इति। **तथैव** पूर्ववदेव। **तद्ग्रहे** अङ्गारादिलक्षणेन्धनादिनिवृत्तिग्रहे। **तदुपलब्धिः** इन्धनाद्युपलब्धिः। **तस्य** अङ्गारादेः। **निवृत्तित्वे** इन्धनादि-

काभावात्, मिथोऽनुपलम्भनियमस्य तत्साधकत्वे अन्योन्याश्रयात्। 'अव्यक्तस्वात्मरूपविकारान्तरो ध्वंसः' इत्यनुद्घोष्यम्, बुद्ध्यादीनामात्मरूपविकारापत्तौ प्रमाणाभावात्, प्रदीपादेश्चाव्यक्तरूपस्य विकारस्य कार्यविशेषादर्शनेनासिद्धेः । किञ्च, भावान्तरस्य प्रध्वंसत्वे तद्विनाशात् घटाद्युन्मज्जनप्रसङ्गः, घटप्राग-भाव-तद्ध्वंसानाधारकालस्य घटाधारत्वव्याप्यत्वात्; न च कपालादेर्भावरूपतैव ध्वस्ता नाऽभावात्मकतेति नायं दोषः, धर्मिप्रच्यवे धर्मप्रच्यवात् निराश्रयधर्मावस्थानायोगात्; कपालादिकार्यपरम्परायामेव घटध्वंसत्वस्वीकारात् नायं दोष इति चेत् ? न-एवं सति घटध्वंसत्वस्य व्यासज्यवृत्तित्वे याव-दाश्रयभानं विनाऽभानप्रसङ्गात्; तस्मात् तुच्छरूप एव ध्वंस इत्यवशिष्यते, तत्र च कारकव्यापारा-सम्भव एव, हेतुमत्त्वे तस्य भावत्वप्रसङ्गात्, भवनधर्मा हि भावः, अङ्कुरादावपि भावशब्दप्रवृत्तिनिमित्तं

---

निवृत्तिरूपत्वे । नन्वङ्गाराद्युपलम्भे इन्धनादिक नोपलभ्यते, इन्धनाद्युपलम्भेऽङ्गारादिक नोपलभ्यत इत्यतोऽङ्गारादिकमिन्धनादि-निवृत्तिरूपमुपेयत इत्यत आह-**मिथोऽनुपलम्भनियमस्ये**ति । **तत्साधकत्वे** निवृत्तिरूपत्वसाधकत्वे । **अन्योन्या-श्रयादि**ति-अङ्गारादिजन्मनि कथमिन्धनं नोपलभ्यते इति पृच्छायामङ्गारादिक यत इन्धनादिनिवृत्तिरूपम्, कथमङ्गारादिक-मिन्धनादिनिवृत्तिरूपमिति पृच्छायां यतोऽङ्गारादिजन्मनि इन्धनादिकं नोपलभ्यत इत्येवमुत्तरवितरणेऽन्योऽन्याश्रयस्य स्पष्ट प्रतीतेरित्याशयः । स्वस्वरूपाव्यक्तविकारो ध्वंस इति मतमुद्भाव्य प्रतिक्षिपति-**अव्यक्ते**ति । बुद्ध्यादीना यदा विनाशो भवति तदानीं बुद्ध्यादिरूपो विकारो नोपलभ्यत इत्यनुपलभ्यमानाव्यक्तबुद्ध्यादिरूपविकारे प्रमाणाभावेन बुद्ध्यादीनामुक्त-स्वरूपध्वंसानापत्तेरित्याह- **बुद्ध्यादीना**मिति । एव प्रदीपादेरप्युक्तविकारे प्रमाणाभावेन तदात्मकध्वसाभावापत्तिरित्याह-**प्रदीपादेश्चे**ति । अभावाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वेन घटादिध्वसध्वंसस्य घटादिस्वरूपतया घटादिध्वंसस्य कपालादिभावस्वरूपत्वे कपालादिध्वसाद्घटाद्युन्मजनप्रसङ्गान्न ध्वसस्य भावान्तरस्वरूपत्वमित्याह- **किञ्चे**ति । **तद्वि-नाशात्** कपालादिस्वरूपघटादिध्वसविनाशात् । कथ भावान्तररूपतद्ध्वंसविनाशात् तदुन्मज्जनप्रसङ्ग इत्यपेक्षायामाह-**घटप्रागभावे**ति । **तद्ध्वंसे**ति- घटध्वसेत्यर्थः । 'कालस्य' इति स्थाने 'कालत्वस्य' इति पाठ, भावप्रधानो वा निर्देशः, व्याप्तिश्च यत्र घटप्रागभाव-तद्ध्वसानाधारकालत्वं तत्र घटाधारत्वमित्येवरूपा । ननु कपालादेर्या घटध्वसादिरूपता सा कपालादिनाशेऽपि न नश्यतीति घटादिध्वसरूपताया नाशाभावान्न घटाद्युन्मज्जनप्रसङ्ग इत्याशङ्क्य प्रतिक्षिपति-**न चे**ति । **भावरूपतैव** कपालादिभावात्मकतैव । **ध्वस्ता** कपालादिनाशाद् विनष्टा, । **नाभावात्मकता** कपालादेर्घटादिध्वसा-त्मकता न विनष्टा । **इति** एतस्माद्धेतोः । **नायं दोषः** घटाद्युन्मज्जनप्रसङ्गरूपो दोषो न । प्रतिक्षेपे हेतुमाह- **धर्मि-प्रच्यव** इति- कपालाद्यात्मकधर्मिणो नाशे सति धर्मस्य घटादिध्वसरूपत्वस्यापि विनाशात् निराश्रयस्याधाररहितस्य धर्मस्यावस्थानासम्भवादित्यर्थः । ननु कपाल यथा घटध्वसरूप तथा कपालानन्तरं यत्कार्यं तदपि घटध्वसरूपम्, एव तत्कार्यानन्तरकार्यमपीत्येव कपालादिकार्यपरम्परायामेव घटध्वंसत्वस्य स्वीकारेण कपालविनाशेऽपि तदनन्तरकार्यस्य विद्यमानत्वेन तदात्मना घटध्वसस्य विद्यमानतया घटध्वसध्वंसाभावान्न घटोन्मज्जनप्रसङ्ग इत्याशङ्कते- **कपालादी**ति । यदि कपालादिकार्येषु प्रत्येकं परिसमाप्त घटध्वसत्व तदैकस्य कपालादिरूपकार्यस्य नाशे तदात्मना घटध्वसस्यापि नाश स्यादिति घटोन्मज्जनप्रसङ्ग. स्यादेव, यदि च कपालादिपरम्परितकार्यसमूहेष्वेव पर्याप्त घटध्वंसत्व तदा व्यासज्यवृत्तेस्तस्य यावदा-श्रयप्रत्यक्षे सत्येव प्रत्यक्ष भवेत्, व्यासज्यवृत्तिधर्मप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षस्य हेतुत्वात्, तथा च मुद्गरपातत कपालकदम्बके जाते सति घटो ध्वस्त इत्येवंरूपेण घटध्वसस्य तत्त्वेन यत् प्रत्यक्षं भवति तन्न स्यादिति समाधत्ते- **ने**ति । **एवं सति** कपालादिकार्यपरम्परायामेव घटध्वसत्वस्य स्वीकारे सति । **तस्मात्** भावान्तरस्य ध्वसरूपत्वासम्भवात् । **तत्र च** तुच्छरूपध्वसे च । यदि च तुच्छरूपेऽपि ध्वंसे कारकव्यापारोऽभ्युपगम्यते तदा तुच्छरूपत्वमेव तस्य न स्यात् किन्तु हेतुमत्त्वे भवनधर्मकस्य ध्वंसस्य भावत्वमेव स्यात्, अन्यत्राप्यङ्कुरादौ भवनधर्मरूपभावशब्दप्रवृत्तिनिमित्तसत्त्वादेव भावशब्दप्रवृत्ति., भवनं च हेतुमति ध्वसेऽपि समस्तीति तत्रापि भावशब्द एव प्रवर्तेत नाभाव इत्याह- **हेतुमत्त्वे** इति- कारणवत्त्व इत्यर्थं । **तस्य** ध्वंसस्य । **तच्चेत्** भवनं चेत् । **अभावे** ध्वंसे । **अस्ति** वर्तते । **कथं न भावः** ध्वसः कथं न भावशब्दप्रतिपाद्य स्यात्, अपि तु स्यादेवेत्यर्थ. । प्रतिनियतेन रूपेण स्वग्राहिणि ज्ञाने यत् प्रतिभासते तस्यैव भावत्वं स्वीक्रियते, न च ध्वसः प्रतिनियतेन रूपेण स्वग्राहिणि ज्ञाने प्रतिभासतेऽतो नास्य भावत्वमित्याशङ्क्य

नापरमुपलभ्यते, तच्चेदभावेऽस्ति कथं न भाव इति; स्वग्राहिणि ज्ञाने प्रतिनियतेन रूपेणाप्रतिभासनाद-भाव इत्येतदपि न वक्तव्यम्, अत्यन्तपरोक्षचक्षुरादीनामप्यभावत्वापत्तेः । किञ्च, यद्यभावरूपो विनाशो हेतुमांस्तदा हेतुभेदात्तद्भेदप्रसङ्गः, न चायमनुभूयते, अग्न्यभिघातादिहेतुभेदेऽपि घटनाशभेदाननुभवात्, तस्मादहेतुरयं निःस्वभावस्तुच्छोऽभ्युपगन्तव्यः, अग्निसंयोगादयस्तु काष्ठादिष्वङ्गारादिकमेव जनयन्ति, काष्ठादयः स्वरसत एव निरुध्यन्त इत्यनवद्यम्, किञ्च, स्वभावतो भावानां नश्वरत्वेऽपरव्यापारवैफ-ल्यादनश्वरत्वे च तत्स्वभावस्यान्यथाकर्तुमशक्यत्वाद् व्यर्थो नाशहेतुः; अथ स्वहेतुभिर्नियतकालस्थायि-स्वभावः पदार्थो जनित इति नोत्पादानन्तरमेव विनष्टुमुत्सहते इति चेत् ? तर्हि तस्मिन् स्वभावे व्यवस्थितः कथमन्तेऽपि विनश्येत्, तथा चान्तेऽन्ते तावत्तावत्कालस्थायिस्वभावानपगमे सदा स्थाणु-रेव स्यात्, स्वभावापरावृत्तावकिञ्चित्करैर्मुद्गरादिभिस्तन्नाशायोगात्; न च भवतामप्यकिञ्चित्करमपि मुद्गरादिकमपेक्ष्य कथं प्रवाहो निवर्तेत इति वाच्यम्, यतो न विशरारुक्षणव्यावृत्तोऽपरः प्रवाहो विद्यते यो निवर्तमानोऽकिञ्चित्करं मुद्गरादिकमपेक्षत इति प्रतिजानीमहे, किन्तु परस्परविविक्तपूर्वापर-क्षणा एव प्रवाहः, ते च स्वरसत एव निरुध्यन्त इति न क्वचिदकिञ्चित्करापेक्षा निवृत्तिः, केवलं मुद्ग-

---

प्रतिक्षिपति– **स्वग्राहिणीति** । अत्यंतं परोक्षा ये चक्षुरादयस्तेऽपि स्वग्राहिणि ज्ञाने न प्रतिनियतेन रूपेण प्रतिभासन्ते इति तेषामप्युक्तनियमबलादभावत्व प्रसज्यत इति निषेधहेतुमुपदर्शयति– **अत्यन्तेति** । अपि च यो हि हेतुमान् तस्य हेतुभेदाद् भेदो दृश्यते, यथा रक्तमृत्तिकादिप्रभवाद् घटादित कृष्णमृत्तिकादिप्रभवस्य घटादेः, एवं च यदि ध्वंसो हेतुमान् स्यात् तदा तस्यापि हेतुभेदाद् भेदो दृश्यते न च दृश्यते तथेति न ध्वसो हेतुमान् इत्याह– **किञ्चेति** । **तद्भेदप्रसङ्गः** विनाशभेदप्रसङ्ग. । **न चेति**– हेतुभेदाद् भेदो ध्वंसस्य न चानुभूयत इत्यर्थ. । अत्रैव हेतुमुपदर्शयति– **अग्न्यभिघातादीति**– आदिपदान्मुद्गरपातादेर्ग्रहणम्, यादृश एव घटनाशोऽग्न्यभिघाततो जायमानो दृश्यते तादृश एव स मुद्गरपातादितोऽपि जायमानो दृश्यत इति हेतुभेदेऽपि घटनाशभेदाननुभवान्न हेतुमान् विनाश । पर्यायवादी विनाशस्य तुच्छरूपत्वाहेतुमत्त्वे उपसंहरति– **तस्मादिति** । **अयं** विनाश । यदि ध्वसो न हेतुमान् तर्हि तत्कारणत्वेन व्यवह्रियमाणानामग्निसयोगादीनां किं प्रति जनकत्वमित्यपेक्षायामाह– **अग्निसंयोगादयस्त्विति** । ननु यद्यग्निसयोगादिभ्यो न काष्ठादीना निवृत्त्यात्मा ध्वंसो जनितस्तदा काष्ठादयः किमिति पूर्ववन्नोपलभ्यन्त इत्यत आह– **काष्ठादय इति** । **स्वरसतः** स्वभावतः, काष्ठा-दीना स्वभाव एवायं यदुत द्वितीयक्षणनिरुद्धा भवन्ति, सत्तां नानुभवन्तीति यावत्, ततः स्वभावत एव निरुद्धयन्ते काष्ठादयो न तदर्थमतिरिक्तविनाशलक्षणनिवृत्त्यपेक्षेति भाव. । अपि च भावा यदि स्वभावत एव नश्वरास्तदा हेतु विनाऽपि विनक्ष्यन्तीति तदर्थ हेतुव्यापारणं व्यर्थम्, यदि च स्वभावतोऽनश्वरस्वभावास्ते तर्हि तत्स्वभावपरावर्तन केनापि कर्तुमशक्यमिति हेतुव्यापारणे तत्स्वभावान्यथाभावासम्भवाद् व्यर्थ एव नाशहेतुरित्याह– **किञ्चेति** । **अनश्वरत्वे च** स्वभावतो भावानामनश्वरत्वे च । **तत्स्वभावस्य** भावानामनश्वरत्वस्वभावस्य । **अन्यथा कर्तुं** नश्वरस्वभावतां कर्तुम् । ननु स्वकारणसामग्र्या जायमानो भावो नियतकालस्थायिस्वभाव एव जन्यते, स यद्युत्पादानन्तरमेव नश्येत् नियतकालस्थायिस्वभावतैवास्य हीयेत, ततः स्वस्वभावान्यथानुपपत्त्या नियतकालावस्थानानन्तरमेव नश्यतीति न क्षणिकत्वं भावस्येति पराकूतं प्रतिक्षेप्तुमुपन्यस्यति– **अथेति** । यस्मिन् क्षणेऽसौ भावो नश्यति तदव्यवहितपूर्वक्षणेऽप्यस्य नियतकालस्थायित्वमेव स्वभावः, तथा च यदि तदव्यवहितक्षणेऽसौ नश्येत् न तर्हि स्वभावोऽस्य भवेदिति नाशकालत्वे-नाभिमतक्षणेऽपि नासौ नश्येत्, एवं च सति यदा यदाऽस्य नाशः सम्भावनीयस्तत्तदव्यवहितपूर्वक्षणे तत्स्वभावस्य तादवस्थ्यान्न तदा तदाऽस्य नाशो भवेदिति सदातनत्वमेवास्य प्रसज्यत इति समाधत्ते– **तर्हीति** । **तस्मिन् स्वभावे** नियतकालस्थायिस्वभावे । यदा च स्वभावोऽस्य नियतकालस्थायिलक्षणो न केनापि परावर्तयितु शक्य., तदाऽकिञ्चि-त्करैर्मुद्गरादिभिस्तन्नाशासम्भवात् सदातनत्व परिहर्तुमशक्यमित्याह– **स्वभावापरावृत्ताविति** । **तन्नाशायोगात्** नियतकालस्थायिस्वभावपदार्थनाशासम्भवात् । 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः । **भवतामपि** क्षणक्षयवादि-

रादिना रहिता सामग्री अविभक्तं कार्यं सम्पादयति, तत्सन्निधाने तु विभक्तं कार्यान्तरं जनयतीति विशेषः, न तु मुद्गरादयः कारणसामर्थ्यं खण्डयतीति । अथायं विकल्पोऽतिप्रसञ्जकत्वादसारः, तथाहि– उत्पादेऽप्येवं शक्यत एव वक्तुम्–स्वभावतो ह्युत्पत्तिस्वभावस्य न किञ्चिदुत्पत्तिहेतुभिः, तत्तत्स्वभावतयैव समुत्पादात्, अनुत्पत्तिस्वभावस्य तु व्यर्था उत्पत्तिहेतवः, तथा चान्यथात्वस्य कर्तुमशक्यत्वात्, मैवम्–अभूत्वाभवनलक्षणायामुत्पत्तौ च भावगर्भायां हेतोरकिञ्चित्करत्वस्येष्टापत्तेः, उत्पत्तिस्वभावभावीति मुखीभूते कारणकलापे कार्यकारित्वव्यपदेशहेतौ अकिञ्चित्करत्ववचनस्य च व्याहतत्वात्, उत्पत्ति-ध्वंसस्वभावात्मको भावः सहेतुक एव, उत्पत्ति-ध्वंसयोः सांवृतयोस्त्वहेतुः, कथं ? केवलं भाव-

---

नामपि । पर्यायवादी प्रतिक्षेपहेतुमुपदर्शयति– **यत** इति । **ते च** परस्परविविक्तपूर्वापरक्षणाश्च । यदि निरुक्तलक्षणप्रवाहः स्वभावत एव निरुद्ध्यते तर्हि मुद्गरादीनां क उपयोग इत्यपेक्षायामाह–**केवलमिति**। **तत्सन्निधाने तु** मुद्गरादिसन्निधाने पुनः । द्रव्यवादी पर्यायवादिनं प्रति प्रतिवन्दीं गृह्णन् शङ्कते– **अथेति** । **अयं विकल्पः** 'किञ्च स्वभावतो भावानां नश्वरत्वे' इत्यादिना दर्शितो विकल्प. । **अतिप्रसञ्जकत्वात्** उत्पादस्य सहेतुकत्वं त्वयाऽप्युपेयते, तत्राप्युक्तविकल्पप्रसराद्युत्पादहेतुवैयर्थ्यप्रसङ्गलक्षणातिप्रसङ्गहेतुत्वात् । उत्पादहेतुवैयर्थ्यप्रसङ्गलक्षणातिप्रसङ्गमेव भावयति– **तथाहीति** । '**तत्तत्स्वभावतयैव**' इत्यस्य स्थाने 'तत्स्वभावतयैव' इति पाठो युक्तः, उत्पत्तिस्वभावतयैवेति तदर्थः । यद्यनुत्पत्तिस्वभावो भावस्तदा कारणसहस्रव्यापारेणाप्युत्पत्तिस्वभावो न भवितुमर्हतीत्युत्पत्तिहेतूना वैयर्थ्यमित्याह– **अनुत्पत्तिस्वभावस्य त्विति**। '**तथा चान्यथात्वस्य**' इति स्थाने 'तथात्वान्यथात्वस्य, तत्स्वभावान्यथात्वस्य' इनि वा पाठः समीचीनः, पाठद्वयेऽपि अनुत्पत्तिस्वभावान्यथात्वस्येत्येवार्थः । पर्यायवादी समाधत्ते— **मैवमिति** । '**च भावगर्भायाम्**' इत्यस्य स्थाने 'चाभावगर्भायाम्' इति पाठो युक्तः, य उत्पद्यते स उत्पत्तिस्वभाव एव, तत्रोत्पत्तिरभूत्वाभवनलक्षणाऽभावगर्भा यतोऽभवनमभाव एव तत्र सन्निविष्टः, तस्या च हेतोरकिञ्चित्करत्वस्येष्टापत्तेः, तत्र हेतोरकिञ्चित्करत्वेन तदापादनस्येष्टत्वादित्यर्थ. । तत्र हेतुमाह– **उत्पत्तीति**– अत्र "**उत्पत्तिस्वभावभावीति मुखीभूते**" इत्यस्य स्थाने "उत्पत्तिस्वभावभावित्वात् तस्याः, तदुन्मुखीभूते" इति पाठ. सङ्गतिमङ्गति, तदर्थस्तु– **तस्याः** अभूत्वाभवनलक्षणाया उत्पत्ते', भावस्य य उत्पत्तिस्वभावस्तद्भावित्वात्, एवमपि उत्पत्तिहेतावुत्पत्तिस्वभावभावोन्मुखीभूते कारणकलापे, **कार्यकारित्वव्यपदेशहेतौ** उत्पत्तिस्वभावभावोन्मुखे कारणकलापे सति अय कारणकलापः कार्यकारीति व्यपदेशो भवति निरुक्तकारणकलापाभावे कार्यकारीति व्यपदेशो न भवतीत्यन्वय-व्यतिरेकाभ्या कार्यकारित्वव्यपदेशात्मककार्यकारिणि निरुक्तकारणकलापे, **अकिञ्चित्करत्ववचनस्य** 'स्वभावतो ह्युत्पत्तिस्वभावस्य न किञ्चिदुत्पत्तिहेतुभि.' इति वचनस्य, **व्याहतत्वात्** अर्थकारिण्यर्थकारित्वाभाववचनस्य वन्ध्या पुत्रवतीतिवचनवद् व्याहतत्वादित्यर्थः। पर्यायवादी स्वविचारनिश्च्यूतमर्थमुपदर्शयति– **उत्पत्तीति**– 'भावः' इत्युक्त्या तत्र हेतुव्यापारसाफल्यमावेदितम्, अभावे तु तुच्छरूपे शशशृङ्गादाविव हेतुव्यापारस्य वैफल्यम्, नहि हेतुसहस्रव्यापारेऽप्यभावो भावो भवितुमर्हतीति भवनप्रयोजकस्य हेतोस्तत्र वैफल्यमेवेत्याशय. । ननु ध्वंसस्वभावस्य भावस्य सहेतुकत्वाभ्युपगमे निर्हेतुको ध्वंस इति वचनमसङ्गत भवतः प्रसज्यत इत्यत आह– **उत्पत्तिध्वंसयोरिति** । "**सांवृतयोस्त्वहेतुः, कथम् ?**" इत्यस्य स्थाने "सांवृतयोस्त्वहेतुत्वकथनम्" इति पाठः समीचीनः, भावस्वरूपा योत्पत्तिः भावस्वरूपो यो ध्वसस्तयो' सहेतुकत्वमेव, किन्तु सांवृतयो – कल्पितयोस्तदुत्पत्तिध्वसयोरहेतुत्वकथनमित्यर्थः । ननु यदि सांवृतयोरुत्पत्तिविनाशयोर्द्वयोरप्यहेतुत्वकथनं तर्हि किमित्युत्पत्ते सहेतुकत्वव्यवहारो नाशस्य चाहेतुकत्वव्यवहारः, अहेतुकत्वाविशेषे सांवृतयोर्द्वयोरप्यहेतुकत्वव्यवहार एव समुचित', भावात्मकयोश्च तयो सहेतुकत्वाविशेषे सहेतुकत्वव्यवहार एव वा समुचित इत्यत आह– **केवलमिति**– किन्त्वित्यर्थ. । **भावेति**– अभूत्वाभवनलक्षणा योत्पत्तिस्तस्यामभूत्वेत्यनेनाभावांशो य' सन्निविष्टस्तस्मिंस्तुच्छरूपे कारकव्यापारो न सफल इत्यभावांशमुपादाय तत्र हेतोरकिञ्चित्करत्वेनाहेतुकत्वम्, यश्च तत्र भवनांशो भावरूपस्तत्र सन्निविष्टस्तत्र हेतुव्यापार. सफल एवेति तदंशमुपादायोत्पत्ते' सहेतुकत्वमपि सम्भवतीति तदंशमुख्यतया तदुत्पत्तित्व वेन सहेतुकत्वव्यवहार उत्पत्तौ घटते, नाशस्य तु न लक्षणस्वरूपसन्निविष्टो भावांश. किन्तु निवृत्तिस्वरूपतुच्छत्वमेव ध्वसत्व तेनाभावस्य मुख्यतया तत्र हेतुव्यापार. कथञ्चिदपि न

मुख्यतयोत्पत्तित्वेन सहेतुकत्वव्यवहारः, नाशत्वेन चाभावमुख्यतयाऽहेतुकत्वव्यवहारः, उत्पत्तिव्यवहार-विकल्पसमनन्तरप्रत्यक्षं चाद्यान्तक्षणयोरेव, परेषां प्रागभाव-ध्वंसप्रत्यक्षयोः प्रतियोगिव्याप्यसन्निकर्षाणां हेतुत्वकल्पनापेक्षया अस्माकमुत्पत्ति-ध्वंसनिश्चये विलक्षणहेतुताकल्पन एव लाघवात्, अत एव भ्रान्तिकारणविगमादन्ते प्रत्यक्षनिबन्धनः क्षणक्षयनिश्चय उत्पद्यत इति सौगत इति दिक् ।

इदं च शुद्धपर्यायास्तिकनयमतम्, तदवान्तरभेदास्तु यावदपश्चिमविकल्पनिर्वचनं द्रव्यार्थिकावान्तरभेदवत् न्यायसिद्धा नानाविधा अभ्युपगन्तव्याः । अथैवं पश्चिमविकल्पनिर्वचनतया माध्यमिकदर्शनप्रवर्तक एवम्भूत एव शुद्धपर्यायार्थिकः स्यात्, इष्यते चर्जुसूत्रोऽपि शुद्धपर्यायार्थिक इति कथमियं व्यवस्थेति चेत् ? क्षणिकविषयताव्यापकपर्यायविषयताशाली शुद्धपर्यायार्थिक इति परिभाषाश्रयणादिति

---

साफल्यमञ्चतीति तद्रूपेणाहेतुक एव ध्वस इति तत्राहेतुकत्वव्यवहारो घटत इति विवेकः । ननु क्षणक्षयमते विशरारुक्षणप्रवाहलक्षणसन्ततिरूपे द्रव्येऽभ्युपगम्यमाने प्रतिक्षणमुत्तरपर्यायस्योत्पत्तिः पूर्वपर्यायस्य च विनाश इति किमित्युत्पत्ति-विनाशव्यवहार-विकल्पौ प्रतिक्षणं न भवतः, व्यवहर्तव्यस्य विकल्प्यस्य च प्रतिक्षणमेव भावेन तादृशव्यवहारविकल्पानुगुणाविकल्पात्मकसमनन्तरप्रत्यक्षस्यापि प्रतिक्षण सम्भवात्, सन्ततेराद्यक्षण एवोत्पत्तिव्यवहार-विकल्पौ सन्ततेरन्त्यक्षण एव च नाशविकल्प-व्यवहारावित्यपि कथमित्यत आह—**उत्पत्ती**ति-अत्र '**उत्पत्तिव्यवहार-विकल्पसमनन्तरप्रत्यक्षं चाद्यान्तक्षणयोरेव**' इत्यस्य स्थाने 'उत्पत्ति-विनाशव्यवहार-विकल्पहेतुसमनन्तरप्रत्यक्षं चाद्यान्त्यक्षणयोरेव' इति पाठो युक्तः, तदर्थश्च—उत्पत्ति-विनाशयोर्यौ व्यवहार-विकल्पौ तयोर्हेतुर्यत् समनन्तरप्रत्यक्षं तच्चाद्यान्त्यक्षणयोरेव सन्ततेराद्यान्त्यक्षणयोरेव, सन्ततेराद्यक्षणे उत्पत्तिव्यवहार-विकल्पहेतुसमनन्तरप्रत्यक्षं भवति, ततः सन्ततेराद्यक्षणाव्यवहितोत्तरक्षणे उत्पत्तिव्यवहार-विकल्पौ भवतः, सन्ततेरन्त्यक्षणे विनाशव्यवहार-विकल्पहेतुसमनन्तरप्रत्यक्षं भवति, ततः सन्ततेरन्त्यक्षणाव्यवहितोत्तरक्षणे नाशव्यवहार-विकल्पौ भवत इति । ननूत्पत्तिनिश्चयं प्रति सन्तत्याद्यक्षणभाविसमनन्तरप्रत्यक्षस्य कारणत्वम्, विनाशनिश्चय प्रति सन्तत्यन्त्यक्षणोपजातसमनन्तरप्रत्यक्षस्य च कारणत्वमित्येवं कार्यकारणभावकल्पने पर्यायवादिनो गौरवं स्यादित्यत आह—**परेषामिति**— स्थिरवादिना नैयायिकादीनामित्यर्थ. । '**प्रतियोगिव्याप्यसन्निकर्षाणाम्**' इत्यस्य स्थाने 'प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसन्निकर्षादीनाम्' इति पाठः समीचीन., अत्र प्रतियोग्युपलम्भकयत्किञ्चित्सन्निकर्षादिसत्त्वे प्रागभावादिप्रत्यक्षं न भवतीत्यतो **याव**दिति, प्रतियोगिनो घटादे· प्रत्यक्षे विषयविधया प्रतियोग्यपि कारणमिति यावत्प्रतियोग्युपलम्भकसन्निकर्षादिमध्ये प्रतियोगिनोऽपि प्रवेश. स्यात्, न च प्रतियोगी स्वप्रागभावध्वंसप्रत्यक्षे कारणमिति **प्रतियोगीतरत्वं** यावत्प्रतियोग्युपलम्भके विशेषणम्, एवमपि प्रतियोगिप्रत्यक्षे प्रतियोगिना सहेन्द्रियसन्निकर्षा-ऽऽलोकसंयोग-महत्त्वोद्भूतरूपादिसम्बन्धानामपि कारणत्वेन प्रतियोगीतरयावत्प्रतियोग्युपलम्भकमध्ये तेषामपि प्रवेश., न च ते प्रागभाव-ध्वंसप्रत्यक्षे कारणमत. **प्रतियोगिव्याप्येतरत्वं** यावत्प्रतियोग्युपलम्भके विशेषणम्, प्रतियोगिना सहेन्द्रियसन्निकर्षादयश्च प्रतियोगिव्याप्या एवेति तेषा वारणमिति बोध्यम् । **अस्माकम्** क्षणक्षयवादिनाम् । **उत्पत्तिध्वंसनिश्चये** उत्पत्तिनिश्चये ध्वसनिश्चये च । **विलक्षणे**ति— सन्तत्याद्यक्षणोत्पन्नसमनन्तरप्रत्यक्षस्योत्पत्तिनिश्चय प्रति हेतुताकल्पने सन्तत्यन्त्यक्षणोत्पन्नसमनन्तरप्रत्यक्षस्य ध्वंसनिश्चय प्रति हेतुताकल्पने च लाघवादित्यर्थ । **अत एव** सन्तत्यन्त्यक्षणोत्पन्नसमनन्तरप्रत्यक्षस्य ध्वंसनिश्चय प्रति हेतुत्वादेव । **भ्रान्तिकारणविगमात्** अभेदभ्रमकारणस्य स्वानन्तरसुसदृशोत्पादस्य विगमात् । **अन्ते** सन्ततेरन्त्यक्षणे । **प्रत्यक्षनिबन्धनः** क्षणिकस्वलक्षणप्रत्यक्षात्मकसमनन्तरप्रत्यक्षनिबन्धन. । **इति सौगतः** एवं बौद्धः, अभ्युपगच्छतीति शेषः ।

**इदं च** अनन्तरोपवर्णित च, एतावता शुद्धपर्यायास्तिकनयसामान्यमतमुपदर्शितम्, अन्तिमविकल्पनिर्वचनपर्यन्त तु नानाप्रकारा युक्तिसिद्धाः शुद्धपर्यायास्तिकनयावान्तरभेदा. स्वीकर्तव्या यथा द्रव्यार्थिकनयान्तरभेदा अपश्चिमविकल्पनिर्वचनं यावत् स्वीकृता भवन्तीत्याह— **तदवान्तरभेदास्त्व**ति— शुद्धपर्यायास्तिकनयावान्तरभेदा. पुनः, अस्य 'न्यायसिद्धा नानाविधा अभ्युपगन्तव्याः' इत्यनेनान्वयः । तटस्थ. शङ्कते—**अथैवमिति** । **एवं** पश्चिमविकल्पमन्त्यविशेष विहायान्यविशेषेष्वपि द्रव्यार्थिकनयप्रवृत्त्युपगमे, तथा चान्त्यविशेषातिरिक्तविशेष स्वविशेषापेक्षया सामान्यमिति द्रव्यनयविषयः स्वसामान्यापेक्षया

गृहाण; नन्वेवं शुद्धद्रव्यार्थिकपर्यायार्थिकयोरितरेतरविषयप्रतिक्षेपकत्वेन समुदितद्रव्यलक्षणाग्राहित्वेन मिथ्यादृष्टित्वमवान्तरतद्भेदानां च वैपरीत्येन सम्यग्दृष्टित्वं स्यादिति यथाश्रुतशुद्धाशुद्धविवेकानुपपत्तिरिति चेत् ? इदमित्थमेव जात्या शुद्धाशुद्धत्वैकान्तस्य वादिनैव प्रतिक्षिप्तत्वात्, यो नयोपयोगः स्वार्थे इतरनयार्थसंयोजनायां व्यापिपर्ति तस्य तावत्याऽपेक्षया सम्यग्दृष्टित्वस्य, यथाश्रुतार्थप्रवाहप्रवृत्तस्य तथोपयोगवैकल्येन मिथ्यादृष्टित्वस्य च सम्प्रदायसिद्धत्वात्, तदुक्तम्—

" दव्वं पज्जवविउअं दव्वविजुत्ता य पज्जवा णत्थि। उप्पाय-ट्ठिइ-भंगा हंदि दविअलक्खणं एयं ॥
एए पुण सगहओ पाडिक्कमलक्खणं दुविण्हं पि। तम्हा मिच्छद्दिट्ठी पत्तेयं दो वि मूलनया ॥
ण य तइओ अत्थि णओ न य सम्मत्तं न तेसु पडिपन्नं। जेण दुवे एगन्ते विभज्जमाणा अणेगन्ते ॥
जह एए तह अन्ने पत्तेयं दुन्नया नया सव्वे। हंदि हु मूलनयाणं पन्नवणे वावडा ते वि ॥
सव्वणयसमूहम्मि वि णत्थि णओ उभयवायपण्णवओ। मूलनयाण उ आणं पत्तेयविसेसिअं बिंति ॥"
[ सम्मतिप्रथमकाण्डे गाथाः—१२, १३, १४, १५, १६ ] त्ति ॥

---

विशेष इति पर्यायनयविषयः, तथा च तद्विषयको नय. पर्यायार्थनयावान्तरभेदो द्रव्यनयविषयविषयकत्वादशुद्धपर्यायास्तिक एव भवेदिति पश्चिमस्यान्त्यस्य विकल्पस्य विशेषस्य निर्वचनतया निरूपणप्रवणत्वेन माध्यमिकदर्शनप्रवर्तक. शून्यवादिमतप्रवर्तक एवम्भूतनय एव शुद्धपर्यायार्थिको भवेत्, न तु ऋजुसूत्रादय इत्यर्थ.। भवत्येवमेवेत्यत आह– **इष्यते चेति**– अभ्युपगम्यते चेत्यर्थ.। **इयं व्यवस्था** ऋजुसूत्रादीनामशेषाणामपि शुद्धपर्यायास्तिकनयावान्तरभेदत्वेन प्ररूपणारूपा व्यवस्था। सा तु तदैवोपपद्येत यदि ऋजुसूत्रादीनामपि शुद्धपर्यायास्तिकत्वं भवेत्, शुद्धस्यैव हि शुद्धावान्तरभेदत्व न त्वशुद्धस्येत्याशय.। समाधत्ते– **क्षणिकेति**–शुद्धपर्यायार्थिकपदस्य सामान्यानात्मकविशेषावगाहिनये निरूढा वृत्तिर्नात्राश्रिता येन ऋजुसूत्रादौ तत्प्रवृत्तिर्नैव भवेत्, किन्तु क्षणिकनिष्ठविषयताव्यापकपर्यायनिष्ठविषयताशालिनि नये आधुनिकसङ्केतित एव शुद्धपर्यायार्थिकशब्दः, तथा च ऋजुसूत्रादय· सर्वेऽपि नयाः क्षणिकमेव पर्यायमभ्युपयन्तीति ते क्षणिकनिष्ठविषयताव्यापकपर्यायनिष्ठविषयताशालिन इति शुद्धपर्यायार्थिकपदव्यपदेश्या भवन्तीति परिभाषाश्रयणाच्छुद्धपर्यायार्थिकतयाऽवान्तरभेदा भवन्ति ऋजुसूत्रादयस्तेन निरुक्तव्यवस्था सूपपादैवेति, नन्वेव परिभाषाश्रयणादृजुसूत्रादय. शुद्धपर्यायार्थिका अपि वस्तुरित्याऽशुद्धपर्यायार्थिका एव, किन्त्वेवम्भूतनय एव शुद्धपर्यायार्थिक., एवं महासामान्यसत्तामात्रग्राही परसङ्ग्रह एव शुद्धद्रव्यार्थिक, अपरसङ्ग्रहनैगमादयस्त्वशुद्धद्रव्यार्थिका एव, एव च शुद्धद्रव्यार्थिक., पर्याय नाभ्युपगच्छतीति तस्य ध्रौव्यमात्रग्राहित्व नोत्पादव्ययग्राहित्वम्, शुद्धपर्यायार्थिकस्य त्वेवम्भूतस्य न द्रव्याभ्युपगम. किन्तु स पर्यायमात्रग्राहित्वादुत्पादव्ययोभयग्राह्येव न ध्रौव्यग्राहीति " गुणपर्यायवद् द्रव्यम् " [तत्त्वार्थसूत्रम्– ५–३७] इति यत् समुदितद्रव्यलक्षणं तद्ग्राहित्व द्रव्यप्रतिक्षेपकस्य शुद्धपर्यायार्थिकस्य नास्ति पर्यायप्रतिक्षेपिण. शुद्धद्रव्यार्थिकस्य च नास्तीति तयोर्मिथ्यादृष्टित्व स्यात्, तदवान्तरभेदास्तु द्रव्यमभ्युपयन्ति पर्यायमपीति समुदितद्रव्यलक्षणग्राहिण इति तेषा सम्यग्दृष्टित्व प्रसज्येतेत्यतो यथाश्रुतशुद्धा-ऽशुद्धविवेकोऽनुपपन्न इत्याशङ्कते– **नन्वेवमिति**। **अवान्तरतद्भेदानां** शुद्धद्रव्यार्थिशुद्धपर्यायार्थिकावान्तरभेदानाम्। **वैपरीत्येन** इतरेतरविषयाप्रतिक्षेपकत्वेन समुदितद्रव्यलक्षणग्राहित्वेन। **यथाश्रुतेति**– स सम्यग्दृष्टि स शुद्धनय, यो मिथ्यादृष्टि सोऽशुद्धनय इत्येव यथाश्रुतो य. शुद्धविवेकस्तस्यानुपपत्ति., प्रत्युत यो मिथ्यादृष्टिः स शुद्ध, यश्च सम्यग्दृष्टि सोऽशुद्ध इत्येवायातम्। समाधत्ते– **इदमित्थमेवेति**– भवता शुद्धाशुद्धविवेकानुपपत्तिप्रदर्शन यत् कृत तत् तथैवेत्यर्थ.। न चैव स्वकपोलकल्पितत्व श्रीसिद्धसेनदिवाकरसूरिसम्मतोऽयमर्थ इत्यावेदनायाह–**जात्येति**– विषयविनिर्मोकेण तत्तन्नयजात्यपेक्षयैव। **तस्य** नयोपयोगस्य। **तावत्याऽपेक्षया** स्वार्थे इतरनयार्थसयोजनापेक्षया। **यथाश्रुतेति**– केवलस्वस्वार्थमात्रावगाहनप्रवृत्तस्येत्यर्थ । **तथोपयोगवैकल्येन** स्वार्थे इतरनयार्थसयोजनोपयोगवैकल्येन।

उक्तार्थे सम्मतिगाथापञ्चक संवादकतयोपदर्शयति– **तदुक्तमिति**। **दव्वं०** इति– " द्रव्यं पर्यववियुक्त द्रव्यवियुक्ताश्च पर्यवा न सन्ति। उत्पाद-स्थितिभङ्गा हन्दि द्रव्यलक्षणमेतत् ॥ १ ॥ एते पुन सङ्ग्रहत प्रत्येकमलक्षण द्वयोरपि। तस्मान्मिथ्यादृष्टी द्वावपि मूलनयौ ॥ २ ॥ न च तृतीयोऽस्ति नयो न च सम्यक्त्व न तयो. प्रतिपन्नम्। येन द्वावेकान्तौ

तस्मादितरनयार्थविषयसंयोजनोपयोगमुख्य-गौणतया स्व-परार्थग्राहिणामवान्तरभेदानां सम्यग्दृष्टित्वं युज्यते, न तु स्वतन्त्रकल्पितोभयविषयग्राहिणां नैगमभेदामिति प्रतिपत्तव्यम्, अत एव

द्रव्यार्थिकनय–" परिणामो ह्यर्थान्तरगमनं, न च सर्वथा व्यवस्थानम् ।
न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः ॥ " [ ] इति

पर्यायास्तिकनये च–" सत्पर्यायेण विनाशः प्रादुर्भावोऽसता च पर्यायतः ।
द्रव्याणां परिणामः प्रोक्तः खलु पर्यवा न यस्य ॥ " [ ] इति

यत् परिणामलक्षणं परिणामपदव्याख्यायामुक्तं तदुपपद्यते, पूर्वत्र विशिष्टरूपेणोत्पाद-भङ्गयोः पर्यायलक्षणस्योत्तरत्र चाधारतया ध्रौव्यस्य द्रव्यलक्षणस्य संयोजनयोभयोरपि सम्यग्दृष्टित्वसिद्धेः, कथं तर्हि–

---

विभज्यमानावनेकान्तौ ॥ ३ ॥ यथैतौ तथाऽन्ये प्रत्येकं दुर्नया नयाः सर्वे । हृदि हु मूलनययो प्रज्ञापने व्यापृतास्तेऽपि ॥ ४ ॥ सर्वनयसमूहेऽपि नास्ति नय उभयवादप्रज्ञापक । मूलनययोस्त्वाज्ञा प्रत्येकविशेषिता' ब्रवीति ॥ ५ ॥" इति संस्कृतम् ॥ केषाञ्चिन्नयावान्तरभेदाना सम्यग्दृष्टित्व केषाञ्चिच्च मिथ्यादृष्टित्वं निगमनयन्नाह– **तस्मादिति**– इतरनयस्य योऽर्थस्तस्य विपये–स्वविषये य सयोजनोपयोग – संयोजनव्यापारस्तेन या मुख्यगौणता स्वविषयस्य मुख्यतयाऽवगाहन-मितरनयविषयस्य गौणतयाऽवगाहन तया, **स्वपरार्थग्राहिणां** स्वविषयस्य परनयविषयस्य च ग्राहिणाम्, मूलनया-वान्तरभेदाना सम्यग्दृष्टित्व **युज्यते** युक्त्या घटते, ये च नैगमभेदा न्यायादिनयमूलीभूताः स्वतन्त्रं– परस्परमत्यन्तभिन्न-मत एव कल्पितं न तु वस्तुस्थित्या वस्त्वंशतया व्यवस्थित यदुभयं– सामान्यविशेषोभय तद्रूपविषयस्य ग्राहिणस्तेषां नैगमविशेषाणा सम्यग्दृष्टित्व न तु युज्यते, मिथ्यादृष्टय एव ते इति ज्ञातव्यमित्यर्थः । **अत एवेति**–'अत एव इति यत् परिणामलक्षण परिणामपदव्याख्यायामुक्त तदुपपद्यते' इति सम्बन्धः, **अत एव** स्वविषये इतरनयविषयसंयोजनतो नयाना सम्यग्दृष्टित्वस्य युक्तत्वादेव । '**द्रव्यार्थिकनय**' इत्यस्य स्थाने 'द्रव्यार्थिकनये' इति पाठो युक्तः, एतदुक्तिश्च 'परिणामो ह्यर्थान्तरगमनम्०' इति पद्यं द्रव्यार्थिकनयाभिप्रेतपरिणामलक्षणप्रतिपादकमित्यावेदनाय । **तद्विदां** परिणाम-स्वरूपज्ञाना द्रव्यार्थिकनयरहस्यज्ञाना वा, **हि** यत, **अर्थान्तरगमनं** मृद्द्रव्यस्यैव घटादिलक्षणार्थान्तररूपेण गमनं मृद्द्रव्यमेव घटादिरूप भवतीति यावत्, तदेव परिणाम इष्ट., **सर्वथा व्यवस्थानं** मृद्द्रव्यरूपतयैव सर्वदाऽवस्थानम्, **सर्वथा विनाशः** घटपर्यायभवनसमये मृद्द्रव्यस्य मृद्द्रव्यरूपतयाऽपि विनाश एतद् द्वितयमपि परिणामो न चेष्ट इत्यर्थः । **इति** एवंस्वरूपम्, अस्य 'यत् परिणामलक्षणम्' इत्यनेनान्वय., '**पर्यायास्तिकनये च**' इत्यस्य 'इति यत् परिणामलक्षणम्' इत्यनेनान्वय. । पर्यायास्तिकनयाभिमतपरिणामलक्षणप्रतिपादकं "**सत्पर्यायेण०**" इत्यादि पद्यम् । '**पर्यायतः**' इत्यस्य स्थाने 'पर्यायेण' इति पाठः, '**खलु, पर्यवा नयस्य**' इत्यस्य स्थाने 'खलु पर्यवनयस्य' इति पाठश्च युक्तः । **पर्यवनयस्य** पर्यायार्थिकनयस्य, 'मते' इति शेषः । **खलु** निश्चयेन । **द्रव्याणां सत्यपर्यायेण विनाशः** मृदादिद्रव्याणा पूर्व यः सत्पर्यायो मृत्पिण्डादिलक्षणस्तद्रूपेण विनाशः, **असता च पर्यायेण** पूर्वमविद्यमानो यो घटादिलक्षणपर्यायस्तद्रूपेण, **प्रादुर्भाव.** आविर्भावः पूर्वपर्यायो नश्यति उत्तरपर्यायश्च प्रादुर्भवति, योऽय पूर्वपर्यायविनाश उत्तरपर्यायप्रादुर्भावश्च स **परिणामः प्रोक्तः** प्रकर्षेण कथित. । कुत्रेदं लक्षणं नयभेदेन परिणामस्योपवर्णितमित्यपेक्षाया-माह– **परिणामपदव्याख्यायामुक्तमिति** । **तत्** नयभेदेनोपदर्शितं परिणामलक्षणम् । 'अत एवोपपद्यते' इति यदुक्त तदेव भावयति– **पूर्वत्रेति**– द्रव्यार्थिकनयाभिप्रेते 'परिणामो ह्यर्थान्तरगमनम्' इति परिणामलक्षणे इत्यर्थः, विशिष्टरूपेणो-त्पाद-भङ्गयोः पर्यायलक्षणस्य संयोजनयेत्यन्वय., अर्थान्तरगमनं तदैव घटते मृद्द्रव्यस्यैव सतः पृथुबुध्नोदराद्याकारेणोत्पादो मृत्पिण्डाद्याकारेण भङ्गश्च भवेत्, उत्पाद-भङ्गौ च पर्यायलक्षणमिति तस्य द्रव्यार्थिकनयविषये या सयोजना तया द्रव्यार्थिकनयस्य सम्यग्दृष्टित्वसिद्धे., **उत्तरत्र** पर्यायार्थिकनयाभिप्रेते 'सत्पर्यायेण विनाशः' इत्यादिपरिणामलक्षणे । **च** पुनः । **आधारतया ध्रौव्यस्य द्रव्यलक्षणस्य** 'द्रव्याणाम्' इत्युक्त्या पूर्वपर्यायविनाशोत्तरपर्यायोत्पादयोराधारतया ध्रौव्यात्मक द्रव्य प्रतीयते, तथा च ध्रौव्यस्य द्रव्यलक्षणस्याधारतया या पर्यायनयविषये सयोजना तया पर्यायार्थिकनयस्य सम्यग्दृष्टित्वसिद्धेरित्येव-**मुभयोर्**द्रव्यार्थिकपर्यायार्थिकनययोः सम्यग्दृष्टित्वसिद्धेरित्यर्थ. । ननु यदि द्रव्य-पर्यायनयावान्तरभेदाना मुख्य-गौणतया स्व-परार्थग्राहित्वेन सम्यग्दृष्टित्वं तदा द्रव्यार्थिक-पर्यायार्थिकनययोर्द्वयोरपि समानविषयत्वमायातमिति तयोरसमानविषयत्व-

"जीवो गुणपडिवन्नो नयस्स दव्वट्ठिअस्स सामइयं। सो चेव पज्जवट्ठिअणयस्स जीवस्स एस गुणो ॥"
[ विशेषावश्यकनिर्युक्तिगाथा–२६४३ ] ॥

इत्यत्रैकैकनयस्येतरासमानविषयत्वध्रौव्यमुद्भाव्य भिन्नाऽभिन्नद्रव्य-पर्यायोभयग्राहके(क)नयद्वयवादिव्याख्यातृमतं भाष्यकृता निरस्तमिति चेत्? तत्र 'किं सामायिकं गुणो द्रव्यं वा' इति शुद्धगुणत्वद्रव्यत्वान्यतरप्रकारकजिज्ञासायां शुद्धद्रव्यास्तिक-पर्यायास्तिकनययोरेवाश्रयणस्य युक्तत्वात्, अवान्तरभेदाश्रयणे तादृशजिज्ञासाया अनिवृत्तिप्रसङ्गादिति बोध्यम्। अत एवैकैकस्योभयविषयकत्वाभ्युपगमे संयोगस्योक्तजिज्ञासाऽनिवर्तकाधिकविषयानुपकत्वेनानतिप्रयोजनत्वमेव दोषो भाष्यकृतोद्भावितः, अन्यथा तु प्रत्येकमेकैकविषयत्वेऽप्युभयोर्मिलनस्य स्यात्कारलाञ्छनेन सम्यक्त्वापादनं यत् प्रयोजनं तस्य प्रत्येक-

नियममाश्रित्य भाष्यकृता "जीवो गुणपडिवन्नो०" इत्यादिगाथाव्याख्याकर्तुः पर्यायार्थिको भिन्नद्रव्य पर्यायोभयग्राहको द्रव्यार्थिकोऽभिन्नद्रव्य-पर्यायोभयग्राहक इत्येव भिन्नाभिन्नद्रव्य-पर्यायोभयग्राहकद्रव्यार्थिक-पर्यायार्थिकनयद्वयवादिनो मतं कथ प्रतिक्षिप्तमिति शङ्कते– **कथमिति**– अस्य 'निरस्तम्' इत्यनेनान्वयः। जीवो० इति– "जीवो गुणप्रतिपन्नो नयस्य द्रव्यार्थिकस्य सामायिकम्। स एव च पर्यवार्थिकनयस्य जीवस्यैष गुणः" ॥ इति संस्कृतम्। **अत्र** एतद्गाथाव्याख्याने। **एकैकेति**– द्रव्यार्थिको नय. पर्यायार्थिकनयासमानविषय एव, पर्यायार्थिको नयो द्रव्यार्थिकनयासमानविषय एवेत्येवमुद्भाव्येत्यर्थः। **भिन्नेति**– प्रत्येकं भिन्नद्रव्यपर्यायोभयग्राहकमभिन्नद्रव्यपर्यायोभयग्राहक यन्नयद्वयं तद्वादी यो व्याख्याता तस्य मतमित्यर्थः। "जीवो गुणपडिवन्नो०" इति गाथा यादृशजिज्ञासानिवृत्त्यर्थमुपदिष्टा सा जिज्ञासा शुद्धद्रव्यास्तिकनयाश्रयणेन शुद्धपर्यायास्तिकनयाश्रयणेन चोक्तगाथाव्याख्यानत एव निवर्तयितु शक्या नान्यथेत्यतो द्रव्य-पर्यायोभयविषयकद्रव्यार्थिक-पर्यायार्थिकनयावान्तरनयाश्रयणेन व्याख्यान नास्या युक्तमित्याशयेनैव भाष्यकृता तन्मत व्युदस्तमिति समाधत्ते– **तत्रेति**– "जीवो गुणपडिवन्नो०" इति गाथाव्याख्यायामित्यर्थः। **तादृशजिज्ञासायाः** शुद्धगुणत्व-द्रव्यत्वान्यतरप्रकारकजिज्ञासायाः, स्वविषयसिद्ध्यैव जिज्ञासानिवृत्तिः, प्रकृतजिज्ञासाविषयश्च शुद्धगुणत्व-द्रव्यत्वान्यतरप्रकारकसामायिकविशेष्यकज्ञानम्, तच्च 'गुण. सामायिकं द्रव्य सामायिकम्' इत्येवंरूपमेव, न तु 'जीवभिन्नगुणः सामायिक जीवाभिन्नगुणः सामायिकम्' इत्येवरूपमिति तादृशज्ञानजनकावान्तरनयाश्रितव्याख्यानस्योक्तजिज्ञासानिवर्तकतद्विषयसिद्ध्यनङ्गत्वेनाऽयुक्तत्वमित्याशयवतो भाष्यकृतो भिन्नाभिन्नद्रव्यपर्यायोभयग्राहकनयद्वयवादिव्याख्यातृमतखण्डनं नायुक्तमित्यर्थः। **अत एव** अवान्तरनयभेदाश्रयणेन व्याख्यानस्योक्तजिज्ञासाविषयसिद्ध्यनाधायकत्वेनोक्तजिज्ञासानिवर्तकत्वाभावादेव। **एकैकस्य** प्रत्येक द्रव्यार्थिकस्य पर्यायार्थिकस्य च। **उभयविषयकत्वाभ्युपगमे** द्रव्य-पर्यायोभयविषयकत्वाभ्युपगमे। **संयोगस्य** द्रव्यनयविषये पर्यायनयविषयसंयोजनस्य पर्यायनयविषये द्रव्यनयविषयसयोजनस्य च। **'विषयानुपकत्वेन'** इत्यस्य स्थाने 'विषयानुमापकत्वेन' इति पाठ· 'विषयाधायकत्वेन' इति वा पाठो भवितुमर्हति, उक्तजिज्ञासाया अनिवर्तको योऽधिकविषयस्तदनुमापकत्वेन तदाधायकत्वेन वेत्यर्थ.। **अनतिप्रयोजनत्वमेव** विशिष्टप्रयोजनत्वाभाव एव, यदि संयोजनेऽकृते उक्तजिज्ञासा न निवर्तेत, कृते च सयोजने सा निवर्तेत, तदा संयोगस्य विशिष्टप्रयोजनत्वं स्यात्, न चैवम्, कृते सयोजने योऽधिकविषयः स जिज्ञासाया अनिवर्तक एवेत्यर्थ', 'अनतिप्रयोजनत्वमेव' इत्येवकारेण सामान्यतो निष्प्रयोजनत्वस्य व्यवच्छेद., सामान्यतो निष्प्रयोजनत्वस्य संयोगेऽभावादेव न तद्दोषतया भाष्यकृतोद्भावितमित्यर्थः। अथवा **"विषयानुपधायकत्वेन"** इत्येव पाठः, **'जिज्ञासानिवर्तक'** इत्यत्र 'जिज्ञासाऽनिवर्तक' इत्यकारप्रश्लेषो न कार्य., तथा चैकस्योभयविषयकत्वाभ्युपगमे संयोजनेऽप्युभयविषयकत्वमेव भवति, तच्च स्वभावत एव प्राप्तमिति संयोगस्योभयनयमेलनस्य जिज्ञासानिवर्तको योऽधिकविषय.– प्रत्येकनयविषयातिरिक्तविषयस्तस्यानुपधायकत्वेन– असमर्पकत्वेन, अनतिप्रयोजनत्वमेव– विशिष्टप्रयोजनाभाववत्त्वमेव दोषो भाष्यकृतोद्भावित इत्यर्थ'। **अन्यथा** उक्तरीत्या निरुक्तजिज्ञासाऽनिवर्तकत्वेनानतिप्रयोजनत्वस्य दोषत्वं संयोगेऽनभ्युपेत्य सामान्यतो निष्प्रयोजनत्वस्य दोषतयोपगमे। सामान्यतो निष्प्रयोजनत्वस्य तत्राभावादेव तस्य दोषत्वं न सम्भवतीत्यवगतये एकैकस्योभयविषयकत्वाभ्युपगमेऽपि संयोगस्य सप्रयोजनत्वमुपपादयति– **प्रत्येकमिति**– केवलस्य द्रव्यार्थिकस्य द्रव्यमात्रविषयकत्व केवलस्य पर्यायार्थिकस्य पर्यायमात्रविषयक-

मुभयविषयकत्वाभ्युपगमेऽपि निष्प्रत्यूहत्वात्, तव मते 'स्याद्गुणविशिष्टजीव एव सामायिकं स्याज्जीव-गुण एव सामायिकम्' इति मिलिताभिलापवत् मम मते 'स्याज्जीवाभिन्नगुण एव सामायिकं स्याज्जीवभिन्नगुण एव सामायिकम्' इति मिलिताभिलापस्यापि सम्भव इति न कश्चिद् दोष इति परेण वक्तुं शक्यत्वात् । न चैवं भङ्गद्वयेऽपि द्रव्यप्राधान्यालाभः, 'स्याज्जीवाभिन्नगुण एव' इत्यादेः 'स्याद्गुणाभिन्नजीव एव' इत्यादेरपि समानसंवित्संवेद्यतया लाभाभ्युपगमात् । किञ्च, मम मते 'जीवो गुण-प्रतिपन्नः०' इति निर्युक्तिप्रतीके 'गुणाभिन्नः' इत्यर्थे साम्मुख्यम्, तव मते तु गुणानामौत्प्रेक्षिकत्वेन शुक्तौ रजतस्येव जीवे गुणानां वैज्ञानिकसम्बन्धस्यैवाभ्युपगमेन 'गुणनिरूपितवैज्ञानिकसम्बन्धवान्'

---

त्वमित्येव प्रत्येकमेकैकविषयत्वेऽपि । **उभयोर्मिलनस्य** द्रव्यार्थिकपर्यायार्थिकयोः संयोगस्य । **स्यात्कारलाञ्छनेन** स्यात्पदसंयोजनेन 'स्याद्गुणविशिष्टजीवः सामायिकम्' इत्येवंरूपेण । **सम्यक्त्वापादनं** सम्यक्त्वसंपादनं, '**यत् प्रयोजनम्**, इत्यत्र 'उभयोर्मिलनस्य' इत्यस्य सम्बन्ध, **तस्य** स्यात्कारलाञ्छनेन सम्यक्त्वापादनलक्षणप्रयोजनस्य, **प्रत्येकमुभयविषयकत्वाभ्युपगमेऽपि** द्रव्यार्थिकस्य द्रव्यपर्यायोभयविषयकत्व पर्यायार्थिकस्य द्रव्यपर्यायोभयविषय-कत्वमित्यभ्युपगमपक्षेऽपि, उभयोर्मिलनस्य **निष्प्रत्यूहत्वात्** निर्विघ्न सम्भवात्; प्रत्येकमेकैकविषयत्वे मिलनस्य यत् प्रयोजनं स्यात्कारलाञ्छनेन सम्यक्त्वापादन तदेव प्रयोजन मिलनस्य प्रत्येकमुभयविषयकत्वाभ्युपगमेऽपीर्थः । मिलिताभि-लापो यथा प्रत्येकमेकैकविषयत्वाभ्युपगमपक्षे तथा प्रत्येकमुभयविषयकत्वाभ्युपगमपक्षेऽपि स इत्याह– **तवेति**– प्रत्येकमेकैक-विषयकत्वाभ्युपगन्तुरित्यर्थः । मिलिताभिलापस्वरूपमुल्लिखति– **स्याद्गुणविशिष्टेति** । **मम मते** प्रत्येकमुभयविषयकत्व-मित्यभ्युपगन्तुर्मते । तत्र मिलिताभिलापस्वरूपमुल्लिखति– **स्याज्जीवाभिन्नेति** । **परेण** उभयोः प्रत्येकमुभयविषयकत्वमि-त्यभ्युपगन्त्रा । ननु मम मते 'स्याद्गुणविशिष्टजीव सामायिकम्' इति भङ्गे विशेष्यतया जीवस्य प्राधान्यात् प्राधान्येन द्रव्यग्राहिणो द्रव्यार्थिकस्य मतेऽयं भङ्गः, 'स्याज्जीवगुण एव सामायिकम्' इति भङ्गे विशेष्यतया गुणलक्षणपर्यायस्य प्राधान्यात् प्राधान्येन पर्यायमभ्युपगच्छतः पर्यायार्थिकनयस्य मतेऽयं भङ्ग इति विवेक. सम्भवति, तव मते तु भङ्गद्वयेऽपि विशेष्यतया गुणस्यैव प्राधान्याद् द्रव्यस्य कुत्रापि प्राधान्यालाभेन 'स्याज्जीवभिन्नगुण एव सामायिकम्' इत्यस्यैव 'स्याज्जीवाभिन्नगुण एव सामायिकम्' इत्यस्यापि पर्यायार्थिकनयमान्यत्वमेव स्यान्न द्रव्यार्थिकनयमान्यत्वमित्याशङ्क्य प्रति-क्षिपति– **न चेति** । गुणे जीवाभिन्नत्वस्य यत्र ज्ञाने भानं तत्र जीवे गुणाभिन्नत्वमपि भासत एव, एवं गुणे जीवभिन्नत्वस्य यत्र ज्ञाने भानं तत्र जीवे गुणभिन्नत्वमपि भासत एव, नहि गुणे जीवाभिन्नत्वेन ज्ञाते जीवो गुणाभिन्नत्वेन न ज्ञात इति सभवति, एवं नहि गुणे जीवभिन्नत्वेन ज्ञाते जीवो गुणभिन्नत्वेन न ज्ञात इत्यपि संभवति, तथा च गुणगतजीवा-भिन्नत्व-जीवगतगुणाभिन्नत्वयोर्गुणगतजीवभिन्नत्व-जीवगतगुणभिन्नत्वयोश्च समानसंवित्संवेद्यत्वेन गुणे जीवाभिन्नत्वप्रतिपादक-भङ्गेन जीवे गुणाभिन्नत्वस्यापि प्रतिपादनात् तस्य द्रव्यार्थिकनयमान्यत्वं स्यादेवेति निषेधहेतुमुपदर्शयति– **स्याज्जीवा-भिन्नेति**– प्रथमादिपदेन 'स्याज्जीवभिन्नगुण एव' इत्यस्य द्वितीयादिपदेन 'स्याद्गुणभिन्नजीव एव' इत्यस्योपग्रहः, प्रथमादिपदं पञ्चम्यन्तं द्वितीयादिपदं षष्ठ्यन्तं बोध्यम्, यद्यपि उक्तदिशा प्रथमभङ्गेऽपि द्रव्यस्य पर्यायस्य च प्राधान्य लब्धं द्वितीयभङ्गेऽपि, एवं च द्रव्यप्राधान्याद् द्रव्यार्थिकमान्यत्व पर्यायप्राधान्यात् पर्यायार्थिकमान्यत्व भङ्गद्वयेऽप्यविशेषेण प्राप्तम्, तथापि पर्यायार्थिको द्रव्य पर्यायञ्च भिन्नतयैवाभ्युपैति. द्रव्यार्थिकश्च तयोरभिन्नत्वमेव स्वीकरोति, तथा च प्रथमभङ्गे द्रव्य पर्याययोरुभयोः प्राधान्येऽप्यभेदस्यैवावगाहनाद् द्रव्यार्थिकमान्यत्वम्, द्वितीयभङ्गेऽपि द्वयोः प्राधान्येऽपि भेदस्यैवाव-गाहनात् पर्यायार्थिकमान्यत्वमिति । नयद्वयस्य द्रव्य-पर्यायोभयविषयकत्वमित्युपगन्ता स्वपक्षे 'गुणप्रतिपन्न०' इति निर्युक्तिदलस्य 'गुणाभिन्न' इत्यर्थे साम्मुख्यमक्लिष्टत्वलक्षणम्, परपक्षे तस्य 'गुणनिरूपितवैज्ञानिकसम्बन्धवान्' इत्यर्थेऽ-साम्मुख्यं क्लिष्टकल्पनयोपनीतत्वलक्षणमिति विशेषोपदर्शनेन स्वपक्षस्य ज्यायस्त्वमावेदयति– **किञ्चेति** । **मम मते** नयद्वयस्य द्रव्य-पर्यायोभयग्राहकत्वमित्यभ्युपगन्तुर्मते । **तव मते तु** नयद्वयस्य प्रत्येकमेकैकविषयकत्वमित्यभ्युपगन्तुर्मते पुनः । **औत्प्रेक्षिकत्वेन** कल्पनामात्रगोचरत्वेन । **वैज्ञानिकसम्बन्धस्यैव** स्वप्रकारकज्ञानविषयत्वलक्षणसम्बन्धस्यैव । ननु भवन्मते द्रव्यार्थिको द्रव्य-गुणयोरभेदमभ्युपगच्छतीति यदेव द्रव्य तदेव गुण इति द्रव्यस्य वाचको यथा द्रव्यशब्दस्तथा

इत्यर्थो वाच्य इत्यसाम्मुख्यम् । न च मम मते द्रव्यार्थिकपक्षे द्रव्य-गुणपदयोरर्थाभेदेन पर्यायत्वापत्त्या द्रव्यं गुणो वेत्येकतरनिर्द्धारणानुपपत्तिः, तव मते द्रव्यार्थिकपक्षे गुणस्यैव मम मते द्रव्यार्थिकपक्षे द्रव्य-गुणयोरभेदस्य वास्तवत्वेऽपि गुणे द्रव्यभेदस्यौत्प्रेक्षिकस्याङ्गीकारेण तमादाय द्रव्य गुणपदयोः पर्यायत्वापत्त्युद्धारसम्भवादित्यपि परेण वक्तुं शक्यमित्याद्यधिकमनेकान्तव्यवस्थायाम् ॥ १७ ॥

तदेवमुक्तौ द्रव्यार्थिक-पर्यायार्थिकलक्षणौ मूलनयभेदौ, अनयोर्नैगमादिषु मतभेदेन यथान्तर्भावस्तथाह—

**तार्किकाणां त्रयो भेदा, आद्या द्रव्यार्थतो मताः ।**
**सैद्धान्तिकानां चत्वारः, पर्यायार्थगताः परे ॥ १८ ॥**

**नयामृत०**—तार्किकाणामिति । तार्किकाणां—वादिसिद्धसेनमतानुसारिणाम्, आद्यास्त्रयो भेदाः—नैगम-सङ्ग्रह-व्यवहारलक्षणाः, द्रव्यार्थतो मताः—द्रव्यमेवार्थं विषयीकृत्याभिप्रेताः, आद्यास्त्रयो भेदास्तार्किकमते द्रव्यार्थिका इति सम्मुखोऽर्थः, सैद्धान्तिकानां— जिनभद्रगणिक्षमाश्रमणवचनानुसारिणाम्, चत्वारः—आद्या ऋजुसूत्रसहिता द्रव्यार्थिका इति शेषः, परे तु— उक्तशेषा उभयेषामपि पर्यायार्थ-

---

गुणशब्दोऽपि, तथा च तयोरेकार्थकत्वेन पर्यायत्वमेवापतितम्, इत्थ च द्रव्यं सामायिकमित्युक्तेऽपि गुणस्य सामायिकत्वं प्राप्तम्, तथा गुणः सामायिकमित्युक्तेऽपि द्रव्यस्य सामायिकत्वमागतम्, तथा च द्रव्य गुणयोरुभयोरपि सामायिकत्वे 'द्रव्यं सामायिकम्' इत्युक्त्या द्रव्यस्यैव 'गुण. सामायिकम्' इत्युक्त्या गुणस्यैव सामायिकत्वमिति यदेकतरनिर्धारण तस्यानुपपत्तिः स्यादित्याशङ्कां प्रतिक्षिपति— **न चेति** । **मम मते** द्रव्यपर्यायोभयग्राहकनयद्वयाभ्युपगन्तुर्मते । प्रतिक्षेपहेतुमुपदर्शयति— **तव मत** इति— नययोः प्रत्येकमेकैकविषयत्वमित्यभ्युपगन्तुर्मते इत्यर्थः । **गुणस्येव** वास्तविकस्य गुणस्याभावेऽप्यौत्प्रेक्षिकस्य गुणस्याङ्गीकार इव, **मम मते** इत्यस्य पूर्वोक्त एवार्थ. । **तमादाय** औत्प्रेक्षिकगुणगतद्रव्यभेदमादाय । **परेण** द्रव्यपर्यायोभयग्राहकनयवादिना । निरुक्तविचारविशेषाधिगतये विशेषजिज्ञासुभिरनेकान्तव्यवस्था परिशीलनीयेत्युपदेशाभिप्रायेणाह— **अधिकमनेकान्तव्यवस्थायामिति** ॥ १७ ॥

अष्टादशपद्यमवतारयन्नाह— **तदेवमिति** । **अनयोः** द्रव्यार्थिक-पर्यायार्थिकनययोः । विवृणोति— **तार्किकाणामिति**ति । के चत्वारः किमात्मकाश्चेत्युभयविधजिज्ञासासम्भवात् तन्निवृत्तये पूरयति— **आद्या ऋजुसूत्रसहिता द्रव्यार्थिका इति शेष इति**— ननु 'मता.' इत्यस्यानुवर्तन यथा तथैव 'आद्याः' इत्यस्य 'द्रव्यार्थतः' इत्यस्य चानुवृत्तिः, 'ऋजुसूत्रसहिताः' इत्येतावन्मात्रस्यैव शेषः कर्तव्य इति चेत् ? सत्यम्— किन्तु द्रव्यार्थत आद्यास्त्रयो भेदास्तार्किकाणां मताः, परे पर्यायार्थगताश्चत्वारो भेदाः सैद्धान्तिकाना मता इत्येवमन्वयभ्रान्त्या द्रव्यार्थिका आद्यास्त्रयो नयास्तार्किकाणा मता इत्युक्त्या द्रव्यार्थिकनयाभ्युपगन्तार एव तार्किका न तु पर्यायार्थिकनयाभ्युपगन्तार, परे पर्यायार्थगताश्चत्वारः सैद्धान्तिकाना मता इत्युक्त्या पर्यायार्थिकनयाभ्युपगन्तार एव सैद्धान्तिका न तु द्रव्यार्थिकनयाभ्युपगन्तार इत्येव कस्यचिद् भ्रान्ति स्यात् तन्निवृत्तये स्पष्टप्रतिपत्तये 'आद्या ऋजुसूत्रसहिता द्रव्यार्थिका इति शेषः' इत्युक्तम्, अन्यथा "नैगमः सङ्ग्रहश्चैव व्यवहारर्जुसूत्रकौ । शब्द समभिरूढाख्य एवम्भूतश्च सप्त ते" ॥ इत्यग्रिमपद्योक्तसप्तनयक्रमाधिगतौ सत्यामेवाद्यास्त्रयो भेदा इत्यनेन नैगमसङ्ग्रहव्यवहाराणा प्रतिपत्तिस्तथा आद्या इत्यनुवृत्तिमात्रेणाद्याश्चत्वार इत्यनेन नैगम-सङ्ग्रह-व्यवहारर्जुसूत्राणां प्रतिपत्तिसम्भवात्, 'ऋजुसूत्रसहिता' इत्यपि पूरणमनावश्यकं स्यादिति विभावनीयम् । **परे त्विति**— तुशब्दो मूलेऽनुक्तोऽपि विशेषावगमाय पूरित., '**परे**' इत्यस्य '**उक्तशेषाः**' इति विवरणम्, मता इत्यस्यानुवृत्त्या लाभेऽपि केषामित्याकाङ्क्षानिवृत्तये '**उभयेषाम्**' इत्युक्तम्, यदा नैगमादयस्त्रयो द्रव्यार्थिका वादिसिद्धसेनमतानुसारिणा मते तदा ततोऽवशिष्टा ऋजुसूत्र-शब्द समभिरूढैवम्भूताश्चत्वार. पर्यायार्थिकास्तेषा मते, नैगम-सङ्ग्रह-व्यवहारर्जुसूत्राश्चत्वारो द्रव्यार्थिकाः क्षमाश्रमणाना मते, तर्हि ततोऽवशिष्टा. शब्द-समभिरूढैवम्भूतास्त्रयो नयाः पर्यायार्थिका क्षमाश्रमणाना-

गताः–पर्यायार्थिकाः, ऋजुसूत्रादयश्चत्वारः पर्यायार्थिका वादिनः, शब्दादयस्त्रय एव च क्षमाश्रमणानामिति निर्गलितोऽर्थः । ऋजुसूत्रो यदि द्रव्यं नाभ्युपेयात् तदा उक्तम् "उजुसुयस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहुत्तं णेच्छइ [अनुयोगद्वारसूत्र–१४] इति सूत्रं विरुध्येतेति सैद्धान्तिकाः । तार्किकानुसारिणस्तु अतीता-ऽनागत-परकीय-भेद-पृथक्त्वपरित्यागादृजुसूत्रेण स्वकार्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमान्नास्य तुल्यांश-ध्रुवांशलक्षणद्रव्याभ्युपगमः, अत एव नाश्यासद्घटितभूतभाविपर्यायकारणत्वरूपद्रव्यत्वाभ्युपगमोऽपि, अध्रुवधर्माधारांशद्रव्यमपि नास्य विषयः शब्दनयेष्वतिप्रसङ्गात् । उक्तसूत्रं त्वनुपयोगांशमादाय वर्तमानावश्यकपर्याये द्रव्यपदोपचारात् समाधेयम्, पर्यायार्थिकेन मुख्य-

मते इति निर्गलितार्थं दर्शयति– **ऋजुसूत्रादय** इति । नैगमादयस्त्रयो द्रव्यार्थिकाः शब्दादयस्त्रयः पर्यायार्थिका इत्यत्रोभयेषामपि सम्प्रतिपत्तिः, केवलमृजुसूत्रे पर्यायार्थिकत्वं तार्किका अभ्युपगच्छन्ति, सैद्धान्तिकास्तु तत्र द्रव्यार्थिकत्वमभ्युपयन्ति, तत्र क्षणिकपर्यायमात्राभ्युपगन्तुर्ऋजुसूत्रस्य पर्यायार्थिकत्वं बुद्धिपथमारोहति, द्रव्यार्थिकत्वं तु तस्य कथं सैद्धान्तिकैराश्रितमित्यपेक्षायामाह– **ऋजुसूत्र** इति । '**उक्तम्**' इत्यस्य 'सूत्रम्' इत्यनेनान्वयः । सूत्रमुल्लिखति– **उजु०** इति– "ऋजुसूत्रस्यैकोऽनुपयुक्त एकं द्रव्यावश्यकं पृथक्त्वं नेच्छति" इति संस्कृतम्, इदं सूत्रं द्रव्यावश्यकाभ्युपगन्तृत्वमृजुसूत्रस्य प्रतिपादयति, तस्य विरोधः ऋजुसूत्रस्य द्रव्यार्थिकत्वानभ्युपगमे इति ऋजुसूत्रस्य द्रव्यार्थिकत्वमुक्तसूत्रानुरोधादभ्युपगन्तव्यमिति सैद्धान्तिका वदन्तीत्यर्थः । ननूक्तसूत्रं तार्किकाणामपि मान्यमेवेति कथं द्रव्यार्थिकत्वं तस्य तार्किका नाभ्युपगच्छन्तीत्यत आह– **तार्किकानुसारिणस्त्विति** । **अतीतेति**– अतीतादीनां परित्यागस्तदनभ्युपगम एव । यद्यतीतादय ऋजुसूत्रेण परित्यज्यन्ते तर्हि तत्परित्यागस्तेन किमुपेयते इत्यपेक्षायामाह– **स्वकार्येति**– अतीतो विनष्टत्वादनागतस्तदानीमभावात् परकीयधनादिकं परतन्त्रत्वान्न स्वकार्यसाधकं किन्तु स्वकार्यसाधकं स्वकीयं वर्तमानमेव वस्त्विति स्वकार्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एव ऋजुसूत्रेणाभ्युपगमादित्यर्थः । **नास्येति**– अस्य- ऋजुसूत्रस्य, 'तुल्यांशलक्षणद्रव्यं गोत्वादितिर्यक्सामान्यं समानाकारपरिणतिलक्षणम्, ध्रुवांशलक्षणद्रव्यं मृत्पिण्डशरावोदञ्चनाद्यनुगतं कालत्रयानुगामि मृद्द्रव्यम्' इत्युक्तद्रव्यद्वयस्याभ्युपगमो न, तथा च निरुक्तद्रव्याभ्युपगन्तुर्नयस्यैव द्रव्यार्थिकत्वम्, निरुक्तद्रव्याभ्युपगन्तृत्वाभावादृजुसूत्रस्य न द्रव्यार्थिकत्वमित्यर्थः । **अत एव** स्वकीयवर्तमानवस्तुमात्राभ्युपगन्तृत्वादेव । '**नाश्य**' इति स्थाने 'नास्य' इति पाठो युक्तः, **अस्य** ऋजुसूत्रस्य, भूत-भाविनोर्वर्तमानकालेऽसत्त्वादसद् यद् भूतं भावि च तद्घटितं यद् भूतपर्यायकारणत्वरूपं यच्च भाविपर्यायकारणत्वरूपं द्रव्यत्वं तस्याभ्युपगमोऽपि नेत्यर्थः । **अध्रुवेति**– अध्रुवा अनित्या ये धर्मास्तेषामाधारभूतो यो वस्त्वंशस्तदात्मकद्रव्यमपि ऋजुसूत्रस्य न विषय इत्यर्थः । यद्यध्रुवधर्मांशद्रव्यविषयकत्वमृजुसूत्रस्याभ्युपगम्य द्रव्यार्थिकत्वं तदा शब्दनयेषु शब्दसमभिरूढैवम्भूतेषु तथाभ्युपगमतो द्रव्यार्थिकत्वं प्रसज्येतेत्यर्थः, तदेवं यद् यद् द्रव्यपदेन व्यपदिश्यते तस्य सर्वस्य न ऋजुसूत्रविषयत्वमिति द्रव्यमात्रविषयकत्वाभावादृजुसूत्रस्य न द्रव्यार्थिकत्वमित्याशयः । ऋजुसूत्रस्य द्रव्यार्थिकत्वानभ्युपगमे "उजुसूयस्स०" इति सूत्रविरोधः सैद्धान्तिकैर्य उद्भाव्यते तं परिहरति– **उक्तसूत्रं त्विति**– 'अनुपयोगो द्रव्यम्' इति वचनादनुपयोग एव द्रव्यम्, तमुपादाय वर्तमानावश्यकपर्याय एव द्रव्यपदस्योपचारो गौणवृत्तिः, ततोऽद्रव्येऽपि वर्तमानावश्यकपर्याये द्रव्यपदप्रयोगस्तेन ऋजुसूत्रस्य वास्तविकद्रव्यविषयकत्वाभावेन द्रव्यार्थिकत्वाभावेऽपि वर्तमानावश्यकपर्यायानुपयोगरूपोपचरितद्रव्यविषयकत्वं सम्भवतीति नोक्तसूत्रविरोध इत्यर्थः । ननूक्तलक्षणद्रव्यविषयकत्वमपि पर्यायार्थिकस्य तस्य कथम्? तत्त्वे पर्यायार्थिकत्वमेव तस्य न स्याद् द्रव्याप्रतिक्षेपकत्वादित्यत आह– **पर्यायार्थिकेनेति** । '**मुख्यद्रव्यपदार्थस्यैव**' इत्येवकारेणोपचरितद्रव्यपदार्थस्य व्यवच्छेदः, तेनोपचरितद्रव्यपदार्थाप्रतिक्षेपकत्वेऽपि पर्यायार्थिकत्वस्य न हानिः । ननु अन्यविषयकानुपयोगो नान्यस्य द्रव्यम्, नहि पटानुपयोगो द्रव्यपटः, किन्तु घटविषयकानुपयोगो घटद्रव्यमिति, तथा च 'एकोऽनुपयुक्तः' इत्यत्र वर्तमानावश्यकपर्यायविषयकानुपयोग एव 'अनुपयोग' इत्यनेनाभिमतः, द्रव्यावश्यकमपि वर्तमानावश्यकपर्यायविषयकानुपयोग इति, तथा चार्थैक्याद् यथा घटो घट इत्येवमुद्देश्य-विधेयभावो न भवति तथा प्रकृतेऽप्यर्थैक्यादुद्देश्य-विधेयभावानुपपत्तिः

द्रव्यपदार्थस्यैव प्रतिक्षेपात्। यदि चैवमपि 'एकानुपयुक्त एकं द्रव्यावश्यकम्' इत्यत्रानुपयोगस्य विषयनियन्त्रितत्वेनार्थैक्यादुद्देश्य-विधेयभावानुपपत्तिरिति विभाव्यते, यथा द्रव्यावश्यकपदं द्रव्यावश्यकत्वेन व्यवहर्तव्यम्, परं विवरणपरतया चैतत् योजनीयमिति न कश्चिद् दोष इत्यालोचयामः ॥ १८ ॥

उक्तानुभयनयभेदानेव विशिष्य लक्षयितुं नामग्राहं सङ्गृह्णामि—

**नैगमः सङ्ग्रहश्चैव व्यवहारर्जुसूत्रकौ।**
**शब्दः समभिरूढाख्य एवम्भूतश्च सप्त ते ॥१९॥**

**नयामृत०**-नैगम इति स्पष्टः, ते-मूलनयप्रभेदाः ॥ १९ ॥

तत्रादौ नैगमलक्षणमाह—

**निगमेषु भवो बोधो, नैगमस्तत्र कीर्तितः।**
**तद्भवत्वं पुनर्लोकप्रसिद्धार्थोपगन्तृता ॥ २० ॥**

**नयामृत०**-निगमेष्विति-निगमेषु- लोकेषु भवो बोधो नैगमनयः, तत्र- तेषु मध्ये कीर्तितः, तद्भवत्वं च तदाश्रयेणोत्पत्तिकत्वम्, ज्ञानरूपस्य नयस्यात्मन्येव शब्दरूपस्य च भाषावर्गणायामेवोत्पत्तेः, किन्तु लोकप्रसिद्धार्थोपगन्तृता- लोकप्रसिद्धार्थकस्वीकर्तृत्वम्, पारिभाषिकं तदित्यर्थः ॥ २० ॥

---

स्यादित्यत आह- **यदि चैवमपीति।** **एवमपि** अनुपयोगांशमादाय वर्तमानावश्यकपर्याये द्रव्यपदोपचाराद् द्रव्यावश्यकमित्येवं सम्भवेऽपि। **'एकानुपयुक्तः'** इत्यस्य स्थाने 'एकोऽनुपयुक्तः' इति पाठो युक्त। **विषयनियन्त्रितत्वेन** प्रतिनियतविषयघटितमूर्तिकत्वेन। **अर्थैक्यात्** य एव एकोऽनुपयुक्त इत्यस्यार्थः स एव एकं द्रव्यावश्यकमित्यस्याप्यर्थ इत्यर्थैक्यात्। **'यथा द्रव्यावश्यकपदम्'** इत्यस्य स्थाने 'तदा द्रव्यावश्यकपदम्' इति पाठो युक्तः, **'व्यवहर्तव्यम्, परं'** इत्यस्य स्थाने 'व्यवहर्तव्यपरम्,' इति पाठो युक्तः, **'चैतत्'** इत्यस्य स्थाने 'चैतत्' इति पाठो युक्तः, तथा च एकोऽनुपयुक्तवर्तमानावश्यकपर्यायो द्रव्यावश्यकत्वेन व्यवहर्तव्य इत्येवमनुपयुक्त-द्रव्यावश्यकपदयोरर्थैक्याभावादुद्देश्य-विधेयभावः सम्भवति। **वा** अथवा। 'एकं द्रव्यावश्यकम्' इत्यस्य विवरणम्-'एकोऽनुपयुक्तः' इति, यथा-'पचति' इत्यस्य 'पाकं करोति' इति विव्रियमाणस्य विवरणेन सहार्थैक्यमनुकूलतामेवावहति, अर्थभेदे विवरण विव्रियमाणभावस्यैवाभावादित्येवमभ्युपगमे न कश्चिद् दोष इत्येव यशोविजयोपाध्याया वयमालोचयाम इत्यर्थ.। **'आलोचयामः'** इत्युक्त्या मदेकपरिशीलितोऽयमभिनव. पन्था मद्ग्रन्थाध्ययनपटुभिरेवासादयितुं शक्यो नान्यैरेत्यर्थोऽभिव्यज्यते ॥ १८ ॥

एकोनविंशतितम पद्यमवतारयति- **उक्तानिति।** यद्यपि य एव मूलकारः स एवात्र वृत्तिकारस्तथापि मूलकर्तृतो भेदमेव विवरणकरणवेलायामात्मनि वृत्तिकारो मनुते, तेन **'सङ्गृह्णामि'** इत्यस्य स्थाने 'सङ्गृह्णाति' इति पाठो युक्त.। श्लोकार्थस्य स्पष्टत्वान्नात्र विवरणं वितन्यत इत्याशयेनाह- **नैगम इति स्पष्ट** इति ॥ १९ ॥

विंशतितमं पद्यमवतारयति- **तत्रेति**- उक्तेषु सप्तसु मध्य इत्यर्थ। विवृणोति- **निगमेष्विनीति।** **तेषु मध्ये** नैगमादिनयेषु सप्तसु मध्ये। **तद्भवत्वं** निगमभवत्वम्। **न तदाश्रयेणोत्पत्तिकत्वं** न लोकाश्रयेणोत्पत्तिमत्त्वम्, लोकाधिकरणकोत्पत्तिमत्त्व नेति यावत्। **'तद्भवत्वं च'** इति स्थाने 'तद्भवत्वं न' इति पाठ एव समुचित., तमवलम्ब्यायमर्थ उपदर्शित.। निषेधे हेतुमाह- **ज्ञानरूपस्येति**- नयो हि ज्ञानरूपः शब्दरूपश्च, तत्र ज्ञानरूपस्य नयस्यात्मन्येवाधिकरणे उत्पत्ते, शब्दरूपस्य च नयस्य भाषावर्गणात्मकाधिकरण एवोत्पत्ते', लोकेष्वधिकरणेषु कस्यापि नयस्योत्पत्तेरभावाल्लोकाधिकरणकोत्पत्तिमत्त्वलक्षणं लोकोद्भवत्वं नयस्य न सम्भवतीत्यर्थः। तर्हि किं तद्भवत्वमिति पृच्छति- **किन्त्विति।** उत्तरयति- **लोकप्रसिद्धार्थोपगन्तृतेति**- अस्य मूलस्य विवरणम्- **लोकप्रसिद्धार्थस्वीकर्तृत्वमिति**- लोकप्रसिद्धो यः सामान्यात्मा विशेषात्मा च परस्परं भिन्नोऽर्थस्तत्स्वीकर्तृत्वम्, तच्च यस्मिन् नये स नयो नैगम

**तत्प्रसिद्धिश्च सामान्य-विशेषाद्युभयाश्रया ।**
**तदन्यतरसन्न्यासे व्यवहारो हि दुर्घटः ॥ २१ ॥**

**नयामृत०**—तत्प्रसिद्धिश्च– लोकप्रसिद्धिश्च, सामान्य-विशेषाद्युभयाश्रया—सामान्यविशेष-नित्या-नित्यत्व-भेदाभेदाद्युभयावलम्बिनी, हि– यतः, तेषां मध्ये, अन्यतरस्य– एकस्यापि, सन्न्यासे–परित्यागे, व्यवहारो दुर्घटः, सामान्याद्यभावे अनुगतप्रतीत्यादेः, विशेषाद्यभावे च व्यावृत्त्यादिबुध्यादेरसम्भवादित्यर्थः । तथा च सामान्य-विशेषोभयस्वीकर्तृजातीयैकदेशबोधत्वं नैगमत्वमिति लक्षणं लब्धम् । अथानेन स्वतन्त्रसामान्य-विशेषोभयाभ्युपगमे कणादवद् दुर्नयत्वम्, शबलतदभ्युपगमे च प्रमाणत्वमेव, यथास्थानं

---

इत्यर्थः । लोकप्रसिद्धार्थोपगन्तृत्वलक्षणेऽर्थे तद्भवत्वशब्दो न मुख्यवृत्त्या प्रवर्तते तदधिकरणकभवनवत्त्वलक्षणार्थ एव तस्य मुख्यवृत्तेः सम्भवादत आह– **पारिभाषिकमिति**– जैनसिद्धान्तरहस्यज्ञैस्तत्र सङ्केतितस्तद्भवत्वशब्दस्तेन लौकिकप्रभवत्व-शब्दस्य या उक्तार्थे आधुनिकसङ्केतलक्षणा परिभाषा तद्विषय इत्यर्थः । **तत्** तत्प्रभवत्वमित्यर्थो ज्ञातव्य इत्यर्थः ॥ २० ॥

लोकप्रसिद्धिरेव किमर्थाश्रयेत्यपेक्षायामेकविंशतितमं पद्यमाह– **तत्प्रसिद्धिश्चेति** । विवृणोति– **तत्प्रसिद्धिश्चेति** । अनुगतप्रतीत्यादेरित्यस्यासम्भवादित्यनेनान्वयः । '**सामान्याद्यभावे**' इत्यत्रादिपदान्नित्यत्वा-ऽभेदादेरुपग्रहः । '**अनुगत-प्रतीत्यादेः**' इत्यत्रादिपदात् प्रत्यभिज्ञानादेर्ग्रहणम् । '**विशेषाद्यभावे**' इत्यत्रादिपदादनित्यत्व भेदादेः परिग्रहः । '**व्यावृत्त्यादि**' इत्यत्रादिपदाद् ध्वंस-प्रागभावादेर्ग्रहणम् । '**बुद्ध्यादेः**' इत्यादिपदाद् ध्वस-प्रागभाव-भेदादिप्रतीत्यादेः सङ्ग्रहणम् । **तथा च** सामान्यविशेषोभयाश्रया लोकप्रसिद्धिर्लोकप्रसिद्धार्थोपगन्तृत्वलक्षणनिगमप्रभवत्ववान्नैगमनय इति व्यवस्थितौ च । **सामान्येति**–एतेन नित्यत्वा-ऽनित्यत्वोभयस्वीकर्तृजातीयैकदेशबोधत्वं भेदा-ऽभेदोभयस्वीकर्तृजातीयैकदेशप्रभवत्वमित्यादिकमपि नैगमलक्षणमवसेयम्, जातिघटितलक्षणकरणाद् यो नैगमविशेषो नित्यत्वं प्रधानतयाऽवगाहते अनित्यत्वमेव वा प्रधानतयोररीकरोति भेदमेव वा प्रधानतयाऽभ्युपैति अभेदमेव वा तथा स्वीकरोति सामान्यमेव विशेष-मेव वाऽभ्युपैति, तेषु सर्वेषु सामान्योभयस्वीकर्तृत्वस्य नित्यत्वानित्यत्वोभयस्वीकर्तृत्वादेरभावेऽपि न क्षतिः, या नैगम-व्यक्तिः सामान्यं विशेष चाभ्युपैति सा सामान्य-विशेषोभयस्वीकर्त्री तद्वृत्तिर्नयत्वावान्तरजातिर्नैगमत्वजातिस्तद्वान् एकदेश-विषयको बोधोऽखिल एव नयात्मा बोधस्तत्त्व सर्वेषु नयेषु वर्तत इति लक्षणसमन्वयः; नयत्वजातिमादाय सङ्ग्रहादि-नयेष्वतिव्याप्तिवारणाय जातिर्नयत्वावान्तरजातित्वेन प्रवेशनीया, न तु सामान्य-विशेषोभयस्वीकर्तृमात्रवृत्तित्वेन जातिप्रवेशः समुचितः, तथा सति नैगमत्वजातेरपि सामान्य-विशेषोभयस्वीकर्तृनैगमव्यक्तिव्यतिरिक्तनित्यत्वा-ऽनित्यत्वोभयस्वीकर्तृनैगम-व्यक्तिवृत्तित्वेन सामान्य-विशेषोभयस्वीकर्तृमात्रवृत्तित्वस्याभावेनासङ्ग्रहः प्रसज्येतेति बोध्यम्, नयत्वावान्तरत्वं च नयत्व-व्याप्यत्वमात्रमिह विवक्षितं न तु नयत्वव्याप्यत्वे सति नयत्वाव्याप्याव्याप्यत्वं नैगमत्वावान्तरजातेर्ग्रहणेऽपि क्षत्यभावात्, नयत्वव्याप्यत्वमपि नयत्वन्यूनवृत्तित्वमेवात्राभिमत न तु नयत्वाभाववदवृत्तित्वरूपम्, तेन नयत्वस्य नयत्वाभाववदवृत्तित्व-लक्षणनयत्वव्याप्यत्वस्य सत्त्वेऽपि न तदादाय नयान्तरेष्वतिव्याप्तिः, नयत्वन्यूनवृत्तित्वमपि नयत्वसमानाधिकरणभेदप्रतियोगिता-वच्छेदकत्वमेव विवक्षितं न तु नयत्वसमानाधिकरणत्वे सति नैगमत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपम्, सामान्य-विशेषोभयस्वीकर्तृवृत्तित्वस्य जातिविशेषणतयोपात्तत्वेन तत एव नयावृत्तिजातेर्ग्रहणासम्भवात्, इत्थं च यत्किञ्चिन्नयावृत्ति-सामान्यविशेषोभयस्वीकर्तृवृत्तिजातिमदेकदेशविषयकबोधत्वं नैगमत्वमित्येवमपि नैगमनयलक्षणाभिधानं युक्तमेव, यत्किञ्चिन्नया-वृत्तित्वाभावादेव नयत्वजातेर्ग्रहणासम्भवात्, 'शाब्दबोधविशेषा एव नयबोधाः' इत्यस्य 'श्रुतप्रमाणपरिच्छिन्नार्थैकदेशाव-गाह्यभिप्रायविशेषो नयः' इति नयसामान्यलक्षणानुगमनबलादादरणे श्रुतत्वस्य ज्ञानत्वव्याप्यजातेरपि निखिलनयवर्तिन्या यत्किञ्चिन्नयावृत्तित्वाभावादेव ग्रहणासम्भवान्न तामादायातिप्रसक्तिः, प्रमाणमात्रवृत्तिप्रमाणत्वजातेर्नयसामान्यावर्तिन्याः सामा-न्य-विशेषोभयस्वीकर्तृप्रमाणवर्तिन्या यत्किञ्चिन्नयावृत्तित्वेन सङ्ग्रहेऽपि तज्जातिमान् वस्तुबोध एव न त्वेकदेशबोध इत्येतावतैव तामुपादायापि नातिव्याप्तिः, एतत्पक्षे मतिज्ञानत्व नयवृत्त्येव न तामुपादायाप्यतिव्याप्तिः, यदि चैकदेशावगाहिमतिज्ञान-विशेषोऽपि नय इति मतिज्ञानत्वमपि नयवृत्ति भवति, तच्च श्रुतात्मकनयज्ञानावृत्त्यपीति तदुपादानेन मतिज्ञानविशेषे नयान्तरेऽति-व्याप्तिरिति भवति परीक्षकाणा मतिस्तदा नयत्वाभाववदवृत्तित्वरूप नयत्वव्याप्यत्वमेव जातावुपादेयम्, नयत्ववारणाय च नयत्व-

प्रत्येकं गौणमुख्यभावेन तदुपगमे च सङ्ग्रह-व्यवहारान्यतरप्रवेशः स्यादिति चेत् ? न– तृतीयपक्षाश्रयणे दोषाभावात्, क्वचित् सङ्ग्रह-व्यवहारसमानविषयत्वेऽपि क्वचिदेकस्य सत उभयग्रहणोपयोगव्यावृत्तत्वेन तदतिरेकात्, अत एव न संयोगेनान्यथा सिद्धिः, प्रत्येकविषयताद्वयातिरिक्तस्वतन्त्रविषयताकत्वादिति दिक् ॥ २१ ॥

सङ्ग्रहं लक्षयति—

**सङ्ग्रहः सङ्गृहीतस्य पिण्डितस्य च निश्चयः ।**
**सङ्गृहीतं परा जातिः पिण्डितं त्वपरा स्मृता ॥ २२ ॥**

**नयामृत०**–सङ्ग्रह इति । सङ्गृहीतस्य पिण्डितस्य च निश्चयः सङ्ग्रहः, तत्र सङ्गृहीतं परा– सर्वव्यापिका जातिः, सत्ताख्यमहासामान्यमिति यावत्, पिण्डितं त्वपरा– देशव्यापिका जातिः, द्रव्यत्वादि सामान्यमिति यावत्, यद्यप्येतदुभयग्राहित्वं प्रत्येकग्राहिण्यव्याप्तं प्रत्येकग्राहित्वं चाननुगतं तथापि

भिन्नत्वमपि तत्र देयमिति विभावनीयम् । तटस्थः शङ्कते - **अथेति** । **अनेन** नैगमनयेन । **स्वतन्त्रेति**– अत्यन्तपरस्परभिन्नेत्यर्थः । **कणादवदिति**– वैशेषिकदर्शनसूत्रणसूत्रधार. कणादनामा मुनिर्द्रव्य-गुण-कर्म-सामान्य विशेष समवायभेदेन षड् भावानुररीचकार, तत्र सामान्यविशेषयोरत्यन्तभेदमेव सोऽभ्युपगतवानिति तन्मतस्य यथा दुर्नयत्वं तथा नैगमस्यापि दुर्नयत्व स्यादित्यर्थ.,। **शबलतदभ्युपगमे चेति**– सामान्येन सह कथञ्चिदभिन्नो विशेपो विशेषेण सह कथञ्चिदभिन्नं सामान्यमित्येवमन्योन्यमिश्रितयो सामान्य-विशेषयोर्नैगमेनाभ्युपगमे पुनरित्यर्थ । **प्रमाणत्वमेवेति**– सामान्य-विशेपोभयात्मकवस्त्वभ्युपगन्तृत्वमेव प्रमाणत्वम्, सामान्य-विशेषोभयात्मकवस्त्वभ्युपगमे नैगमस्य तत् प्रसज्यते, तथा च नयत्व तस्यैकदेशाभ्युपगमन्तृत्वाभावान्न स्यादित्यर्थ । **यथास्थानमिति**– यत्र यद् विवक्षित तत्र तदनतिक्रम्येत्यर्थ । **प्रत्येकमिति**– क्वचित् सामान्यस्य मुख्यतया विशेपस्य गौणतयोपगम, क्वचित् पुनर्विशेषस्य मुख्यतया सामान्यस्य च गौणतयाभ्युपगम इत्येवं प्रत्येकं गौण मुख्यभावेन सामान्य विशेषयोर्नैगमेनाभ्युपगमे चेत्यर्थ । **सङ्ग्रहेति**– यत्र सामान्यस्य प्राधान्येनावगाहनं विशेषस्य गौणतयाऽवगाहनं तस्य नैगमस्य सङ्ग्रहेऽन्तर्भाव, यत्र विशेपस्य प्राधान्येनावगाहन सामान्यस्य गौणतयाऽवगाहन तस्य नैगमस्य व्यवहारेऽन्तर्भाव इति सङ्ग्रह-व्यवहाराभ्यामेव नैगमाभ्युपगमस्योपपत्तेर्नैगमनयोऽतिरिक्तो न भवेदित्यर्थ । समाधत्ते– **नेति** । **तृतीयपक्षाश्रयणे** इति– यथास्थान प्रत्येकं गौण मुख्यभावेन सामान्य-विशेष्योर्नैगमेनोपगम इति पक्षाश्रयणे दोपाभावादित्यर्थ । ननु तत्पक्षे नैगमस्य सङ्ग्रह-व्यवहाराभ्यामेव गतार्थत्वादतिरिक्तनयविशेपरूपता न स्यादिति दोप सलग्न एवेति न दोपाभाव इत्यत आह– **क्वचिदिति**– यत्र सामान्यस्य प्राधान्येनावगाहनं विशेपस्य गौणतयाऽवगाहन तत्र नैगमस्य सङ्ग्रहसमानविषयत्वम्, यत्र विशेपस्य प्राधान्येन सामान्यस्य गौणतयाऽवगाहनं तत्र नैगमस्य व्यवहारसमानविषयत्वमित्येव क्वचिन्नैगमस्य सङ्ग्रह-व्यवहाराभ्या सह समानविषयत्वेऽपि यत्रैकस्यैव नैगमाध्यवसायस्य सत. प्राधान्येन सामान्यस्य प्राधान्येन विशेपस्य चाभ्युपगमे पटीयस्त्वं तत्र नैगमस्य सङ्ग्रहव्यवहाराभ्यामसमानविषयत्वेन ताभ्या तस्य भेदादित्यर्थ, '**उभयग्रहणोपयोगव्यावृत्तत्वेन**' इत्यस्य स्थाने 'उभयग्रहणोपयोगव्यापृतत्वेन' इति पाठो युक्त । '**अत एव** क्वचिदेकस्य नैगमाध्यवसायस्य प्राधान्येन सामान्य-विशेषोभयग्रहणोपयोगव्यापृतत्वादेव । **संयोगेन** सङ्ग्रह-व्यवहारयोर्मेलनेन, **न अन्यथा सिद्धिः** अतिरिक्तनैगमाभावेन प्राधान्येन सामान्य-विशेपोभयलक्षणविपयसिद्धिर्नेत्यर्थः । 'अत एव' इत्युपदिष्टमेव निषेधहेतुमुपदर्शयति-**प्रत्येकेति**– सङ्ग्रहनिरूपिता या प्राधान्येन सामान्यगता विषयता या च व्यहारनिरूपिता प्राधान्येन विशेष्यगता विषयता, ताभ्यामतिरिक्ता या स्वतन्त्रप्रधानीभूत-सामान्यविशेपोभयगता विषयता तन्निरूपकत्वान्मिलितसङ्ग्रहव्यवहारोभयावृत्तेर्नैगमस्य मिलितसङ्ग्रहव्यवहारोभयभिन्नत्वादित्यर्थ ॥ २१ ॥

द्वाविंशतितमं पद्यमवतारयति– **सङ्ग्रहं लक्षयतीति** । विवृणोति– **सङ्ग्रह इतीति** । **एतदुभयग्राहित्वं** परमानान्याऽपरसामान्योभयग्राहित्वम् । **प्रत्येकग्राहिण्यव्याप्तं**, केवलमहासामान्यग्राहिणि परसङ्ग्रहे केवलावान्तरसामान्यग्राहिण्यपरसङ्ग्रहेऽव्याप्तं– न वर्तते, तथा च सङ्ग्रहद्वयावृत्तित्वादसम्भवदोपग्रस्तमिद लक्षणमिति भाव । **प्रत्येकग्राहित्वं**

सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्वं सङ्ग्रहनयत्वमिति लक्षणं बोध्यम्, "संगहिय-पिण्डिअत्थं संगहवयणं समासओ विंति" [विशेषावश्यकनिर्युक्तिगाथा-२१८३] त्ति सूत्रस्वारस्याच्चेत्थमुक्तिः। यद्वा (नैगमाद्युपगतार्थसङ्ग्रहप्रवणोऽध्यवसायविशेषः सङ्ग्रहः, सामान्यनैगमवारणाय) नैगमाद्युपगतार्थ-पदं, सङ्ग्रहश्च विशेषविनिर्मोकोऽशुद्धविषयविनिर्मोकश्चेत्यादिर्यथासम्भवमुपादेयस्तेन न प्रस्थकस्थले सामान्यविधेरसङ्ग्रहात् तत्स्थलप्रदर्शितसङ्ग्रहनयेऽव्याप्तिरित्यादिकं बोध्यम्। "अर्थानां सर्वैकदेशसङ्ग्रहणं सङ्ग्रहः" [तत्त्वार्थसूत्र० अ० १, सूत्र ३५] इति तत्त्वार्थभाष्यम्, अत्र सर्वं— सामान्यम्, एकदेशश्च— विशेषस्तयोः सङ्ग्रहणम्, सामान्यैकदेशस्वीकार इत्यर्थः, अयं हि घटादीनां भवनानर्थान्तरत्वाद्

**चाननुगतमिति**— केवलमहासामान्यग्राहित्व यदि सङ्ग्रहत्वं तदा तस्यापरसामान्यग्राहिण्यपरसङ्ग्रहेऽवृत्तित्वादव्याप्तिलक्षणदोषः, एव केवलापरसामान्यग्राहित्व यदि सङ्ग्रहत्वं तदा तस्य महासामान्यग्राहिणि परसङ्ग्रहेऽवृत्तित्वादव्याप्तिरित्यर्थ.। परत्वमपरत्वं च सामान्यविशेषणतया लक्षणकोटौ न निवेश्यते, किन्तु सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्व सङ्ग्रहनयत्वम्, तथा च नासम्भवो लक्ष्यमात्रे तस्य सत्त्वादत एव नाव्याप्तिरपीत्याह— **तथापी**ति— 'सामान्याभ्युपगम०' इत्याद्युक्तौ सामान्य विशेषोभयाभ्युपगमप्रवणे नैगमे सामान्याभ्युपगमप्रवणत्वस्य भावेनातिव्याप्तिः स्यादत **'सामान्यमात्राभ्युपगम०'** इत्याद्युक्तम्, सामान्याभ्युपगमप्रवणत्वस्य प्रमाणेऽपि सत्त्वात् तत्रातिव्याप्तिवारणाय 'एकदेशबोधत्वम्' इति यद्यपि मात्रपदनिवेशे सति न सम्भवति प्रमाणस्य सामान्यमात्राभ्युपगमप्रवणत्वस्यैवाभावेनातिव्याप्तेरेवाभावात्, तथापि स्वरूपमात्रोपदर्शकसुपरञ्जकमेवेदम्, यदि च दुर्नयविषयैकान्तमहासामान्य कल्पितमेव न वस्त्वंश., तद्ग्राहिनयो नैतल्लक्षणलक्ष्यम्, तदाऽत्रातिव्याप्तिवारणाय **'एकदेशबोधत्वम्'** इत्युक्तम्, तस्य दुर्नयस्य सामान्यमात्राभ्युपगमप्रवणत्वेऽपि तद्विषयस्यैकान्तमहासामान्यस्य कल्पितैकरूपस्य वस्त्वेकदेशत्वाभावेन तद्विषयकबोधरूपस्य नयस्यैकदेशबोधत्वाभावादिति बोध्यम्। ननु यदि सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्वमेव सङ्ग्रहस्य लक्षण तदा पद्येन तथैव लक्ष्यलक्षणाभिधानमुचितम्, यथाश्रुतं तु पद्याभिहितमुक्तदिशाऽसम्भवा-ऽव्याप्त्यन्यतरदोषकवलितमतः कथं तथोक्तिरित्यत आह— **संगहिय०** इति— "सङ्गृहीत-पिण्डार्थं सङ्ग्रहवचन समासतो ब्रुवन्ति"। इति संस्कृतम्। **इति** एवस्वरूपं यत् सूत्रं **तत्स्वारस्याच्च** तदभिप्रायात् पुन.। **इत्थमुक्तिः**— 'सङ्ग्रह सङ्गृहीतस्य पिण्डितस्य च निश्चयः' इत्येव लक्षणवचनम्, दर्शितपर्यालोचनया तात्पर्यं तूक्तसूत्रस्यापि 'सामान्यमात्राभ्युपगमप्रवण०' इत्यादिलक्षण एवेति बोध्यम्। **'यद्वा'** इत्यादिग्रन्थघटकं प्रक्षिप्त वा सर्वथाऽप्युपादेयम्, महासामान्यावगाहिनैगमोऽपि महासामान्यरूपेणाशेषविशेषसङ्ग्रहप्रवण इति तत्रातिव्याप्तिवारणाय **'नैगमाद्युपगतार्थ०'** इति सङ्ग्रहस्य विशेषणम्, तथा च नैगमाद्युपगता ये अर्था महासामान्याऽवान्तरसामान्य-विशेषाद्यास्तेषा सर्वेषां सत्त्वलक्षणमहासामान्येन सङ्ग्रहप्रवणो विशेषविनिर्मोकादिलक्षणसङ्ग्रहप्रवणो न नैगम. किन्तु सङ्ग्रह एवेति न नैगमेऽतिव्याप्तिरित्याह— **सामान्ये**ति, 'नैगमाद्युपगतार्थसङ्ग्रहप्रवण०' इत्यत्र विशेषविनिर्मोकलक्षण. सङ्ग्रहो यद्यभिमतस्तदा प्रस्थकस्थले आसादितप्रस्थकपर्यायमाकुट्टितनामानं मेयारूढमभ्युपगच्छतः सङ्ग्रहविशेषस्य सङ्ग्रहो न भवेत्, तस्य महासामान्याभ्युपगन्तृत्वाभावेन सामान्यमविदधतो विशेषविनिर्मोकलक्षणसङ्ग्रहप्रवणत्वाभावेन तत्रोक्तलक्षणाव्याप्तेः। यदि चाशुद्धविषयविनिर्मोकलक्षण. सङ्ग्रहोऽभिमतस्तदा य. सङ्ग्रह सामान्यविधायकत्वेन विशेषविनिर्मोकप्रवण एव न तु अशुद्धविषयविनिर्मोकप्रवणस्तत्राव्याप्ति. स्यादित्यत आह— **सङ्ग्रहश्चे**ति— अस्य 'उपादेयः' इत्यनेनान्वयः। 'तेन न' इत्यस्य 'अव्याप्ति.' इत्यनेनान्वयः। **सामान्यविधेरसङ्ग्रहात्** सामान्यविधानतो विशेषविनिर्मोकलक्षणसङ्ग्रहाभावात्। **तत्स्थले**ति— प्रस्थकस्थलेत्यर्थ.। तत्त्वार्थभाष्योक्त सङ्ग्रहलक्षणमुपदर्शयति— **अर्थानामि**ति। सामान्य विशेषोभयात्मकाना सामान्य-विशेषयो. स्वरूपसन्निविष्टयोर्यः सामान्यात्मक एकदेशोऽशस्तस्य स्वीकार सङ्ग्रह इत्यर्थं निरुक्तभाष्यवचनपर्यवसितार्थमुपदर्शयति— **अत्रे**ति। **तयोः** सामान्य विशेषयोः। सङ्ग्रहणं नामैकरूपेण ग्रहणम्, तत् प्रकृते सामान्यरूपेण सामान्यस्य विशेषस्य च ग्रहणम्, ग्रहणमप्यत्र स्वीकारस्वरूपमित्यभिसन्धानेनाह— **सामान्यैकदेशस्वीकार** इति— सामान्यरूपो य एकदेशस्तदात्मना सामान्य-विशेषयो. स्वीकारो न तु विशेषस्य विशेषात्मनाऽपि स्वीकार. इत्यर्थ.।

भावांश एव च प्रत्यक्षादिप्रमाणप्रवृत्तेस्तन्मात्रत्वमेव स्वीकुरुते, घटादिविशेषविकल्पस्त्वविद्योपजनित एवेति मन्यते, अतद्व्यावृत्तिव्यवहारोऽप्यस्य प्रतियोगिसापेक्षत्वेन कल्पनामूल एव, अयं चाशुद्धसङ्ग्रहविषयः, एवं तदवान्तरभेदास्तु यद्यत्सामान्यान्तर्भावेन विधिव्यवहारं प्रवर्तयन्ति तत्तत्सामान्यैकदेशस्वीकारिणो द्रष्टव्याः। तादृशतादृशसङ्ग्रहनयविचारे च तत्तदवान्तरधर्माकारश्रुतिनिश्रितं मतिज्ञानमपि जायत एव 'रूपविशेषवान् मणिः पद्मरागः' इत्युपदेशार्थप्रतिसन्धानानन्तरं चाक्षुषोपयोगे पद्मरागाकारमिव प्रत्यक्षमिति कार्यविशेषादपि तद्विशेष इति दिक् ॥ २२ ॥

सङ्ग्रहावान्तरभेदैरेव सङ्ग्राह्यार्थ[ व्यवहार ]भेदमुपदर्शयति—

एक-द्वि-त्रि-चतुः-पञ्च-षड्भेदा जीवगोचराः।
भेदाभ्यामस्य सामान्य-विशेषाभ्यामुदीरिताः ॥ २३ ॥

**नयामृत०**—एकेति—चेतनत्वेन जीव एकः, त्रस-स्थावरत्वाभ्यां द्विविधः, पुंवेद-स्त्रीवेद-नपुंसकवेदैस्त्रिविधः, देव-मनुष्य-तिर्यग्-नारकगतिभेदैश्चतुर्विधः, एकेन्द्रिय द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियभेदात् पञ्चविधः, पृथ्वीकाया-ऽप्काय-तेजस्काय-वायुकाय-वनस्पतिकाय-त्रसकायभेदात् षड्विधः, इत्येवं ये जीवगोचराः सङ्ग्रहप्रकारा उदीरिताः सिद्धान्ते तेऽस्य— सङ्ग्रहनयस्य सामान्य-विशेषाभ्यां—सामान्यसङ्ग्रह-विशेषसङ्ग्रहलक्षणाभ्यां भेदाभ्यामवगन्तव्याः ॥ २३ ॥

---

सामान्यवत् विशेषस्यापि वस्त्वंशतया कथं न तस्य विशेषरूपेण स्वीकारः, सामान्यरूपेणैव तस्य स्वीकारे किं निमित्तमित्यपेक्षायामाह— **अयमिति**—सङ्ग्रहनय इत्यर्थः, अस्य 'स्वीकरोति' इत्यनेनान्वयः। **हि** यतः, **भवनानर्थान्तरत्वात्** भवनं भावः सत्तालक्षणमहासामान्यं तदनर्थान्तरत्वादभिन्नत्वात्। **भावांश एव च** सत्तास्वरूपांश एव पुनः। **प्रत्यक्षादिप्रमाणप्रवृत्तेः** प्रत्यक्षादिप्रमाणे भावांश एव भासतेऽतः प्रत्यक्षादिप्रमाणस्य भावांश एव प्रवृत्तेः। **'तन्मात्रत्वमेव'** इत्यत्र 'घटादीनाम्' इत्यस्यान्वयः, तेन घटादीनां तन्मात्रत्वमेव भावमात्रत्वमेव सत्तामात्रस्वरूपत्वमेव, मात्रपदेन भावातिरिक्तस्वरूपत्वस्य व्यवच्छेदः। ननु यदि सङ्ग्रहनयो घटादीनां भावमात्रस्वरूपत्वमेव स्वीकरोति तर्हि 'घटः, पटः, मठः' इत्यादिबोधस्तन्मते न स्याद् घटत्वादीनां विशेषाणां तन्मतेऽभावादित्यत आह— **घटादिविशेषविकल्पास्त्विति**। अखण्डमेव वस्तुतत्त्वं यद् यत् सखण्डमन्यापेक्षाश्रयणेन व्यवह्रियते तत् तत् कल्पितमेवैतन्मतेऽतो घटोऽघटाद्व्यावृत्त इति व्यवहारोऽपि प्रतियोगिसापेक्षत्वेन कल्पित एवेत्याह—**अतद्व्यावृत्तिव्यवहारोऽपीति**। **अस्य** सङ्ग्रहस्य। घटत्वमघटव्यावृत्तिरूपं सामान्यं तदाश्रयणेन योऽयमघटव्यावृत्तिव्यवहारः सोऽशुद्धसङ्ग्रहस्य विषयो, न शुद्धसङ्ग्रहस्य, तस्य विशेषमात्रासंस्पर्शादित्याह— **अयं चेति**। अथवा योऽयं सामान्यैकदेशस्वीकारलक्षणः सङ्ग्रह इदानीमुपदर्शितः सोऽशुद्धसङ्ग्रहविषयो ज्ञेयः, यतोऽत्र यस्य सामान्यस्य यो विशेषस्तस्य विशेषस्य तत्सामान्यात्मना स्वीकार इति तदा घटते यदि सामान्य-विशेषभावाश्रयणं स्यादित्येवमशुद्धत्वमत्र, एतदभिप्रायेणैवाह— **एवमिति**। अत एव 'सर्वैकदेशसङ्ग्रहणम्' इत्यत्र 'सर्वम्' इत्यस्य **सामान्यमित्येव** व्याख्यातं न तु महासामान्यमिति, तथा चावान्तरसामान्यगोचरोऽपि सङ्ग्रहो लक्ष्यतयाऽत्राभिमत इत्यवान्तरसामान्यस्य विशेषरूपत्वमपीत्यशुद्धत्वम्, तेन तद्विषयकस्यापि सङ्ग्रहस्याशुद्धत्वं बोध्यम्। **तदवान्तरभेदास्तु** अशुद्धसङ्ग्रहावान्तरभेदाः पुनः, अस्य 'प्रवर्तयन्ति' इत्यनेन 'द्रष्टव्याः' इत्यनेन चान्वयः। **यद्यत्सामान्येति**—मृत्सामान्यान्तर्भावेण घट-शरावोदञ्चनादीनां विधिव्यवहारं 'घट-शरावोदञ्चनादयो मृदेव' इत्येवं व्यवहारं पृथिवीसामान्यान्तर्भावेण घटपटादीनां विधिव्यवहारं 'घट-पटादयः पृथिव्येव' इत्येवं व्यवहारं प्रवर्तयन्ति, ये सङ्ग्रहविशेषास्ते मृत्पृथिव्यादिसामान्यैकदेशस्वीकारिणो द्रष्टव्या इत्यर्थः। उक्तनयविचारस्य श्रुतनिश्रितमतिज्ञानेऽप्युपयोगं दर्शयति— **तादृशेति**। **'तत्तदवान्तरधर्माकारश्रुतिनिश्रितम्'** इत्यस्य स्थाने 'तत्तदवान्तरधर्माकारं श्रुतनिश्रितम्' इति पाठो युक्तः। उक्तार्थदार्ढ्याय कार्यविशेषात् कारणविशेषसिद्धिं दृष्टान्तावष्टम्भेन दर्शयति— **रूपविशेषवानिति**। **चाक्षुषोपयोगे** रूपविशेषवन्मणिना सह चक्षुषः साम्मुख्यादिलक्षणचाक्षुषोपयोगे सति ॥ २२ ॥

नैगम-व्यवहारयोरपेक्षया यथाऽस्य शुद्धत्वं तथाह—

**उपचारा विशेषाश्च, नैगम-व्यवहारयोः ।**
**इष्टा ह्यनेन नेष्यन्ते, शुद्धार्थपक्षपातिना ॥ २४ ॥**

**नयामृत०**—उपचारा इति । उपचारा— गौणव्यवहाराः, विशेषाश्च— तत्तद्व्यावृत्तिरूपाः, नैगम-व्यवहारयोः, इष्टाः, शुद्धार्थपक्षपातिना— एतदुभयापेक्षया स्वविषयोत्कर्षाभिमानिना, हि— निश्चितम्, अनेन— सङ्ग्रहनयेन, नेष्यन्ते, तथा च नैगम-व्यवहारसम्मतोपचार-विशेपानवलम्बित्वादस्य शुद्धत्वं स्वसमवायोचितोपचारविशेषयोः क्वचिदवलम्बनेनापि नापोद्यत इति भावः ॥ २४ ॥

व्यवहारं लक्षयति—

**उपचारेण बहुलो विस्तृतार्थश्च लौकिकः ।**
**यो बोधो व्यवहाराख्यो नयोऽयं लक्षितो बुधैः ॥ २५ ॥**

**नयामृत०**—उपचारेणेति । उपचारेण—गौण्या वृत्त्या, बहुलो— बाहुल्येन व्यवहारकारी, विस्तृतार्थः— नानाव्यक्तिकशब्दसङ्केतग्रहणप्रवणः, लौकिकः-शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणपक्षपाती, यो बोधः सोऽयं व्यवहाराख्यो नयः, बुधैर्लक्षितः, उपचारबहुलाद्यध्यवसायवृत्तिनयत्वव्याप्यजातिमत्त्वं लक्षणं तेन नाननुगम इत्यर्थः । " लौकिकसम उपचारप्रायो विस्तृताऽर्थो व्यवहारः " [ तत्त्वार्थसूत्र० अ० १, सूत्र– ३५ ] इति तत्त्वार्थभाष्यमनुरुध्य इत्थं लक्षितम्, " वच्चइ विणिच्छिअत्थं व्यवहारो

त्रयोविंशतितमं पद्यमवतारयति– **सङ्ग्राह्यार्थेति**–संग्रहगृहीतार्थेत्यर्थः । विवृणोति– **एकेतीति** । मूलोक्तान् जीवगोचरानेकादिभेदान् स्पष्टयति– **चेतनत्वेनेति** । जीवगोचरा के ? इत्यपेक्षायामाह– **सङ्ग्रहप्रकारा** इति । कुत्रोदीरिता इत्याकाङ्क्षानिवृत्तये त्वाह– **सिद्धान्त** इति । अन्यत् स्पष्टम् ॥ २३ ॥

चतुर्विंशतितमं पद्यमवतारयति– **नैगमेति** । **अस्य** सङ्ग्रहनयस्य । विवृणोति– **उपचारा इतीति** । **एतदुभयापेक्षया** नैगम-व्यवहारोभयापेक्षया । भावार्थमुपदर्शयति– **तथा चेति**– नैगम-व्यवहारोभयापेक्षया स्वविषयोत्कर्षाभिमानिनः सङ्ग्रहस्य नैगमव्यवहाराभीष्टोपचारविशेपानभ्युपगन्तृत्वे च सति । **अस्य** सङ्ग्रहनयस्य । '**शुद्धत्वम्**' इत्यस्य 'नापोद्यते' इत्यनेनान्वयः, '**स्वसमवायोचित०**' इति स्थाने 'स्वसमयोचित०' इति पाठः, स्वस्य– सङ्ग्रहनयस्य, यः समयः–तद्विषयावबोधको राद्धान्तः, तदुचितौ– तदनुगुणौ यावुपचारविशेषौ तयोः । **क्वचित्** स्वविषये कस्मिंश्चित् । **अवलम्बनेनापि** स्वीकरणेनापि । **नापोद्यते** न निषिद्ध्यते, यदि सामान्यत उपचार-विशेषयोरनभ्युपगन्तृत्वमेव सङ्ग्रहस्य शुद्धत्वमभिमतं स्यात् तदा स्वसमयोचितोपचारविशेषाभ्युपगमेनापि उक्तलक्षणं शुद्धत्वमस्यापोदितमेव स्यात्, न चैवम्, किन्तु नैगम-व्यवहाराभ्युपगतोपचारविशेषानभ्युपगन्तृत्वमेवास्य शुद्धत्वम्, तच्च स्वसमयोचितोपचारविशेषाभ्युपगन्तृत्वेऽपि निराकुलमवतिष्ठत एवेत्यर्थः ॥ २४ ॥

व्यवहारलक्षकं पञ्चविंशतितमं पद्यमवतारयति– **व्यवहारमिति** । विवृणोति– **उपचारेणेतीति** । **नानेति**– नानाव्यक्तिषु यः शब्दस्य सङ्केतस्तस्य ग्रहणे समर्थ इत्यर्थः । **शब्देति**– शब्दात्मकं यत् प्रमाणं शब्दोपजीवि च यदनुमानादिकं प्रमाणं ताभ्यामतिरिक्तं यत् प्रत्यक्षादि प्रमाणं तत्पक्षे पतितुं शीलं यस्य तादृशः, प्रत्यक्षाद्यापामरसाधारणमान्यप्रमाणगृहीतार्थाभ्युपगमप्रवण इति यावत् । एव च सति व्यवहारस्य किं लक्षणं सिद्ध भवतीत्यपेक्षायामाह– **उपचारेति**– उपचारबहुलाद्यध्यवसायवृत्तित्वस्य जातिविशेषणतयोपन्यासान्नैगमत्वादिजातिव्युदासः, नयत्वव्याप्यत्वविशेषणोपादानान्नयत्व-ज्ञानत्वादिजातिव्युदासः । **तेन** जातिघटितलक्षणकरणेन । एतच्च ,लक्षणं तत्त्वार्थभाष्यानुसारीत्यावेदयति– **लौकिकसमेति** । निर्युक्तिग्रन्थानुसारिव्यवहारलक्षणमावेदयितुमाह– **वच्चइ०** इति–" व्रजति विनिश्चितार्थं व्यवहारः सर्वद्रव्येषु " इति संस्कृ-

सव्वदव्वेसु ” [ विशेषावश्यकनिर्युक्तिगाथा–२१८३ ] त्ति, निर्युक्तिप्रतीकपर्यालोचनायां तु विनिश्चितार्थप्रापकत्वमस्य लक्षणं लभ्यते, विनिश्चितार्थप्राप्तिश्चास्य सामान्यानभ्युपगमे सति विशेषाभ्युपगमात्, अत एव विशेषेणावह्रीयते निराक्रियते सामान्यमनेनेति निरुक्त्युपपत्तिः, जलाहरणाद्युपयोगिनो घटादिविशेषानेवायमङ्गीकरोति, न तु सामान्यं तस्यार्थक्रियाऽहेतुत्वात्, नहि ‘गां बधान’ इत्युक्ते कश्चिद् गोत्वं बद्धुमध्यवस्यति, अनुगतव्यवहारश्चान्यापोहादिनाऽप्युपपत्स्यते, अखण्डाभावनिवेशाच्च नान्योन्याश्रयः, अस्तु वा सर्वत्र शब्दानुगमादेवानुगतत्वव्यवहारः, कारणत्व-व्याप्यत्वादावित्थमेवाभ्युपगमादित्यादिकं प्रपञ्चितमन्यत्र ॥ २५ ॥

---

तम्, विशेषेण विशेषरूपेण निश्चितस्यार्थस्य प्रापकत्वं विनिश्चितार्थप्रापकत्व तदस्य व्यवहारस्य लक्षणं निरुक्तनिर्युक्तिप्रतीकपर्यालोचनायां कृताया लभ्यत इत्यर्थः । विनिश्चितार्थप्रापकत्वं कथ व्यवहारस्येत्यपेक्षायामाह– **विनिश्चितार्थप्राप्तिश्चे**ति । **अस्य** व्यवहारस्य । **अत एव** सामान्यानभ्युपगमे सति विशेषाभ्युपगमतो व्यवहारस्य विनिश्चितार्थप्रापकत्वादेव । **विशेषेण** स्वाभ्युपगमविशेषेण, अनेन विशेषाभ्युपगमो व्यवहारस्यायाति । **अनेन** व्यवहाराख्यनयेन । **निरुक्त्युपपत्तिः** व्यवहारपदनिर्वचनमुपपद्यते, यदि व्यवहारः सामान्यमभ्युपेयाद् विशेषं वा नाभ्युपगच्छेत् तदा निरुक्तव्यवहारपदनिरुक्तिर्नोपपन्ना स्यादित्यर्थः । अस्य सहेतुक विशेषाभ्युपगमनं सामान्यानभ्युपगमन च दर्शयति– **जले**ति– व्यवहारो हि लोकयात्रानिर्वाहक इति लोकव्यवहारो यादृशेनार्थेन सम्पद्यते तमर्थमुररीकरोति यश्चार्थो न व्यवहारसम्पादकस्तं च तिरस्करोति घटादिव्यक्तिलक्षणविशेषेभ्य एव जलाहरणादिलक्षणलोकव्यवहार उपजायत इति जलाहरणाद्युपयोगिनो घटादिविशेषानेवायं व्यवहारनयोऽङ्गीकरोति । एवकारलभ्यमेवार्थमाह– **न तु सामान्यमि**ति– सामान्य पुनर्व्यवहारो नाङ्गीकरोति, यत एव सामान्य न लोकव्यवहारोपयोगि तत एव न तत्स्वीकरोतीत्यावेदनायाह– **तस्ये**ति– सामान्यस्येत्यर्थ. । **अर्थक्रियाकारित्वाभावात्** जलाहरणादिलक्षणार्थक्रियाकारित्वाभावात् । अर्थक्रियाकारित्वाभावमेव सामान्यस्य व्यवस्थापयति– **नही**ति– अस्य ‘अध्यवस्यति’ इत्यनेनान्वयः । ननु यदि सामान्यमर्थक्रियाकारि न भवेदनुगतव्यवहारस्तदेकनिबन्धनो न स्यादित्यत आह– **अनुगतव्यवहारश्चे**ति । ननु अन्यापोहो गोभिन्नभिन्नत्वम्, तत्र यत्किञ्चिद्गोभिन्नं गोव्यक्त्यन्तरं तद्भिन्नत्व न तस्यां गवीत्यतोऽस्य नानुगतत्वम्, यदि च तत्र गोत्वावच्छिन्नप्रतियोगिताको भेदो निविशते तदा गोत्वावच्छिन्नप्रतियोगिताकभेदवती या यत्किञ्चिदश्वव्यक्तिस्तद्भिन्नत्व गवादिभिन्ने तदश्वव्यक्तिभिन्ने पदार्थान्तरेऽपीति तत्रापि गौर्गौरित्यनुगतव्यवहारः स्यात् तद्वारणाय गोत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदो यद्यगोऽपोहः, तत्र प्रविष्टं गोत्वं पुनरप्यगोव्यावृत्तिरूपम्, तत्राप्युक्तदिशा प्रविष्टं गोत्वमगोव्यावृत्तिरूपमित्येवं दिशाऽनवस्थाप्रसङ्गः, स एवागोऽपोहो यदि स्वशरीरसन्निविष्टगोत्वमपि तदा स्वस्यैव स्वापेक्षणादात्माश्रयः, यदि च तत्र प्रविष्टा गोव्यक्तयो गौर्गौरित्यनुगतव्यवहारविषया एवेति गोत्वमपोहशरीरसन्निविष्टं गौर्गौरित्यनुगतव्यवहारविषयत्व तदोक्तापोहस्य निरुक्तानुगतव्यवहारापेक्षणान्निरुक्तानुगतव्यवहारस्य च निरुक्तान्यापोहापेक्षणादन्योऽन्याश्रय इत्यत आह– **अखण्डाभावनिवेशाच्चे**ति– यावत्यो जगति गोव्यक्तयस्तद्भेदकूटावच्छिन्नप्रतियोगिताकभेद एवागोपोह., स च तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वेन रूपेण नान्यापोहस्वरूपतयाऽभ्युपगम्यते येन निरुक्तभेदकूटस्यासर्वज्ञदुर्ज्ञेयत्वेन तदवच्छिन्नप्रतियोगिताकभेदस्याप्यसर्वज्ञदुर्ज्ञेयत्व स्यात्, किन्त्वेकस्य तस्य तद्व्यक्तेः स्वरूपतो भानस्याभ्युपगमेन तद्व्यक्तिरूपतयैवानुगतव्यवहारे भानम्, प्रतियोगिविशेषितरूपेणैव सन्निविष्टस्याभावस्य स्वरूपतो भानं निषिद्ध न तु तद्व्यक्त्यात्मनाऽखण्डस्य, तथा चाखण्डस्य निरुक्तभेदरूपाभावस्यान्यापोहस्वरूपे निवेशात् पुनरन्योन्याश्रयो न भवतीत्यर्थः । अथवा सर्वासु गोव्यक्तिषु प्रत्येक गोपदस्य सङ्केतलक्षणशक्तिरूपसम्बन्ध इति तेन सम्बन्धेन गोशब्द एव सर्वत्रानुगत इति सङ्केतलक्षणसम्बन्धबलाच्छब्दानुगमादेवानुगतत्वव्यवहार इत्याह– **अस्तु वे**ति । जातिमन्तराऽप्यनुगतत्वव्यवहारः सामान्यवादिनामप्यभिमत एव, कथमन्यथा ‘दण्डः कारणम्, वह्निः कारणम्,’ इति कारणत्वस्य जातिस्वरूपस्याभावेऽप्यनुगतकारणत्वव्यवहार, व्याप्यत्वस्य जातिरूपस्याभावेऽपि ‘धूमो व्याप्य., आलोको व्याप्यः’ इत्येवमनुगतव्याप्यत्वव्यवहार इत्याह– **कारणत्वे**ति । **इत्थमेवाभ्युपगमात्** शब्दानुगमादेवानुगतत्वव्यवहारोपगमादित्यर्थः ॥ २५ ॥

उपचारबाहुल्यं विवृणोति—

**दह्यते गिरिरध्वासौ, याति स्रवति कुण्डिका ।**
**इत्यादिरुपचारोऽस्मिन्, बाहुल्येनोपलभ्यते ॥ २६ ॥**

**नयामृत०**—दह्यत इति । 'असौ गिरिर्दह्यते' अत्र गिरिपदस्य गिरिस्थतृणादौ लक्षणा, भूयोदग्धत्वप्रतीतिः प्रयोजनम् । 'असावध्वा याति' अत्राध्वपदस्याध्वनि गच्छति पुरुषसमुदाये लक्षणा, नैरन्तर्यप्रतीतिः प्रयोजनम् । 'कुण्डिका स्रवति' इत्यत्र कुण्डिकापदस्य कुण्डिकास्थजले लक्षणा, निबिडत्वप्रतीतिः प्रयोजनम् । सर्वत्रोद्देश्यप्रतीतिर्लक्ष्यार्थे मुख्यार्थाभेदाध्यवसायात्मकव्यञ्जनामहिम्ना व्युत्पत्तिमहिम्ना वेति विवेचितमन्यत्रेत्यादिरुपचारः– गौणः, अस्मिन्– व्यवहारनये, बाहुल्येन– इतरनयापेक्षया भूम्नोपलभ्यते ॥ २६ ॥

विस्तृतार्थं विवृणोति—

**विस्तृतार्थो विशेषस्य, प्राधान्यादेष लौकिकः ।**
**पञ्चवर्णादिभृङ्गादौ, श्यामत्वादिविनिश्चयात् ॥ २७ ॥**

**नयामृत०**—विस्तृतार्थ इति । विशेषस्य प्राधान्यादेष विस्तृतार्थः, तत्प्राधान्यं च व्यक्तिष्वेवोपयुक्ततया सङ्केताश्रयणादिना बोध्यम्, तथा वस्तुतः पञ्चवर्णावयवारब्धशरीरत्वेन पञ्चवर्णादिमति भृङ्गादौ श्यामत्वादेरेव विनिश्चयादेष लौकिकः, यथा हि लोको निश्चयतः पञ्चवर्णेऽपि भ्रमरे कृष्णवर्णत्वमेवाङ्गीकरोति तथाऽयमपीत्यस्य लौकिकसमत्वमिति नयविदः । न च 'कृष्णो भ्रमरः' इत्यत्र

---

षड्विंशतितमं पद्यमवतारयति– **उपचारेति** । विवृणोति– **दह्यत इतीति** । **अत्र** असौ गिरिर्दह्यत इति वाक्ये, घटकत्वं सप्तम्यर्थः, एवमग्रेऽपि । गिरिपदस्य गिरिस्थतृणादौ लक्षणा अनादितात्पर्यमूलकलक्षणालक्षणनिरूढलक्षणा न, किन्तु प्रयोजनवल्लक्षणास्वरूपाऽऽधुनिक्येवातः प्रयोजनमत्र वक्तव्यमित्यपेक्षायामाह– **भूय** इति । **अत्र** असावध्वा यातीति वाक्ये, **'निबिडत्वप्रतीतिः'** अस्य स्थाने 'अनिबिडत्वप्रतीतिः' इति पाठः, यत इयमनिबिडा प्रशिथिलावयवा कुण्डिका अत एतन्निहितं जलं बहिर्निर्गच्छतीति । ननु लक्षणया वृत्त्या गिरिस्थतृणादीनामेव प्रतीतिरुपजायते, भूयोदग्धत्वादौ च गिरिपदादेर्न शक्तिर्नापि लक्षणेति तत्प्रतीतिलक्षणं प्रयोजन केन भवतीत्यपेक्षायामाह–**सर्वत्रेति**– दह्यते गिरिरित्याद्युपचरितवाक्यमात्रे इत्यर्थः । **उद्देश्येति**– उद्देश्या यदर्थं लाक्षणिकपदघटितवाक्योच्चारणं सा, सा चासौ प्रतीतिश्चोद्देश्यप्रतीतिः, प्रयोजनीभूता दग्धत्वादिप्रतीतिः । **लक्ष्यार्थे** गिरिस्थतृणादिरूपे, मुख्यार्थस्य– गिर्यादेः, अभेदाध्यवसायः– अभेदारोपः, तदात्मिका या व्यञ्जनावृत्तिस्तन्महिम्ना– तत्सामर्थ्येन । **वा** अथवा, व्युत्पत्तिः– शब्दविशेषसमभिव्याहारलक्षणाकाङ्क्षाज्ञानस्य शाब्दबोधविशेषं प्रति कारणत्वज्ञानलक्षणा, तन्महिम्ना– तद्बलात्, नह्युक्तेभ्यो वाक्येभ्य. सर्वस्य प्रतिपत्तुरविशेषेण भूयोदग्धत्वप्रतीत्यादिरुपजायते, किन्तु शेमुषीविशेषशालिन एव प्रमातुरुक्तवाक्येभ्यो निरुक्तव्युत्पत्तिबलात् तथाप्रतीतिरुपजायते, तथा च व्यञ्जनावृत्त्युपगमे व्यञ्जनाख्यवृत्त्यैवोद्देश्यप्रतीति., तदनभ्युपगमे चोक्तव्युत्पत्तिबलात् । एतद्विशेषप्रतिपत्तये विशेषजिज्ञासुभिरेतद्रहस्यावेदकं ग्रन्थान्तरमवलोकनीयमित्युपदेशाभिप्रायेणाह– **इति विवेचितमन्यत्रेति**– **'विवेचितमन्यत्रेत्यादिरुपचारः'** इत्यस्य स्थाने 'विवेचितमन्यत्र, इत्यादिरुपचार.' इति पाठो बोध्यः, अन्यत् स्पष्टम् ॥ २६ ॥

विवृणोति– **विस्तृतार्थ इतीति** । **एषः** व्यवहारनय., एवमग्रेऽपि, **तत्प्राधान्यं च** विशेषप्राधान्यं च, अस्य 'बोध्यम्' इत्यनेनान्वयः । **लौकिकः** लौकिकसमः । व्यवहारनयस्य लौकिकसमत्वमेव भावयति– **यथा हीति** । **लोकः** निश्चयनयानभिज्ञोऽपरीक्षको जनः, अस्य 'अङ्गीकरोति' इत्यनेनान्वय. । **निश्चयतः** निश्चयनयेन, यद्यपि निश्चयनयेन भ्रमर. पञ्चवर्णस्तथापि व्यवहारो लौकिको व्यवहारनयमाश्रित्यैव प्रवर्तत इति व्यवहारैकनिबद्धचेता लोको भ्रमरे कृष्णवर्णत्वमेव यथा स्वीकरोतीत्यर्थः । **तथाऽयमपीति**– व्यवहारोऽपि भ्रमरे कृष्णवर्णत्वमेव स्वीकरोतीत्यर्थः । **इति** एतस्मात्

विद्यमानेतरवर्णप्रतिषेधाद् भ्रान्तत्वम्, अनुद्भूतत्वेनेतराविवक्षणात् तद्व्युदासेऽतात्पर्यात्, उद्भूतवर्णविवक्षाया एवाभिलापादिव्यवहारहेतुत्वात्, कृष्णादिपदस्योद्भूतकृष्णादिपरत्वाद् वा, अतात्पर्यज्ञं प्रत्येतस्याबोधत्वेनाप्रामाण्येऽपि तात्पर्यज्ञं प्रति प्रामाण्यात्, लोकव्यवहारानुकूलविवक्षाप्रयुक्तत्वेन च भावसत्यत्वाविरोधात्, अत एव 'पीतो भ्रमरः' इति न व्यवहारतो भावसत्यम्, लोकव्यवहाराननुकूलत्वात्, नापि निश्चयतः, पञ्चवर्णपर्याप्तिमति पञ्चवर्णप्रकारत्वाभावेनावधारणाक्षमत्वादित्यसत्यमेवेति दिक् ॥२७॥

ननु 'कृष्णो भ्रमरः' इति वाक्यवत् 'पञ्चवर्णो भ्रमरः' इति वाक्यमपि कथं न व्यवहारनयानुरोधि ? तस्यापि लोकव्यवहारानुकूलत्वात्, आगमबोधितार्थेऽपि व्युत्पन्नलोकस्य व्यवहारदर्शनात्, लोकबाधितार्थबोधकवाक्यस्याव्यवहारकत्वे च 'आत्मा न रूपवान्' इत्यादिवाक्यस्याप्यव्यवहारकत्वा-

कारणात्। **अस्य** व्यवहारनयस्य। ननु 'कृष्णो भ्रमर.' इति यज्ज्ञान तद् भ्रमरे कृष्णत्वमवभासयत् तत्र विद्यमानमपि कृष्णेतरवर्णं प्रतिक्षिपतीति भ्रान्तं तत् स्यादित्याशङ्क्य प्रतिक्षिपति– **न** चेति। कृष्णेतरवर्णस्य भ्रमरे सतोऽप्यनुद्भूतत्वेन विवक्षाभावादेव कृष्णवर्णप्रकारकभ्रमरविशेष्यकं तज्ज्ञानम्, न तु कृष्णेतरवर्णाभावस्तत्र प्रतिभासते इति नास्य भ्रमत्वं तज्ज्ञानकारणीभूत' कृष्णो भ्रमर 'इतिवाक्यप्रयोक्तुर्भ्रमरे कृष्णेतरवर्णप्रतिषेधे तात्पर्याभावेन तत्र तत्प्रतिभासस्य वक्तुमशक्यत्वादिति निषेधहेतुमुपदर्शयति– **अनुद्भूतत्वेनेति**। **इतराविवक्षणात्** कृष्णेतरवर्णाविवक्षणात्। **तद्व्युदासे** कृष्णेतरवर्णप्रतिषेधे। **अतात्पर्यात्** 'कृष्णो भ्रमरः' इति वक्तुस्तात्पर्याभावात्। ननु यदि भ्रमरे कृष्णेतरवर्णो विद्यते तर्ह्यनुद्भूतोऽपि स यदि विवक्ष्येत तर्हि 'शुक्लो भ्रमर., रक्तो भ्रमर.' इत्याद्यभिलाप. स्यादेवेत्यत आह– **उद्भूतेति**– तथा चानुद्भूतवर्णविवक्षाऽपि यदि कस्यचित् स्यात् तदाप्यभिलापादिव्यवहारस्वरूपायोग्यया तयाऽनुद्भूतवर्णाभिलापादिव्यवहारो न स्यादेवेत्यर्थः। अथवा 'कृष्णो भ्रमरः' इत्यत्र कृष्णपदमुद्भूतकृष्णपरम्, तथा चोद्भूतकृष्णेतरोद्भूतरूपस्य व्युदासेऽपि न भ्रमत्वं भ्रमरे कृष्णेतरोद्भूतरूपाभावादित्याह– **कृष्णादिपदस्येति**। य प्रतिपत्ता 'कृष्णो भ्रमरः' इत्यत्र 'कृष्णपदमुद्भूतकृष्णबोधनेच्छयोच्चरितम्' इत्येव तात्पर्यं नावधारयति तस्योद्भूतकृष्णत्वप्रकारकभ्रमरविशेष्यकबोधस्योक्तवाक्यादजायमानत्वेन जायमानस्य च कृष्णेतररूपप्रतिक्षेपसंवलितकृष्णत्वबोधस्याप्रमात्वेनाप्रमात्मकोक्तबोधजनकत्वात् तमतात्पर्यज्ञं प्रतिपत्तारं प्रत्युक्तवाक्यस्याप्रामाण्येऽपि यः प्रतिपत्ताऽत्र 'कृष्णपदमुद्भूतकृष्णबोधनेच्छयोच्चरितम्' इत्येव तात्पर्यमवधारयितु शक्नोति तस्योक्तवाक्यत उद्भूतकृष्णत्वप्रकारकभ्रमरविशेष्यकबोधस्य प्रमात्मकस्य जायमानत्वेन तादृशप्रमात्मकबोधजनकस्योक्तवाक्यस्य तं तात्पर्यज्ञं प्रतिपत्तार प्रति प्रामाण्यं निराकुलमेवेत्याह– **अतात्पर्यज्ञमिति**। **एतस्य** 'कृष्णो भ्रमर.' इति वाक्यस्य। '**अबोधत्वेन**' इति स्थाने 'अबोधकत्वेन' इति पाठो युक्त., तस्य 'प्रमात्मकबोधजनकत्वाभावेन' इत्यर्थः। **लोकेति**– लोकस्य यो भ्रमरस्य कृष्णत्वेन व्यवहारस्तस्यानुकूला या विवक्षा– उद्भूतकृष्णवर्णविवक्षा तत्प्रयुक्तत्वेन तज्जन्यत्वेन 'कृष्णो भ्रमरः' इति वाक्यस्य भावसत्यत्वाविरोधात्, भ्रमरस्य पञ्चवर्णत्वेऽपि कृष्णरूपमेव तत्रोद्भूतं न तु पीतादिकमित्युक्तविवक्षा वस्त्ववलम्बिनीति तज्जन्यस्योक्तवाक्यस्य भावसत्यत्वविरोधाभावादित्यर्थ। **अत एव** लोकव्यवहारानुकूलविवक्षाप्रयुक्तत्वस्य भावसत्यत्वनियामकत्वादेव। **नाऽपि निश्चयत** इति– निश्चयनयतोऽपि 'पीतो भ्रमर.' इति वाक्य न भावसत्यमित्यर्थ.। तत्र हेतुमाह– **पञ्चवर्णपर्याप्तिमतीति**– भ्रमर इति शेष। **अवधारणाक्षमत्वादिति**– 'कृष्णो भ्रमरः' इत्यत्र कृष्णपदस्योद्भूतकृष्णपरत्वेन 'कृष्ण एव भ्रमरः' इत्यवधारण सम्भवति, भ्रमरस्य पञ्चवर्णत्वेऽपि कृष्णस्यैवोद्भूतत्वादिति भवति तस्य निश्चयतोऽपि प्रामाण्यम्, तथा 'पञ्चवर्णो भ्रमर' इत्यत्राऽपि 'भ्रमर पञ्चवर्ण एव' इत्यवधारण सम्भवति, पञ्चवर्णपर्याप्तिमति भ्रमरे पञ्चवर्णलक्षणप्रकारस्यावधारणोपपत्ते, 'पीतो भ्रमर.' इत्यत्र 'पीत एव भ्रमर.' इत्यवधारणं न सम्भवति, पञ्चवर्णपर्याप्तिमत्येकवर्णमात्रपर्याप्तेरसम्भवात्, अतो व्यवहारतो निश्चयतश्चासत्यमेव 'पीतो भ्रमर' इति वाक्यमित्यर्थः ॥ २७ ॥

अष्टाविंशतितमं पद्यमवतारयति– **नन्वित्यादिना**। **तस्यापि** 'पञ्चवर्णो भ्रमरः' इति वाक्यस्यापि। ननु [illegible]पुरुपादिस्वरूपलोकव्यवहारानुकूलत्व 'पञ्चवर्णो भ्रमर.' इति वाक्यस्य नास्तीत्यत आह– **आगमेति**– भ्रमरगतपञ्चवर्णात्मकोऽर्थ आगमबोधितस्तस्मिन्नपि। **व्युत्पन्नलोकस्य** आगमार्थावबोधलक्षणव्युत्पत्तिमत. परीक्षकादिलोकस्य। ननु यद्यपि भ्रमरगतपञ्चवर्णलक्षणोऽर्थ आगमबोधितस्तथाऽपि स लोकबाधित, लोके 'पञ्चवर्णो भ्रमरो न' इत्येवं बाधदर्शनात्, तथा च

पातात् तस्याप्यात्मगौरवत्वादिबोधकलोकप्रमाणबाधितार्थबोधकत्वात्, अभ्रान्तलोकाबाधितार्थबोधकत्वं चोभयत्र तुल्यम् । प्रत्यक्षनियतैव व्यवहारिविषयता न त्वागमादिनियतेति तु व्यवहारदुर्नयस्य चार्वाक-मतप्रवर्तकस्य मतम्, न तु व्यवहारनयस्य जैनदर्शनस्पर्शिन इति शङ्कायामाह—

**पञ्चवर्णाभिलापेऽपि श्रुतव्युत्पत्तिशालिनाम् ।**
**न तद्बोधे विषयता परांशे व्यावहारिकी ॥ २८ ॥**

**नयामृत०**—पञ्चेति । 'पञ्चवर्णो भ्रमरः' इति शब्दाभिलापेऽपि, श्रुतव्युत्पत्तिशालिनां—तत्त-न्नयाभिप्रायप्रयुक्तः शब्दस्तत्र नयीयविषयतयैव शाब्दबोधजनक इति सिद्धान्तसिद्धकार्यकारणभावग्रह-वताम्, तद्बोधे— उक्ताभिलापजन्यशाब्दबोधे, परांशे— कृष्णेतरतरवर्णांशे, व्यावहारिकी विषयता नास्ति, तथा च 'पञ्चवर्णो भ्रमरः' इति शाब्दबोधे कृष्णांशे व्यावहारिक्या सम्वलिता, इतरांशे च शुद्धा नैश्चयिकी विषयता, अदृष्टार्थे सर्वत्र सम्बलनसम्भवेऽपि लोकप्रसिद्धार्थानुवादस्थले क्वचिदेव सम्बलना-

लोकबाधितार्थबोधकस्य 'पञ्चवर्णो भ्रमरः' इति वाक्यस्य न लोकव्यवहारानुकूलत्वमित्यत आह— **लोकबाधितेति** । **तस्यापि** 'आत्मा न रूपवान्' इत्यादिवाक्यस्यापि । नन्वभ्रान्तलोकप्रमाणबाधितार्थबोधकवाक्यस्यैवाव्यवहारकत्वम्, आत्मगौरवादिबोधकलोकप्रमाणं च भ्रान्तमेवेत्यभ्रान्तलोकप्रमाणबाधितार्थकत्वाभावाद् 'आत्मा न रूपवान्' इत्यादिवाक्यस्य नाव्यवहारकत्वप्रसङ्ग इत्यत आह— **अभ्रान्तेति** । **उभयत्र** 'आत्मा न रूपवान्' इति वाक्ये 'पञ्चवर्णो भ्रमरः' इति वाक्ये च । **तुल्यं** समानम्, यथा आत्मगौरवादिबोधकलोकप्रमाणस्य भ्रान्तत्वेनाभ्रान्तलोकाबाधितार्थबोधकत्वम् 'आत्मा न रूपवान्' इत्यादिवाक्यस्य तथा भ्रमरे कृष्णत्वबोधकलोकप्रमाणस्य भ्रान्तत्वेनाभ्रान्तलोकाबाधितार्थबोधकत्वं 'पञ्चवर्णो भ्रमरः' इति वाक्यस्यापीत्यर्थः । ननु यत्रैव प्रत्यक्षविषयत्वं तत्रैव व्यवहारविषयत्वमिति व्यवहारविषयता प्रत्यक्षविषयता-व्याप्यैव, तथा च व्यापकस्य प्रत्यक्षविषयत्वस्य भ्रमरगतपञ्चवर्णेऽभावाद् व्याप्यस्य व्यवहारविषयत्वस्यापि तत्राभाव इति 'पञ्चवर्णो भ्रमरः' इति वाक्यं न व्यवहारनयानुरोधीत्यत आह— **प्रत्यक्षनियतैवेति**— अत्र प्रत्यक्षस्य विषयतासम्बन्धेन व्यापकत्वं बोध्यम् । **व्यवहारिविषयता** व्यवहारिणो लोकप्रमाणस्य विषयता, अथवा 'व्यवहारीयविषयता' इत्येव पाठः । **व्यवहारदुर्नयस्येति**— चार्वाकमतप्रवर्तको व्यवहारदुर्नयो हि प्रत्यक्षमेवैकं प्रमाणमिति स्वीकरोति, तन्मते यत्र प्रत्यक्षविषयस्तत्रास्त्येवेति भवति प्रत्यक्षाविषयस्य व्यवहाराविषयत्व तन्मते, जैनदर्शनस्थितव्यवहारनयस्त्वागमादिपरोक्ष-प्रमाणमप्युररीकरोति, तन्मते प्रत्यक्षाविषयोऽपि व्यवहर्तुं शक्यत एवेति पञ्चवर्णस्य भ्रमरगतस्य प्रत्यक्षाविषयस्याप्यागम-प्रमाणविषयत्वेन व्यवहारविषयत्वं स्यादेवेत्यवतरणिकार्थः ।

विवृणोति— **पञ्चेतीति** । **'पञ्चवर्णाभिलापेऽपि'** इति मूलमधृत्वैव यत् **'पञ्चवर्णो भ्रमरः' इति 'शब्दा-भिलापेऽपि'** इति विवरणं तद् विवरणे मूलाक्षरसन्निवेशोऽस्त्येवेति तत एव मूलज्ञानं सुकरमित्यभिप्रायेण, अग्रे च न पृथङ्मूलधारणमन्तरेण तद्विवरणे तद्विवरणत्वावगतिरित्यभिप्रायेण मूलमुपन्यस्य तद्विवरणमिति बोध्यम् । **'श्रुतव्यु-त्पत्तिशालिनाम्'** इति मूलस्य विवरणम्— **'तत्तन्नय०'** इत्यारभ्य **'ग्रहवताम्'** इत्यन्तम्, **'स्तत्र नयीय-विषयतैव'** इत्यस्य स्थाने 'स्तत्तन्नयीयविषयतैव' इति पाठो युक्तः, यः शब्दो यन्नयाभिप्रायेण प्रयुक्तः स शब्दस्तन्नया-भिप्रेतस्ववाच्यतासम्बन्धेन तन्नयीयविषयतासम्बन्धेन शाब्दबोधं प्रति जनक इत्याकारको यः सिद्धान्तसिद्धकार्यकारणभाव-ग्रहस्तद्वतां प्रतिपत्तॄणामित्यर्थः । **उक्ताभिलापेति**— 'पञ्चवर्णो भ्रमरः' इत्यभिलापेत्यर्थः । **तथा च** निरुक्तश्रुतव्युत्पत्ति-शालिनां 'पञ्चवर्णो भ्रमर·' इति वाक्यजन्यशाब्दबोधे कृष्णेतरवर्णांशे व्यावहारिक्या विषयताया अभावे च । **व्याव-हारिक्या संवलिता** व्यावहारिक्या विषयतया सहिता, 'नैश्चयिकी विषयता' इत्यनेनास्य सम्बन्धः । **इतरांशे च** कृष्णेतरवर्णांशे पुनः । 'आत्मा न रूपवान्' इति वाक्यजन्यबोधे आत्मगतरूपाभावलक्षणाप्रत्यक्षविषयार्थे नैश्चयिकी विषयता व्यावहारिकविषयतासंवलिताऽपि । 'पञ्चवर्णो भ्रमरः' इति वाक्यस्य कृष्णवर्णरूपलोकप्रसिद्धार्थेऽनुवादरूपत्वेन तदंश एव तज्जन्यबोधीया निश्चयीयविषयता व्यावहारिकविषयतासवलिता न तु कृष्णेतरवर्णांशे इत्यभ्युपगमे न कोऽपि दोष इत्याह- **अदृष्टार्थ** इति— अदृष्टार्थे व्यवहारो न प्रत्यक्षप्रमाणतः किन्तु परोक्षप्रमाणत इति सर्वत्रादृष्टेऽर्थे परोक्षप्रमाणप्रवृत्तिसम्भवेन

भ्युपगमादिति न कश्चिद् दोष इति भावनीयम् ॥ २८ ॥

ऋजुसूत्रं लक्षयति—

**भावत्वे वर्तमानत्वव्याप्तिधीरविशेषिता ।**
**ऋजुसूत्रः श्रुतः सूत्रे शब्दार्थस्तु विशेषितः ॥ २९ ॥**

**नयामृत०**—भावत्व इति । भावत्वे वर्तमानत्वव्याप्तिधीः— अतीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृता, अविशेषिता— शब्दाद्यभिमतविशेषापक्षपातिनी, सूत्रे ऋजुसूत्रनयः श्रुतः, सूत्रं च— "पच्चुप्पण्णग्गाही उज्जुसुओ णयविही मुणेयव्वो" [विशेषावश्यकनिर्युक्तिगाथा—२१८४] त्ति, अत्र प्रत्युत्पन्नमेव गृह्णातीत्येवंशील इत्यत्रार्थे तात्पर्यादुक्तार्थलाभः, अविशेषितपदकृत्यमाह— शब्दार्थस्तु विशेषित इति, तथा च विशेषितार्थग्राहिणि शब्दादिनये नातिव्याप्तिरिति भावः, "सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः" [तत्त्वार्थसूत्रे, अ० १, सू० ३५] इति तत्त्वार्थभाष्यं व्यवहारातिशायित्वलक्षणमभिप्रेत्य तदतिशयप्रतिपादनार्थमेतदुक्तम्, व्यवहारो हि सामान्यं व्यवहारानङ्गत्वान्न सहते, कथं तर्हि-

तत्प्रयुक्तस्य व्यवहारस्याप्यविशेषेण सर्वत्र सम्भवेन तन्निरूपितविषयताऽपि सर्वत्रावश्यकीति तत्सवलितत्वं सर्वत्रादृष्टेऽर्थे निश्चयीयविषयताया इत्यभिसन्धि. ॥ २८ ॥

एकोनत्रिंशत्तमं पद्यमवतारयति— **ऋजुसूत्रमिति** । विवृणोति— **भावत्व इतीति**— यत्र यत्र भावत्वं तत्र वर्तमानत्वमित्येवं व्याप्तिज्ञानमृजुसूत्र इत्यर्थः । '**वर्तमानत्वव्याप्तिधीः**' इति मूलस्य विवरणम्— **अतीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृतेति**, अतीता-ऽनागतकालसम्बन्ध्यपि भावो वर्तमानकालसम्बन्धितामपि वर्तमानतादशायामनुभवत्येवेति यत्र यत्र भावत्व तत्र वर्तमानत्वमित्येव व्याप्त्युपगमः स्थिरभावाभ्युपगन्तुर्द्रव्यार्थिकनयस्यापीत्यतोऽतीतेत्यादि विवरणमादृतम्, तथा च यत्र यत्र भावत्वं तत्रातीतानागतसम्बन्धाभाव इत्येव व्याप्तेरभ्युपगन्तृत्वं न द्रव्यार्थिकनयस्य, तदभिमते स्थिरे भावे अतीता-ऽनागतसम्बन्धस्यैव भावेनातीता-ऽनागतसम्बन्धाभावस्याभावात्, अतीता-ऽनागतसम्बन्धाभावाभाववति स्थिरे भावे भावत्वस्य सत्त्वेन व्यभिचारिणो भावत्वस्यातीतानागतसम्बन्धाभावव्याप्यत्वाभावेन तादृगव्याप्यत्वाभ्युपगन्तृत्वस्य तत्रासम्भवादिति । भावत्वे अतीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृता शब्दादिनयानामपीति तेष्वतिव्याप्तेर्वारणार्थमुपात्तस्य '**अविशेषिता**' इत्यस्य विवरणम्— **शब्दाद्यभिमतविशेषापक्षपातिनीति**— तथा च शब्दाद्यभिमतविशेषानभ्युपगन्तृत्वे सति भावत्वगतातीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृत्वमृजुसूत्रत्वमित्येवमृजुसूत्रस्य लक्षणे पर्यवसिते न शब्दादिनयेऽतिव्याप्तिरित्याशयः । '**सूत्रे ऋजुसूत्रः श्रुतः**' इत्युक्तिरुक्तलक्षणस्य सिद्धान्तसिद्धत्वप्रतिपादनाय । कस्मिन् सूत्रे इति जिज्ञासायामाह— **सूत्रं चेति** । **पच्चुप्पण्ण०** इति— "प्रत्युत्पन्नग्राही ऋजुसूत्रो नयविधिर्ज्ञातव्यः" इति संस्कृतम् । नन्वत्राविशेपितत्वं विशेषणं नोपात्तमिति नैतत्सूत्रसम्मतत्वं निरुक्ताविशेषितत्वघटितलक्षणस्येत्यत आह— **अत्रेति**— एतत्सूत्रे इत्यर्थः । '**प्रत्युत्पन्नमेव**' इत्येवकारेणातीता-ऽनागतयोः शब्दाद्यभिमतविशेषस्य च व्यवच्छेदः । **तात्पर्यात्** प्रत्युत्पन्नग्राहीत्यस्य तात्पर्यात्, तेन चोक्तसूत्रतो निरुक्तलक्षणलाभ इत्याह— **उक्तार्थलाभ** इति । **तथा च** 'शब्दार्थस्तु विशेषित' इत्युपादानेन शब्दाद्यभिमतविशेषाग्राहित्वस्य लक्षणघटकत्वे च । ऋजुसूत्रस्य व्यवहारातिशायित्वफलाभिप्रायक तत्त्वार्थभाष्योक्तं तल्लक्षण दर्शयति— **सतामिति** । **तदतिशयप्रतिपादनार्थं** व्यवहारत ऋजुसूत्रस्यातिशयप्रतिपादनार्थम् । **एतदुक्तं** 'सताम्०' इत्यादि लक्षणमुक्तम् । अतिशयमेव प्रतिपादयति— **व्यवहारो हीति** । **हि** यतः, **व्यवहारः** व्यवहारनयः, **व्यवहारानङ्गत्वात्** विषयविधया लोकव्यवहृतिजनकत्वाभावात्, **सामान्यं** सत्त्वादिकम्, **न सहते** नाभ्युपगच्छति यदि, **तर्हि** तदा, **परकीयं** परसम्बन्धि, **अर्थमपि** धनादिकमपि, **कथं सहेत** कथं स्वीकुर्यादित्यन्वयः, सर्वत्र **अविचार्य** विचारमकृत्वैवेत्यस्य सम्बन्धः, परकीयार्थेनापि दानादिव्यवहारो न भवत्येवेति तदपि व्यवहारानङ्गत्वान्नाभ्युपगन्तुमर्हति व्यवहारः, अभ्युपगच्छति च परकीयधन व्यवहार इति तदज्ञानविलसितमेतस्येति परकीयधनाद्यनभ्युपगन्तुर्ऋजुसूत्रस्य हृदयम्, एवमग्रेऽपि, अतीतमनागतं च कथमविचार्य सहेतेत्यन्वय· । **तथाविधार्थवाचकम्** अतीता-ऽनागतार्थवाचकम-

र्थमपि परकीयमतीतमनागतं च, अभिधानमपि तथाविधार्थवाचकम्, ज्ञानमपि च तथाविधार्थविषयम्, अविचार्य सहेत ? इत्यस्याभिमानः, न चायं वृथाभिमानः, स्वदेश-कालयोरेव सत्ताविश्रामात्, यथाकथञ्चित्सम्बन्धस्य सत्ताव्यवहाराङ्गत्वेऽतिप्रसङ्गात्, न च देश-कालयोः सत्त्वं विहायान्यदतिरिक्तं सत्त्वमस्ति, ततो योग्यता प्रकृते स्यादसत्ताबोधोऽपि चात्र, तत्र खरशृङ्गादाविव सत्ताप्रतिक्षेऽपि विकल्पसिद्धेऽपि धर्मिणि निषेधप्रवृत्तेस्तत्र तत्र व्यवस्थापितत्वादिति दिक् ॥ २९ ॥

अन्यमत्र विशेषमाह—

**इष्यतेऽनेन नैकत्रावस्थान्तरसमागमः ।**
**क्रियानिष्ठाभिदाधारद्रव्याभावाद्यथोच्यते ॥ ३० ॥**

**नयामृत०**-इष्यत इति। अनेन- ऋजुसूत्रनयेन, एकत्र- धर्मिणि, अवस्थान्तरसमागमः- भिन्नावस्थावाचकपदार्थान्वयः, नेष्यते- न स्वीक्रियते, कुतः ? क्रिया- साध्यावस्था, निष्ठा च सिद्धावस्था, तयोर्या भिदा- भिन्नकालसम्बन्धः, तदाधारस्यैकद्रव्यस्याभावात्, अत्रार्थेऽभियुक्तसम्मतिमाह-यथोच्यते, अभियुक्तैः ॥ ३० ॥

**पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित् ।**
**नासंयतः प्रव्रजति भव्योऽसिद्धो न सिध्यति ॥ ३१ ॥**

भिधानमपि कथमविचार्य सहेतेत्यन्वय.। **तथाविधार्थविषयं** परकीयातीतानागतार्थविषयकम्। **इत्यस्याभिमानः** एवंरूपोऽभिमान ऋजुसूत्रस्य। **न चेति**- अनन्तरदर्शितर्जुसूत्राभिमानो न च निरर्थक इत्यर्थः,। अत्र हेतुः- **स्वदेशेति**- परकीयं धनं नान्यपुंसो देशे वर्तते, अतीता-ऽनागते च न व्यवहर्तृवर्तमानकाले वर्तेते, अतस्तेषा सत्त्वाभावाद् व्यवहारानङ्गत्वेन न तदभिधानज्ञानादिसम्भव इत्यभिसन्धिः। परकीयधना-ऽतीता-ऽनागतादिभिः सममप्यभिधान-ज्ञानादीनां कश्चित् सम्बन्धो भविष्यति, तं सम्बन्ध समाश्रित्य तेषामपि व्यवहाराङ्गत्वं भविष्यतीति नासत्त्वं तेषामिति यद्युच्येत तर्हि सर्वस्यापि वस्तुनः परस्पर कश्चित् सम्बन्धः कल्पनोपरचितः स्यादेवेति शशादीना शृङ्गादिभिः सममपि सम्बन्धस्य काल्पनिकस्य सम्भवादसतोऽपि सामान्यस्यार्थक्रियया समं सम्बन्धस्य कल्पयितु शक्यत्वात् तेषामपि व्यवहाराङ्गत्वतः सत्त्वमनुषज्येतेत्याह- **यथाकथञ्चित्सम्बन्धस्येति**। यदा च परकीयादीना न स्वदेश-कालयोः सत्त्व तदा तदतिरिक्तसत्त्वाभावादसत्त्वमेव तेषामित्याह- **न चेति**- अस्य 'अस्ति' इत्यनेनान्वयः, अन्यत् सत्त्वमस्तीत्येतावताऽपि वक्तव्यार्थपरिनिष्पत्तौ यदतिरिक्तमित्यधिकमुपन्यस्तं तेनेदं ज्ञापितं भवति- यदुत, देश-कालनिरूपितवृत्तित्वलक्षणसत्त्वतो भिन्नं स्वरूपसत्त्व माऽस्तु, महासामान्यसत्त्वलक्षणं सत्त्वं तु भविष्यतीति कैश्चिदुच्येत तदपि नास्तीति, '**योग्यता**' इत्यस्य स्थाने 'योग्यतया' इति पाठो युक्त., ततः परकीयादीनामसत्त्वात्, **योग्यतया** असत्त्वस्य सम्भवेन। **प्रकृते** परकीयादौ। **अत्र** ऋजुसूत्रनये। ननु परकीयादीनामेतन्नयेऽभावाद् धर्मिभूताना तेषामसिद्धौ कथं तत्र सत्त्वप्रतिषेध इत्यत आह- **तत्रेति**- परकीया-ऽतीता-ऽनागतेष्वित्यर्थः। '**सत्ताप्रतिक्षेऽपि**' इत्यस्य स्थाने 'सत्ताप्रतिक्षेपोऽपि' इति पाठो युक्तः, 'शशशृङ्गे सत्त्वं नास्ति' इत्येव यथा शशशृङ्गे सत्त्वप्रतिक्षेपस्तथा 'परकीयादौ सत्त्वं नास्ति' इत्येवं परकीयादावपि सत्त्वप्रतिक्षेप सम्भवतीत्यर्थः। धर्मिणः प्रमाणाद् विकल्पात् प्रमाण-विकल्पाभ्या च सिद्धिरभिमता, तत्र शशशृङ्गे विकल्पसिद्धे धर्मिणि यथा सत्त्वनिषेधप्रवृत्तिस्तथा परकीयादावपि विकल्पसिद्धे धर्मिणि सत्त्वनिषेधप्रवृत्तेस्तत्र सत्ताप्रतिक्षेपो युक्ताभ्युपगम इत्याह- **विकल्पसिद्धेऽपीति**। '**तत्र तत्र**' इति वीप्सया नैकस्मिन् ग्रन्थे एकेनैव ग्रन्थकर्त्रा विकल्पसिद्धे धर्मिणि निषेधप्रवृत्तिरुपवर्णिता येन क्वाचित्कत्वान्न सर्वैरादरणीयत्व किन्तु केनचिदेव तत्पक्षपातिना तस्य तत्त्वं स्यात्, अपि तु बहुभिः सूरिप्रवरैः श्रीदेवसूरिप्रमुखै रत्नाकरादिग्रन्थेऽस्यार्थस्य व्यवस्थापितत्वात् सर्वैरेवादरणीयत्वमित्यर्थः ॥ २९ ॥

त्रिंशत्तमपद्यमवतारयति- **अन्यमिति**। **अत्र** ऋजुसूत्रे। विवृणोति- **इष्यते इतीति**। **तयोः** साध्यावस्था-सिद्धावस्था-

**नयामृत०**–पलालमिति । अत्र दहनादिक्रियाकाल एव तन्निष्ठाकाल इति दह्यमानादेर्दग्धत्वाद्यव्यभिचारात् तदवस्थाविलक्षणपलालाद्यवस्थावच्छिन्नेन समं दहनादिक्रियान्वयस्यायोग्यत्वात् 'पलालं न दहत्यग्निः' इत्यादयो व्यवहारा निषेधमुखा उपपद्यन्ते, विधिमुखस्तु व्यवहारोऽत्र 'अपलालं दह्यते, अघटो भिद्यते, संयतः प्रव्रजति, सिद्धः सिध्यति' इत्येवमाकार एव द्रष्टव्यः, अत एव–"सो समणो पव्वइओ" [ ] इति (सूत्रमपि सङ्गच्छते । नन्वेत)न्नये कृतकरणापरिसमाप्तिः, सिद्धस्यापि साधने करणव्यापारानुपरमादिति चेत् ? न–कार्यमुत्पाद्य क्रियोपरमेण तत्समाप्तेः; न च यादृशव्यापारवतां दण्डादीनां पूर्वं सत्त्वं तादृशानामेव तेषां क्वचित् घटोत्पत्त्यनन्तरमपि सम्भवे तदा तदुत्पत्तिप्रसङ्ग इति वाच्यम्, तत्सत्त्वेऽपि सूक्ष्मक्रियाविगमकल्पनात्; न च तत्क्रियाया घटोत्पत्तेः प्राक् सत्त्वे

---

रूपयोः क्रिया निष्ठयो । **अत्रार्थे** ऋजुसूत्राभिमतान्तराभिहितविषये । अन्यत् स्पष्टम् ॥ ३० ॥

उक्तार्थसंवादकपरवचनं विवृणोति– **पलालमितीति** । **अत्र** ऋजुसूत्रनये । **दहनादिक्रियाकाल एव** दहनादिसाध्यावस्थाकाल एव । **तन्निष्ठाकालः** दहनादिसिद्धावस्थाकाल. । ननु दहनादेरुत्पद्यमानावस्थारूपदहनादिसाध्यावस्थाकाले 'दह्यते' इति प्रत्ययात् तदानी वस्तुनो दह्यमानत्वम्, दहनादेर्निष्पन्नतावस्थारूपदहनादिसिद्धावस्थाकाले 'दग्धः' इति प्रत्ययात् तदानीं वस्तुनो दग्धत्वमित्येव तयोर्भेदे जाग्रति सति कथमैक्यावधारण न्याय्यमित्यत आह– **दह्यमानादेरिति**– तथा चैतन्मते यदा 'दह्यते' इति प्रत्ययस्तदैव 'दग्ध.' इत्यपि प्रत्यय इति यदा दह्यमानत्वं तदानीं दग्धत्वमपि समस्त्येवेति । यो हि दह्यमानाद्यवस्थस्तेनैव समं दहनादिक्रियाऽन्वेति, स च पलालादिस्वरूपतोऽन्य एव सवृत्त इति तेनान्वीयमाना दहनादिक्रिया न पलालादिनाऽन्वेतुमुत्सहते, यदाऽविचलपलालादिस्वरूपं तदा विक्रियाविशेषस्वरूपलक्षणा न दहनादिक्रिया, यदा च सा न तदानीमविचलितपलालादिस्वरूपमित्येव तयोर्भिन्नकालत्वेनान्वयस्यायोग्यत्वात् 'पलालं न दहत्यग्निः' इत्यादयो निषेधमुखा एव व्यवहारा ऋजुसूत्रनये युज्यन्ते, न तु 'पलाल दहत्यग्नि.' इत्यादयो विधिमुखा व्यवहारा इत्याह– **तदवस्थेति**– दह्यमानाद्यवस्थेत्यर्थ. । तत् किं विधिमुखा व्यवहारा न भवन्त्येवास्मिन् नये, भवन्ति यदि तर्हि कीदृशास्त इत्यपेक्षायामाह– **विधिमुखस्त्विति** । **अत्र** ऋजुसूत्रनये । 'संयत· प्रव्रजति' इत्येवं विधिमुखे व्यवहारे सूत्रस्वारस्यं दर्शयति– **अत एवेति**– अस्य 'सङ्गच्छते' इत्यनेनान्वय. । **सो०** इति– "स श्रमणः प्रव्रजितः" इति संस्कृतम् । क्रियाकाल-निष्ठाकालयोरभेददार्ढ्यार्थं परकीयाशङ्का प्रतिक्षेप्तुमुत्थापयति– **नन्विति** । **एतन्नये** क्रिया-निष्ठाकालाभेदाभ्युपगन्तृनये । **कृतकरणापरिसमाप्तिरिति**– क्रियमाणस्य कृतत्वाव्यभिचारार्थं यस्मिन् क्षणे यद् वस्तु क्रियते तस्य तदानी कृतत्वमभ्युपेयम्, एव च कृतस्य करणं स्वहस्तितमेव, तथा च करणव्यापारानन्तर निष्पन्नस्यापि वस्तुनः क्रियमाणत्वस्योपपत्तये पुनरपि करण तस्योपेयम्, तदानीमपि च कृतं तत् क्रियमाणमिति पुनरपि करणमास्थेयमित्येव दिशाऽनवस्थान स्यादित्यर्थः । अत्रैव हेतुमाह– **सिद्धस्यापीति** । **साधने** उत्पादने । समावर्त्त– नेति । **क्रियोपरमेण** करणव्यापारोपरमेण, यदर्थं करणस्य व्यापारस्तस्य निष्पत्तौ सत्या तस्य स्वयमेवोपरम इत्यभीष्टे कार्ये उत्पन्ने सति करणव्यापार· स्वयमुपरत इति तद्रूपकारणाभावान्न कृतस्य करणमित्याशय. । '**न च**' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः । **यादृशेति**– चक्रभ्रमणादिलक्षणेत्यर्थः । **पूर्वं** घटोत्पत्तितः प्राक्काले । **तादृशानामेव** तादृशव्यापारवतामेव । **तेषां** दण्डादीनाम् । **तदा** घटोत्पत्त्यनन्तरक्षणे । **तदुत्पत्तिप्रसङ्गः** उत्पन्नस्यैव घटस्य पुनरुत्पत्तिप्रसङ्ग. । निषेधहेतुमाह– **तत्सत्त्वेऽपीति**–घटोत्पत्त्यनुकूलव्यापारवता दण्डादीनां सत्त्वेऽपीत्यर्थः । **सूक्ष्मक्रियेति**– यादृशक्रियया दण्डादिव्यापारभावमापन्नयाऽवश्यं घटाद्युत्पत्तिः सैव सूक्ष्मक्रियाशब्देनात्राभिप्रेता, तस्यास्तदानी विगमादेव न घटाद्युत्पत्तिप्रसङ्ग इत्यर्थः । ननु घटोत्पत्त्यनुकूला या सूक्ष्मक्रिया कल्प्यते सा यदि घटोत्पत्तेः प्राक्क्षणे वर्तते तदा तस्या घटोत्पत्तिव्याप्यायाः सद्भावतो घटोत्पत्तेरपि तदानीं सद्भावप्रसङ्गः, अथ सा घटोत्पत्तिप्राक्क्षणे न वर्तते तदा घटोत्पत्तिकारणत्वमेव तस्या न स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वयः । **तत्क्रियायाः** घटोत्पत्तिनियतायाः सूक्ष्मक्रियाया. । **तदाऽपि** घटोत्पत्तिप्राक्कालेऽपि । **तत्सत्त्वप्रसङ्गः** घटोत्पत्तिसत्त्वप्रसङ्गः । **असत्त्वे च** तस्या· सूक्ष्मक्रियाया

तदापि तदुत्पत्तिप्रसङ्गोऽसत्त्वे च कार्याव्यवहितपूर्ववृत्तित्वाभावेनाकारणत्वाऽऽपत्तिरिति वाच्यम्, कार्यव्याप्यतावच्छेदकपरिणामविशेषरूपायाः कारणतायाः कार्यसहवृत्तितानियमात्, अत एव 'कुर्वद्रूपत्वमप्रामाणिकं बीजत्वादिना साङ्कर्याज्जातिरूपतदसिद्धेः' इति निरस्तम्। अथैवं चक्रभ्रमणाद्युपलक्षितदीर्घक्रियाकाले कुतो न दृश्यते घटः ? यदि क्रियमाणः कृत एवेति चेत् ? न-घटजननव्यापाररूपायाः क्रियाया दीर्घकालत्वासिद्धेः, चरमसमय एव तदभ्युपगमात्, घटगताभिलाषोत्कर्षवशादेव मृन्मर्दनाद्यान्तरालिककार्यकरणवेलायां घटं करोमीति व्यवहारात्, तदुक्तं महाभाष्यकृता—

"पइसमयकज्जकोडी-निरवेक्खो घडगयाहिलासो सि। पइसमयकज्जकोडिं थूलमइ! घडं मिलाएसि" ॥

—[ विशेषावश्यकभाष्यगाथा–२३१८ ] इति,

कृतस्यैव करणे क्रियावैफल्यमित्यपि न रमणीयम्, क्रिययैव निष्ठां जनयित्वा कार्यस्य कृतत्वोप-

घटोत्पत्तिप्राक्कालेऽसत्त्वे पुनः। **अकारणत्वापत्तिः** तत्कार्याव्यवहितपूर्वकालवृत्तित्वमेव तत्कार्यं प्रति कारणत्वमिति तस्याः क्रियाया घटोत्पत्त्यव्यवहितपूर्वकालवृत्तित्वाभावात् घटं प्रति कारणत्वं न स्यादित्यर्थः। प्रतिक्षेपहेतुमुपदर्शयति– **कार्यव्याप्यतेति**– कारणस्य यत् कार्यव्याप्यत्वं 'यदा कारण तदा कार्यम्' इत्येवं प्रतीयमानं तच्च दण्डत्वादिना दण्डादेर्न सम्भवति दण्डत्वादिना दण्डादेः सत्त्वेऽपि घटादेरसत्त्वात्, किन्तु घटादिकुर्वद्रूपत्वात्मकपरिणामविशेषरूपेण, घटादिकुर्वद्रूपत्वात्मकपरिणामविशेषविशिष्टदण्डादेर्यदा सत्त्वं तदानी घटादेः सत्त्वस्यावश्यम्भावादिति तथाभूतव्याप्यत्वस्यावच्छेदको यः कुर्वद्रूपत्वात्मकः परिणामविशेषस्तद्रूपाया दण्डादिगतकारणताया घटादिकार्यसमकालवृत्तित्वस्यावश्यम्भावान्न तथाभूतकारणतालक्षणकारणसूक्ष्मक्रियाया घटाद्युत्पत्तेः प्राक् पश्चाच्च सत्त्वमतो नोत्पत्तेः प्राक् पश्चाच्च घटाद्युत्पत्तिप्रसङ्गो नवा पूर्ववर्तित्वाभावेऽप्यकारणत्वस्य प्रसङ्गः, तत्कार्यकाले तथाभूतपरिणामसद्भावत एव कारणत्वस्य सम्भवादित्यर्थः। '**अत एव**' इत्यस्य 'निरस्तम्' इत्यनेनान्वयः, **अत एव** कुर्वद्रूपत्वात्मकपरिणामविशेषरूपकारणतायाः कार्यसहवृत्तित्वनियमादेव। **साङ्कर्यादिति**– बीजत्वाद्यभाववति मृदादिलक्षणकारणे कुर्वद्रूपत्व कुर्वद्रूपत्वाद्यभाववति बीजादावकुर्वद्रूपत्वमित्येवं परस्परात्यन्ताभावसमानाधिकरणयोस्तयोः कुर्वद्रूपात्मके बीजादौ सामानाधिकरण्येन साङ्कर्यादित्यर्थः। **तदसिद्धेः** कुर्वद्रूपत्वासिद्धेः, जातिरूपतया कुर्वद्रूपत्वस्यानभ्युपगमादेव तद्रूपतया तदसिद्धिर्न दोषाय, कारणत्वग्राहकप्रमाणेन विषयीकरणादेव नाप्रामाणिकत्व तस्येत्याशयः। नन्वाद्यचक्रभ्रमणादिक्रियाया आरभ्य चरमसमयकालीनघटजननानुकूलक्रियापर्यन्तं प्रतिसमयं घटजनन भवति 'क्रियमाणं कृतम्' इति पक्षे, तथा च चक्रभ्रमणप्रथमसमयादारभ्य चरमसमयपर्यन्तमभिव्याप्य यो घटजननव्यापारलक्षणदीर्घक्रियाकालस्तस्मिन् प्रथमसमयावच्छेदेनापि क्रियमाणो घटः कृत एवेति निष्पन्नस्वरूपस्य तस्य दर्शनं कुतो न स्यादित्याशङ्कते– **अथैवमिति**। घटजननव्यापारलक्षणा घटोत्पत्तिक्रिया चरमसमय एव, न प्रथमचक्रभ्रमणादिसमये, तदानीं मृन्मर्दनाद्यान्तरालिककार्यमेव क्रियते, 'घटो मे भवतु' इति योऽय घटकर्तुरुत्कृष्टघटाभिलाषस्तद्वशादेव चरमसमयातिरिक्तसमयेऽपि 'घटं करोमि' इति व्यवहारो भवति, न तु वस्तुगत्या तदानी घटकरणमिति घटाभावादेव न तदानीं घटो दृश्यत इति समाधत्ते– **नेति**। **तदभ्युपगमात्** घटजननव्यापाररूपक्रियाऽभ्युपगमात्। उक्तार्थे महाभाष्यसंवादमाह– **तदुक्तमिति**। **पइसमय०** इति– "प्रतिसमयकार्यकोटिनिरपेक्षो घटगताभिलाषोऽसि। प्रतिसमयकार्यकोटिं स्थूलमते! घटं लगयसि" ॥ इति संस्कृतम्। ननु घटादिक्रिया कृतमेव घटं करोति नाकृतम्, तथा च कृतं सिद्धमेव तत्करणेन नापूर्वं किञ्चिन्निष्पद्यत इति तत्र न क्रिया साफल्यमञ्चतीत्याशङ्कां प्रतिक्षिपति– **कृतस्यैवेति**। क्रियया यदा घटस्य निष्ठा भवति तदेव घटः कृत इत्युच्यते नान्यथेति कृतत्वसम्पादकतया क्रियायाः साफल्यं भवत्येवेति प्रतिक्षेपहेतुमुपदर्शयति– **क्रिययैवेति**– एवकारेण क्रियातिरिक्तस्य निष्ठाजनकत्वव्यवच्छेद.। ननु यद्यकृतं क्रिया न जनयति किन्तु कृतमेव, यतः अकृतस्यासत्त्वेन करणव्यापारविषयत्वासम्भवात्, तर्ह्यन्योऽन्याश्रयोऽत्रोपतिष्ठते– क्रियाजनितत्वात् कृतत्व सम्पद्यते, कृतत्वाच्च क्रियाजनितत्वमित्याशङ्कते– **कृतमेवेति**। **नाकृतम्** अकृत क्रिया न जनयति, **असत्त्वात्** अकृतस्य स्वरूपत एवासत्त्वेन क्रियाजनितत्वाभावात्। कृतत्वावच्छिन्नं प्रति क्रियात्वेन कारणत्वं नाभ्युपगम्यते, किन्तु घटत्वाद्यवच्छिन्नं प्रति घटादिक्रियात्वेन कारणत्वमित्येवोपेयत इति क्रियाजन्यतावच्छेदककोटौ कृतत्वस्याप्रवेशान्नोक्तदिशाऽन्योऽन्याश्रय., क्रियातो जाय-

पादनात्; कृतमेव क्रिया जनयति, नाकृतमसत्त्वात्, क्रियाजनितत्वाच्च कृतमित्यन्योऽन्याश्रय इति चेत्? न–घटत्वादिनैव घटादिक्रियाजन्यत्वात् तत्र कृतत्वाप्रवेशादर्थादेव समाजात् कृतत्वोपपत्तेः, यदि च क्रियमाणं न कृतं तदा क्रियासमये कार्याभावात् ततः पूर्वं ततः पश्चाच्च कारणाभावात् तत्कार्यं न भवेदेव; सामग्र्यास्तदुत्तरसमय एव कार्यव्याप्यत्वोपगमान्न दोष इति चेत्? न–सामग्रीसमयस्यैव कार्यव्याप्यत्वोपगमौचित्यात्, अन्यथा व्यवहितोत्तरकालेऽपि कार्योत्पत्तिप्रसङ्गात्, अव्यवहितोत्तरत्व-प्रवेशे गौरवात्, द्वि-त्रिक्षणादिव्यवधानाभावनिवेशे विनिगमकाभावात्, कारणाभावस्यैव कार्याभाव-

---

मानस्य घटस्य निष्पन्नस्वरूपस्याकृतत्वाभावादेव कृतत्वमित्येतावतैव कृतस्य करणम्, यथा च नीलसामग्रीतो नीलस्य घटसामग्रीतो घटस्योत्पत्तौ सत्या स घटो नीलघटोऽर्थादेव भवति, न तु नीलघटत्वस्य किञ्चित्कारणनिरूपितकार्यताव-च्छेदकत्वं तथा घटक्रियातो जायमानस्य घटस्य सत्त्वादेव नाकृतत्वमित्यकृतत्वाभावादेव कृतत्वम्, कृतत्वं हि निष्पन्न-क्रियस्वरूपत्वम्, तत्र निष्पन्नताश्र-क्रियाश्रययोर्यज्जनकं तत एव तद् भवतीत्यर्थसमाजात् तदुत्पत्तिरिति समाधत्ते–नेति। तत्र क्रियाजन्यतावच्छेदककोटौ यदि च क्रियमाणस्य कृतत्वं नोपेयते तदा यदा क्रियाकाले कार्यमनिष्पन्नमेवमास्थेयमन्यथा निष्पन्नस्य तस्य कृतत्वं स्यादिति क्रियमाणस्य तदानीं कार्यस्य कृतत्वमिति स्वहस्तितमेवेति विवादपर्यवसानम्, अनि-ष्पन्नत्वे चानिष्पन्नं च वस्तु न स्वस्वरूपतामञ्चतीति क्रियासमये कार्याभावः, क्रियासमयात् पूर्वं च क्रियारूपकारणस्यैवा-भावः, एवं क्रियासमयात् पश्चादपि कारणस्याभाव इति कदापि तत् कार्यं न स्यादतः क्रियमाणस्य कृतत्वं स्वीकर्तव्य-मित्याह–**यदि चेति**। **ततः** क्रियासमयात्, एवमग्रेऽपि। यदा स्वोत्तरसमयत्वसम्बन्धेन सामग्री तदा कालिकसम्बन्धेन कार्योत्पत्तिरित्येव सामग्री-कार्योत्पत्त्योर्व्याप्यव्यापकभावस्याङ्गीकारात् सामग्र्यव्यवहितोत्तरसमये कार्योत्पत्तौ न कश्चिद् दोष इति शङ्कते–**सामग्र्या** इति। **तदुत्तरे**ति–सामग्र्युत्तरेत्यर्थः। यदा सामग्री तदा कार्यमित्येव तयोर्व्याप्य-व्यापकभावो न तु सामग्र्युत्तरसमयत्वस्य कार्यव्याप्यत्वमिति सामग्रीसमय एव कार्यं न तु सामग्र्युत्तरसमय इति समाधत्ते–नेति। **अन्यथा** सामग्र्युत्तरसमयत्वस्य कार्यव्याप्यत्वाभ्युपगमे। **व्यवहितोत्तरकालेऽपि** सामग्रीव्यवहितोत्तरकालेऽपि, अपिना सामग्र्यव्यवहितोत्तरकालस्योपग्रह, सामग्र्युत्तरकालत्वस्य सामग्रीव्यवहितोत्तरसमये सामग्र्यव्यवहितोत्तरसमये च सत्त्वेन तदुभयत्र कार्योत्पत्तौ सत्यामेव सामग्र्युत्तरत्वस्य कार्यव्याप्यत्वं सम्भवति, अन्यथा व्यभिचारेण सामग्र्युत्तरत्वस्य कार्य-व्याप्यत्वमेव न भवेदिति सामग्र्युत्तरसमयमात्र एव कार्यजनिः स्यादित्यर्थ। ननु यदा स्वाव्यवहितोत्तरत्वसम्बन्धेन सामग्री सामग्र्यव्यवहितोत्तरसमयत्वं वा तदा कार्यमित्येव व्याप्तिरुपगमात् सामग्र्यव्यवहितोत्तरसमय एव कार्यं न सामग्रीव्यवहितो-त्तरसमय इत्यत आह–**अव्यवहितोत्तरत्वप्रवेशे गौरवादि**ति–प्रकारविधया व्याप्यकोटौ व्याप्यतावच्छेदकसंसर्गकोटौ वाऽव्यवहितोत्तरत्वप्रवेशे गौरवप्रसङ्गादित्यर्थः। किञ्च, सामग्र्यनन्तरं द्विक्षणव्यवधाने यदि कार्यं जायते तदा तत्र द्विक्षण-व्यवधानेऽप्यव्यवहितत्वसम्पत्तये त्रिक्षणादिव्यवधानाभावो निवेश्यः यद्येकक्षणव्यवधान एव कार्यमुत्पद्यते तदा द्विक्षणादि-व्यवधानाभावो निवेश्यः, एव त्रिक्षणव्यवधानेऽपि यदि कार्यं जायते तदा चतुःक्षणादिव्यवधानाभावो निवेश्यः, न च सामग्रीक्षणभिन्नक्षणे कार्योत्पादे सामग्र्युत्तरद्वितीयक्षण एव सामग्र्युत्तरतृतीयक्षण एव कार्यं जायत इत्याद्युपगमे विनिगमकं किञ्चिदिति विनिगमकाभावात् सर्वस्यापि द्वि-त्रिक्षणादिव्यवधानादेरभावस्य निवेशेऽपि गौरवं सामग्र्यव्यवहितोत्तरसमय-त्वस्य कार्यव्याप्यत्वपक्षे इत्याह–**द्वि-त्रिक्षणादी**ति। पर्यायनये एकं कुर्वद्रूपात्मकं तत्कार्यकारण यदा तदा कुर्वद्रूपात्मकं तत्कार्यकारणान्तरमप्यवश्यमेव समस्तीति कारणे सत्यवश्यमेव कार्यमिति सामग्र्याः कार्यव्याप्यत्वकल्पनापेक्षया कारणस्यैव कार्यव्याप्यत्व लाघवात्, तत्रापि यदा कारण तदा कार्यमित्येव व्याप्तिर्न तु कारणोत्तरसमये कार्यमिति, तथा च कारण-समय एव कार्यम्, यथा च कारणे सत्यवश्यं कार्यमिति नियम., तथा कारणाभावे सत्यवश्यं कार्याभाव इत्यपि नियम एव, कारणस्य कार्यसमव्याप्यत्वेन कारणाभावस्यापि कार्याभावसमव्याप्यत्वम्, तेन कारणस्य कार्यव्याप्यत्वे कारणाभावस्य व्याप्याभावरूपत्वेन कार्यरूपव्यापकाभावस्य व्यापकत्वमेव, तथा च व्यापकस्य तस्य सत्त्वेऽपि नावश्यं व्याप्यस्य कार्या-भावस्य सत्त्वमित्युक्तेर्नावकाशः, इत्थं च कारणाभावस्य कारणोत्तरकाले सत्त्वेन तदानीं कार्याभावस्यैव सत्त्वं न कार्यस्येति कार्य-कारणयोरेककालत्वमेवेति क्रियारूपकारणकाले नियमेन कार्यस्य सत्त्वान्निष्पन्नत्वमपि तस्येत्यत कृतत्वमपीति क्रियमाणं

व्याप्यत्वेन कारणोत्तरकालेऽपि कार्यासिद्धेश्च । ननु पर्यायनयविचारे कार्यक्षणेषु कारणक्षणानामव्यवहितपूर्ववर्तितयैव हेतुत्वमुक्तं तत् कथमिह पर्यायप्रकृतिकशुद्धर्जुसूत्रनयविचारे क्रियमाणं कृतमेवेत्यस्योपपादनाय तेषां कार्यसहवर्तितयैव हेतुत्वं वदतां न पूर्वापरविरोध इति चेत् ? सत्यम्–तत्र पूर्वक्षणानामुत्तरोत्तरक्षणहेतुत्वस्य विवक्षितस्य पौर्वापर्यनियमेनैवोपपत्तेः, अत्र तु व्यवहारोपगृहीतं घटादिकिञ्चित्कालस्थायिकार्यमादाय तत्र क्रियाजन्यत्वं शुद्धर्जुसूत्रनयेन विचार्यत इति कार्यसहवर्तितयैव तद्धेतुत्वकल्पनाद् विरोधगन्धस्याप्यभावात्, अत एव यत्र शुद्धपर्यायाणां कार्य-कारणभावश्चिन्त्यते, यथा–केवलदर्शनावधिकक्षणेषु केवलज्ञानावधिकक्षणानाम्, तत्र पौर्वापर्यगर्भ एव हेतुहेतुमद्भावो न तु कार्यसहवर्तितयैव, सर्वक्षणानामेकक्षणैकशेषताप्रसङ्गादिति सुदृढमवधारणीयम् ।

अथ 'क्रियमाणम्' इत्यत्र वर्तमानत्वमानशोऽर्थः, 'कृतम्' इत्यत्र चातीतत्वं निष्ठार्थः, तत्र वर्तमानत्वं विद्यमानकालवर्तित्वम्, अतीतत्वं च विद्यमानध्वंसप्रतियोगिकालवृत्तित्वम्, विद्यमानत्वं च तत्त-

---

कृतमिति युक्तमित्याशयेनाह– **कारणाभावस्यैवेति**– एवकारेण कारणाव्यवहितोत्तरसमयत्वाभावसामग्र्युत्तरसमयत्वाभावसामग्र्यभावादेः कार्याभावव्याप्यत्वस्य व्यवच्छेदः । शङ्कते– **नन्विति** । **तत्** तर्हि । **तेषां** कारणानाम्, पर्यायनयसामान्यविचारे अव्यवहितपूर्ववर्तित्वेन कारणत्वमुक्तं पर्यायनयविशेषर्जुसूत्रनयविचारे तु कार्यसहवृत्तितया कारणत्वमित्युच्यते इति कथ न पूर्वापरग्रन्थविरोधोऽर्थात् पूर्वापरग्रन्थविरोध· स्यादेवेति मुकुलितोऽर्थः । समाधत्ते– **सत्यमिति**– यथा भवतोद्भावितं तथैवोक्तमस्तीत्यर्थः । एवमपि न पूर्वापरग्रन्थविरोध इत्याह– **तत्रेति**– पर्यायनयविचार इत्यर्थः, अविरलक्रमेण क्षणिकसन्ततिसिद्धये पूर्वपूर्वक्षणानामुत्तरोत्तरक्षणं प्रति हेतुत्वं यद् विवक्षित तत् कार्य-कारणयोः पौर्वापर्यनियमेनैवोपपत्तिपद्धतिमेतीत्यतोऽव्यवहितपूर्ववर्तितया कारणत्वं पर्यायनयविचारे पूर्वमुक्तमित्यर्थः । **अत्र तु** शुद्धर्जुसूत्रनयविचारे पुनः । **व्यवहारोपगृहीतं** व्यवहारनयस्वीकृतम् । **आदाय** आश्रित्य । **तत्र** घटादिकार्ये । **तद्धेतुत्वकल्पनात्** घटादिकार्यं प्रति क्रियाया हेतुत्वकल्पनात्, घटादिकार्ये घटादिकरणक्रिया घटादिकार्यसहवृत्तितया हेतुरिति यदा घटकरणक्रिया तदा घटोत्पत्तिः, यैवोत्पत्तिः सैव स्थिति·, तत्कालयोरभेदात्, क्रियाऽन्यदा नास्तीति कार्यमप्यन्यदा न विद्यत इत्यतः क्षणिकत्वं सिध्यतीत्याशयेन कार्यसहवृत्तितया ऋजुसूत्रनये हेतुत्वमुच्यत इति भिन्नाभिप्रायप्रवृत्तयोः पूर्वोत्तरग्रन्थयोर्न विरोध इत्याशयः । **अत एवेति**– यत एव क्षणिकसन्ततिसिद्धये पूर्वक्षणानामुत्तरक्षण प्रति कारणत्वमुपेयते तत एवेत्यर्थः । **यथेति**– केवलज्ञान-केवलदर्शनोपयोगयो. क्रमिकत्वेन पूर्वं केवलज्ञान तत केवलदर्शनं ततः केवलज्ञानमित्येव केवलदर्शनान्तरितक्रमिककेवलज्ञानसन्तति-केवलज्ञानान्तरितक्रमिककेवलदर्शनसन्ततिसिद्धये **केवलदर्शनावधिकक्षणेषु**– केवलदर्शनात्मकक्षणेषु क्षणमात्रस्थायित्वात् केवलदर्शनस्य क्षणत्वं तथा केवलज्ञानस्यापि, क्षणाना तदात्मकत्वादेव तदवधिकत्वम्, यद्यपि केवलदर्शनमवधिरुत्तरतया यस्य क्षणस्य स केवलदर्शनावधिकः केवलदर्शनाव्यवहितपूर्वक्षणः, एवं केवलज्ञानमवधिरुत्तरतया यस्य क्षणस्य स केवलज्ञानावधिक इत्येवमप्यत्र व्युत्पत्तिः सम्भवति तथापि तथा विवक्षायां न किञ्चित् प्रयोजनम् । **केवलज्ञानावधिकक्षणानां** केवलज्ञानात्मकक्षणानाम्, क्षणत्वेनोत्कीर्तनं च शुद्धपर्यायत्वप्रतिपत्तये, तथा च शुद्धपर्यायात्मककेवलदर्शन-केवलज्ञानकार्यकारणभावचिन्तनस्थले इत्यर्थः । **तत्र** केवलज्ञान-केवलदर्शनयोः । केवलज्ञान-केवलदर्शनयोः कार्यसहवर्तितया कार्यकारणभावाभ्युपगमे यदेव केवलदर्शनं तदेव केवलज्ञान यदेव केवलज्ञान तदेव केवलदर्शनमित्येकक्षणमात्ररूपतापत्तौ क्रमिककेवलज्ञान-केवलदर्शनसन्तत्युच्छेदः प्रसज्यत इत्याह– **सर्वक्षणानामिति** ।

ननु तत्तदर्थोपस्थित्यनुकूलव्यापारपर्यवसितप्रयोगाधारकाललक्षणवर्तमानकालवर्तिकृतिविषयत्वलक्षणक्रियमाणत्वाश्रये तत्तदर्थोपस्थित्यनुकूलव्यापारात्मकप्रयोगाधारकालवर्तिध्वसप्रतियोगिकाललक्षणातीतकालवृत्तिकृतिविषयत्वस्यासम्भवेन क्रियमाणं कृत मित्यत्रान्वयस्यैवानुपपत्तिरिति शङ्कते– **अथेति** । **तत्र** वर्तमानत्वाऽतीतत्वयोर्मध्ये । **लिप्युच्चारणादिसाधारणमिति**– इय लिपिरेतदक्षरे सङ्केतितेति लिपिग्रहणे तत्तदक्षरस्मरणे तत्तदक्षरसमूहात्मकपदस्मृतितस्तत्तदर्थोपस्थितिर्भवतीत्येव परम्परया तत्तदर्थोपस्थितिप्रयोजकत्वेन लिप्यां तत्तदर्थोपस्थित्यनुकूलव्यापारत्वम्, उच्चार्यमाणश्च शब्दो ज्ञायते, तज्ज्ञानाच्च तत्संकेतितस्यार्थस्य स्मरणमित्येव परम्परया तत्तदर्थोपस्थितिप्रयोजकत्वेनैवोच्चारणे तत्तदर्थोपस्थित्यनुकूलव्यापारत्वमित्यस्योभयसाधा-

त्प्रयोगाधारत्वम्, प्रयोगत्वं च तत्तदर्थोपस्थित्यनुकूलव्यापारत्वं लिप्युच्चारणादिसाधारणं तदादेर्बुद्धिस्थत्ववल्लडादेः शक्यतावच्छेदक(कं) तत्तत्कालानुगमकम्, तच्च वर्तमानत्वमतीतत्वं वा धात्वर्थेऽन्वेति, धातूत्तरप्रत्ययजन्यकालप्रकारकबोधे समानविशेष्यत्वप्रत्यासत्त्या धातुजन्योपस्थितेर्हेतुत्वात्, अत एव नातीतघटज्ञानाश्रये 'घटं जानामि' इति प्रयोगप्रसङ्गः, न चैवमारम्भसमये पचतीति प्रयोगो न स्यात् तदा कार्या(पाका)भावादिति वाच्यम्, स्थूलकालमादाय तत्समाधानात्, तस्मात् क्रियमाणं कृत-

---

रण्यम् । **तदादेरिति**–यथा च 'घटोऽस्ति तमानय, पटोऽस्ति तं पश्य' इत्यादौ तच्छब्देन घटत्वपटत्वादिना घट-पटादीनां बोधोपपत्तये तच्छब्दस्य घटत्व-पटत्वादिकं प्रवृत्तिनिमित्तम्, तदनुगमकं च बुद्धिस्थत्वम्, बुद्धिस्थत्वोपलक्षित-तत्तद्धर्मावच्छिन्ने शक्तत्वेऽपि न नानार्थत्वं प्रवृत्तिनिमित्तोपलक्षकस्य बुद्धिस्थत्वस्यैकत्वात्, तथा प्रकृतेऽपि लडादेः शक्यतावच्छेदकवर्तमानकालाद्यनुगमकं तत्तदर्थोपस्थित्यनुकूलव्यापाराधाराकालत्वप्रविष्टनिरुक्तव्यापारत्वमिति लिपिकालो-च्चारणकालत्वादिना भेदेऽपि न नानार्थत्वमित्याशयः । आनश्प्रत्ययार्थस्य वर्तमानत्वस्य निष्ठार्थस्य चातीतत्वस्य धात्वर्थ एवान्वय इत्यत्र हेतुमुपदर्शयति– **धातूत्तरेति**–विशेष्यतासम्बन्धेन धातूत्तरप्रत्ययजन्यकालप्रकारकबोधं प्रति विशेष्यता-सम्बन्धेन धातुजन्योपस्थितिः कारणम्, तथा च प्रकृते क्रियमाणमित्यत्र धातूत्तरानश्प्रत्ययजन्यवर्तमानकालप्रकारकबोधो वृत्तित्वसम्बन्धेन वर्तमानकालप्रकारककृतिविशेष्यको विशेष्यतासम्बन्धेन कृतौ भवति तत्र कृञ्धातुजन्या कृतित्वनिष्ठ-निरवच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नकृतिनिष्ठविशेष्यतानिरूपिकोपस्थितिर्विशेष्यतासम्बन्धेन वर्तत इति भवदुक्तकार्य-कारणभावात् तत्र कृतित्वावच्छिन्नविशेष्यकाधेयत्वसम्बन्धेन वर्तमानकालप्रकारकशाब्दबोधः, एवं कृतमित्यत्र धातूत्तर-क्तप्रत्ययजन्यातीतकालप्रकारकबोधो, वृत्तित्वसम्बन्धेनातीतकालप्रकारककृतिविशेष्यको विशेष्यतासम्बन्धेन कृतावुत्पद्यते, तत्र कृञ्धातुजन्या कृतित्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नकृतिनिष्ठविशेष्यतानिरूपिकोपस्थितिर्वर्तत इत्यतस्तत्र कृतित्वावच्छिन्नविशेष्यकाधेयत्वसम्बन्धेनातीतकालप्रकारकशाब्दबोध इति । **अत एवेति**– विशेष्यतासम्बन्धेन धातूत्तर-प्रत्ययजन्यकालप्रकारकबोधे विशेष्यतासम्बन्धेन धातुजन्योपस्थितेः कारणत्वमित्येवं कार्यकारणभावबलाद् धात्वर्थ एव प्रत्ययार्थस्य कालस्यान्वयादेवातीतघटज्ञानाश्रय पुमान् 'घट जानामि' इति न प्रयुङ्क्ते, घटविषयकवर्तमानज्ञानाश्रयो ऽहमित्येव ततो बोध उपजायेत, अतीतघटज्ञानाश्रये च घटविषयकवर्तमानज्ञानाश्रयत्वस्याभावान्न तथा प्रयोगप्रसङ्ग इत्यर्थः । ननु यदि प्रत्ययार्थकालस्य धात्वर्थ एवान्वयस्तदा पाको यदाऽऽरभ्यते तदानीं पाकस्याभावान्न तदानीं पाकस्य वर्तमानकालवृत्तित्वमिति तदानीं पचतीति प्रयोगो न स्यात्, धात्वर्थे पाके वर्तमानकालवृत्तित्वस्य बाधा दित्याशङ्क्य प्रतिक्षिपति– **न चैवमिति** । **आरम्भसमये** पाकारम्भसमये, पाकं कर्तुमुद्यतस्येन्धनाग्निसयोजन–चूल्हिको-परिपाकपात्रस्थापन-तद्गतजलप्रक्षेपादिकाल इति यावत् । निषेधे हेतुमाह– **स्थूलकालमिति**– चूल्हिकोपरिपाकपात्राद्यारो-पणसमयादारभ्य तण्डुलाद्योदनादिभावनिष्पत्तिसमयमभिव्याप्य स्थितं स्थूलकालमुपादाय तदात्मकवर्तमानकालवृत्तिपाकक्रियानु-कूलकृतिमत्त्वस्य पाककर्तरि सद्भावात् तदर्थक पचतीति प्रयोग. पाकारम्भसमयेऽप्युपपद्यत इत्यर्थ । यदा च क्रियमाणमि-त्यत्र वर्तमानकालवृत्तित्वस्यानशोऽर्थस्य कृतमित्यत्र निष्ठार्थस्यातीतत्वस्य च कृतावेव धात्वर्थेऽन्वयस्तदा क्रियमाणं कृतमिति वाक्यात् तत्तदर्थोपस्थित्यनुकूलव्यापारात्मकप्रयोगाधारकाललक्षणवर्तमानकालवृत्तिकृतिविषयस्तत्तदर्थोपस्थित्यनुकूलव्यापारात्मक-प्रयोगाधारकालवृत्तिध्वंसप्रतियोगिकालवृत्तिकृतिविषय इत्येवं बोधः क्रियमाणे कृतत्वान्वयायोग्यत्वान्न सम्भवतीत्युपसंहरति– **तस्मादिति** । धात्वर्थे प्रत्ययार्थकालान्वयमुपपाद्य क्रियमाण कृतमित्यत्रान्वयानुपपत्तिर्या भवता दर्शिता सा तदा सङ्गता स्याद् यदि धात्वर्थे प्रत्ययार्थकालान्वय इत्येव व्यवतिष्ठेत, परं तथोपगमे आरम्भसमये पचतीति प्रयोगानुपपत्तिरपरिहार्यैव स्यात्, तत्र स्थूलव्यवहारव्युत्पत्तिसमाश्रयणेन स्थूलकालमुपादाय स्थूलकाललक्षणवर्तमानकालवृत्तिपाकानुकूलकृतिमानित्यर्थकत्वेन पचतीति प्रयोगोपपादनं तदा शोभेत यदि स्थूलव्यवहारव्युत्पत्तिर्भवेत्, न चैवम्, अन्यापोहशब्दार्थवादिना निश्चयेन शुद्धर्जुसूत्रेण स्थूलव्यव-हारव्युत्पत्तेरनादृतत्वेन तदधीनाभ्युपगमविषयस्य स्थूलकालस्यैवाभावात्, व्यवहारमात्रं तु न वस्तुसिद्धिनिबन्धनम्, व्यवहारस्य वस्तुसिद्धिनिबन्धनत्वे पुरुषो व्याघ्र इति व्यवह्रियमाणप्रयोगात् पुरुषस्यापि व्याघ्रत्वं प्रसज्येतेत्यतः कालवृत्तिताविशेषरूपस्य निष्ठार्थस्य वर्तमानत्वेन सहाविरोधमभ्युपेत्य क्रियमाण कृतमित्यत्रान्वय. स्वीकरणीय इति समाधत्ते– **नेति** । **स्थूलेति**– स्थिरपदार्थाभ्युपगन्तृत्वेन स्थूलो यो व्यवहारनयस्तस्य स्थूलव्यवहारोपपादनाय या व्युत्पत्तिस्तस्या निश्चयेन ऋजुसूत्राल्प-

मित्यत्रान्वयस्यैवानुपपत्तिरिति चेत् ? न–स्थूलव्यवहारव्युत्पत्तेरन्यापोहशब्दार्थवादिना निश्चयेनानादरणात्, अन्यथारम्भकाल इव तत्पूर्वकालेऽप्येकस्थूलकालसम्भवेन पचतीति प्रयोगप्रसङ्गात्, न च व्यवहारमात्राद् वस्तुसिद्धिरपि, अन्यथा 'पुरुषो व्याघ्रः' इति प्रयोगात् पुरुषस्यापि व्याघ्रत्वप्रसङ्गात् । किञ्च, एवं 'नष्टो घटः, नश्यन् घटः' इत्यादिप्रयोगव्यवस्थायां तव का गतिः ? नाशस्योक्तातीतत्वायोगात्, नष्टेऽपि घटे विद्यमाननाशप्रतियोगित्वाच्च; अथ तत्रातीतत्वं वर्तमानत्वं च कृत्प्रत्ययार्थोत्पत्तावेवान्वेतीति न दोष इति चेत् ? न–उक्तनियमभङ्गप्रसङ्गात्; धातुत्व-प्रत्ययत्वादेर्नानात्वात् तन्नियमस्य

निश्चयनयेनानादरणादनभ्युपगमात्, कथं निश्चयनयः स्थूलव्यवहारव्युत्पत्तिं नाभ्युपैतीत्यपेक्षायाम**न्यापोहशब्दार्थवादिने**ति तद्विशेषणमुपात्तम्, सामान्यस्यानुगतस्य वस्तुभूतस्य वृत्तिविकल्पतोऽभावात्, स्वलक्षणस्य सङ्केतव्यवहारकालाननुगामिनः सङ्केतकरणानास्पदत्वात् कल्पितोऽन्यापोहो विकल्पात्मा शब्दार्थः, न च तत्र शब्दस्य सङ्केतकरणाच्छब्दार्थत्वं किन्तु शब्दाद् विकल्पलक्षणोऽन्यापोहो जायत इति शब्दजन्यत्वाच्छब्दार्थत्वम्, उक्त च–"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनय. । कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि" [ ] ॥ १ ॥ एवं च यस्माच्छब्दाद् यथाविधो विकल्प उत्पद्यते तथाविधविकल्पं प्रति तस्य शब्दस्य कारणत्वम्, तथा विकल्पात्माऽन्यापोहस्तस्य शब्दस्यार्थं इत्येववादिना निश्चयेन स्थूलव्यवहारोपादनप्रत्यलव्युत्पत्तेरनादरणादित्यर्थः । यदि च स्थूलकालमेकमुपादायारम्भसमये पचतीति प्रयोगस्तथाभूतकालवृत्तिपाककृतिमानित्यर्थपरतयोपपाद्यते तर्हि पाकारम्भसमयपूर्वकालादारभ्य पाकनिष्पत्तिसमयपर्यन्तस्थायिस्थूलकालमुपादाय तदात्मकवर्तमानकालवृत्तिपाककृतिमानित्यर्थपरतया पाकारम्भसमयात् पूर्वकालेऽपि पचतीति प्रयोगः प्रसज्येतेत्याह– **अन्यथे**ति– स्थूलव्यवहारव्युत्पत्त्याश्रयणस्य निश्चयनयेऽभ्युपगमे त्वित्यर्थः । **तत्पूर्वकालेऽपि** आरम्भकालपूर्वकालेऽपि । **अन्यथा** व्यवहारमात्राद् वस्तुसिद्ध्युपगमे । प्रत्ययार्थस्य वर्तमानकालवृत्तित्वस्यातीतकालवृत्तित्वस्य वा निरुक्तस्य धात्वर्थेऽन्वयाभ्युपगमे परस्यानिष्टमावेदयति– **किञ्चैवमि**ति । **उक्तातीतत्वे**ति– विद्यमानध्वंसप्रतियोगिकालवृत्तित्वलक्षणातीतत्वेत्यर्थः । ननु नाशः पूर्वकालोत्पन्न इदानीमप्यनुवर्तत इति यदा विनष्टो घट इति प्रयुज्यते तत्काल एव तथा प्रयोगाधारत्वाद् विद्यमानकालस्तदानीं विद्यमानस्तत्पूर्वकालध्वंसो विद्यमानध्वंसस्तत्प्रतियोगिकालः पूर्वकालस्तद्वृत्तित्वं घटनाशे समस्तीति नोक्तातीतत्वायोग इति चेत्, मैवम्– यतो यथाश्रुतातीतत्वग्रहणे स्थिरपदार्थवादिमते भावमात्रस्य प्रयोगकाले सतस्तत्कालवृत्तिध्वंसप्रतियोगिपूर्वकालवृत्तित्वेनातीतत्वं प्रसज्येत, अतस्तत्र वर्तमानकालावृत्तित्वे सतीत्यपि विशेषणं देयम्, तथा च पूर्वजातोऽपि घटनाश उत्तरकाले सर्वदैव वर्तत इति तस्य वर्तमानकालावृत्तित्वस्याभावेन न तत्सहितविद्यमानध्वंसप्रतियोगिकालवृत्तित्वलक्षणातीतत्वसम्भव इति, एव च 'नष्टो घटः' इति प्रयोगः पूर्ववृत्तनाशप्रतियोगिनि घटे जायमानो नोपपद्येतेत्यर्थः । पूर्ववृत्तनाशप्रतियोगिघटमुपादाय 'नश्यन् घट.' इति प्रयोगो न भवति सोऽपि स्यात्, विद्यमाननाशप्रतियोगित्वस्य घटे सद्भावादित्याह– **नष्टेऽपी**ति । ननु 'नष्टः' इत्यत्र कृतः क्तप्रत्ययस्यातीतत्वमुत्पत्तिश्चार्थ इति तत्रोत्पत्तावतीतत्वस्योत्पत्तेश्च नाशे धात्वर्थेऽन्वय इत्यतीतोत्पत्तिमन्नाशप्रतियोगीति 'नष्ट·' इत्यस्यार्थः, 'नश्यन्' इत्यत्र च वर्तमानत्वमुत्पत्तिश्च शतृप्रत्ययार्थ., उत्पत्तौ वर्तमानत्वस्योत्पत्तेश्च धात्वर्थे नाशेऽन्वय इति वर्तमानोत्पत्तिमन्नाशप्रतियोगीति 'नश्यन्' इत्यस्यार्थः, तथा च 'नष्टो घटः, नश्यन् घटः' इति प्रयोगद्वयव्यवस्था सुसङ्गतेत्याशङ्कते– **अथे**ति । **तत्र** नष्टो नश्यन्नित्यादौ समाधत्ते– **ने**ति । **उक्ते**ति– 'तच्च वर्तमानत्वमतीतत्वं वा धात्वर्थेऽन्वेति' इति ग्रन्थेनार्थादुक्तो यो नियमः– प्रत्ययार्थस्यातीतत्वस्य वर्तमानत्वस्य वा धात्वर्थ एवान्वय इति, तस्य भङ्गप्रसङ्गात्, इदानीं प्रत्ययार्थस्यातीतत्वस्य वर्तमानत्वस्य च प्रत्ययार्थेनैवान्वयस्योपगमादित्यर्थं । ननु सकलधातुगतं धातुत्वं सकलप्रत्ययगतं च प्रत्ययत्वमनुगतं नास्तीति न सामान्यत उपदर्शितनियमः किन्तु कृञ्धात्वर्थे कृञ्धातूत्तरानशक्तप्रत्ययार्थवर्तमानत्वातीतत्वातीतत्वादेरन्वय इति विशेषत एवोक्त नियम इति नश्–धातुस्थलेऽन्यथाऽन्वयोपगमेऽपि नोक्तनियमभङ्गप्रसङ्ग इत्याशङ्कते– **धातुत्व-प्रत्ययत्वादेरि**ति । समाधत्ते– **ने**ति । '**धातुपदत्वादिनापि**' इत्यस्य स्थाने 'धातुपदवत्त्वादिनाऽपि, इति पाठ. सम्यग्, आदिपदात् प्रत्ययपदवत्त्वादेरुपग्रहः, तथा च पाणिनिप्रभृतयो व्याकरणप्रणेतारो भ्वादिषु सङ्केतितवन्तो धातुपदम्, आख्यातकृदादिषु च प्रत्ययपदमिति पाणिन्यादिकृतसङ्केतविशेषसम्बन्धेन धातुपदवत्त्व धातुत्वम्, निरुक्तसङ्केतविशेषसम्बन्धेन प्रत्ययपदवत्त्वं प्रत्ययत्वमित्येव धातुत्व-प्रत्ययत्वादेरनुगतस्य सम्भवेन तद्रूपेण धातु-प्रत्ययादेरनुगमनस्य सम्भवेन धात्वर्थे प्रत्ययार्थवर्तमानत्वादेरन्वय

विशिष्य विश्रान्तिरिति चेत् ? न-अन्ततो धातुपदत्वादिनापि तदनुगमस्य कर्तुं शक्यत्वात्, अथान्यत्राऽप्येकपदोपात्तत्वप्रत्यासत्त्या कृत्यादिस्वार्थ एव प्रत्ययार्थकालान्वयो व्युत्पत्तिवैचित्र्यात्, न च पचत्यपि भाविकृतिप्रागभावमाद्यकृतिध्वंसं चादाय 'पक्ष्यति, अपाक्षीत्' इति प्रयोगप्रसङ्ग इति वाच्यम्, आद्यकृतिप्रागभाव-चरमकृतिध्वंसयोर्भविष्यदतीतप्रत्ययार्थत्वादिति नोक्तदोष इति चेत् ? न-'जानाति'-इत्यादौ धात्वर्थ एव प्रत्ययार्थकालान्वयदर्शनात्; अस्तु वा, तथापि कृत्प्रत्ययार्थोत्पत्तेः प्रातिपदिकार्थे घटे कथमन्वयोऽयोग्यत्वात्, परपम्परासम्बन्धेन तत्र तदन्वयोपपत्तिरिति चेत् ? न-विद्यमानघटे

---

इति नियमस्य सामान्यत. सम्भवेन तद्भङ्गप्रसङ्गः कृत्प्रत्ययार्थवर्तमानत्वा-ऽतीतत्वयो· कृत्प्रत्ययार्थोत्पत्तावन्वयस्योपगमे स्यादेवेत्यर्थः । ननु क्रियमाण कृतमित्यत्र कृतिर्धात्वर्थ एवेति तत्रानश्-निष्ठाप्रत्ययार्थवर्तमानत्वा-ऽतीतत्वयोरन्वयः, अन्यत्र तु कृतिः प्रत्ययार्थ इति प्रत्ययार्थ एव तत्र प्रत्ययार्थवर्तमानत्वाऽतीतत्वयोरन्वय, एकप्रत्ययोपस्थाप्ययोरपि कृति-कालयोरन्वयोऽनुभवानुरोधादुपगम्यते, तथा च यत्र धात्वर्थः कृतिस्तत्र धात्वर्थ एव प्रत्ययार्थकालान्वय·, यत्र तु प्रत्ययार्थ कृतिस्तत्र प्रत्ययार्थे प्रत्ययार्थकालान्वय इति व्युत्पत्तिवैचित्र्याभ्युपगमे न कश्चिद् दोष इति शङ्कते- **अथेति** । **अन्यत्रापि** कृत्यर्थकधातुव्यतिरिक्तधातुस्थलेऽपि । ननु कृत्यर्थकधातुस्थले धात्वर्थे प्रत्ययार्थकालान्वये निर्णीते तदन्यधातुस्थलेऽपि धात्वर्थ एव प्रत्ययार्थे कालान्वय समुचितः, एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापीति न्यायादिति न प्रत्ययार्थे प्रत्ययार्थकालान्वय इत्यत आह- **एकपदोपात्तत्वप्रत्यासत्त्येति**- सन्निकृष्टेऽन्तरङ्गेऽन्वये सम्भवति विप्रकृष्टे वहिरङ्गे नान्वय इत्यपि नियम इति प्रत्ययार्थः कृतिः कालश्च यत्र तत्र धात्वर्थे एकपदोपात्तत्वलक्षणप्रत्यासत्तिविकलत्वाद् वहिरङ्ग, प्रत्ययार्थे चोक्तप्रत्यासत्तिसमन्वितत्वादन्तरङ्ग इति तत्रैव प्रत्ययार्थकालादेरन्वयः, यत्र तूक्तप्रत्यासत्तिशालिनि नान्वय· सम्भवति तत्र विप्रकृष्टेऽपि पदान्तरोपस्थापितार्थे पदान्तरोपस्थापितार्थस्यान्वयः स्वीक्रियत एवेत्येव व्युत्पत्तिवैचित्र्याश्रयणे न कश्चिद् दोपः, दृश्यते चैवकारात्मकैकपदोपस्थापितयोरप्यन्ययो-र्व्यवच्छेदयोरन्वय इति तथा कल्पना नादृष्टचरीत्याशय. । ननु यद्यन्यत्रैकपदोपात्तत्व-प्रत्यासत्तिवलात् प्रत्ययार्थ एव कृतौ प्रत्ययार्थवर्तमानत्वादेरन्वयस्तदा पाकानुकूलवर्तमानकृतिमत्यपि देवदत्तादावुत्तरकाले पाककृतिर्भविष्यतीति 'पक्ष्यति देवदत्तः' इति प्रयोग स्यात्, पाकानुकूलाया प्रयोगाधारकालवृत्तिप्रागभावप्रतियोगित्व-लक्षणभविष्यत्त्ववत्याः कृतेर्देवदत्ते भावात्, एवं तत्र पूर्वकाले पाकानुकूला कृतिरासीदपीति 'अपाक्षीद् देवदत्त.' इत्यपि प्रयोगः स्यात्, पाकानुकूलाया· प्रयोगाधारकालवृत्तिध्वसप्रतियोगित्वलक्षणातीतत्ववत्या. कृतेरपि भावादिति प्रत्ययार्थे कृतौ प्रत्ययार्थकालान्वयो न युक्त इत्याशङ्कामुद्भाव्य प्रश्नयिता प्रतिक्षिपति- **न चेति**- अस्य 'वाच्यम्' इत्यनेनान्वय· । निषेधे हेतुमाह- **आद्यकृतीति**- तत्पाकानुकूलकृतिध्वंसाधिकरणक्षणावृत्तित्व तत्पाकानुकूलकृतावाद्यत्वम्, तत्पाकानुकूलकृतिप्रागभावा-नधिकरणक्षणवृत्तित्वं तत्र चरमत्वं वोध्यम्, तथा च पचति देवदत्ते तदानीं 'पक्ष्यति देवदत्त' इति न प्रयोग, तादृश-प्रयोगकालवृत्तित्वस्याद्यकृतिप्रागभावेऽभावात्, एवं तदानीम् 'अपाक्षीद् देवदत्तः' इत्यपि न प्रयोग., तादृशप्रयोगकाले चरमकृतिध्वंसस्याभावादिति । समाधत्ते- **नेति**- यदभिमतं प्रश्नकर्तुः कृत्यर्थकधातुव्यतिरिक्तधातुस्थले प्रत्ययार्थकृतौ प्रत्ययार्थकालान्वय इति तन्न समीचीनम्, जानातीत्यत्र ज्ञाधातु· कृत्यर्थको न, किन्तु ज्ञानार्थक एव, तथा च कृत्यर्थक-धातुव्यतिरिक्तधातुः स भवति न च तत्र धातूत्तरप्रत्ययस्याख्यातस्य कृतिरर्थो येन तत्र प्रत्ययार्थकालस्यान्वय. मम्भाव्येतापि, आख्यातस्य तत्र कृत्यर्थत्वमभ्युपेत्याख्यातार्थे कृतौ वर्तमानत्वस्याख्यातार्थस्यान्वय इति न च कल्पयितु शक्यम्, तथा सति तदानी घटज्ञानविरहिण्यपि देवदत्ते घटज्ञानार्थं यतमाने देवदत्तो घटं जानातीति प्रयोगः स्याद् घटविषयकज्ञानानुकूलवर्तमानकालीनयत्नवत्त्वस्य देवदत्ते सद्भावादित्यगत्या धात्वर्थ एव ज्ञाने प्रत्ययार्थकालान्वय इति कृत्यादि-स्वार्थ एव प्रत्ययार्थकालान्वय इति नियमो भग्न एवेत्यर्थः । यदि च कथमपि व्युत्पत्तिवैचित्र्याद् 'नष्टो घटः, नश्यन् घट·' इत्यादौ प्रत्ययार्थोत्पत्तावेव प्रत्ययार्थकालस्यान्वय उपेयते, एवमप्यतीताया वर्तमानाया वा नाशोत्पत्तेर्घटेऽन्वयोऽयोग्यत्वान्न सम्भवतीति तादृशप्रयोगानुपपत्तिः स्यादित्याह- **अस्तु वेति** । **कथमित्याक्षेपे**, न कथञ्चिदित्यर्थ. । ननु नाशोत्पत्तिः स्वाश्रयनाशप्रतियोगित्वलक्षणपरम्परासम्बन्धेन घटेऽन्वेतुमर्हत्येवेत्याशङ्कते- **परम्परासम्बन्धेनेति**-स्वाश्रयप्रतियोगित्वसम्बन्धेनेत्यर्थः । **तत्र** घटे । **तदन्वयोपपत्तिः** नाशोत्पत्त्यन्वयसम्भव. । प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वमिति नव्यमभि-

'न नष्टो घटः' इति प्रयोगानापत्तेः, वृत्त्यनियामकस्य सम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वात्; उत्पत्तेर्धात्वर्थे तस्य च प्रातिपदिकार्थेऽन्वयान्न दोष इति चेत् ? न-नामार्थ-धात्वर्थयोः साक्षाद्भेद-सम्बन्धेनान्वयायोगात्, अन्यथा 'तण्डुलं पचति' इत्यत्रापि कर्मत्वसंसर्गेण प्रातिपदिकार्थस्य धात्वर्थे-ऽन्वयप्रसङ्गात्; अभेदेन निपातान्यनामार्थप्रकारकबोधे समान( विशेष्यत्वप्रत्यासत्त्या निपातप्रत्यया-न्यतरजन्योपस्थितेर्हेतुत्वात्, नामार्थप्रकारकधात्वर्थ )विशेष्यकबोधासम्भवेऽपि धात्वर्थप्रकारकनामार्थ-विशेष्यकबोधः प्रकृतेऽनपाय एवेति चेत् ? न- 'चैत्रः पाकः' इत्यादौ कर्तृत्वादिसंसर्गेण पाकादेश्चैत्रा-दावन्वयाबोधाय धात्वर्थप्रकारकबोधेऽपि निपात-प्रत्ययान्यतरजन्योपस्थितेर्हेतुत्वान्तरकल्पनावश्यकत्वात् ।

---

व्याहृतयादृशवाक्याद् येन सम्बन्धेन यद्वत्त्वं यत्र प्रतीयते नञ्समभिव्याहृततादृशवाक्यात् तत्सम्बन्धावच्छिन्नतन्निष्ठप्रति-योगिताकाभाववत्त्वं तत्र प्रतीयत इति नियमेन 'नष्टो घटः' इत्यत्र स्वाश्रयप्रतियोगित्वसम्बन्धेनातीतनाशोत्पत्तेर्घटेऽन्वया-भ्युपगमे 'न नष्टोः घट' इत्यत्र स्वाश्रयप्रतियोगित्वसम्बन्धावच्छिन्नातीतनाशोत्पत्तिनिष्ठप्रतियोगिताकाभाववान् घट इत्येवमेवा-न्वयबोधस्योपगन्तव्यत्वेन वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वपक्षे स्वाश्रयप्रतियोगित्वस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धया तद्वत्त्वबोधनासम्भवेन विद्यमानघटे 'न नष्टो घट.' इति प्रयोगो नोपपद्यतेति समाधत्ते- नेति । ननु 'नष्टो घटः' इत्यत्रातीतोत्पत्तिमन्नाशप्रतियोगी घट इत्येवमन्वयबोधो भवति, स च प्रत्ययार्थातील-कालान्वितप्रत्ययार्थोत्पत्तेर्नश्धात्वर्थे नाशे तस्य च प्रतियोगितया प्रातिपदिकार्थे घटेऽन्वयस्योपगमादुपपादयितु शक्य इत्याशङ्कते- **उत्पत्तेरिति** । **तस्य च** धात्वर्थस्य पुन. । नामार्थ-धात्वर्थयोः साक्षादभेदातिरिक्तसम्बन्धेन नान्वय इति नियमाद् धात्वर्थस्य नाशस्य प्रतियोगित्वलक्षणाभेदातिरिक्तसम्बन्धेन नामार्थे घटेऽन्वयासम्भवादिति समाधत्ते- नेति । 'तण्डुलं पचति देवदत्तः' इत्यत्र धात्वर्थस्य पाकस्य प्रत्ययार्थकृतिद्वारा स्वानुकूलकृतिमत्त्वरूपपरम्परासम्बन्धेन नामार्थे देवदत्तेऽन्वयात् **साक्षादिति** । स्तोकं पचतीत्यत्र स्तोकरूपनामार्थस्य साक्षादेवाभेदसम्बन्धेन धात्वर्थे पाकेऽन्वयाद् **भेदसम्बन्धेनेति**- अस्याभेदातिरिक्त-सम्बन्धेनेत्यर्थ. । **अन्यथा** नामार्थ-धात्वर्थयोः साक्षाद्भेदसम्बन्धस्योपगमे । **प्रातिपदिकार्थस्य** द्वितीयाविभक्तिप्रकृति-तण्डुलरूपनामार्थस्य । **धात्वर्थे** पच्धात्वर्थे पाके । ननु नामार्थस्य तण्डुलस्य कर्मत्वसंसर्गेण धात्वर्थे पाकेऽन्वयो न भवतीत्ये-तदर्थं विशेष्यतासम्बन्धेन भेदसम्बन्धावच्छिन्ननिपातान्यनामार्थनिष्ठप्रकारताकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन निपात-प्रत्ययान्यतरजन्योपस्थिति कारणमित्येव कल्प्यते, 'नष्टो घट.' इत्यत्र तु न नामार्थप्रकारकधात्वर्थविशेष्यकशाब्दबोधः, किन्तु धात्वर्थनाशप्रकारकनामार्थघटविशेष्यकशाब्दबोध एव, तस्य च निरुक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वान्निरुक्तकारणाभावेऽपि नानुपपत्तिरिति शङ्कते- **अथेति** । '**अभेदेन**' इति स्थाने 'अथ अभेदेन' इति पाठो युक्तः । 'घटः पटो न' इत्यत्र नञ्रूपनामार्थभेदस्य स्वरूपसम्बन्धेन घटेऽन्वयात् स्वरूपसम्बन्धावच्छिन्ननञ्रूपनामार्थभेदनिष्ठप्रकारताकबोधस्य विशेष्यता-सम्बन्धेन घटरूपनामार्थे उत्पादात् तत्र निपातप्रत्ययान्यतरजन्योपस्थितेर्विशेष्यतासम्बन्धेनाभावाद् व्यभिचार इति तद्वारणाय **निपातान्येति**-नाम्नो विशेषणम्, तथा चोक्तभेदप्रकारकबोधस्य कार्यतावच्छेदकानाक्रान्तत्वान्न व्यभिचार., 'घटो न' इत्यादौ निपातजन्योपस्थितेः 'घटम्' इत्यादौ प्रत्ययजन्योपस्थितेः सत्त्वान्न व्यभिचार इत्येतदर्थं कारणकोटौ निपात-प्रत्ययान्यतरत्वेन **निपातप्रत्यययोरुपादानम्** । **प्रकृते** 'नष्टो घटः' इत्यादौ । चैत्रः पचतीत्यादौ चैत्ररूपनामार्थस्य स्वकर्तृकत्वसम्बन्धेन पाकरूपधात्वर्थेऽन्वयस्य विशेष्यतासम्बन्धेन भेदसम्बन्धेन नामार्थप्रकारकबोधे विशेष्यतासम्बन्धेन निपातप्रत्ययजन्योपस्थितेः कारणत्वकल्पनेन वारणेऽपि कर्तृत्वसम्बन्धेन पाकप्रकारकबोधस्य निरुक्तकार्यतावच्छेदकधर्मा-नाक्रान्तस्य विशेष्यतासम्बन्धेन चैत्ररूपनामार्थे उत्पत्तेर्वारणाय भेदसम्बन्धेन धात्वर्थप्रकारकबोध प्रत्यपि समानविशेष्यत्व-प्रत्यासत्त्या निपात-प्रत्ययान्यतरजन्योपस्थितेर्हेतुत्व स्वीकरणीयमेव, तथा च 'नष्टो घटः' इत्यादौ नश्धात्वर्थस्य नाशस्य प्रतियोगितासम्बन्धेन घटरूपनामार्थेऽन्वयो न सम्भवतीति समाधत्ते-नेति । '**चैत्रः पाक इत्यादौ**' इत्यस्य स्थाने "चैत्र. पचतीत्यादौ" इति पाठो युक्त. । **धात्वर्थप्रकारकबोधेऽपि** विशेष्यतासम्बन्धेन धात्वर्थ-प्रकारकबोधेऽपि । ननु 'नष्टो घट.' इत्यादौ नश्धातोर्नाशप्रतियोगिनि लक्षणा, लक्ष्यार्थस्य च नाशप्रतियोगिनो-ऽभेदसम्बन्धेन घटरूपनामार्थेऽन्वयः, यद्यपि 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तेर्नाशप्रति-योगिरूपपदार्थैकदेशे नाशे कृत्प्रत्ययार्थस्योत्पत्तेर्नान्वयः सम्भवति, तथाऽपि क्वचित् पदार्थैकदेशेऽपि पदार्थान्वयः स्वी-

स्यादेतत्– अत्र नश्धातोः प्रतियोगिनि लक्षणयाऽभेदेनैवास्तु प्रातिपदिकार्थेन सममन्वयः, एकदेशे नाशे कृत्प्रत्ययार्थोत्पत्तेरन्वयश्च व्युत्पत्तिवैचित्र्यात्; न च धात्वर्थस्याख्यातार्थ एवान्वयनियमात् कथमेवमिति वाच्यम्, शक्त्यैव धात्वर्थप्रकारकबोधे आख्यातादिजन्योपस्थितेर्हेतुत्वात्, अत एव 'जानाति' इत्यादौ 'ज्ञाधातोर्ज्ञानवति लक्षणया प्रातिपदिकार्थेनान्वयसम्भवे आख्यातार्थोऽयोग्यत्वान्न भासते' इति चिन्तामणिकृदुक्तं युक्तम्, अनया भङ्ग्या धातोः परम्परया मुख्यार्थबाधप्रदर्शनेन तल्लक्षणासूचनस्यैवाभिप्रेतत्वात्, एवं हि निरूपितत्वसम्बन्धेन ज्ञानप्रकारकाश्रयत्वविशेष्यकावान्तरशाब्दबोधे तद्धेतुत्वादिगौरवं निरस्तं भवति, न च सामान्यतो हेतुत्वं क्लृप्तमेवेति क्व गौरवमिति वाच्यम्, तथापि तत्तदाकाङ्क्षाज्ञानादिहेतुताकल्पने गौरवादिति; मैवम्–तथा सति 'जानाति' इत्यत्राख्यातार्थसङ्ख्यानन्वयप्रसङ्गात्,

क्रियते, यथा–'सम्पन्नो व्रीहिः' इत्यत्र पदार्थतावच्छेदके व्रीहित्वे एकत्वस्यान्वयः, इति 'पदार्थ०' इत्यादिनियमसङ्कोचनेन पदार्थैकदेशेऽपि नाशे कृत्पदार्थान्वयो व्युत्पत्तिवैचित्र्यादुपेयत इत्याशङ्कते– **स्यादेतदिति** । अत्र 'नष्टो घटः' इत्यादौ । **प्रतियोगिनि** नाशप्रतियोगिनि । '**लक्षणया**' इत्यनन्तरं 'लक्ष्यार्थस्य तस्य' इति शेषः । **अभेदेनैव** अभेदसम्बन्धेनैव । **एकदेशे** नाशप्रतियोगिरूपपदार्थैकदेशे । ननु धात्वर्थस्य नाशप्रतियोगिनि नामार्थे घटे नान्वयः सम्भवति, धात्वर्थस्य प्रत्ययार्थेन सममेवान्वयस्य नियमादित्याशङ्का प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वयः । **कथमेवम्** धात्वर्थस्य नाशप्रतियोगिनोऽभेदेन कथं नामार्थेनान्वयः । निषेधे हेतुमाह– **शक्त्यैवेति**–विशेष्यतासम्बन्धेन धातुशक्त्युपस्थाप्यार्थप्रकारकशाब्दबोधे विशेष्यतासम्बन्धेनाख्यातादिजन्योपस्थितेर्हेतुत्वम्, अतो धातोः शक्यार्थस्य न नामार्थेऽभेदेनान्वयः, प्रकृते तु नश्धातोर्लक्ष्यार्थस्य नाशप्रतियोगिनोऽभेदेन नामार्थे घटेऽन्वय इति तत्र नोक्तकार्यकारणभावविरोध इत्यर्थः । नामार्थेन समं धातुलक्ष्यार्थस्यान्वये गङ्गेशोपाध्यायवचनसंवादमुपदर्शयति– **अत एवेति**– धातुशक्यार्थप्रकारकबोध एवाख्यातादिजन्योपस्थितेर्हेतुत्वादेवेत्यर्थः । '**लक्षणया**' इत्यनन्तरं तदुपस्थाप्यार्थस्येति शेषः । **अन्वयसम्भवे** अभेदेनान्वयसम्भवे । **आख्यातार्थः** यत्नः । **अयोग्यत्वात्** वर्तमानज्ञानाश्रये देवदत्ते 'देवदत्तो घटं जानाति' इति प्रयुज्यते, यदा तु देवदत्तो घटस्य ज्ञानार्थं यतते न तु वर्तमानघटविषयकज्ञानाश्रयस्तदानीं 'देवदत्तो घटं जानाति' इति न प्रयुज्यते, यदि तु तत्राख्यातार्थान्वयबोध उपेयते तदा घटज्ञानानुकूलवर्तमानकालीनयत्नाश्रयत्वस्य देवदत्ते सत्त्वाद् 'देवदत्तो घटं जानाति' इति प्रयोगः स्यात्, न च भवति तदानीमेव प्रयोगोऽतोऽयोग्यत्वादाख्यातार्थो न तत्र भासत इत्यर्थः । **अनया भङ्ग्या** 'ज्ञाधातोर्ज्ञानवति लक्षणया०' इत्यादिवचनसन्दर्भेण, लक्षणा तत्रैव भवति यत्र मुख्यार्थबाध इति ज्ञाधातोर्ज्ञानवति लक्षणोपदर्शनेन मुख्यार्थबाधो यतोऽत्र ततो लक्षणा समाश्रितेत्येवं परम्परया मुख्यार्थबाधप्रदर्शनेन, वस्तुतः 'आख्यातार्थोऽयोग्यत्वान्न भासते' इत्युक्त्यैव परम्परया मुख्यार्थबाध उपदर्शितः, यद्यत्र धातोर्लक्षणयोपपत्तिर्न भवेत्, तदाऽऽख्यातस्यैव लक्ष्यार्थमाश्रयत्वमाश्रित्यान्वय उपेयेतापि, तेन चाख्यातार्थोऽपि योग्यत्वाद् भासेत, न चैवम्, ज्ञाधातोर्ज्ञानवति लक्षणया प्रातिपदिकार्थेनान्वयः सम्भवत्येव, एवं चाख्यातार्थोऽयोग्यत्वान्न भासत इत्यर्थस्योपोद्बलनाय '**ज्ञाधातोः**' इत्याद्युक्तिः, तत्र चाख्यातार्थस्याभासनं प्रधानतया तद्धेतुतया चायोग्यत्वं मुख्यार्थबाधपर्यवसितं प्रदर्शितमित्येतावता परम्परया मुख्यार्थबाधप्रदर्शनम्, यत्र च मुख्यार्थबाधस्तत्र शाब्दबोधोपपत्तये लक्षणा समाश्रियत एवेत्यतस्तेन लक्षणासूचनं तदुक्त्यभिप्रेतमिति बोध्यम् । ज्ञाधातुलक्ष्यार्थस्य ज्ञानवतोऽभेदेन नामार्थेऽन्वयोपगमे ज्ञाननिरूपिताश्रयत्वप्रकारकनामार्थविशेष्यकान्वयबोधलक्षणमहावाक्यार्थबोधस्यानभ्युपगमेन तत्कारणत्वमपि निरूपितत्वसम्बन्धेन ज्ञानप्रकारकाश्रयत्वविशेष्यकान्वयबोधलक्षणावान्तरबोधे न स्वीक्रियते नवाऽऽख्यातजन्याश्रयत्वोपस्थितेस्तं प्रति कारणत्वमपीति लाघवमपीत्याह **एवं हीति**– धातुलक्ष्यार्थस्याभेदेन नामार्थेऽन्वयोपगमे यत इत्यर्थः । **तद्धेतुत्वादीति**– जानातीत्याद्यानुपूर्वीलक्षणमभिव्याहारज्ञानादिनिष्ठकारणत्वादीत्यर्थः । ननु शाब्दबुद्धित्वावच्छिन्नं प्रत्याकाङ्क्षाज्ञानत्वेन कारणत्वं क्लृप्तमेवेति न गौरवमित्याशङ्का प्रतिक्षिपति– **न चेति**– अस्य 'वाच्यम्' इत्यनेनान्वयः । निषेधे हेतुमाह– **तथापीति**– आकाङ्क्षाज्ञान शाब्दबोधयोः सामान्यतो हेतुहेतुमद्भावस्य क्लृप्तत्वेऽपीत्यर्थः । **तत्तदाकाङ्क्षेति**– निरूपितत्वसम्बन्धेन ज्ञानप्रकारकाश्रयत्वविशेष्यकशाब्दबोधे जानातीत्यानु-

भावनान्वयिन्येवाख्यातार्थसङ्ख्यान्वयात्, अथाख्यातार्थसङ्ख्यान्वये भावनाविशेष्यत्वं न तन्त्रम्, किन्तु प्रथमान्तपदोपस्थाप्यत्वमेवेति न दोष इति चेत् ? न—धात्वर्थप्रकारकबोधसामान्य एवाख्यातादिजन्योपस्थितेर्हेतुत्वात्, शक्त्येति प्रवेशे गौरवात्, 'प्रजयति' इत्यादावनन्वयप्रसङ्गाच्च, 'पाकोऽयम्' इत्यादौ च 'स्तोकं पचति, स्तोकः (पाकः)' इति प्रयोगयोर्विशेषाय घञादीनां धात्वर्थतावच्छेदकविशिष्टे शक्तिस्वीकारान्न दोष इति दिक् ।

तदेवं नैयायिकोक्तव्युत्पत्तौ तन्नीत्यैवातिप्रसङ्गस्य दर्शितत्वात्, ज्ञानोत्पत्तिकाले नाशोत्पत्तिकालेऽपि

---

पूर्वोक्तलक्षणाकाङ्क्षाज्ञानस्य स्वरूपसम्बन्धेन ज्ञानाश्रयत्वप्रकारकचैत्रादिनामार्थविशेष्यकशाब्दबोधे 'जानाति चैत्रः' इत्यादिसमभिव्याहारलक्षणाकाङ्क्षाज्ञानस्य च हेतुताकल्पने गौरवादित्यर्थः । स्यादेतदित्यादिनोद्भावितामाशङ्कां प्रतिक्षिपति—**मैवमि**त्यादिना । **तथा सति** जानातीत्यादौ ज्ञाधातोर्ज्ञानवति लक्षणया लक्ष्यार्थस्य ज्ञानवतो नामार्थेऽन्वयमभ्युपेत्याख्यातार्थभावनायास्तत्रान्वयबोधानभ्युपगमे सति । **आख्यातार्थसङ्ख्याऽनन्वयप्रसङ्गात्** जानातीत्याख्यातैकवचनार्थैकत्वसङ्ख्याया नामार्थचैत्रादौ योऽन्वयबोधो भवति स न स्यात् । तत्र हेतुमाह— **भावने**ति— आख्यातार्थभावनाया यत्रान्वयस्तत्रैवाख्यातसङ्ख्याया अन्वय इति नियमेन आख्यातार्थभावनायाः प्रकृतेऽन्वयानभ्युपगमे आख्यातार्थसङ्ख्याया अपि तत्रान्वयो न स्यादित्यर्थः । ननु विशेष्यतासम्बन्धेन यत्राख्यातार्थभावनाप्रकारकबोधस्तत्र तार्थविशेष्यतार्थसम्बन्धेनाख्यातसङ्ख्याप्रकारकबोध इत्येव नेष्यते येन भावनाविशेष्यत्वमाख्यातार्थ सङ्ख्यान्वये प्रयोजकं स्यात्, किन्तु प्रथमान्तपदोपस्थितार्थे एवाख्यातार्थसङ्ख्यान्वय इति आख्यातार्थसङ्ख्यान्वये प्रथमान्तपदोपस्थाप्यत्वमेव प्रयोजकमिति चैत्रादौ प्रथमान्तपदोपस्थाप्ये आख्यातार्थसङ्ख्यान्वय उपपद्यततेतरामिति शङ्कते— **अथे**ति । **तन्त्रम्** प्रयोजकम्, विशेष्यतासम्बन्धेन धात्वर्थप्रकारकबोधत्वावच्छिन्नं प्रत्येव विशेष्यतासम्बन्धेनाख्यातादिप्रत्ययजन्योपस्थितेः कारणत्वम्, न तु विशेष्यतासम्बन्धेन शक्त्या धात्वर्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेनाख्यातादिप्रत्ययजन्योपस्थितेः कारणत्वम्, कार्यतावच्छेदककोटौ शक्त्येति प्रवेशे गौरवात्; 'प्रजयति' इत्यादौ प्रपूर्वकजिधातोर्लक्षणयैवोपस्थितस्याख्यातार्थेन सममन्वयस्वीकारेण तादृशान्वयबोधस्य शक्त्या धात्वर्थप्रकारकान्वयबोधत्वलक्षणकार्यतावच्छेदकानाक्रान्तत्वेन 'प्रजयति' इति समभिव्याहारादनुत्पादप्रसङ्गात्, एवं च 'जानाति' इत्यादौ न धातोर्ज्ञानाश्रये लक्षणा किन्तु आख्यातस्यैवाश्रयत्वे लक्षणा आख्यातलक्ष्यार्थ एवाश्रयत्वे धात्वर्थस्य ज्ञानस्य निरूपितत्वसम्बन्धेनान्वय, इत्थं च 'नष्टो घटः' इत्यादौ नशधातोर्नाशप्रतियोगिनि लक्षणायामपि लक्ष्यार्थस्य नाशप्रतियोगिनोऽभेदसम्बन्धेन न नामार्थे घटेऽन्वयः सम्भवति, तादृशबोधस्यापि निरुक्तकार्यतावच्छेदकाक्रान्तत्वेन विशेष्यतासम्बन्धेन तं प्रति कारणस्य विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेर्नामार्थे घटेऽभावादित्यर्थः । ननु 'पाकोऽयम्' इत्यादौ पच्धातोरेव पाके शक्तिर्न तु घञ इति पच्धातूपस्थाप्यस्य पाकस्याभेदेन नामार्थे इदमर्थेऽन्वय इति तद्बोधस्य पच्धात्वर्थपाकप्रकारकस्य विशेष्यतासम्बन्धेन नामार्थे उत्पत्तेस्तत्र प्रत्ययजन्योपस्थितेर्विशेष्यतासम्बन्धेनाभावाद् व्यभिचार इति नोक्तकार्यकारणभावसम्भव इत्यत आह—**'पाकोऽयम्' इत्यादौ चे**ति—'स्तोकं पचति' इत्यत्र 'क्रियाविशेषणाना कर्मत्वम्' इत्यनुशासनात् पच्धात्वर्थपाकेऽभेदेन विशेषणस्य स्तोकार्थस्य वाचकात् स्तोकपदाद् द्वितीया, 'स्तोकः पाकः' इत्यत्र स्तोकपदार्थस्य न पच्धात्वर्थेऽभेदेन विशेषणत्व तथा सत्युक्तानुशासनबलादत्रापि द्वितीयाप्रसक्तौ 'स्तोकं पाकः' इति स्यान्न तु 'स्तोकः पाकः' इति, भवति च 'स्तोकः पाकः' इतिवत् 'स्तोकः पाकः' इत्यपि, तदनुरोधेन पच्धातूत्तरघञोऽपि धात्वर्थतावच्छेदकपाकत्वविशिष्टे शक्तिरुपेयते, तथा च घञन्तपाकपदार्थे नामार्थे एवाभेदेन स्तोकरूपनामार्थस्यान्वय इति तत्र विशेष्य-विशेषणवाचकपदयो समानविभक्तिवचनत्वनियमबलात् 'स्तोकः पाकः' इति प्रयोग इति, एवं च 'पाकोऽयम्' इत्यत्र घञन्तपाकनामार्थस्यैवाभेदेनेदमो नाम्नोऽर्थेऽन्वयो न तु पच्धात्वर्थस्येति व्यभिचाराभावादुक्तकार्यकारणभावः सम्यगेवेति भावः ।

क्रियाकाल-निष्ठाकालयोरैक्यमाश्रित्य 'क्रियमाणं कृतम्' इति यदृजुसूत्रनयाभिप्रेतं तदुपसहरति— **तदेवमि**ति । **नैयायिकोक्तव्युत्पत्तावि**ति— धातूत्तरप्रत्ययजन्यकालप्रकारकबोधे सामानविशेष्यत्वप्रत्यासत्त्या धातुजन्योपस्थितेर्हेतुत्वमित्यादि-

च 'ज्ञातो घटः, नष्टो घटः' इति व्यवहारात्, क्रियाकालेऽपि निष्ठार्थाविरोधात् तत् 'क्रियमाणं कृतम्' इत्यन्वयो नानुपपन्नः, सर्वत्र कालवर्तिताविशेषरूपसिद्धत्वस्य निष्ठार्थत्वात्, तस्य चादिसमवायावच्छेदेन साध्यत्वेन सममविरोधात्, चिरनष्टे 'इदानीं नष्टः' इति, चिरोत्पन्ने च 'इदानीमुत्पन्नः' इति च प्रतीतिः समभिव्याहारविशेषादेतत्कालावच्छिन्नसाध्यत्वविशिष्टसिद्धत्वोपस्थित्यैव न भविष्यति, इत्थमेव क्रियमाणं कृतमेव, कृतं च क्रियमाणत्वेन भजनीयमिति सिद्धान्तः सङ्गच्छते। सिद्धत्वविशिष्टसाध्यतायाः सिद्धत्वनियतत्वाच्छुद्धसिद्धतायाश्च विशिष्टसाध्यताऽनियतत्वात्, तदाह भाष्यकारः—

"तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किंचिदिह कज्जमाणं उवरयकिरियं व होज्जाहि"॥

—[विशेषावश्यकभाष्यगाथा–२३२०] इति,

अस्तु वा विपरिणाम-स्वरूपनिष्पत्त्यादिरूपाननुगतैव निष्ठा, समभिव्याहारविशेषादेव बोधविशेषोपपत्तेः, परमुक्तयुक्तेः क्रियाकालो (नयरहस्यतः) निष्ठाकालं न विरुणद्धीति किमतिविस्तरेण?॥३१॥

ननु यद्येवं कारणव्यापारचरमक्षण एव क्रियाकालो निष्ठाकालश्च भाष्यकृता निर्णीतस्तदा शाट्येक-

व्युत्पत्तौ 'क्रियमाणम्' इत्यत्र क्रियाया वर्तमानकालवृत्तित्वान्वय 'कृतम्' इत्यत्र क्रियायामतीतकालवृत्तित्वान्वय इति वर्तमानकालवृत्तिक्रियाया अतीतकालवृत्तित्वासम्भवान्न क्रियमाण कृतमित्यस्योपपादिकायामित्यर्थ.। **तन्नीत्यैव** नैयायिकोक्तव्युत्पत्त्यैव। **अतिप्रसङ्गस्येति**– चिरविनष्टेऽपि घटे विद्यमाननाशप्रतियोगित्वस्य सत्त्वेन 'नश्यन् घटः' इति प्रयोगप्रसङ्गस्येत्यर्थ। क्रियाकाले निष्ठार्थाविरोधं व्यवहारबलादुपपाद्य तत. 'क्रियमाणं कृतम्' इत्यत्रान्वयोपपत्तिं भावयति– **ज्ञानोत्पत्तिकाल** इति। यादृशस्य निष्ठार्थस्योत्पत्तिसमयेऽपि सत्त्वतो न साध्यत्वेन सम विरोधस्त भावयति–**सर्वत्रेति**। **तस्य च** कालवर्तिताविशेषरूपसिद्धत्वस्य पुनः। यदि वर्तमान- निष्ठाकालयोर्न विरोधः किमिति चिरनष्टे 'इदानीं नष्ट.' इति, चिरोत्पन्ने च 'इदानीमुत्पन्नः' इति च न प्रतीतिरित्यपेक्षायामाह– **चिरनष्ट** इति। **'प्रतीतिः'** इत्यस्य 'न भविष्यति' इत्यनेनान्वयः। **समभिव्याहारविशेषात्** 'नष्टः' इति पदे 'उत्पन्न.' इति पदे चाव्यवहितोत्तरत्वसम्बन्धेन, इदानीमितिपदवत्त्वलक्षणाकाङ्क्षाबलात्। उक्तोपपादनप्रकारस्यर्जुसूत्रसिद्धान्तविशेषोपष्टम्भकत्वं दर्शयति– **इत्थमेवेति**– उक्तप्रकाराश्रयणादेवेत्यर्थः। **'कृतमेव'** इत्येवकारेणाकृतत्वव्यवच्छेद., तेन कृतत्वविनिर्मुक्त क्रियमाणत्व नास्त्येवेति दर्शितम्। **क्रियमाणत्वेन भजनीयम्** कृतं क्रियमाणमक्रियमाण च। **सिद्धत्वविशिष्टेति**– यदा नाश उत्पद्यते तदानीं नाशस्य सिद्धत्वमपि साध्यत्वमपीति तत्कालीना नाशगता साध्यता सिद्धत्वविशिष्टेति तस्याः सिद्धत्वव्याप्यत्वाद् यत्र सिद्धत्वविशिष्टसाध्यता तत्र सिद्धत्व समस्त्येवेत्यत क्रियमाणं कृतमेवेत्यर्थः। **शुद्धसिद्धतायाश्चेति**– चिरनष्टस्य घटादेर्नाशः पूर्वमेवोत्पन्न इदानीं नोत्पद्यत इति एतत्काले तन्नाशगता सिद्धतैव न त्वेतत्कालावच्छिन्ना साध्यतेति सा शुद्धसाध्यता, तस्याः पुनरेतत्कालावच्छिन्नसाध्यतालक्षणा या विशिष्टसाध्यता तद्व्याप्यत्वाभावादतः कृत क्रियमाण न भवत्यपीत्यर्थ.। उक्तार्थे भाष्यकारवचनसंवादमुपदर्शयति– **तदाहेति**। **तेणेह०** इति– "तेनेह क्रियमाण नियमेन कृतं कृतं तु भजनीयम्। किञ्चिदिह क्रियमाणमुपरतक्रिय च भवेत्" ॥१॥ इति संस्कृतम्। कालवर्तिताविशेषरूपमेव सिद्धत्व निष्ठाप्रत्ययार्थ इत्येवमेकरूपैव निष्ठेत्येकस्वरूपाया निष्ठाया अभावेऽपि न नः किञ्चिदपचीयते, अननुगतस्वरूपत्वेऽपि तस्यास्तत्तत्स्वरूपाया समभिव्याहारविशेषाद् बोधविशेष स्यादेव, एवमप्युक्तयुक्त्या क्रियाकालस्य निष्ठाकालेन सममविरोध एवेत्युपसहरति– **अस्तु वेति**। यस्मिन् काले यद् वस्तु यथैवोत्पन्न तथैवावतिष्ठते न तु सदृशरूपेण विसदृशरूपेण वा परिणमते तदा तद् वस्तु विपरिणामस्वरूपमिति तद्रूपैव तस्य निष्ठा, प्रतिक्षण किञ्चित्किञ्चिदंशेनोत्पद्यमानं पटादि वस्तु यदा निष्पन्न सम्पूर्णस्वरूप भवति तदानीं स्वरूपनिष्पत्तिरूपैव तस्य निष्ठेत्याह– **विपरिणामेति**। **पटं** किन्तु। अन्यत् स्पष्टम् ॥३१॥

द्वात्रिंशत्तमं पद्यमवतारयति–**नन्विति**। **तदानीं** शाट्येकदेशदाहकाले। **तन्निष्ठाकालस्य** शाटीदाहनिष्ठाकालस्य,

देशे दह्यमाने 'शाटी दग्धा' इति वचनं कथं भगवदुक्तर्जुसूत्रानुवादेन समर्थितम् ? तदानीं शाटीदाह-क्रियाकालसंवलितस्य तन्निष्ठाकालस्याभावादिति जिज्ञासायामाह—

**दह्यमानेऽपि शाट्येकदेशे स्कन्धोपचारतः ।**
**शाटी दग्धेति वचनं ज्ञेयमेतन्नयाश्रयम् ॥ ३२ ॥**

**नयामृत०**—दह्यमानेऽपीति । शाट्येकदेशे दह्यमानेऽपि तत्र, स्कन्धोपचारतः—शाटीस्कन्ध-वाचकशाटीपदोपचारात्, 'शाटी दग्धा' इति वचनम्, एतन्नयाश्रयम्—ऋजुसूत्राभिप्रायकं ज्ञेयम्, तदाह भाष्यकारः—

"उज्जुसुअणयमयाओ वीरजिणिंदवयणावलंबीणं । जुज्जेज्ज डज्झमाणं डड्ढं वोत्तुं न तुज्झ त्ति" ॥
[ विशेषावश्यकभाष्यगाथा—२३२९ ]

जमालिमतव्युद्ग्राहितां प्रियदर्शनां प्रति भगवद्वचनवासितचेतसो ढंकस्योक्तिरियम्, तथा चात्रो-पचारमूलव्यवहारनयोपगृहीतस्यर्जुसूत्रनयस्य प्रवृत्तिरित्युक्तं भवति । इदं तु ध्येयम्, एवं सति दीर्घः क्रियाकाल आंशिककार्यक्षणकोटिविषयोऽभ्युपगन्तव्यः, तत्र च यद्यपि कारणक्षणस्य पूर्ववर्तितयैव

---

शाट्येकदेशे दह्यमाने न शाटी दह्यत इति न स शाटीदाहकाल इति कुत. शाटीदाहक्रियाकालसवलितस्तन्निष्ठाकाल इति तदानीं 'शाटी दग्धा' इति वचनमभिधेयशून्यमेवेति भावः ।

विवृणोति— **दह्यमानेऽपीती**ति । **तत्र** शाट्येकदेशे । उक्तार्थे भाष्यसम्मतिमुपदर्शयति— **तदाहे**ति । **उज्जुसुअ०** इति— ऋजुसूत्रनयमताद् वोरजिनेन्द्रवचनावलम्बिनाम् । युज्यते दह्यमाने दग्धे वक्तुं न तवेति" इति सस्कृतम् । दह्यमाने शाट्येकदेशे 'शाटी दग्धा' इति वचनं कां प्रति कस्येत्यपेक्षायामाह— **जमाली**ति— जमालि — क्रियमाण कृतमिति सिद्धा-न्तमश्रद्दधानो मुनिविशेष , य प्रागवस्थया भगवतो जामाता, प्रियदर्शना— जमालिमतमनुसरन्ती साध्वी, या प्रागवस्थया जमालिजाया, ढङ्कः—प्रियदर्शनासाध्वीप्रतिबोधनोद्यतो ढङ्कनामा कुम्भकार श्रावकः। **इयं** या भाष्यकारेणानन्तर-गाथारूपेण सगृहीता। उपचार व्यवहारनय एवाभ्युपैति न तु ऋजुसूत्र इति कथमुपचाराश्रयेण ऋजुसूत्रनयाश्रिता निरुक्तोक्तिरित्यपेक्षायामाह— **तथा चे**ति— उपचाराश्रयेणोक्तवचनव्यवस्थितौ चेत्यर्थः। **अत्र** शाटी दग्धेति वचने । अत्र शेमुषीविशेषमाधातुं किञ्चिद्विशेषमुपदर्शयति— **इदं तु ध्येयमि**ति— एव सतीत्यादिनाऽनन्तरमेव वक्ष्यमाणं विचारणीय-मित्यर्थ. । **एवं सति** उक्तवचनस्य व्यवहारनयोपगृहीतर्जुसूत्रनयप्रवृत्तिकत्वे सति । **दीर्घः** एकतन्तुप्रवेशादिसमयमारभ्य चरमतन्त्वादिप्रवेशनिष्पन्नपटस्वरूपसमयपर्यन्तस्थायी । **आंशिके**ति— सहस्रतन्तुकपटस्य द्वितन्तुकपटादिकमांशिकम्, तत्क्षण-कोटिर्विषयः— स्वरूपसन्निविष्टो यस्य तादश., स्वरूपसम्बन्धविशेषरूपविषयत्वस्य ज्ञानेच्छायत्नेष्वेव भावादन्यादृशस्य विषयत्व स्योपदर्शितरूपस्यैवात्र योग्यत्वात्, क्षणश्चात्र कार्यस्वरूप एव, ऋजुसूत्रनये क्षणमात्रस्थायिनो वस्तुन एव क्षणत्वात्, तथा च क्रमिकानल्पकार्यप्रवाहविशेषस्वरूप. क्रियाकालो दीर्घोऽभ्युपगन्तव्य इत्यर्थः। **तत्र च** उक्तदीर्घकालाभ्युपगमे च । **कारणक्षणस्य** कारणात्मकक्षणस्य । **पूर्ववर्तितयैव** अव्यवहितपूर्ववर्त्तितयैव । **व्यापारात्** क्रियायामुपयोगात् । **क्रिया-कालः** आद्यतन्तुप्रवेशादिलक्षणक्रियाकालः, तदव्यवहितपूर्ववर्तितयैव कारणक्षणस्योपयोगः, तस्य च चरमतन्तुप्रवेशनिष्पन्न-पटस्वरूपात्मकनिष्ठाकालाव्यवहितपूर्ववर्तित्व नास्ति किन्तु तदन्यस्यैव कारणक्षणस्य तदव्यवहितपूर्ववर्तितया तत्रोपयोग इति कारणभेदात् **क्रियाकाल-निष्ठाकालयोर्भेद एवे**त्यर्थ., अस्य व्यवहारनयसम्मतत्व च प्रतिक्षणमन्यान्यभावेऽप्येकतयैव व्यवह्रियमाणत्वम्, तद् यद्यप्यौपचारिकम्, एवमप्युपचारप्रधानस्य व्यवहारनयस्य सम्मतत्वमासादयत्येव, तथा च व्यव-हारनयोपगृहीतस्यर्जुसूत्रस्य मते न सम्भवति क्रियाकाल निष्ठाकालयोरैक्यमित्येकं सीव्यतोऽपरप्रच्युतिरित्यर्थः। **तथापि** आद्यतन्त्वादोना, द्वितीयादितन्तुभिः सह संयोजनलक्षणप्रवेशनलक्षण पटस्य करणं क्रिया, तत्कालः क्रियाकालः, चरमतन्तु-प्रवेशनतो निष्पन्नपटस्वरूप निष्ठाकाल, तयोरुक्तदिशा भेदस्य व्यवहारनयसम्मतत्वेऽपि । "**भूतिर्येषाम्**" इति स्थाने

व्यापारात् क्रियाकाल निष्ठाकालयोर्भेद एव व्यवहारनयसम्मत आपतति, तथापि "भूतिर्येषां क्रिया सैव०" [ ] इत्याश्रयणादुत्पत्तिरूपक्रियायास्तन्निष्ठायाश्च यौगपद्यमविरुद्धमिति। "कज्जमाणे कडे" [ ]त्ति भगवद्वचनं तूत्पादादीनामेकधर्मिसंसर्गितया त्रैकाल्यविषयत्वेन प्रमाणार्थकतया व्याख्येयम्, तथाहि—आद्यतन्तुप्रवेशक्रियासमये पटद्रव्यं यदि तेन रूपेण नोत्पन्नं तर्ह्युत्तरत्रापि नोत्पन्नमित्यन्ता( न्तेऽप्य )नुत्पन्नं स्यात्, उत्पन्नांशेनैव चोत्पत्तौ फलान्तराभावप्रसङ्गः, इत्या-

"भूतिर्येषाम्" इति पाठो युक्त., अत्र "करण सैव चोच्यते", इति द्वितीयचरणम्, **एषां** घटपटादिकार्यक्षणाना या **भूति**र्भवनमुत्पत्तिरिति यावत्, सैव क्रिया, करणमप्येषा **सैव** उत्पत्तिरेवेत्यर्थः। **इत्याश्रयणात्** इति वचनाभिप्रेतार्थाभ्युपगन्तृमतस्य क्रियाकाल-निष्ठाकालयोरैक्यसंसिद्धये आश्रयणात्। **तन्निष्ठायाः** उत्पत्तिक्रियासिद्धत्वस्य। सर्वेषा घटादीनां क्षणमात्रस्थायित्वेन पूर्वपूर्वकार्यस्योत्तरोत्तरकार्यादत्यन्तभिन्नत्वेन विनाशस्य तुच्छरूपतयाऽतिरिक्तस्य कारणजनितस्याभावेन यदैव वस्तुन उत्पत्तिस्तदैव तस्य परिनिष्पत्तिस्वरूपोत्पत्तिरूपा स्थितिर्या निष्ठार्थतया गीयत इत्यैक्यादेव तयोः कालस्याप्यैक्यमृजुसूत्रनये इत्यर्थः। ननु भगवद्भिस्तीर्थकृद्भिः सर्वज्ञैरपि क्रियमाणं कृतमित्युपेयते तत् कथं सुसङ्गतम्? तेषामृजुसूत्रनयमात्राभ्युपगन्तृत्वाभावेन क्रियाकाल-निष्ठाकालयोर्भेदस्याप्युपगन्तृत्वादित्यत आह—**कज्जमाणे**—इति क्रियमाणं कृतमिति सस्कृतम्। '**भगवद्वचनं तु**' इत्यस्य 'व्याख्येयम्' इत्यनेनान्वयः। '**उत्पादादीनाम्**' इत्यत्रादिपदात् स्थिति-विगमयोरुपग्रहः। **एकधर्मिसंसर्गितये**ति—यदैव यस्योत्पादस्तस्य तदैव स्थितिर्विगमश्चेत्येवमेकधर्मिससर्गितयेत्यर्थः। **त्रकाल्यविषयत्वे**नेति—उत्पत्तेर्विद्यमानकालसम्बन्धित्वं यद्वशादुत्पत्तिमत उत्पद्यमानत्वम्, उत्पत्तेरतीतकालसम्बन्धित्वं यद्वशादुत्पत्तिमत उत्पन्नत्वम्, उत्पत्तेर्भविष्यत्कालसम्बन्धित्वं यद्वशादुत्पत्तिमत उत्पत्स्यमानत्वम्, एवं स्थितेर्विद्यमानकालसम्बन्धित्व यत स्थितिमतः स्थीयमानत्वम्; स्थितेरतीतकालसम्बन्धित्व यतः स्थितिमतः स्थितत्वम्, स्थितेर्भविष्यत्कालसम्बन्धित्व येन स्थितिमत. स्थास्यमानत्वम्, एव विगमस्य वर्तमानकालसम्बन्धित्वं यतो विनाशप्रतियोगिनो विगच्छद्भाव., विगमस्य भूतकालसम्बन्धित्व यतो भवति विनाशिनो विगतत्वम्, विगमस्य भविष्यत्कालसम्बन्धित्वं येन विनाशिनो विगमिष्यद्भाव., इत्येव त्रैकाल्यविषयत्वेनेत्यर्थः। **प्रमाणार्थकतया** प्रमाणविषयीभूतोत्पादादित्रयात्मकवस्तुविषयत्वेन। अत्र उत्पद्यमानस्य उत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिकालोत्पत्तिसम्बन्धकृतेन त्रिप्रकारत्वम्, एवमुत्पत्स्यमानस्योत्पत्स्यमानोत्पद्यमानोत्पन्नस्वरूपेण त्रिकालोत्पत्तिसम्बन्धकृतेन त्रिप्रकारत्वम्, एवमुत्पन्नस्योत्पन्नोत्पद्यमानोत्पत्स्यमानस्वरूपेण त्रिकालोत्पत्तिसम्बन्धकृतेन त्रिप्रकारत्वम् इत्येवमुत्पत्तिमतस्त्रिकालोत्पत्तियोगेन नव भेदाः, तथोत्पद्यमानस्य स्थित-स्थीयमान स्थास्यमानस्वरूपेण त्रिप्रकारत्वम्, उत्पद्यमानस्य स्थित-स्थीयमान स्थास्यमानस्वरूपेण त्रिप्रकारत्वम्, उत्पन्नस्य स्थित- स्थीयमान-स्थास्यमानस्वरूपेण त्रिप्रकारत्वम्, इत्येव त्रिकालस्थितियोगेनोत्पत्तिमतो नव भेदा, तथोत्पद्यमानस्य विगत विगच्छद्-विगमिष्यत्स्वरूपेण त्रिप्रकारत्वम्, उत्पत्स्यमानस्य विगत-विगच्छद् विगमिष्यत्स्वरूपेण त्रिप्रकारत्वम्, उत्पन्नस्य विगत-विगच्छद्विगमिष्यत्स्वरूपेण त्रिप्रकारत्वम्, इत्येवं त्रिकालविगमयोगेनोत्पत्तिमतो नव भेदा., ते चोत्पत्तिकृतप्रकारा मिलिता. सप्तविंशतिभेदा; एवं स्थीयमानस्य स्थीयमान-स्थास्यमान स्थितस्वरूपेण त्रिकालस्थितिसम्बन्धकृतेन त्रिप्रकारत्वम्, एवं स्थितस्य स्थित-स्थीयमान-स्थास्यमानस्वरूपेण त्रिकालस्थितिसम्बन्धकृतेन त्रिप्रकारत्वम्, स्थास्यमानस्य च स्थास्यमान-स्थीयमान-स्थितस्वरूपेण त्रिप्रकारत्वम्, इत्येवं स्थितिमतस्त्रिकालस्थितियोगेन नव भेदाः; तथा स्थीयमानस्योत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, स्थास्यमानस्योत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, स्थितस्योत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, इत्येव त्रिकालोत्पत्तियोगेन स्थितिमतो नव भेदा, तथा स्थीयमानस्य विगत विगच्छद् विगमिष्यद्रूपेण त्रिप्रकारत्वम्, स्थास्यमानस्य विगत विगच्छद्-विगमिष्यद्रूपेण त्रिप्रकारत्वम्, स्थितस्य विगत-विगच्छद्-विगमिष्यद्रूपेण त्रिप्रकारत्वम्, इत्येवं त्रिकालविगमयोगेन स्थितिमतो नव भेदा, ते च स्थितिकृतप्रकारा मिलिताः सप्तविंशतिभेदा, एव विगच्छतो विगच्छद्-विगमिष्यद्-विगतस्वरूपेण त्रिकालविगमसम्बन्धकृतेन त्रिप्रकारत्वम्, विगमिष्यतो विगमिष्यद्-विगच्छद्-विगतरूपेण त्रिप्रकारत्वम्, विगतस्य विगत विगच्छद् विगमिष्यद्रूपेण त्रिप्रकारत्वम्, इत्येव विगमवतस्त्रिकालविगमयोगेन नव भेदा, विगच्छत उत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, विगमिष्यत उत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, विगत-

दित एव प्रबन्धेनोत्पद्यमानं तद्रूपतयोत्पन्नमभिप्रेतरूपतया चोत्पत्स्यते, एवमुत्पन्नमप्युत्पद्यमानमुत्पत्स्यमानं च, तथोत्पत्स्यमानमप्युत्पद्यमानमुत्पन्नं च, इत्येकैकं त्रैकाल्यं प्रतिपद्यते, एवं विगच्छदादिकालत्रयेणाप्युत्पद्यमानादिरेकैकस्त्रैकाल्यं प्रतिपद्यते, यदैवोत्पद्यमानं तदैव विगतं विगच्छद् विगमिष्यच्चेत्यादिरीत्या, ( एवं विगमोऽपि त्रिकाल उत्पादादिना दर्शनीयः ( सम्मतिवृत्तितः, ) एवं स्थित्याऽपि त्रिकाल एव सप्रपञ्चकम्, एवं स्थितिरप्युत्पाद-विनाशाभ्यां सप्रपञ्चाभ्यां त्रिकालस्पर्शिनी प्रदर्शनीयेति सर्वैरेभिः धर्मैः त्रिकालस्पर्शिभिरविनाभूतं द्रव्यं प्रतिपादयद् वाक्यं प्रमाणमेवेति, तददिमाह सम्मतिकारः—

---

स्योत्पद्यमानोत्पत्स्यमानोत्पन्नस्वरूपेण त्रिप्रकारत्वम्, इत्येवं त्रिकालोत्पत्तियोगेन विगमवतो नव भेदाः; विगच्छतः स्थीयमान स्थास्यमान-स्थितस्वरूपेण त्रिप्रकारत्वम्, विगमिष्यतः स्थीयमान-स्थास्यमान-स्थितस्वरूपेण त्रिप्रकारत्वम्, विगतस्य स्थीयमान स्थास्यमान-स्थितस्वरूपेण त्रिप्रकारत्वम्, इत्येवं त्रिकालस्पर्शिस्थितियोगेन विगमवतो नव भेदाः; ते च विगमकृतप्रकारा मिलिताः सप्तविंशतिभेदाः; उपदर्शिताश्चोत्पत्ति-स्थिति-विगमप्रकारा एकत्र मिलिता एकाशीतिसङ्ख्यका भवन्ति, तद्युक्तं च द्रव्यं प्रमाणविषयः, तदर्थकं च "कज्जमाणे कडे" इति भगवद्वचनमित्येतद्भावयति—**तथाहीति**। **तेन रूपेण** एकतन्त्वाद्यात्मकपटत्वेन रूपेण। **उत्तरत्रापि** द्वितीयादितन्तुप्रवेशसमयेऽपि। **'नोत्पन्नम्' 'अनुत्पन्नम्'** इत्युभयत्र 'तेन रूपेण' इत्यस्यानुकर्षेण सम्बन्धः, तत्र 'तेन रूपेण' इत्यस्य द्वितन्त्वाद्यात्मकपटरूपेणेत्यर्थः। **अन्तेऽपि** चरमतन्तुप्रवेशसमयेऽपि। **उत्पन्नांशेनैवेति**— आद्यतन्तुप्रवेशसमये यद्रूपेणोत्पन्नं तद्रूपेणैव द्वितीयादितन्तुप्रवेशसमयमारभ्य चरमतन्तुप्रवेशपर्यन्तमुत्पत्तौ स्वीक्रियमाणाया फलान्तरस्य प्रथमतन्तुप्रवेशसमयोत्पन्नकार्यरूपफलव्यतिरिक्तफलस्याभावप्रसङ्ग इत्यर्थः। **आदित एव** प्रथमतन्तुप्रवेशसमयादारभ्यैव। **प्रबन्धेन** क्रमिकपूर्वापरपर्यायस्वरूपप्रवाहात्मना। **उत्पद्यमानं** घटादि द्रव्यमिति शेषम्। **तद्रूपतयोत्पन्नं** यत्प्रबन्धेनोत्पद्यमानं पटादि द्रव्यं तद् यद्यदेकतन्त्वात्मत्व- द्वितन्त्वात्मत्वादिरूपं निष्पन्नं तत्तद्रूपतयोत्पन्नम्। **अभिप्रेतरूपतया चोत्पत्स्यते** प्रबन्धेनोत्पद्यमानमेव पटादि द्रव्यमभिप्रेतं यत्सहस्रतन्त्वाद्यात्मकपटादिस्वरूपं तद्रूपेणोत्पत्स्यत इत्यर्थः। **एवमिति**— यथोत्पद्यमानमुत्पन्नमुत्पत्स्यमानमिति कृत्वा त्रैकाल्यं प्रतिपद्यते तथेत्यर्थः। **तथेति**— यथोत्पन्नमुत्पद्यमानमुत्पत्स्यमानं चेति कृत्वा त्रैकाल्यं प्रतिपद्यते तथेत्यर्थः। **एवमिति**— यथा त्रिकालोत्पत्तियोगेन त्रैकाल्यं प्रतिपद्यते तथेत्यर्थः। **'विगच्छदादि'** इत्यादिपदाद् विगत- विगमिष्यतोरुपग्रहः। विगच्छदादिकालत्रयेणोत्पद्यमानादित्रिकं यथा त्रैकाल्यं प्रतिपद्यते तथोपदर्शयति— **यदैवोत्पद्यमानमिति**। **'इत्यादिरीत्या'** इत्यत्रादिपदाद् 'यदैवोत्पन्नं तदैव विगतं विगच्छत् विगमिष्यच्च, यदैवोत्पद्यमानं तदैव विगतं विगच्छद् विगमिष्यच्च' इत्यनयोरुपग्रहः। 'इत्यादिरीत्या' इत्यनन्तरम्— "एवं स्थीयमानादिकालत्रयेणाप्युत्पद्यमानादिरेकैकस्त्रैकाल्यं प्रतिपद्यते, यदैवोत्पद्यमानं तदैव स्थितं स्थीयमानं स्थास्यमानं चेत्यादिरीत्या" इति पाठो युज्यते, अस्य भावना पूर्ववत्। यथा च त्रिकालस्पर्शिन उत्पत्तिमत उक्तदिशा त्रिकालस्पर्शिविगमयोगेन त्रिकालस्पर्शिस्थितियोगेन च सप्तविंशतिविधत्वं तथा विगमवतोऽपीत्याह— **एवं विगमोऽपीति**। **त्रिकालः** विगच्छद्-विगमिष्यद्-विगतरूपः प्रत्येकं विगतादित्रिकरूपतापन्नः। **उत्पादादिना** अत्र "उत्पन्नादिना" इति पाठो युक्तः, तस्योत्पन्नादिकालत्रयेणेत्यर्थः। **दर्शनीय** इति- यदैव विगच्छत् तदैवोत्पन्नमुत्पद्यमानमुत्पत्स्यमानं चेत्यादिरीत्या दर्शनीय इत्यर्थः। **'सप्रपञ्चकम्'** इत्यनन्तरं 'दर्शनीयः' इत्यनुषज्यते। **स्थित्यापीत्यस्य** त्रिकालस्पर्शिन्या स्थित्यापीत्यर्थः, तथा च विगत- विगच्छद्-विगमिष्यद्रूपस्य विगमयोगिनः स्थित्या त्रिकालस्पर्शिन्या प्रदर्शनम्, यदैव विगतं तदैव स्थितं स्थीयमानं स्थास्यमानं च, यदैव विगच्छत् तदैव स्थितं स्थीयमानं स्थास्यमानं च, यदैव विगमिष्यत् तदैव स्थितं स्थीयमानं स्थास्यमानं चेति रीत्येत्यर्थः। यथा चोक्तदिशा विगमवतः सप्तविंशतिविधत्वं तथा स्थितिमतोऽपीत्याह— **एवं स्थितिरपीति**— त्रिकालस्पर्शिनी स्थितिरपि सप्रपञ्चाभ्यामुत्पाद-विनाशाभ्यां प्रदर्शनीयेत्यन्वयः, तथा च स्थित-स्थीयमान स्थास्यमानत्रिकं प्रत्येकं स्थितादित्रिकरूपतापन्नमुत्पन्नादिकालत्रयेण विगतादिकालत्रयेण च त्रैकाल्यं प्रतिपद्यते, यथा यदैव स्थास्यमानं तदैवोत्पन्नमुत्पद्यमानमुत्पत्स्यमानं चेत्यादिरीत्या, यदैव स्थास्यमानं तदैव विगतं विगच्छद्-विगमिष्यच्चेत्यादिरीत्या च एकाशीतिभेदभाग्भिरुत्पादादित्रिकैरविनाभूतस्य द्रव्यस्य प्रतिपादकत्वाद् वाक्यस्य प्रामाण्यमित्युपदर्श-

" उप्पज्जमाणकालं उप्पन्नं ति विगयं विगच्छंतं । दवियं पण्णवयंतो तिकालविसयं विसेसेइ " ॥
[ सम्मतितृतीयकाण्डे गाथा-३७ ] ॥ ३२ ॥

शब्दनयं लक्षयति—

**विशेषिततरः शब्दः प्रत्युत्पन्नाश्रयो नयः ।**
**तरप्रत्ययनिर्देशाद् विशेषिततमेऽगतिः ॥ ३३ ॥**

**नयामृत०**-विशेषिततर इति । विशेषिततरः प्रत्युत्पन्नाश्रय ऋजुसूत्राभिमतग्राही नयः शब्द इत्याख्यायते, यत् सूत्रम्-" इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो " [ विशेषावश्यकनिर्युक्ति-गाथा-२१८४ ]त्ति, तत्र तरप्रत्ययनिर्देशाद् विशेषिततमाधोवर्तिविषयत्वलाभाद् विशेषिततमे समभिरूढे एवंभूते चाऽगतिः-नातिव्याप्तिः ॥ ३३ ॥

ऋजुसूत्राद् विशेषमस्य स्पष्टयति—

**ऋजुसूत्राद् विशेषोऽस्य भावमात्राभिमानतः ।**
**सप्तभङ्ग्यर्पणाल्लिङ्गभेदादेश्चार्थभेदतः ॥ ३४ ॥**

**नयामृत०**-ऋजुसूत्रादिति—अस्य-शब्दनयस्य ऋजुसूत्राद्, विशेषः-उत्कर्षः, भावमात्रस्या-

यति- **सर्वैरेभिरिति** । उक्तार्थे सम्मतिसंवादमुपदर्शयति- **तदिदमाहेति** । **उप्पज्ज०** इति- " उत्पद्यमानकालमुत्पन्नमिति विगतं विगच्छत् । द्रव्यं प्रज्ञापयंस्त्रिकालविषयं विशेषयति " ॥ इति संस्कृतम् ॥ ३२ ॥ इति ऋजुसूत्रनयनिरूपणम् ॥

**अथ शब्दनयनिरूपणम्** । त्रयस्त्रिंशत्तमपद्यमवतारयति- **शब्दनयमिति** । विवृणोति- **विशेषिततर इतीति** । प्रत्युत्पन्नाश्रय इति मूलम्, तद्विवरणमर्थगत्या- **ऋजुसूत्राभिमतग्राहीति**- प्रत्युत्पन्न - वर्तमानैकक्षणवृत्ति वस्तु ऋजु-सूत्राभिमत तदाश्रयितु ग्रहीतुं स्वभावो यस्य स तदाश्रयस्तद्ग्राहीति, अमुमर्थमुपादायोक्तव्याख्यानम् । '**इत्याख्यायते**' इति पूरणम्, एवंविधो नयः शब्द इति नाम्ना गीयत इत्यर्थः । निरुक्तशब्दनयलक्षणे सूत्रसम्मतिमुपदर्शयति- **यत् सूत्रमिति** । **इच्छइ** इति- " इच्छति विशेषिततरं प्रत्युत्पन्नं नयः शब्दः " इति संस्कृतम् । 'विशेषिततर' इत्यत्र तरप्प्रत्ययोपादानप्रयोजनीभूतविशेषिततमसमभिरूढैवम्भूतातिव्याप्तिवारणप्रदर्शनपरमुत्तरार्द्धं सङ्गमयति- **तत्रेति**- उक्तलक्षणे इत्यर्थः । यः खलु विशेषिततमविषयको न भवति स एव विशेषिततरविषयकः, विशेषित-विशेषिततर विशेषिततम इत्येवं क्रमेणैव विशेषितादीना निर्देशो भवति, ततस्तरप्प्रत्ययस्तमप्प्रत्ययादपकृष्टार्थप्रत्यायकत्वादधोवर्ती, ततः उत्कृष्टार्थप्रतिपादकत्वात् तमप्प्रत्यय ऊर्ध्ववर्तीति वस्तुस्थितावुक्तलक्षणे तरप्प्रत्ययनिर्देशतोऽधोवर्तिविषयत्वस्य लाभेन तस्य विशेषिततमविषयकत्वाद् विशेषिततमयोः समभिरूढैवम्भूतयोरभावेन न तयोरुक्तलक्षणस्यातिव्याप्तिरित्याह- **तरप्रत्ययनिर्देशादिति** । अलक्ष्ये लक्षणगतिरतिव्याप्तिः, तदभावे नातिव्याप्तिरित्यनुसन्धाय '**अगतिः**' इत्यस्य व्याख्यानम्- '**नातिव्याप्तिः**' इति ॥ ३३ ॥

चतुस्त्रिंशत्तमपद्यमवतारयति- **ऋजुसूत्रादिति** । **अस्य** शब्दनयस्य । विवृणोति- **ऋजुसूत्रादितीति** । भावमात्रा-भिमानित्वमेव शब्दनयस्य स्पष्टयति- **अयं हीति हि** यतः, **अयं** शब्दनयः, 'इच्छति' इत्यनेनान्वयः । भाव-घटमात्राभ्युपगन्तृत्वे हेतुमाह- **शब्देति**- शब्दनयस्य शब्दार्थप्राधान्येऽपि कथं भावघटमात्राभ्युपगन्तृत्वमित्यपेक्षायामाह- '**घट चेष्टायाम्**' **इतीति** । **शब्दार्थस्य** घटरूपशब्दार्थस्य चेष्टालक्षणस्य, चेष्टा चात्र जलाहरणादिक्रियारूपैव । **भावघट एव** पृथुबुध्नाद्याकारकलितमृन्मयपात्रविशेष एव । **न त्विति** - नाम- स्थापना-द्रव्यरूपं त्रयं न तु- नैव, 'इच्छति' इत्यस्यानुकर्षेण सम्बन्धः । तत्र हेतुमाह- **तत्रेति**- नाम-स्थापना-द्रव्येष्वित्यर्थः । **उक्तार्थेति**-जलाहरणादिक्रियारूपघट-शब्दार्थेत्यर्थः । उक्तार्थे भाष्यसंवादमाह- **तथा चेति**- शब्दनयस्य शब्दार्थप्रधानत्वेन नामादिषु त्रिषु शब्दार्थाघटनाच्छब्द-नयाविषयत्वव्यवस्थितौ चेत्यर्थः । **एतत्संवादि** " ऋजुसूत्राद् विशेषोऽस्य " इति पद्यसंवादि । **णामादयो०** इति-

भिमानात्, अयं हि पृथुबुध्नाद्याकारकलितं मृन्मयं जलाहरणादिक्रियाक्षमं प्रसिद्धं भावघटमेवेच्छति, शब्दार्थप्रधानत्वात्, 'घट चेष्टायाम्' इति शब्दार्थस्य भावघट एव योगात्, न तु नाम-स्थापना-द्रव्य-रूपाः(पं) त्रयः(यं), तत्रोक्तार्थ(र्था)योगात्, तथा चैतत्संवाद्याह भाष्यकारः—

"णामादयो ण कुम्भा तक्कज्जाकरणओ पडाइ व। पच्चक्खविरोहाओ तल्लिंगाभावओ वा वि"॥

[ विशेषावश्यकभाष्यगाथा-२२२९ ]

नाम-स्थापना-द्रव्यघटा घटत्वेन न व्यवहर्तव्याः, घटार्थक्रियाकारित्वाभावात्, अघटत्वेन प्रतीयमानत्वात्, घटव्यवस्थापकधर्म्माभावाच्चेत्येतदर्थः। यद्वा सप्तभङ्ग्यर्पणाद् अस्य विशेषः, ऋजुसूत्रस्य हि प्रत्युत्पन्नोऽविशेषित एव कुम्भोऽभिप्रेतः, शब्दनयस्य तु (स एव सद्भावादिभिर्विशेषिततरोऽभिमत इत्येवमनयोर्भेदः, तथाहि—स्वपर्यायैः पर( विशेषावश्यकवृत्तितः )पर्यायैरुभयैर्वाऽर्पितोऽयं कुम्भाकुम्भाऽवक्तव्योभयरूपादिभेदेन सप्तभङ्गीं प्रतिपद्यते इति, यद् भाष्यम्—

"अहवा पच्चुप्पण्णो उज्जुसुत्तस्साविसेसिओ चेव। कुम्भो विसेसिययरो सब्भावाईहिं सद्दस्स॥
सब्भावा-ऽसब्भावोभयप्पिओ सपर-पज्जओभयओ। कुम्भा-ऽकुम्भा-ऽवत्तव्वोभयरूवाइभेओ सो"॥

[ विशेषावश्यकभाष्यगाथे-२२३१, २२३२ ]

---

"नामादयो न कुम्भास्तत्कार्याकरणत. पटादिवत्। प्रत्यक्षविरोधात् तल्लिङ्गाभावतो वाऽपि॥" इति संस्कृतम्, अत्र तल्लिङ्गाभावत इत्यस्य घटत्वसाधकलिङ्गाभावत इत्यर्थ.। उक्तभाष्यवचनाभिप्रेतमर्थमुपदर्शयति— **नामेति**—'नाम-स्थापना-द्रव्यघटाः' इति पक्षनिर्देशः, 'घटत्वेन न व्यवहर्तव्या.' इति साध्यनिर्देश., 'घटार्थक्रियाकारित्वाभावाद्' इत्येको हेतुः, 'अघटत्वेन प्रतीयमानत्वाद्' इति द्वितीय., 'घटव्यवस्थापकधर्माभावाद्' इति तृतीय., प्रथमे यद् यदर्थक्रियाकारि न भवति न तत् तद्रूपेण व्यवहर्तव्यमिति, यद् यद् विरुद्धधर्मेण प्रतीयते न तत् तद्रूपेण व्यवहर्तव्यमिति, यद् यद् व्यवस्थापकधर्मरहित न तत् तद्रूपेण व्यवहर्तव्यमिति च सामान्यतो व्याप्तिरत्र ज्ञेया। प्रकारान्तरेणोत्तरार्द्धोपदर्शितमृजुसूत्राच्छब्दनयस्य विशेषमुपदर्शयितुमुत्तरार्द्ध व्याख्यानयति- **यद्वेति**—'**अस्य विशेषः**' इति पूर्वार्द्धोक्तोऽत्रानुकृष्टः। शब्दनये ऋजुसूत्रत. सप्तभङ्ग्यर्पणप्रयुक्तविशेषमेव प्रपञ्चयन्नाह— **ऋजुसूत्रस्य हीति**। **प्रत्युत्पन्नः** वर्तमानैकक्षणमात्रस्थायी। **अविशेषित एव** सद्भावा-ऽसद्भावा ऽवक्तव्यत्वादिधर्मैरविशेषित एव। **स एव** प्रत्युत्पन्न. कुम्भ एव। 'सद्भावादिभि' इत्यत्रादिपदादसद्भावादीनां ग्रहणम्। **अनयोः** ऋजुसूत्र-शब्दनययो., शब्दनये यथा सप्तभङ्गी प्रवर्तते तथोपदर्शयति— **तथाहीति**-स्वपर्यायैरर्पितोऽयं कुम्भ कुम्भो भवति, परपर्यायैरर्पितोऽय कुम्भोऽकुम्भो भवति, युगपदर्पितस्व-परपर्यायाभ्यामयमवक्तव्यो भवति, क्रमार्पितस्व-परपर्यायाभ्यामयं कुम्भोऽकुम्भश्च भवति, अर्पितस्वपर्याय युगपदर्पितस्वपरपर्यायोभयतोऽयं कुम्भोऽवक्तव्यश्च भवति, अर्पितपरपर्याय-युगपदर्पितस्वपरपर्यायोभयतोऽयमकुम्भोऽवक्तव्यश्च भवति, क्रमार्पितस्वपरपर्याय युगपदर्पितस्वपरपर्यायोभयतोऽय कुम्भोऽकुम्भोऽवक्तव्यश्च भवति, एव च सप्तविधधर्माकलनात् तदुपदर्शिका सप्तभङ्गी प्रवर्तते, ता च स्वप्रतिपादकत्वसम्बन्धेन कुम्भः प्रतिपद्यत इत्यर्थ। उक्तार्थे भाष्यसंवादमाह— **यद् भाष्यमिति अहवा०** इति—'अथवा प्रत्युत्पन्नः ऋजुसूत्रस्याविशेषित एव। कुम्भो विशेषिततरः सद्भावादिभिः शब्दस्य॥ सद्भावा-ऽसद्भावोभयार्पितः स्वपरपर्यायोभयतः। कुम्भा-ऽकुम्भा-ऽवक्तव्योभयरूपादिभेद स."॥ इति संस्कृतम्। द्वितीयगाथोत्तरार्द्धेन यथा सप्तभङ्गी समादिष्टा भवति तथोपदर्शयति— **इहेति**। द्वितीयगाथोत्तरार्द्धे षण्णा भङ्गानां साक्षादुपात्तत्वं सप्तमभङ्गस्यादिपदलभ्यत्व च भावयति— **तद्यथेति**— यद्यपि 'कुम्भ., अकुम्भ' इत्येकैकमेव पदमुपात्तं तथापि नैकपदतोऽन्वयबोध इति 'अयम्' इति धर्मिवाचकपदं प्रतिभङ्गं ज्ञेयम्, यतो विशेषिततरत्वं कुम्भस्यैव शब्दनयाभिप्रेतम्, तस्य त्विदं शब्देनैव सर्वभङ्गेषूपक्षेपः, "सोऽप्रयुक्तोऽपि वा तज्ज्ञै. सर्वत्रार्थात् प्रतीयते। यथैवकारोऽयोगादिव्यवच्छेदप्रयोजनः"॥ [ ] इति

इह " कुम्भाकुम्भ० " इत्यादिगाथापश्चार्द्धेन षट् भङ्गाः साक्षादुपात्ताः; सप्तमस्तु आदिशब्दात्, तद्यथा–कुम्भः १, अकुम्भः २, अवक्तव्यः ३, उभयन्ति–' संश्चाऽसंश्च ' इत्युभयम् ४, ' सन्नवक्तव्यः ' इत्युभयम् ५, तथा ' असन्नवक्तव्यः ' इत्युभयम् ६, आदिशब्दसङ्गृहीतस्तु सप्तमः ' सन्नसन्नवक्तव्यः ' इति ७; अत्रोभयपदस्य समभिव्याहृतपदार्थतावच्छेदकद्वयप्रकारकबुद्धिविषये शक्तावपि समभिव्याहारत्रैविध्याद् आवृत्त्या त्रिविधोभयबोध इति न्यायमार्गः, सामान्यशक्तावप्युभयपदादेकदैव समभिव्याहारमहिम्ना त्रिविधविशेषप्रकारको बोध इत्यनुभवमार्गः, " तदेवं स्याद्वाददृष्टसप्तभेदं घटादिकमर्थं यथा-

---

वचनाद् वाक्यस्वाभाव्यादेव स्यात्पदमेवकारश्च भङ्गमात्रे समनुगच्छतः, तथा च स्यादयं कुम्भ एव इति प्रथमो भङ्गः, स्यादयमकुम्भ एवेति द्वितीयो भङ्ग., इत्येवं दिशा सप्त भङ्गा अत्र ज्ञेयाः । चतुर्थ पञ्चम- षष्ठभङ्गा उभयधर्मसम्मेलनसमुद्भवा इति ' कुम्भा ऽकुम्भा- ऽवक्तव्योभयरूवाइ ' इत्यत्रोभयपदतः प्रकटिता भवन्तीत्याह– **उभयन्तीति** - सामान्यतः सप्तभङ्गी ' स्यादस्ति, स्यान्नास्ति ' इत्येवं दिशैव प्रवर्तते, तदनुसन्धानेन **' संश्चाऽसंश्च '** **इत्युभयमित्याद्युक्त्या** चतुर्थादिभङ्गाम्रेडनम्, प्रकृताभिप्रायेण तु ' कुम्भश्चाकुम्भश्च ' इत्युभयम्, ' कुम्भोऽवक्तव्य. ' इत्युभयम्, तथा ' अकुम्भोऽवक्तव्यः ' इत्युभयमित्येवमुल्लेखो बोध्यः, सप्तमभङ्गोल्लेखस्तु ' सन्नसन्नवक्तव्य. ' इत्यस्य स्थाने ' कुम्भोऽकुम्भोऽवक्तव्यः ' इत्येवं ज्ञेयः । ननु ' कुम्भा-ऽकुम्भा-ऽवक्तव्योभयरूवाइ ' इत्यत्रैकस्यैवोभयपदस्य श्रूयमाणत्वेन तस्य समभिव्याहृतपदार्थतावच्छेदकद्वयप्रकारकबुद्धिविषये शक्तत्वेन तत' कुम्भत्वा-ऽकुम्भत्वोभयप्रकारकबोधस्य चतुर्थभङ्गजन्यतयाऽभिप्रेतस्य कुम्भत्वा-ऽवक्तव्यत्वोभयप्रकारकबोधस्य पञ्चमभङ्गजन्यतयाऽभिप्रेतस्याकुम्भत्वा-ऽवक्तव्यत्वोभयप्रकारकबोधस्य वा षष्ठभङ्गजन्यतयाऽभिप्रेतस्यैकस्यैवोत्पादः स्यादेकस्य समभिव्याहारस्यैकविधबोधजनन एव सामर्थ्यादित्यत आह– **अत्रोभयपदस्येति** । **समभिव्याहारत्रैविध्यादिति** - कुम्भा ऽकुम्भोभयेति कुम्भा-ऽवक्तव्योभयेति अकुम्भाऽवक्तव्योभयेत्येवं समभिव्याहारत्रैविध्यादित्यर्थः । ननु सकृदुच्चरित शब्द. सकृदेवार्थं गमयतीति नियमादुभयपदस्य सकृदुच्चरितस्य कुम्भाकुम्भोभयादिसमभिव्याहारेष्वेक एव कश्चित् समभिव्याहारो न तु समभिव्याहारत्रैविध्यमिति कथं त्रिविधोभयबोध इत्यत आह– **आवृत्त्येति**– उभयपदस्य त्रिवारमुच्चारण क्रियत इत्युच्चारणभेदादुभयपदानि त्रीणि सवृत्तानीति समभिव्याहारत्रैविध्यात् त्रिविधोभयबोधो न्यायमार्गपरिनिष्ठित इत्यर्थ. । उभयपदस्य सामान्यत उभयत्वावच्छिन्न एव शक्ति, न तु समभिव्याहृतपदार्थतावच्छेदकद्वयप्रकारकबुद्धिविषये एवमपि समभिव्याहारमहिम्ना सामान्यशक्तादप्युभयपदात् कुम्भाऽकुम्भोभयत्वप्रकारकस्य कुम्भा-ऽवक्तव्यत्वोभयत्वप्रकारकस्याकुम्भा-ऽवक्तव्यत्वोभयत्वप्रकारकस्य चैकदैव बोधस्यानुभवबलादभ्युपगमविषयत्वमित्याह– **सामान्यशक्तावपीति** । सप्तभङ्ग्यर्पणाद् विशेषिततरत्वं शब्दनयस्य ऋजुसूत्राद् यत् प्रक्रान्तं तन्निगमनपरा विशेषावश्यकोक्तिं प्रथाति– **तदेवमिति** । **तत्** तस्मात् । **एवं** ' स्यात् कुम्भः, स्यादकुम्भः ' इत्येवं प्रकारेण । **स्याद्वाददृष्टसप्तभेदम्** अनन्तधर्मात्मकवस्त्वभ्युपगमपरस्याद्वादप्रमाणराजाकलितकुम्भत्वा-ऽकुम्भत्वादिसप्तविधधर्मविशिष्टम् । **यथाविवक्षितं** स्वपर्यायापेक्षया कुम्भत्वेन विवक्षितं परपर्यायापेक्षयाऽकुम्भत्वेन विवक्षितमित्येव विवक्षामनतिक्रम्य तत्तद्धर्माकलितम् । **एकेन केनापि भङ्गकेन** यदा सत्त्वधर्मावलम्बनेन ऋजुसूत्र. स्यादस्तीति भङ्गेन घटं प्रतिपादयति तदाऽसत्त्वधर्मावलम्बनेन शब्दनयः स्यान्नास्तीति द्वितीयभङ्गेनासत्त्वधर्मवत्तया विशेषिततरं घट प्रतिपद्यते इत्यर्थ' । ननु स्याद्वाददृष्टसप्तधर्मवत्तयैव घट किमिति न प्रतिपद्यते शब्दनय ? एवमपि ऋजुसूत्रात् स्वपर्यायार्पितकुम्भत्वैकधर्मालिङ्गितघटाभ्युपगमप्रवणाद् विशेषिततरत्व शब्दनयस्य स्यात्, एव सति सप्तभङ्ग्यर्पणादिति हेतुरपि विशेषिततरत्वे सम्यगुपपद्यते, एकभङ्गेन विशेषिततरत्वे तु सप्तभङ्ग्यैकदेशैकभङ्गार्पणस्यैव सप्तभङ्ग्यर्पणत्वेन विवक्षायामुपचारेण तदुपपादनं स्यादित्यत आह– **नयत्वादिति** - यदि स्याद्वाददृष्टसप्तभेदमेव घटादिकं सम्पूर्णया सप्तभङ्ग्या प्रतिपादनतो विशेषिततरं घटमसौ शब्दनय स्वीकुर्यात् तदा प्रतिधर्मं सप्तधर्मप्रतिपादकमसावशेषधर्माकलितवस्तुविषयकं प्रमाणमेव भवेन्न तु वस्त्वंशग्राहकनयरूपः स्यादतो नयत्वान्यथानुपपत्त्यैकेनैव केनापि भङ्गेन विशेषिततरं घटादिक शब्दनयः प्रतिपद्यत इत्यर्थ. । यद्भङ्गविषयीभूतधर्मवत्तया घटादिकमसावभ्युपगच्छति तद्धर्मविशेषितमेव घटादिकमृजुसूत्रोऽभिमन्यत इत्येतावताऽस्यर्जुसूत्राद् विशेषिततरवस्तुग्राहित्वेन ततो विशेषिततरत्वमप्युपपद्यत एव, भङ्गसप्तकप्रवृत्तौ सत्यामेव यद्भङ्ग-

विवक्षितमेकेन केनापि भङ्गकेन विशेषिततरमसौ शब्दनयः प्रतिपद्यते, नयत्वादृजुसूत्राद् विशेषिततर-वस्तुग्राहित्वाच्च; स्याद्वादिनस्तु सम्पूर्णसप्तभङ्ग्यात्मकमपि प्रतिपद्यन्ते ” इति विशेषावश्यकवृत्तावुक्तम् ।

तत्रायं विचारावकाशः—किमियं सप्तभङ्गी अर्थनयाश्रिता ? उत शब्दनयाश्रिता ? आद्ये तदेकतरभङ्ग-विशेषणे कथमृजुसूत्राच्छब्दस्य विशेषिततरत्वम्, अर्थनयाश्रितभङ्गस्य शब्दनयाविशेषकत्वात्, उभयेषां विषयविभागस्य दूरान्तरत्वात्, द्वितीयविकल्पे ऋजुसूत्राभिमतार्थपर्यायाविषयत्वेनाशुद्धव्यञ्जनपर्याय-ग्राहिणः कुतः शब्दस्य विशेषिततरार्थत्वम् ? नहि तदविषयविषयकत्वं विशेषितशब्दार्थः, किन्तु तद्वि-षयताव्याप्यविषयताकत्वमिति, न चर्जुसूत्राभिमतसत्त्वमुपमृद्यासत्त्वाख्यद्वितीयभङ्गोत्थापनाच्छब्दस्य

विषयीभूतधर्माकलितं घटादिकमृजुसूत्रोऽभ्युपगच्छति तदन्यधर्माकलितं घटादिकं भङ्गान्तरेण प्रतिपादयितुं प्रभवति शब्दनय इति सप्तभङ्ग्यर्पणं समनुगतमेवमपीत्याशयेनाह— **ऋजुसूत्रादिति** । ननु ऋजुसूत्रनयो यद्भङ्गात्मकवाक्यमुररीकरोति तद-न्यभङ्गात्मकवाक्यमेव शब्दनयोऽभ्युपैति, ‘नैकोऽपि नयः सप्तभङ्गात्मकमहावाक्यं स्वीकरोतीति’ परस्परविरुद्धधर्माभ्युपगन्त्रो-र्नययोर्मल्ल-प्रतिमल्लभावेन व्यवस्थिततया अभ्युपगमपदवीमप्राप्तायाः सप्तभङ्ग्या अर्पणमेव न सम्भवतीत्यत आह— **स्याद्वा-दिनस्त्विति**— अस्य ‘प्रतिपद्यन्ते’ इत्यनेनान्वयः, तथा च स्याद्वादिन सर्वनयाभिप्रेतान् धर्मानभ्युपगच्छन्तस्तत्तद्धर्म-प्रतिपादकतत्तन्नयाभिमतभङ्गसमूहात्मिकां सप्तभङ्गीमुत्थापयितुं प्रभविष्णव एव, त एव च ‘एतन्नयाभ्युपगतैतद्भङ्गेनायं धर्मः प्रतिपाद्यते, अयं च धर्म एतन्नयाभ्युपगमेन प्रतिपाद्यते’ इत्येवं नययोजनां च कुर्वन्तीति सप्तभङ्ग्यर्पणं युक्तमेवेति ।

नन्वेवं नयद्वययोजनया नयत्रययोजनया वा सप्तभङ्गी स्याद्वादिप्रवर्तिता भवति, नयाना चार्थनय-शब्दनयभेदेन द्वैविध्यम्, तथा च सप्तभङ्ग्या अप्यर्थनयाश्रित-शब्दनयाश्रितभेदेन द्वैविध्यम्, एवं च प्रकृते कस्याः सप्तभङ्ग्या अर्पणम्, न तावदर्थ-नयाश्रितायाः, तथा सति तद्घटकभङ्गस्य कस्यचिदृजुसूत्रनयाभिमतत्वेऽपि शब्दनयाभिमतत्वाभावेन तदर्पणेन विशेषिततरत्वस्य प्रतिपादनासम्भवात्; नापि शब्दनयाश्रितायाः, तद्घटकभङ्गस्य कस्यचिच्छब्दनयाभिमतत्वेऽपि ऋजुसूत्राभिमतत्वाभावेन तदर्पणेन ऋजुसूत्राद् विशेषिततरत्वस्य वक्तुमशक्यत्वात्, तथा च किमत्र तत्त्वमित्याशङ्काशङ्कुसमुन्मूलनाय ग्रन्थकारोऽ-भिनवविचारपल्लवनद्वारा स्वाभिप्रायं प्रकटयितुमाह— **तत्रेति**— सप्तभङ्ग्यर्पणादृजुसूत्रनयाच्छब्दनयस्य विशेषिततरार्था-वगाहित्वे इत्यर्थः । **इयम**र्पणविषयतयाऽभिमता । **आद्ये** अर्थनयाश्रिता सप्तभङ्गी प्रकृते अर्पणविषयतयाऽभिमतेति प्रथमपक्षे । “**तदेकतरभङ्गविशेषणे**” इति स्थाने “तदेकतरभङ्गविशेषणेन” इति पाठो युक्तः, अर्थनयाश्रित-सप्तभङ्गीघटकैकभङ्गविशेषणेनेत्यर्थ, भङ्गस्य विशेषणत्वं स्वार्थद्वारा बोध्यम् । अर्थनयाश्रितत्वं सप्तभङ्ग्याः स्वघटकभङ्गस्यार्थ नयाश्रितत्वादेवेत्यर्थनयाश्रितभङ्गस्यार्थनयविषय एव विषयो न तु शब्दनयविषय इत्यन्यविषयकस्य नान्यविषयविशेषकत्व-मित्याह— **अर्थनयाश्रितभङ्गस्येति** । य एवार्थनयविषयः स एव यदि शब्दनयविषयोऽपि स्यात् स्यात् तदाऽर्थनया-श्रितभङ्गः शब्दनयविषयविशेषकत्वाच्छब्दनयविशेषक, न चैवमित्याह—**उभयेषामिति**— शब्दनया-ऽर्थनयानामित्यर्थः । **दूरान्तरत्वात्** अत्यन्तभिन्नत्वात् । **द्वितीयविकल्पे** अर्पणविषयतयाऽभिमता सप्तभङ्गी शब्दनयाश्रितेति द्वितीयपक्षे । शब्दनयाश्रितभङ्ग ऋजुसूत्रविषयार्थपर्यायविषयको न भवति तस्य शब्दनयविषयाशुद्धव्यञ्जनपर्यायविषयकत्वादिति न तेनर्जु-सूत्राच्छब्दनयस्याविशेषिततरत्वमित्याह— **ऋजुसूत्रेति** । यदि तदविषयविषयकत्वं तनो विशेषिततरत्व स्यात् स्यात् तदा ऋजुसूत्राविषयव्यञ्जनपर्यायविषयकत्वाच्छब्दस्य विशेषिततरत्वम्, न चैवमित्याह— **नहीति** । तर्हि किं विशेषितशब्दार्थ इति पृच्छति—**किन्त्विति** । उत्तरयति— **तद्विषयतेति**— यथा नैगमाद् विशेषिततरत्व सङ्ग्रहे, यतस्तत्र तत्पदेन नैगमस्य ग्रहणम्, तन्निरूपितविषयता सामान्ये विशेषे च वर्तते, तद्व्याप्या विषयता सामान्यनिष्ठविषयता तन्निरूपकत्व सङ्ग्रहे समस्तीति भवति नैगमाद् विशेषिततरत्वं सङ्ग्रहे, एवं नैगमाद् विशेषिततरत्वं व्यवहारेऽपि, तत्र नैगमविषयताव्याप्यविशेषनिष्ठविषयता-कत्वं समस्तीति, प्रकृते तु ऋजुसूत्रनयनिरूपितविषयताऽर्थपर्यायनिष्ठा, यतः क्रमिकक्षणमात्रस्थायी योऽर्थपर्यायस्तन्निष्ठा ऋजुसूत्रनिरूपितविषयता, तद्व्याप्या शब्दनयनिरूपितव्यञ्जनपर्यायनिष्ठविषयता न भवति, अर्थपर्याय-व्यञ्जनपर्याययोरत्यन्त-भिन्नत्वेन तन्निष्ठविषयत्वयोः सामानाधिकरण्यस्यैवाभावेन व्याप्यव्यापकभावस्य सुतरामभावादिति ऋजुसूत्रविषयताव्याप्य-विषयताकत्वाभावाच्छब्दनयस्य नैवर्जुसूत्राद्विशेषिततरत्वमित्यर्थः । प्रकारान्तरेण ऋजुसूत्राच्छब्दनयस्य विशेषिततरत्वसङ्गमन-

ऋजुसूत्राद्विशेषिततरत्वं वक्तुं युक्तम् ,एवं सति ऋजुसूत्राभिमतं सत्त्वमुपमृद्यासत्त्वग्रहणव्यापृतस्य व्यवहारस्यापि ततो विशेषिततरार्थत्वापत्तेः, विशेष्यकभङ्गानिर्धारकवचनापत्तेश्चेति; तत्रायमस्माकं मनीषोन्मेषः— यद्यप्यर्थपर्यायाश्रिता सप्तभङ्गी सङ्ग्रह-व्यवहारर्जुसूत्रैर्व्यञ्जनपर्यायाश्रिता शब्द-समभिरूढैवम्भूतैः सम्मतौ सूचिता, तथाप्येतत् प्रकारद्वयाभिधानमर्थ-व्यञ्जनसाधारणं पर्यायसामान्याश्रितसप्तभङ्ग्या अनुपलक्षणम्, सा च स्व-परपर्यायाणां क्रम-युगपद्विवक्षावशात् नयद्वयेन, शुद्ध-शुद्धतरपर्यायविवक्षया च नयत्रयेणापि सम्भवतीति ऋजुसूत्र-शब्दप्रयुक्तसप्तभङ्ग्यां द्वितीयादिना, व्यवहारर्जुसूत्रप्रयुक्तायां च तस्यां तृतीयादिना भङ्गेन ऋजुसूत्राच्छब्दस्य विशेषिततरार्थत्वमुक्तम, न चैवं ऋजुसूत्रस्वीकृतसत्त्वापेक्षया सत्ताग्राहिणो

---

माशङ्क्य प्रतिक्षिपति— न चेति— अस्य 'युक्तम्' इत्यनेनान्वयः, ऋजुसूत्राभिमतं यत् सत्त्वं— लिङ्गवचनादिभेदेऽप्यभिन्नस्य क्षणमात्रस्थायिनोऽर्थक्रियाकारित्वलक्षणं सत्त्वं प्रथमभङ्गप्रतिपाद्यम्, तद् उपमृद्य—लिङ्ग-वचनादिभेदे भेदोऽवश्यमेव भवति ततो न तस्य सत्त्वमित्येवं प्रतिक्षिप्य, तथाभूतस्य यदसत्त्व तत्प्रतिपादकभङ्गोऽपि वाच्य-वाचकयोरभेदाभ्युपगमतस्तदाख्य.; एवम्भूतो यो द्वितीयभङ्गस्तदुपस्थापनात्, शब्दस्य—शब्दनयस्य, ऋजुसूत्राद्—ऋजुसूत्रनयाद् विशेषिततरत्वं वक्तुम्—अभिधातु न च युक्तमित्यर्थः। निषेधे हेतुमाह— एवं सतीति— उक्तदिशा ऋजुसूत्राच्छब्दस्य विशेषिततरत्वाभ्युपगमे सतीत्यर्थः। यद्यपि स्वरूपसत्त्वं व्यवहारोऽप्यभ्युपगच्छति तथापि यादृश सत्त्वमृजुसूत्रोऽभ्युपगच्छति न तादृश सत्त्व व्यवहारः स्वीकरोतीति तादृशसत्त्व प्रतिक्षिप्य तादृशसत्त्वाभावलक्षणमसत्त्व गृह्णात्येव व्यवहारस्तदालम्बनेन स्यान्नास्तीति द्वितीयभङ्ग. प्रवर्तयितुं शक्नोत्येव स इति। तेन द्वितीयभङ्गेन व्यवहारस्यापि ऋजुसूत्राद् विशेषिततरत्व स्यादित्याह—ऋजुसूत्राभिमतमिति। ततः ऋजुसूत्रात्।, एवं च भङ्गमात्रस्यैव तत्तन्नयविषयप्रतिपादकतया स्वमूलीभूतनयभिन्ननयप्रवर्तितभङ्गार्थप्रतिपक्षार्थविदकत्वेन स्वमूलीभूतनयार्थविशेषकत्वतोऽयमेव भङ्गो विशेषक इति निर्धारणमपि न भवेदित्याह— विशेष्यकेति—'विशेष्यकभङ्गानिर्धारकवचनापत्तेश्च' इत्यस्य स्थाने 'विशेषकभङ्गनिर्धारकवचनानुपपत्तेश्च' इति पाठो युक्तः।

इत्थं स्थूलविचारतोऽनुपपद्यमानतामर्पणविषयत्वेनाभिमतायाः सप्तभङ्ग्या उपदर्श्येदानी स्वाकूतोपदर्शक सूक्ष्मविचारं तत्र ग्रन्थकृदुद्भावयति- तत्रेति। अयं 'यद्यपि' इत्यादिनाऽनन्तरमेव वक्ष्यमाणः। यद्यपीति— सङ्ग्रह-व्यवहारर्जुसूत्रैरर्थपर्यायाश्रिता सप्तभङ्गी सम्मतौ सूचितेत्यन्वयः। व्यञ्जनेति—शब्द-समभिरूढैवम्भूतैर्व्यञ्जनपर्यायाश्रिता सप्तभङ्गी सम्मतौ सूचितेत्यन्वयः। एतत् प्रकारद्वयाभिधानम् अर्थपर्यायाश्रितसप्तभङ्गीव्यञ्जनपर्यायाश्रितसप्तभङ्गीद्वयाभिधानं सम्मतिगतम्। अर्थेति—'अर्थ-व्यञ्जनसाधारणं पर्यायसामान्याश्रितसप्तभङ्ग्या अनुपलक्षणम्' इत्यस्य स्थाने 'अर्थ-व्यञ्जनसाधारणपर्यायसामान्याश्रितसप्तभङ्ग्या अप्युपलक्षणम्' इति पाठो युक्त, तथा च सप्तभङ्ग्या त्रिधा विभाग एवमायाति— अर्थपर्यायाश्रिता व्यञ्जनपर्यायाश्रिता पर्यायसामान्याश्रिता च सप्तभङ्गीति। तत्र पर्यायसामान्याश्रिता या सप्तभङ्गी तद्घटको भङ्ग. कश्चिदर्थनयविषयीभूतार्थप्रतिपादक कश्चित् तु शब्दनयविषयीभूतार्थप्रतिपादकोऽपि, तत्र यः शब्दनयविषयीभूतार्थप्रतिपादको भङ्गो द्वितीयादिस्तृतीयादिर्वा तेन भङ्गेन शब्दनयस्यर्जुसूत्रनयाद् विशेषिततरार्थत्वम्, तावता विशेषकभङ्गावधारणवचनमपि सम्भवतीत्याह- सा चेति- पर्यायसामान्याश्रिता सप्तभङ्गी चेत्यर्थः, अस्य 'सम्भवति' इत्यनेनान्वय, 'नयद्वयेन' इत्यस्यापि 'सम्भवति' इत्यनेनान्वयः। नयद्वयप्रयुक्तसप्तभङ्ग्यां द्वितीयादिना भङ्गेन नयत्रयप्रयुक्तसप्तभङ्ग्या तृतीयादिना भङ्गेन ऋजुसूत्राच्छब्दनयस्य विशेषिततरार्थत्वमित्युपदर्शयति- ऋजुसूत्रेति- ऋजुसूत्रोऽर्थनय. शब्दश्च शब्दनयस्तदुभयप्रयुक्तसप्तभङ्ग्यामित्यर्थ.। 'द्वितीयादिना' इत्यस्य 'भङ्गेन' इत्यनेनान्वयः। 'व्यवहारर्जुसूत्रप्रयुक्तायां च' इत्यस्य स्थाने 'व्यवहारर्जुसूत्र-शब्दप्रयुक्तायां च' इति पाठो युक्त, व्यवहारर्जुसूत्रावर्थनयौ शब्दश्च शब्दनय., एतत्त्रिनयप्रयुक्तायां चेत्यर्थः। तस्यां सप्तभङ्ग्याम्। 'द्वितीयादिना' इत्यत्रादिपदात् तृतीयादीनामुपग्रह.। 'तृतीयादिना' इत्यादिपदात् पञ्चमादीनामुपग्रह, ऋजुसूत्र-शब्दप्रयुक्तभङ्ग्यां स्यादस्तीति प्रथमभङ्ग ऋजुसूत्रविषयप्रतिपादक, स्यान्नास्तीति द्वितीयभङ्ग. शब्दनयविषयप्रतिपादक, स्यादवक्तव्य इति तृतीयादयो भङ्गा नयद्वयविषयप्रतिपादका इति द्वितीयादिषु सर्वेषु भङ्गेषु शब्दनयविषयसद्भावाद् विशेषकत्व युक्तम्, व्यवहारर्जुसूत्रशब्दप्रयुक्तसप्तभङ्ग्या प्रथमभङ्गो व्यवहारनयविषयप्रतिपादक, द्वितीयो भङ्ग ऋजुसूत्रनयविषयप्रतिपादक, तृतीयो भङ्ग शब्दनय-

व्यवहारस्यापि ततो विशेषिततरार्थत्वप्रसङ्गदूषणानुद्धारः, सम्प्रदायाविरुद्धभङ्गविषयीभूतेनार्थेन विशेषिततरत्वस्याभिधित्सितत्वात्, सम्प्रदायश्चोत्तरोत्तरभङ्गप्रवृत्तावुत्तरोत्तरनयावलम्बनेनैव दृष्टो नान्यथेति न कश्चिद् दोष इति । वा– अथवा लिङ्गभेदादेरर्थभेदाश्रयणादस्य शब्दनयस्य ऋजुसूत्राद् विशेषः,तथाहि– ( 'तटः, तटं, तटी'इत्यादौ ) अन्यलिङ्गवृत्तेः शब्दस्यान्यलिङ्गभेदलक्षणेन, 'गुरुः, गुरवः' इत्यादौ च वचनभेदलक्षणेन वैधर्म्येणार्थभेदस्य स्पष्टमनुभवात्, एवमन्यकारकयुक्तं यत् तदेवास्य मते अपरकारकसम्बन्धं नानुभवतीति अधिकरणवद् ग्रामोऽधिकरणाभिधानविभक्तिवाच्य एव, न कर्माभिधानविभक्त्यभिधेय, इति 'ग्राममधिशेते' इति प्रयोगोऽनुपपन्नः, तथा पुरुषभेदेऽपि नैकं वस्त्वित्ति 'एहि ! मन्ये रथेन यास्यसि, नहि यास्यसि, यातस्ते पिता' इति च प्रयोगो न युक्तः, अपि तु 'एहि ! मन्यसे

विषयप्रतिपादक., चतुर्थभङ्गस्तु प्रथम-द्वितीयभङ्गसंयोजनत इति न तत्र शब्दनयप्रतिपादकतेति तं परित्यज्य तृतीयादीनां भङ्गानां विशेषकत्वमिति विशेषकभङ्गनिर्धारकवचनोपपत्तिरिति । ननु ऋजुसूत्राभ्युपगतप्रथमभङ्गप्रतिपाद्यसत्त्वविरुद्धासत्त्वप्रतिपादकद्वितीयभङ्गाभ्युपगन्तृत्वेन यथा शब्दस्य ऋजुसूत्राद् विशेषिततरत्वं तथोक्तदिशा व्यवहारस्यापि ऋजुसूत्राद् विशेषिततरत्व स्यादिति पूर्वमुपदर्शितं दूषणं तदवस्थमेवेत्याशङ्क्य प्रतिक्षिपति– **न चैवमिति** । '**पेक्षयाऽसत्त्वाग्राहिणः**' इत्यकारप्रश्लेषः । **ततः** ऋजुसूत्रात् । निषेधे हेतुमाह– **सम्प्रदायेति**– यदा प्रथमभङ्ग ऋजुसूत्रनयावलम्बनेन तदा द्वितीयभङ्गस्तदुत्तरशब्दनयावलम्बनेनैव भवितुमर्हतीति सम्प्रदाय., तेन यस्यां सप्तभङ्ग्या प्रथमभङ्ग. सङ्ग्रहनयावलम्बनेन तस्यामेव द्वितीयभङ्गो व्यवहारनयावलम्बनेन, न तु यस्यां सप्तभङ्ग्यां प्रथमभङ्ग ऋजुसूत्रनयावलम्बनेन, तस्यां द्वितीयभङ्गो व्यवहारनयावलम्बनेन, तथा च ऋजुसूत्रनयप्रवृत्तप्रथमभङ्गानन्तर व्यवहारनयप्रवृत्तो द्वितीयभङ्ग. सम्प्रदायविरुद्ध एव, न तु सम्प्रदायाविरुद्ध इति न तद्विषयीभूतेनार्थेन विशेषिततरत्वम्, सम्प्रदायश्चेदृश एव न त्वन्यादृश इति तु तथादर्शनादेव निर्णीयत इत्याह– **सम्प्रदायश्चेति** । पद्ये '**लिङ्गभेदादेवार्थभेदतः**' इति स्थाने 'लिङ्गभेदादेर्वाऽर्थभेदतः' इति पाठो युक्तः, तमवलम्ब्य प्रकारान्तरमृजुसूत्राच्छब्दस्य विशेषिततरत्वे उपदर्शयति– **वेति**– अस्यार्थ.– **अथवेति** । 'लिङ्गभेदादेः' इत्यत्रादिपदाद् वचनभेद-कारकभेद-पुरुषभेदोपग्रहणभेदानां ग्रहणम् । '**अर्थभेदतः**' इत्यस्य विवरणम्– **अर्थभेदाश्रयणादिति**, यदि वस्तुस्थित्या लिङ्गभेदादितोऽर्थभेदः स्यात् सर्वमतेऽविशेषेण स भवेत्, एवं च सर्वाभ्युपगतेन तेन न कस्यचिदेव विशेषिततरत्वमतोऽर्थभेदाश्रयणादिति व्याख्यातम्, तथा च न वस्तुस्थित्या लिङ्गभेदादितोऽर्थभेदः समस्ति, एवमपि शब्दनयस्ततस्तमाश्रयतीत्यतस्तेन तस्य विशेषिततरत्वमित्याशयः । क्रमेण लिङ्गभेदादितोऽर्थभेद सोदाहरणं भावयति– **तथाहीत्यादिना** । **अन्येति**– अन्यलिङ्गवृत्तेः शब्दस्यान्यलिङ्गभेदलक्षणेन वैधर्म्येणार्थभेदस्य स्पष्टमनुभवादित्यन्वयः, अन्यलिङ्गवृत्तेः शब्दस्य– 'तटः' इत्यत्र पुलिङ्गे वर्तमानस्य तटशब्दस्य, अन्यलिङ्गभेदलक्षणेन–स्वस्माद् भिन्नलिङ्गो यः 'तटम्' इत्यत्र तटशब्दस्तस्माद् यो भेदस्तद्रूपेण वैधर्म्येण, अर्थभेदस्य– 'तटम्' इति नपुसकलिङ्गतटशब्दार्थात् 'तट.' इति पुलिङ्गतटशब्दार्थस्य यो भेदस्तस्य स्पष्टमनुभवादनुभूयमानत्वादित्यर्थः, 'गुरुः' इत्येकवचनान्तगुरुशब्दस्य 'गुरवः' इति बहुवचनान्तगुरुशब्दस्य यो वचनभेदस्तदात्मकन वैधर्म्येण 'गुरुः' इत्येकवचनान्तगुरुशब्दार्थाद् 'गुरवः' इति बहुवचनान्तगुरुशब्दार्थस्य यो भेदस्तस्य स्पष्टमनुभूयमानत्वादित्यर्थः; इत्थं लिङ्गभेदाद् वचनभेदाच्चार्थभेदमुपदर्श्य कारकभेदादर्थभेद सोदाहरणमुपदर्शयति– **एवमिति** । **अस्य मते** शब्दनयस्य मते । '**अधिकरणवद् ग्राम**' इत्यस्य स्थाने 'अधिकरणीभवद्ग्राम' इति पाठो युक्तः । **अधिकरणाभिधानविभक्तिवाच्य एव** अधिकरणस्याभिधानं कथन यत एतादृशी या सप्तम्याख्या विभक्तिस्तद्वाच्य एव तदभिधेय एव, तथा च ग्रामस्याधिकरणत्वविवक्षायां 'ग्रामे अधिशेते' इति प्रयोग एव युक्तः । पुरुषभेदादर्थभेदमुपदर्शयति– **तथा पुरुषभेदेऽपीति** । '**एहि मन्ये**' इत्यादेर्विस्तरतोऽर्थोपवर्णनं नयप्रदीपव्याख्याने कृतमस्माभिरिति विशेषजिज्ञासुभिरवलोकनीय तत् । उपग्रहणभेदादर्थभेदमुपवर्णयति– **एवमिति** । अत्र '**उपग्रहणभेदोऽपि**' अस्य स्थाने 'उपग्रहणभेदादर्थभेदेऽपि' इति पाठो युक्तः, उप धातो. समीपे ग्रहणमादानं यस्येति व्युत्पत्त्योपग्रहणमुपसर्ग एवेति । ननु 'तटः, तटी, तटम्' इत्यादौ 'गुरुः, गुरव.' इत्यादौ तथा कारकादिभेदेऽप्यर्थभेद एव लोक-शास्त्रयोः प्रसिद्धः शब्दनये त्वित्थमुपगमे तद्विरोध. स्यादित्याशङ्कां प्रतिक्षिपति– **न चैवमिति** ।

यथाऽहं रथेन यास्यामि ' इत्येवं परभावेनैतन्निर्देष्टव्यम्, एवमुपग्रहणभेदोऽपि ' विरमति 'इत्यादिर्न युक्तः, आत्मार्थतया हि ' विरमते ' इत्यस्यैव प्रयोगस्य सङ्गतेः, न चैवं लोक-शास्त्रविलोपः, सर्वत्रैव नयमते तल्लोपस्य समानत्वादिति सम्मतिवृत्तौ व्यवस्थितम्, यद्यपि ' ग्राममधिशेते ' इत्यादौ ग्रामोत्तरद्वितीयादिपदादधिकरणत्वत्वादिप्रकारकप्रतीत्यर्थमधिकरणत्वत्वादिविशिष्टे लक्षणैव स्वीकार्या, तन्निरूढत्वसमानार्थमेव च विशेषानुशासनमपि वक्तुं शक्यते, तथाप्युक्तविपरीतप्रयोगप्रामाण्याय " उपपदविभक्तेः कारकविभक्तिर्बलीयसी " इत्यादिन्यायसाम्राज्याच्चायं विशेष इति दिक् ॥ ३४ ॥

उक्तयुक्त्या यथानेनर्जुसूत्रीयं युवां यास्यथेति मतं दूष्यते तथाऽऽह—

**सामानाधिकरण्यं चेन्न विकारा-ऽपरार्थयोः ।**
**भिन्नलिङ्ग-वचः-सङ्ख्या-रूपशब्देषु तत् कथम् ? ॥ ३५ ॥**

**नयामृत०**—सामानाधिकरण्यमिति । चेत्– यदि, विकारा-ऽपरार्थयोः–विकारा-ऽविकारार्थकशब्दयोः, ' पलालं दहति 'इत्यादौ सामानाधिकरण्यम्– एकार्थान्वयजननयोग्यत्वं नेष्टं ऋजुसूत्रनयेन

---

लोक-शास्त्रयोः सर्वप्रकारेणाविरोधः प्रमाणराजस्याद्वाद एव, नयमते तु सर्वस्मिंस्तद्विरोधस्तत्तन्नयवादिभिः स्वहस्तिन एवेति नैकोऽपि नयवादी तद्दोषं स्वविरोधिनयवादिनं प्रत्यभिधातु शक्नोति स्वपदकुठारप्रहारकल्पत्वादिति निषेधहेतुमुपदर्शयति– **सर्वत्रैवेति । तल्लोपस्य** लोक-शास्त्रविलोपस्य । उक्तार्थस्यादेयत्वप्रतिपत्तये त्वाह–**इति सम्मतिवृत्तौ व्यवस्थितम् ।** अधिकरणत्वेन ग्रामस्य प्रतिपत्तये शब्दनयस्तत्र ' ग्रामेऽधिशेते ' इति सप्तम्यन्तमेव ग्रामपदमुररीकरोति, तत्र द्वितीयान्तत्वेऽपि ग्रामपदस्य द्वितीयाया अधिकरणत्वत्वविशिष्टे लक्षणया ' ग्राममधिशेते ' इति प्रयोग उपपद्यते, सप्तमीस्थाने द्वितीयाऽनुशासनमपि द्वितीयाया अधिकरणत्वत्वविशिष्टे लक्षणाया निरूढत्वज्ञापनार्थमेवेति यद्यपि वक्तु शक्यते तथापि ' ग्रामे अधिशेते ' इति प्रयोगोऽपि प्रामाणिकानां भवति, तन्निर्वाहाय ' उपपदविभक्तेः कारकविभक्तिर्बलीयसी ' इति न्यायाश्रयणमावश्यकमतो द्वितीयामुपपदविभक्तिं बाधित्वा कारकविभक्तिः सप्तम्येव तत्र भवतीति शब्दनयस्याभिप्राय इति ग्रन्थकृत् स्वयं विवेकमुपदर्शयति– **यद्यपीति । लक्षणैव** द्वितीयाविभक्तेर्लक्षणैव । ' **तन्निरूढत्वसमानार्थमेव** ' इत्यस्य स्थाने ' तन्निरूढत्वज्ञापनार्थमेव ' इति पाठो युक्त । **तन्निरूढत्वेति**– उक्तलक्षणानिरूढत्वेत्यर्थः । **उक्तविपरीतप्रयोगेति**–' ग्राममधिशेते ' इति प्रयोगविपरीत ' ग्रामेऽधिशेते ' इति प्रयोगेत्यर्थ ॥ ३४ ॥

पञ्चत्रिंशत्तमपद्यमवतारयति–**उक्तयुक्त्येति । अनेन** शब्दनयेन । ' **युवां यास्यथ** ' इति स्थाने ' युवां यास्यथः ' इति पाठो युक्तः । विवृणोति– **सामानाधिकरण्यमितीति** । ' **चेद्** ' इत्यस्य विवरणम्– **यदीति** । ' **विकारापरार्थयोः** ' इत्यस्य विवरणम्– **विकाराविकारार्थकशब्दयोरिति । पलालं दहतीति**– अत्र ' पलालम् ' इत्यविकारार्थकशब्दः, ' दहति ' इति विकारार्थकशब्दः, यो हि दहनक्रियाकाले यद्रूपेण वर्तते तस्य दहनमग्निना भवति, पलालस्य यादृक्संस्थानादिरूपेणावस्थानमविकृतरूपेणाग्निसयुक्तावस्थात प्राक् तादृप्येणावस्थान नाग्निसयुक्ततावस्थाया किन्तु पूर्वरूपपरावर्तनभस्मीभवनलक्षणविकृतरूपेणेत्यतस्तयो सामानाधिकरण्य नेष्टमृजुसूत्रनयेन । सामानाधिकरण्यमेकाधिकरणवृत्तित्वं सुप्रसिद्धम्, तदत्र न युक्तमतस्तस्य विवरणम्–एकार्थान्वयजननयोग्यत्वम्, तस्य निषेधः सर्वथा न सम्भवति व्यवहारनयेन ' पलाल दहति ' इत्यत्र तयोरुक्तस्वरूपस्य सामानाधिकरण्यस्याभ्युपगमादतः पूरयति– **इष्टमृजुसूत्रनयेनेति**– " पलालं न दहत्यग्निर्भिद्यते न घट. क्वचित् । नासंयत. प्रव्रजति भव्योऽसिद्धो न सिध्यति " ॥ [ नयोपदेश–श्लोक० ] इत्यभियुक्तवचनेन ऋजुसूत्राभीष्ट प्रतिपादितं प्राक् । यद्यर्थकचेत्पदनित्यसम्बन्धात् तर्हीत्यनुक्तोऽपि मूले समागच्छत्येवेत्याशयेन **तर्हीति** पूरितम् । **तादृशेषु** भिन्नलिङ्ग-वच-सङ्ख्या-रूपेषु. ' **तटस्तटी तटम्** ' इत्यस्य 'इत्यादिषु' इत्यत्रान्वयः, तथा च ' तटस्तटी तटम् ' इत्यत्र कथं सामानाधिकरण्यमित्यन्वय., एवमग्रेऽपि, भिन्नलिङ्गशब्दे सामानाधिकरण्यं न सम्भवतीत्यत्र ' तटः, तटी, तटम् ' इत्युदाहृतम्, भिन्नवचशब्दे सामानाधिकरण्य न सम्भवतीत्यत्र ' गुरु., गुरव. '

चेत् ? तर्हि भिन्नानि लिङ्ग-वचः-सङ्ख्या-रूपाणि येषां तादृशेषु शब्देषु ' तटस्तटी तटम्, गुरुर्गुरवः, स च त्वं च यास्यथः, कुरुते करोति ' इत्यादिषु कथं सामानाधिकरण्यम् ? न कथञ्चिदित्यर्थः, यथा हि त्वया ' अग्निष्टोमयाजी पुत्रोऽस्य जनिता ' इत्युक्त स्वीक्रियते, कालभेदात्, तथा लिङ्गादिभेदादर्थभेदः सुतरां स्वीकर्तव्य इत्युपदेशः ॥ ३५ ॥

समभिरूढं लक्षयति—

**नयः समभिरूढोऽसौ यः सत्स्वर्थेष्वसंक्रमः ।**
**शब्दभेदेऽर्थभेदस्य व्याप्त्यभ्युपगमश्च सः ॥ ३६ ॥**

**नयामृत०**-' **नयः** ' इति । यः सत्स्वर्थेषु घटादिष्वसङ्क्रमो घटाद्यन्यशब्दावाच्यत्वमसौ नयः समभिरूढः, यत् सूत्रम्–" वत्थूओ संकमणं होइ अवत्थू णये समभिरूढे " [ विशेषावश्यकनिर्युक्तिगाथा–२१८५ ]त्ति " सत्स्वर्थेष्वसङ्क्रमः " [ तत्त्वार्थसू० अ० १, सूत्र० ३५ ] इति तत्त्वार्थभाष्यम्, तत्र च यद्यपि यथाश्रुतार्थोऽभावालम्बनत्वेनासम्भवी, संज्ञाभेदेनार्थभेदाभ्युपगन्तृत्वं घट-पटादिसञ्ज्ञाभेदेनार्थभेदाभ्युपगन्तरि नैगमादावतिव्याप्तम्, तथापि शब्दभेदेऽर्थभेदस्य व्याप्तेरभ्युपगमः सोऽसङ्क्रम-

इत्युदाहृतम्, भिन्नसङ्ख्याशब्दे सामानाधिकरण्य न सम्भवतीत्यत्र ' स च त्व च यास्यथः ' इत्युदाहृतम्, भिन्नरूपशब्दे सामानाधिकरण्य न सम्भवतीत्यत्र ' कुरुते करोति ' इत्युदाहृतम्। कालभेदेनार्थभेदो यथर्जुसूत्रेण स्वीक्रियते तथा लिङ्गादिभेदादर्थभेदोऽपि तेन स्वीकर्तव्य इति ऋजुसूत्र प्रति शब्दनयस्योपदेश. शिक्षणस्वरूप एतत्पद्याभिप्रेत इत्याह–**यथा हीति** । **त्वया** ऋजुसूत्रनयेन युष्मच्छब्देनर्जुसूत्रस्योपदर्शनत उपदेशस्वरूपतोक्तवाक्यस्य प्रतीयते । ' **इत्युक्तं स्वीक्रियते, कालभेदात्** ' इत्यस्य स्थाने ' इत्युक्तमयुक्त स्वीक्रियते, कालभेदादर्थभेदात् ' इति पाठो युक्तः, अत्र वर्तमानकालवर्तिनो देवदत्ताभिख्यस्य षष्ठ्यन्तेदशब्दप्रतिपाद्यस्य जनितेतिशब्दप्रतिपाद्यो भविष्यत्कालीनजन्मवान् दूरकालविप्रकर्षाज्जन्यत्वाभावेन न पुत्र., किन्त्वेतत्कालीनदेवदत्तक्षणघटितसन्तानगतभविष्यत्कालीनजन्मवत्पुरुषीयगर्भगताद्यक्षणस्वरूपकुर्वद्रूपात्मकभविष्यत्क्षणविशेषप्रभवविसदृशसन्ततिपतिताद्यक्षणविशेषप्रभवद्द्वितीयक्षणविशेषप्रभवादिक्रमोपजाताव्यवहितस्वकुर्वद्रूपात्मकक्षणविशेषस्यैव जन्यत्वादुक्तजन्मवान् पुत्र इत्यसलम्भकत्वादस्य ' पुत्रो जनिता ' इति न सभवति, तथा यश्च पुत्रस्तत्सन्तानगत आद्यक्षणस्वरूपः सोऽन्योऽन्यश्च तत्सन्तानपतितोऽग्निष्टोमाभिधयागकरणसमर्थ इति ' पुत्रोऽग्निष्टोमयाजी ' इत्यपि न सम्भवतीति ' अग्निष्टोमयाजी पुत्रोऽस्य जनिता ' इति वचनमयुक्तं त्वया ऋजुसूत्रनयेन स्वीक्रियते, कालभेदादर्थभेदादित्यर्थः । ' स्वीकर्तव्यः ' इत्यत्रापि ' त्वया ' इत्यस्य सम्बन्धः ॥ ३५ ॥

षट्त्रिंशत्तमपद्यमवतारयति-**समभिरूढमिति** । विवृणोति-**नय इती**ति । ' **असङ्क्रमः** ' इत्यस्य विवरणम्–घटाद्यन्यशब्दावाच्यत्वमिति, यथा घटशब्दवाच्यस्य चेष्टाविशेषवतो घटस्य घटशब्दान्यकुम्भ कलशादिशब्दानभिधेयत्वमिति, विषय-विषयिणोरभेदोपचाराद् घटस्य घटशब्दान्यशब्दावाच्यत्वाभ्युपगमस्य समभिरूढनयत्वे तद्विषयस्योक्तावाच्यत्वस्यापि समभिरूढनयत्वम । निरुक्तासङ्क्रमस्य समभिरूढनयत्वे सूत्रं प्रमाणयति–**यत् सूत्रमि**ति । वत्थूओ० इति " वस्तुनः सङ्क्रमण भवति अवस्तु नये समभिरूढे " इति संस्कृतम् । उक्तार्थे तत्त्वार्थभाष्यसंवादमाह–'**सत्स्वर्थे**ष्विति । उपचारतो निरुक्तसमभिरूढलक्षणं सम्भवदप्युक्तासङ्क्रमे ज्ञानविशेषस्वरूपे समभिरूढे प्रसिद्धलक्ष्यस्वरूपेऽसम्भवं ज्ञानगतस्यान्यादृशस्य तस्यातिव्याप्तिं चोपदर्शयन् निष्कृष्ट दोषलेशासम्पृक्तं तल्लक्षणमुपदर्शयति– **तत्र चे**ति । **यथाश्रुतार्थः** असङ्क्रमशब्दाभिधेयार्थः । **अभावालम्बनत्वेन** सङ्क्रमाभावलक्षणाभावविशेषस्वरूपपर्यवसन्नत्वेन । **असम्भवी** समभिरूढनये ज्ञानविशेषस्वरूपे कुत्रापि लक्ष्ये न सम्भवतीति । **संज्ञे**ति– इदं लक्षणं ज्ञानगतं समभिरूढ लक्ष्ये सर्वत्र वर्तते, घट-कुट-कुम्भादिसञ्ज्ञाभेदनार्थभेदाभ्युपगन्तृत्वस्य शक्रेन्द्र-पुरन्दरादिसञ्ज्ञाभेदेनार्थभेदाभ्युपगन्तृत्वस्य च समभिरूढे सत्त्वात्, किन्त्वतिव्याप्तिदोषकलितमिदं घट पटादिसंज्ञाभेदेनार्थभेदाभ्युपगन्तृत्वस्य नैगमादिनयेऽप्यलक्ष्ये वृत्तेरित्यर्थः । **शब्दभेद** इति–यस्मिन्

पदार्थः, तथा च संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वं समभिरूढत्वमिति लक्षणलाभान्न कोऽपि दोषः, एवम्भूते चातिव्याप्तिवारणाय तदन्यत्वेन विशेषणीयम् ॥ ३६ ॥

एतन्मते शब्दनयशिक्षाप्रकारमाह—

**तटस्तटं तटीत्यादौ, शब्दभेदोऽर्थभिद् यदि ।**
**तद् घटः कुम्भ इत्यादौ, कथं नेत्यस्य मार्गणा ॥ ३७ ॥**

**नयामृत०**-तट इति । हे शब्दनय ! यदि तव मते 'तटस्तटी तटम्' इत्यादौ शब्दभेदोऽर्थं भिनत्तीत्यर्थभिद्—अर्थभेदकारी, तत्—तर्हि, 'घटः कुम्भः' इत्यादौ शब्दभेदः कथं नार्थभित् ? इति अस्य—समभिरूढनयस्य, मार्गणा—विचारणा; अयं भावः—यदि लिङ्ग वचनभिन्नानामर्थानां ध्वनिभेदाद् भेदस्तवानुमतस्तर्हि घट-कुम्भादिशब्दवाच्यानामपि किमिति भेदो नेष्टः ? ध्वनिभेदस्यात्रापि समानत्वात् । किञ्च, विभिन्नलिङ्ग-वचनादिशब्दवाच्यत्वमर्थभेदे प्रयोजकं त्वयोच्यत इति गौरवम्, मया तु विभिन्नशब्दवाच्यत्वमेव तथा वाच्यमिति लाघवम्, न च नानार्थकैकशब्दवाच्यानामप्यर्थानां यथा नाभेदस्तथा भिन्नशब्दवाच्यानामपि न भेदो भविष्यतीत्याशङ्कनीयम्, यतो विभिन्नशब्दवाच्यत्वस्यार्थभेदप्रयोजकत्वं, न तद्व्यापकत्वं येन नानार्थस्थले व्यापकाभावाद् व्याप्याभाव आपादयितुं शक्येत, किन्तु तद्व्याप्यत्वम्, न च व्याप्याभावाद् व्यापकाभाव आपादयितुं शक्यते, तथा सत्ययोगोलकेऽ-

शब्दे यद्यच्छब्दभेदस्तत्र तत्तच्छब्दार्थभिन्नार्थकत्वमित्याकारकव्याप्तेर्योऽभ्युपगम. सोऽसद्क्रमपदार्थ , न चोक्तव्याप्तेरभ्युपगमो नैगमादौ समस्ति, घटशब्दे कुट कुम्भादिशब्दभेदस्य सत्त्वेऽपि कुट-कुम्भाद्यर्थभिन्नार्थकत्वस्याभावादित्यर्थ. । तथा च निरुक्तव्याप्तेरसद्क्रमपदार्थत्वे च । सज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वमेवम्भूतेऽपि समस्तीति तत्रातिव्याप्तिवारणायैवम्भूतभिन्नत्वे सति संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्व समभिरूढत्वमित्येव लक्षणमादरणीयमित्याह—**एवम्भूते चेति** ॥ ३६ ॥

सप्तत्रिंशत्तमपद्यमवतारयति—**एतन्मत** इति—समभिरूढनयमत इत्यर्थ. । विवृणोति—**तट इतीति** । '**हे शब्दनय ! यदि तव मते**' इत्येतत् पूरण निरुक्तपद्यस्य शब्दनयशिक्षणप्रवणत्वावगतये । **तव** शब्दनयस्य । निरुक्तपद्यभावार्थमाविष्करोति—**अयं भाव** इत्यादिना । '**लिङ्ग वचनभिन्न**' इति स्थाने 'लिङ्ग-वचनादिभिन्न' इति पाठो युक्त. । **तव** शब्दनयस्य, अस्य 'नेष्ट.' इत्यत्राप्यन्वयः । **अत्रापि** घट-कुम्भादिशब्दवाच्येष्वपि । शब्दनयमतापेक्षया स्वमते लाघव स्वमतोपादेयत्वोपोद्बलकमुपदर्शयति—**किञ्चेति** । **त्वया** शब्दनयेन । **मया तु** समभिरूढनयेन पुनः । **तथा वाच्यम्** अर्थभेदे प्रयोजकं वाच्यम् । ननु विभिन्नशब्दवाच्यत्व नार्थभेदे प्रयोजक सिंह-सूर्येन्द्र-विष्ण्वादीनामेकहरिशब्दवाच्यानां विभिन्नशब्दवाच्यत्वाभावेऽपि भेदस्य सद्भावादित्याशङ्क्य प्रतिक्षिपति—**न चेति**—अस्य 'आशङ्कनीयम्' इत्यनेनान्वय. । **नानार्थकैकशब्दवाच्यानां** नानाप्रवृत्तिनिमित्तकहर्याद्येकशब्दवाच्यानाम्, एकशब्दवाच्यत्व यथा नार्थाभेदप्रयोजकं तथा भिन्नशब्दवाच्यत्व नार्थभेदप्रयोजकम्, शब्दभेदा-ऽभेदयोरर्थभेदा-ऽभेदानियामकत्वादिति शङ्कामुकुलितोऽर्थ । निषेधे हेतुमाह—**यत** इति । **न तद्व्यापकत्वम्** अर्थभेदव्यापकत्व विभिन्नशब्दवाच्यत्वस्य नार्थभेदप्रयोजकत्वम् । **व्यापकाभावात्** अर्थभेदव्यापकस्य विभिन्नशब्दवाच्यत्वस्य नानार्थशब्दवाच्येष्वभावात् । **व्याप्याभावः** विभिन्नशब्दवाच्यत्वव्याप्यस्यार्थभेदस्याभावः । तर्हि किमर्थभेदप्रयोजकत्वमिति पृच्छति—**किन्त्विति** । उत्तरयति—**तद्व्याप्यत्वमिति**—विभिन्नशब्दवाच्यत्वेऽर्थभेदव्याप्यत्वमेवार्थभेदप्रयोजकत्वमित्यर्थ , यत्र यत्र विभिन्नशब्दवाच्यत्वं तत्रार्थभेद इत्येवमत्र व्याप्ति । '**न च**' इत्यस्य 'शक्यते' इत्यनेनान्वय. । '**तथा सत्ययोगोलकेऽव्यभिचारात्**' इत्यस्य स्थाने 'अयोगोलके धूमाभावेऽपि वह्न्यभावाभावेन व्यभिचारात्' इति पाठो युक्तः । **तस्मात्** विभिन्नशब्दवाच्यत्वस्यार्थभेदव्याप्यत्वस्यैवार्थभेदप्रयोजकत्वरूपत्वात् । **शब्दाभेदादिति**—शब्दभेदस्य तत्राभावादेव ततोऽर्थभेदस्याभाव इति बोध्यम् । **लक्षणेति**—सिंहादेर्यल्लक्षणं तत्सूर्यादौ नास्ति, यच्च सिंहादीना स्वरूप तन्न सूर्यादीनामिति शब्दभेदाभावेऽपि

व्यभिचारात्, तस्मान्नानार्थस्थले शब्दाभेदाद् भेदाभावेऽपि लक्षण-स्वरूपादिभेदाद् भेदो भविष्यति, नह्यर्थभेद एकमेव प्रतिनियतं प्रयोजकम्, भिन्नशब्दवाच्यतया तु भिन्नकालवृत्तितयै(ये)वार्थभेदो ध्रुवः, इति सर्वमनाविलम् ॥ ३७ ॥

ननु यद्येवं समभिरूढनयमते शब्दभेदादेवार्थभेदस्तदा शब्दानां व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तमित्यागतम्, तथाच 'डित्थः, डवित्थः' इत्यादिपारिभाषिकी सञ्ज्ञा नः छिद्येत, तत्रेच्छामात्रस्योपाधित्वेन यथास्थित-व्युत्पत्तिनिमित्ताभावादिति चेत्? अत्रेष्टापत्तिरित्यभिप्रायवानाह—

**संज्ञाऽर्थतत्त्वं न ब्रूते, त्वन्मते पारिभाषिकी ।**
**अनादिसिद्धः शब्दार्थो, नेच्छा तत्र निबन्धनम् ॥ ३८ ॥**

**नयामृत०**—संज्ञेति। त्वन्मते—समभिरूढनयमते, पारिभाषिकी संज्ञा—डित्थ-डवित्थादिका, अर्थतत्त्वं न ब्रूते—पदार्थानुभवं न जनयति, यतः शब्दार्थोऽनादिसिद्धः—स्वाभाविकधर्मनिबन्धनः, तत्र—शब्दार्थे, इच्छा न निबन्धनमतिप्रसङ्गात्, इतीच्छाविशिष्टशक्त्यभावात्तस्याऽबोधकत्वमिति भावः। तदिदमुक्तं तत्त्वार्थभाष्ये—' तत्र पारिभाषिकी नार्थतत्त्वं ब्रवीति ' [ तत्त्वार्थसूत्रे, अ० सू० ] इति ॥ ३८ ॥

एवम्भूतं लक्षयति—

**एवम्भूतस्तु सर्वत्र, व्यञ्जनार्थविशेषणः ।**
**राजचिह्नैर्यथा राजा, नान्यदा राजशब्दभाक् ॥ ३९ ॥**

---

लक्षण-स्वरूपादिभेदान्नानार्थकहर्यादिशब्दवाच्यानां सिंहादीना भेदो भविष्यतीत्यर्थः। यदि विभिन्नशब्दवाच्यत्वमेकमेवार्थभेदे प्रयोजकं स्यात् तर्हि नानार्थस्थले तदभावादर्थभेदो न स्यान्न चैवमित्याह- **नहीति**। एव च शब्दनयशिक्षणार्थं यत् समभिरूढस्याभिमत तदुपदर्शयति- **भिन्नशब्दवाच्यतयेति**, यथा ऋजुसूत्रेण विभिन्नकालवृत्तितयाऽर्थभेदोऽभ्युपगतः शब्दनयेनापीष्ट. सः, तथा भिन्नशब्दवाच्यतयाऽर्थभेदोऽवश्यमुपेयो नात्र कश्चिद्दोष इत्येव समभिरूढनयाभिमतं सकल**मनाविलं** दोषासम्पृक्तमित्यर्थः ॥ ३७ ॥

अष्टात्रिंशत्तमपद्यमवतारयति- **नन्वित्यादिना**। '**शब्दभेदादेव**' इत्येवकारेण लिङ्ग-वचनादिभेदाना व्यवच्छेदः, तेन लक्षणस्वरूपादिभेदतोऽर्थभेदेऽपि न क्षतिः। **तथा च** व्युत्पत्तिनिमित्तस्यैव प्रवृत्तिनिमित्तत्वे च। '**नः छिद्येत**' इत्यस्य स्थाने 'उच्छिद्येत' इति पाठो युक्तः। **तत्र** डित्थ-डवित्थादिसञ्ज्ञायाम्। **इच्छामात्रस्येति**-"डित्थः काष्ठमयो हस्ती" इत्यादिवचनेन काष्ठनिर्मितहस्त्यादिषु कस्यचिदिच्छया सङ्केतितो डित्थादिशब्द इतीच्छामात्रस्यैव तत्प्रवृत्तौ निमित्तत्वं न तु डित्थादिपदस्य किञ्चिद् व्युत्पत्तिनिमित्तमिति व्युत्पत्तिनिमित्तात्मकस्य प्रवृत्तिनिमित्तस्याभावात् पारिभाषिकी डित्थादिसञ्ज्ञा न कस्यचिदर्थस्य बोधिका, न चार्थशून्या सञ्ज्ञा भवतीति समभिरूढमते तदुच्छेदः प्रसज्येतेत्यर्थः। **अत्र** आशङ्किते पारिभाषिकसञ्ज्ञोच्छेदप्रसङ्गे। **इष्टापत्तिः** समभिरूढनयस्येष्टापादनम्।

विवृणोति- **संज्ञेतीति**। '**त्वन्मते पारिभाषिकी**' इति मूले 'तन्मते पारिभाषिकी' इति पाठ एव युक्तः, टीकायामपि '**त्वन्मते**' इति स्थाने 'तन्मते' इत्येव पाठो युक्तः। उत्तरार्धस्य निषेधहेतुप्रतिपादकत्वं स्पष्टयितु '**यतः**' इति हेतुवचनपूरणम्। '**तस्याऽबोधकत्व**' इति स्थाने 'तस्या अबोधकत्व' इति पाठो युक्त., तस्या -पारिभाषिकसंज्ञायाः। पारिभाषिकसंज्ञायाः समभिरूढमते नार्थतत्त्वबोधकत्वमित्यत्र तत्त्वार्थभाष्यसम्मतिमुपदर्शयति- **तदिदमुक्तमिति**। **तत्र** समभिरूढमते ॥ ३८ ॥

एकोनचत्वारिंशत्तमपद्यमवतारयति- **एवम्भूतं लक्षयतीति**। विवृणोति- **एवंभूतस्त्वितीति**। व्यञ्जनमर्थविशेषणं